जन्माद्यस्य यतो हि सर्वजगतो जन्मादिदोषोज्झितं
नित्यं पूर्णविबोधशर्वगुरुणोपास्यं भजे नित्यदा ॥ १ ॥

वेदभेदसुशाखेतं बोधादिफलसंयुतम् ।
भजतामिष्टदं व्याससुरद्रुममहं भजे ॥ २ ॥

हृत्तमोनाशकं शास्त्रप्रभया तत्त्वभासकम् ।
फलदं पूर्णबोधाख्यचिन्तामणिमहं भजे ॥ ३ ॥

प्रणम्य चरणौ वाणि याचयामि तवान्वहम् ।
सन्निधिर्मम वाच्यस्तु मानसे च निरन्तरम् ॥ ४ ॥

यत्प्रसादं विना तत्त्वमार्गे न गमनं भुवि ।
तं वन्दे पद्मनाभाख्यगुरुं सज्जनसेवितम् ॥ ५ ॥

वेददुग्धाब्धिमामथ्य सूत्रमन्दरभूभृता ।
प्राप्ता न्यायसुधा येन तं जयेन्द्रमहं भजे ॥ ६ ॥

श्रीमध्वकृतवेदान्तभाष्यं येन प्रकाशितम् ।
तं वन्दे व्यासतीर्थार्यं जयराजनिषेवकम् ॥ ७ ॥

विद्याधिराजादिमहामुनीन्द्रा हृद्येव सञ्चिन्तितविष्णुतत्त्वाः ।
उद्योगयुक्ता भगवत्कथायां सद्यो ममानुग्रहमेव कुर्युः ॥ ८ ॥

ब्रह्मण्यतीर्थवार्द्ध्युत्थं व्यासतीर्थसुधाकरम् ।
तात्पर्यचन्द्रिकायुक्तं वन्दे तापत्रयापहम् ॥ ९ ॥

रघूत्तममुनीन् विद्यागुरून् परगुरूंस्तथा ।
वन्दे श्रीमध्वशास्त्रोत्थविनिर्मलमतीनहम् ॥ १० ॥

निरस्तं हृत्तमो येन प्रशस्तं सन्मनोम्बुजम् ।
समस्तं भासितं वन्दे वेदव्यासदिवाकरम् ॥ ११ ॥

अथ तत्कृपया श्रीमदाचार्यमुखनिःसृतम् ।
छान्दोग्योपनिषद्भाष्यं व्याकरिष्ये यथामति ।। १२ ।।

न मात्सर्यादिदोषेण नवा विद्यातिगर्वितः ।
किन्तु वाचां विशुद्ध्यर्थं यत्नोऽयं न हि दोषभाक् ।। १३ ।।

इह हि नानाविधसांसारिकक्लेशसन्दर्शनेन कुपितफणिफणच्छाया-समीकृतापरसुखानां शमदमादिमतामधिकारिणामात्यन्तिकानिष्टनिवृत्तीष्टप्राप्तिसाधनं भगवत्स्वरूपं यथावज्ज्ञापयितुं प्रवृत्ताऽपि छान्दोग्योपनिषद् अविद्यापटलपिहितनयनैरन्यैरन्यथाव्याख्याततत्वेन न तज्ज्ञापनसमर्थेति मन्यमानो भगवानानन्दतीर्थमुनिस्तां यथावद् व्याचिख्यासुः स्वयमन्तरायविधुरोऽप्यविगीतशिष्टाचारपरम्पराप्राप्तं प्रारिप्सित-परिसमाप्त्यादिप्रयोजनमेतदुपनिषदुक्तगुणवद्भगवदुपास्तिलक्षणं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति– **अत्युद्रिक्तेति** ।। ''हरिमुपास्महे'' इति क्रियाकारकयोजना । श्रुतौ ''ओमित्येदक्षरमुद्गीथमुपासीत''इति प्रथमतो भगवदुपास्तिविधानादुपास्तिरूपं मङ्गलमादावनुष्ठितम् । अत एवानेन श्लोकेन तद्वाक्यं व्याख्यायते ।। तथा हि । तत्र गुणपूर्णत्वार्थकोङ्कारार्थोऽत्युद्रिक्तेत्यादिप्रथमविशेषणेन विव्रियते । तत्रात्युद्रिक्त-विदोषसत्त्वं सुखविशेषणम् । सुखस्य सत्त्वं नाम साधुभावः । ''सद्भावे साधुभावे च'' इति वचनात् । तत्र हेतुः– **अत्युद्रिक्तविदोषेति** ।। साधुभावः शोभनत्वमिति न साध्याविशिष्टता । यद्वा सत्त्वमुत्तमत्वम् । ''सच्छब्द उत्तमं ब्रूयात्'' इत्युक्तेः । तत्र च पूर्वोक्तं हेतुद्वयम् । अत्युद्रिक्तत्वं चातिपूर्णत्वं नोत्तमत्वमतो न साध्याविशिष्टता । एवं च विदोषसच्छब्दयोर्भिन्नार्थत्वेन न पौनरुक्त्यम् । यद्वा सदिति सुखस्य नित्यत्वमुच्यते । ''तद्यत् सत्तदमृतम्'' इति श्रुतेः ।

विदोषपदेनानित्यत्वातिरिक्ता दोषा व्यावर्त्यन्ते । एवं च कुरुपाण्डव-न्यायेन न पुनरुक्तिः । विदोषसत् विदोषभूतमिति सुखविशेषणं वा । अत्युद्रिक्तविदोषेति सत्सुखमहांज्ञानयोरेकतानप्रभाया वा विशेषण-मित्यप्याहुः । सुखस्य विदोषत्वमुत्पत्त्यादिरहितत्वम् । सत्त्वं(स)तत्स्व-रूपत्वमित्यन्ये । ज्ञानस्य महत्त्वं स्वपरगताखिलविशेषविषयत्वम् । एकतानाऽनन्यवृत्तिश्च सा प्रभा चेति तथोक्तम् । सर्वेति प्राभवशक्ति-भोगबलानां विशेषणम् । सर्वस्मिन् विषये प्राभवशक्तिभोगबलानीति तथोक्तानि । अत्र शक्तिशब्देन क्रियाशक्तिरिच्छाशक्तिश्च ग्राह्या । ''स्वाभाविकी ज्ञानबलक्रिया च'' इति श्रुतौ ''इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिरिति त्रिधा'' इति स्मृतौ च त्रयाणामपि शक्तित्वोक्तेरत्र च ज्ञानबलयोः पृथग्ग्रहणात् । अत्युद्रिक्तविदोषसत्सुखं च महाज्ञानं चैकतानप्रभा च सर्वप्राभवशक्तिभोगबलानि चेति द्वन्द्वः । तैः सद्भ्यो ब्रह्मादिभ्यः सारा श्रेष्ठेति विग्रहः । अथवा सुखादीन्येव सती निर्दुष्टा सारा श्रेष्ठा आत्मा स्वरूपभूता दिव्या आकृतिर्यस्येति विग्रहः । प्रणवांशाकारोकारमकारार्थो वाऽनेन विविच्यते । तथा हि । तत्र सुख-मकारार्थः । ''आनन्दत्वाद इत्युक्तः'' इति स्मृतेः । ज्ञानं मकारार्थः । ''माङ् माने'' इति धातोः । प्रभाऽपि मकारार्थः । धातूनामनेकार्थत्वात् । सर्वप्राभवशक्तिभोगा उशब्दार्थाः । ''उत्कृष्टत्वादुनामकः'' इत्युक्तेः । बलं च मकारार्थः–

''मानं ज्ञानं लयश्चैव मर्यादा चेति कथ्यते ।
उत्पादनं च सङ्ख्यानं बलं च कचिदुच्यते'' इत्युक्तेः ।

प्रणवोपास्यस्य सूर्यस्थे देहस्थे वा वायौ विद्यमानस्य भगवतो ''य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश

आप्रणखात् सर्व एव सुवर्णः''इति ''तस्यैतस्यैतदेव रूपं यदमुष्य रूपम्''इति चाप्राकृतविग्रहत्वोक्तेः सत्सारात्मदिव्याकृतिमित्युक्तम् । एतेन हरेर्देहित्वे दुःखित्वापत्तिरदेहत्वे सृष्ट्यादिकर्तृत्वानुपपत्तिरित्यपि परास्तम् । प्राकृतदेहस्यैव दुःखादिहेतुत्वेन हरेस्तदभावेन तदभावात् । एवं प्रथमार्धेन प्रणवार्थमुक्त्वोद्गीथशब्दार्थमाह– **सृष्टीत्यादिना** ॥ अत्र सृष्टिप्रदत्वमुदित्यस्यार्थः । तथा हि वक्ष्यति– ''प्राण एवोत् प्राणेन ह्यु-त्तिष्ठति'' इति । स्थानप्रदत्वं थशब्दार्थः । ''अन्नं थमन्ने हीदं सर्वं स्थितम्'' इति श्रुतेः । निरोधदत्वं गीत्यस्यार्थः । ''गृ निगरणे'' इति धातोः । नित्यं नियतिर्नित्यं नियमनम् । स्यादनित्यपदार्थस्य नियमनं भगवता, तस्य स्वरूपलाभादौ परापेक्षत्वात् । नतु नित्यस्य । तस्य परानपेक्षत्वादित्याशङ्कापरिहाराय नित्यानामपि नियतिर्नित्यनियतिरिति वा । ''नित्यं नित्यात्मना यतः'' इत्यादिश्रुतेरिति भावः । उन्नयतीति व्युत्पत्त्याऽयमप्युच्छब्दार्थः । उद्गमयत्युद्भासयैतीति व्युत्पत्त्या ज्ञान-प्रकाशदत्वमपि । **आवृतिः** अज्ञानम् । **ध्वान्तं** बाह्यतमः । **अमोक्षः** संसारः । एतत्त्रितयप्रदत्वं थशब्दार्थः । ष्ठा गतिनिवृत्ताविति धातुः । अज्ञानसंसारदाने च मोक्षगतिनिवृत्तेः । ध्वान्तदाने च प्रसिद्धगति-निरोधात् । उद्गमयति संसारादिति व्युत्पत्त्या विमोक्षदत्वमप्युच्छब्दार्थः । सर्वसृष्ट्यादिप्रदत्वोक्त्या सर्वसन्निहितत्वलाभादेतच्छब्दार्थोऽप्यनेनोक्तः । अजामित्युपलक्षणयोत्पत्तिप्रभृतिदोषशून्यत्वमुक्तम् । अयमप्युच्छब्दार्थः । ''त(स्य वा एत)स्योदिति नाम । स एष सर्वेभ्यः पाप्मभ्य उदितः'' इति श्रुतेः । नित्यमित्यक्षरशब्दार्थकथनम् । ''सदोपास्महे'' इत्यनेन न मे नारायणोपासनं प्रत्यूहविरहादिप्रयोजनोद्देशेनेति सूचयति । श्रुतौ ''उपासीत'' इति विधिश्रवणेऽप्युपास्महे इत्युत्तमपुरुषं प्रयुञ्जानः स्वोपासनस्य स्वेच्छानियतत्वं सूचयति । भविष्यद्ब्रह्मणः स्वस्य मनुष्यवद्

विधिनियतत्वाभावात्। तथाहि श्रुतिः– ''विधिनियता मनुष्याः अनियता देवाः ब्रह्मैव स्वेच्छानियतः'' इति ॥ १ ॥

## उपनिषत् (खण्डः- १)

*उद्गीथोपासना*

**ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥**

*देवतातारतम्यनिरूपणम्*

**एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋचः साम रसः साम्न उद्गीथो रसः स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः ॥ २ ॥**

*ऋक्-साम-उद्गीथपदानाम् अर्थकथनम्*

कतमा कतमर्क् कतमत् कतमत् साम कतमः कतम उद्गीथ इति विमृष्टं भवति। वागेवर्क् प्राणः सामोमित्येतदक्षरमुद्गीथः ॥ ३ ॥

*विष्णुः सरस्वतीचतुर्मुखब्रह्मभ्यामुत्तमः*

तद्वा एतन्मिथुनं यद्वाक् च प्राणश्च ऋक् च साम च तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते ॥ ४ ॥

यदा वै मिथुनौ समागच्छत आपयतो हवै तावन्योन्यस्य काममापयिता हवै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ५ ॥

*ओङ्कारार्थपूर्णो हरिः*

तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदा हैषो एव समृद्धिर्यदनुज्ञा समर्धयिता हवै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ६ ॥

तेनेयं त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद ॥ ७ ॥

नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवत्यथ[१] ह य एवायं मुख्यः[२] प्राणस्तमुद्गीथमुपासीत तस्येतरैः प्राणैरुपव्याख्यानं भवति ॥ ८ ॥ खण्डः१ ॥

भाष्यम्

*उपोद्घातभाष्यम्*

हयग्रीवमुखोद्गीर्णगीर्भिर्देवी[३] रमा पतिम् ।
अस्तुवद् विस्तृतगुणं भोगिप्रस्तरशायिनम् ॥

ओमितिनामकमक्षरं सर्वसन्निहितत्वादेतत् । उच्चत्वाद् गीतत्वात् सर्वस्थानत्वाच्चोद्गीथं भगवन्तमुपासीत । उक्तं च महासंहितायाम् –

१. 'अथ' इत्यारभ्य 'प्राणैरुपव्याख्यानं भवति' इत्यन्तो भागः हृषिकेशीयपाठे नोपलभ्यते । वेदेशीये तु व्याख्यातः । राघवेन्द्रतीर्थाः स्वीयखण्डार्थे भागमिमं न व्याचख्युः २. 'मुख्यप्राणः' इति क्वचित् । ३. 'देवम्' इति हृपाठः ।

विधिनियतत्वाभावात्। तथाहि श्रुतिः– ''विधिनियता मनुष्याः अनियता देवाः ब्रह्मैव स्वेच्छानियतः'' इति ॥ १ ॥

## उपनिषत् (खण्डः- १)

*उद्गीथोपासना*

**ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥**

*देवतातारतम्यनिरूपणम्*

**एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋचः साम रसः साम्न उद्गीथो रसः स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः ॥ २ ॥**

*ऋक्-साम-उद्गीथपदानाम् अर्थकथनम्*

**कतमा कतमर्क्कतमत्कतमत् साम कतमः कतम उद्गीथ इति विमृष्टं भवति। वागेवर्क् प्राणः सामोमित्येतदक्षरमुद्गीथः ॥ ३ ॥**

*विष्णुः सरस्वतीचतुर्मुखब्रह्मभ्यामुत्तमः*

तद्वा एतन्मिथुनं यद्वाक् च प्राणश्च ऋक् च साम च तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते ॥ ४ ॥
यदा वै मिथुनौ समागच्छत आपयतो हवै तावन्योन्यस्य काममापयिता हवै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ५ ॥

*ओङ्कारार्थपूर्णो हरिः*

तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदा हैषो एव समृद्धिर्यदनुज्ञा समर्धयिता हवै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ६ ॥

तेनेयं त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद ॥ ७ ॥

नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवत्यथ[१] ह य एवायं मुख्यः[२] प्राणस्तमुद्गीथमुपासीत तस्येतरैः प्राणैरुपव्याख्यानं भवति ॥ ८ ॥ खण्डः१ ॥

## भाष्यम्

*उपोद्घातभाष्यम्*

हयग्रीवमुखोद्गीर्णगीर्भिर्देवी[३] रमा पतिम् ।
अस्तुवद् विस्तृतगुणं भोगिप्रस्तरशायिनम् ॥

ओमितिनामकमक्षरं सर्वसन्निहितत्वादेतत् । उच्चत्वाद् गीतत्वात् सर्वस्थानत्वाच्चोद्गीथं भगवन्तमुपासीत । उक्तं च महासंहितायाम् –

१. 'अथ' इत्यारभ्य 'प्राणैरुपव्याख्यानं भवति' इत्यन्तो भागः हृषिकेशीयपाठे नोपलभ्यते । वेदेशीये तु व्याख्यातः । राघवेन्द्रतीर्थाः स्वीयखण्डार्थे भागमिमं न व्याचख्युः २. 'मुख्यप्राणः' इति क्वचित् । ३. 'देवम्' इति हृपाठः ।

'हयग्रीवोद्गीतवाक्यै रमादेवी रमापतिम् ।
ओमित्येतन्मुखैर्देवमस्तुवत् सामवेदगैः ॥' इति ॥

'ॐनामानमुपासीत तदर्थगुणपूर्वकम् ।
ओतत्वादवनान्मानादधिकोच्चत्वकारणात् ।
आनन्दादोजसश्चैव भरणादोमुदाहृतः ॥' इति समन्वये ।

'ओतमस्मिन् जगत् सर्वमत्युच्चश्चाखिलैर्गुणैः ।
इत्योमिति सदोपास्यः सोऽक्षरः पुरुषोत्तमः ॥
उच्चत्वाद् गीयमानत्वात् स्थानादुद्गीथ उच्यते ।

*विष्णुः ओङ्कारवाचकः*

ओमित्येनं समुद्दिश्य ह्युद्गाता गायति स्फुटम् ॥
विष्णोरोमितिनाम्नोऽस्य व्याख्यानमधिकोच्चता ।
अकारेणाधिकं प्रोक्तमुकारेणोच्चमुच्यते ॥
तथा मितं सर्ववेदैर्मकारेणाभिधीयते ।
अधिकोच्चमिति ज्ञातमोमित्यस्यार्थ ईरितः ॥ १ ॥

## पदार्थकौमुदी

*भाष्यार्थः*

''यो हवा अविदितार्षछन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्रवामीयते'' इति श्रुतेर्दैवतादिज्ञान एव विद्या फलतीति ज्ञायते । तत्र ब्राह्मणपदोपलक्षितार्थज्ञानं व्याख्यानादेव भविष्यति ॥ प्रायश्छन्दोबद्धत्वं नास्त्येव ॥

कचित् तदुपनिबद्धत्वे त्वक्षरपरिगणनेन तज्ज्ञानं सुकरमेव । अतः ऋषिदेवते ज्ञापयन्नाह भगवान् भाष्यकारः – **हयग्रीवेति** ॥ विस्तृताया अप्यस्या उपनिषदो भगवत्परत्वं नानुपपन्नमिति भावेन ''विस्तृत-गुणम्'' इत्युक्तम् । एतदुपनिषत्प्रतिपाद्यमूर्तिविशेषमाह – **भोगीति** ॥ अनेनास्या हयग्रीवो मुख्यऋषिः । रमा त्ववान्तर ऋषिः । शेषशायी देवतेत्युक्तं भवति । एतेनाद्वैतज्ञानं संसारहेतूपमर्देन वक्तव्यमित्युपनिष-दारभ्यत इति परोक्तमसदित्युक्तं भवति । यथा चैतत् तथाऽग्रे वक्ष्यते । ''देव सवितः प्रसुव'' ''यज्ञं प्रसुव'' ''यज्ञपतिं भगाय'' इत्यादि-पूर्वाध्यायद्वयेऽन्तःकरणशुद्धिद्वारा ब्रह्मविद्याधिकारार्थं कर्मस्वरूपं निरूपितम् । इदानीं कर्मणा शुद्धान्तःकरणस्य सुविरक्तस्य ब्रह्मस्वरूपं निरूपयति – **ओमित्येतदक्षरमित्यादिकया समग्रोपनिषदा** ॥ ननु तदप्यध्यायद्वयं कुतो न व्याख्यातमिति चेत् । न । तस्य कर्मकाण्डत्वे-नाब्रह्मविद्यात्वात् । परैरव्याख्यातत्वेन विप्रतिपत्त्यभावाच्च । तत्रोद्गीथ-लक्षणसामैकदेशप्रतिपाद्यस्य सर्ववेदार्थप्रणवप्रतिपाद्यस्य च भगवत उपास्तिमादावाह – **ओमित्येतदक्षरमित्यादिना** ॥

## परव्याख्यानिरासः

तत्रेदं वाक्यं परेणैवं व्याख्यातम् । ओमित्येतदक्षरं वर्णात्मकमुद्गीथ-भक्त्यवयवत्वाद् उद्गीथवाच्यमुपासीतेति । तदसत् ॥ प्रणवस्य जडत्वेन तदुपासनवैयर्थ्यस्य वक्ष्यमाणत्वात् । नच परमात्मप्रतीकत्वेन तदुपासनं विधीयत इति वाच्यम् । परमात्मप्रधानके वेदान्ते आदौ तदुपास्तिमन-भिधाय तत्प्रतीकोपास्तिविधानायोगात् । नचैतान्युपासनानि सत्त्वशुद्धि-करत्वेन वस्तुतत्वावभासकत्वादद्वैतज्ञानोपकारकाणीति पूर्वमुपन्यस्यत इति वाच्यम् । तथा सति कर्मकलापस्यापि सत्त्वशुद्धिसम्पादकत्वेन

तत्परपूर्वाध्यायद्वयस्यापि व्याख्येयत्वापातात् । नच तत्र साक्षादद्वैता-प्रतिपादनात् तदव्याख्यातमिति वाच्यम् । तर्ह्येतस्यापि त्वन्मते साक्षाद-द्वैताप्रतिपादकत्वेनाव्याख्येयत्वापातादिति भावेन तद्वाक्यं भगवत्परतयैव व्याचष्टे– **ओमितिनामकमिति** ॥ अक्षरशब्दव्याख्यानं करिष्यति । सन्निकृष्टतरवस्तुवाचको ह्येतच्छब्दः । अतो भगवान् सर्वसन्निहितत्वा-देतदित्युच्यत इत्यर्थः । उक्तं चान्यत्रएतत्सन्निहितत्वाच्चेति । उच्चत्वादि-त्युच्छब्दार्थः । गीतत्वादिति गीत्यस्यार्थः । सर्वस्थानत्वादिति थशब्दार्थः। भगवन्तमिति विशेष्याध्याहारः ।

ननु ''हयग्रीवमुखोद्गीर्णगीर्भिः'' इत्यनेनास्यां हयग्रीवादिर्न ऋष्यादित्वेन ज्ञातुं शक्यते । हयग्रीवमुखोद्गीर्णगिरां बह्वीनां सत्त्वादि-यमेव सेत्यनिश्चयादित्यतस्तत्र प्रमाणमाह – **उक्तं चेति** ॥ न केवलमस्माभिरेवोक्तं किन्तु महासंहितायां चेति चशब्दार्थः । किं तत्रोक्तमित्यतः ''अग्न आयाहि वीतये'' इत्यादिसामवेदसंहितायां ''महन्मेऽवोचो भर्गो मेऽवोचः'' इत्यादिब्राह्मणस्याऽरण्यकेऽपि ''देव सवितः प्रसुव'' इत्यादिपूर्वाध्यायद्वयस्य च व्यावृत्त्यर्थम् ''ओमित्येत-न्मुखैः''इत्युक्तम् । अत एवैतदारभ्यैव व्याख्यानं क्रियते । अत्रोंनामकस्य भगवत एवोपास्यत्वमुच्यत इति व्याख्येयं नत्वोङ्कारस्य । तथा सति प्रमाणविरोधादिति भावेन प्रमाणमाह – **ॐनामानमिति** ॥ अश्व-कर्णादिनामकत्वमिव न सञ्ज्ञामात्रेणेत्याह – **तदर्थेति** ॥ अत एव श्रुतौ तस्योपव्याख्यानमित्यादिनोङ्कारो व्याख्यायते । के ते ओंनामार्थभूता गुणा यैर्युक्ततया भवानुपास्य इत्यत आह – **ओतत्वादिति** ॥ ओतत्वाद् गतत्वात् प्रविष्टत्वाद्वा गुणपूर्णत्वादिति यावत् । गत्याद्यर्थस्यावतेः खलु रूपमेतत् । ''अवतेष्टिलोपश्च''इति सूत्रात् । अवतेर्मन्प्रत्ययः प्रत्ययस्य

टिलोपश्चेति सूत्रार्थः । ओमिति पुनः कस्य वक्तेति प्रश्नपूर्वक-मवतिनामाऽयं धातुर्गतिकर्मा प्रवेशनकर्मा चेत्यन्यत्राप्येवमेव निरुक्तत्वा-च्च । तथा च यद्यसौ कर्मणि तदा कर्तुर्यदि वा कर्तरि तदा कर्मणोऽपेक्षयामुपपदाद्यभावेऽपि योग्यतया श्रुत्यन्तरबलाद्वा गुणैर्गुणान् वा ओतत्वं वक्तीत्यनन्तानवद्यगुणपूर्णतैव ॐकारार्थ इति भावः । अवनाज्ज्ञानाद् रक्षणाद्वेति व्याख्यानान्तरम् । अवतेर्गत्यर्थत्वेन ज्ञानार्थत्वात् । रक्षणार्थत्वाच्च । मानादधिकोच्चत्वकारणादित्येकं व्याख्यानम् । गुणसङ्ख्यानादधिकोच्चत्वहेतोरित्यर्थः । तत्राकारार्थः– **अधिकेति** ॥ उकारार्थः – **उच्चेति** ॥ मकारार्थः – **मानादिति** ॥ आकाङ्क्षाक्रमेण व्याख्यानाय क्रमोल्लङ्घनम् ।

यद्वा, अवनाद् रक्षणादिति ओ इत्यस्यार्थः । अवतेः क्विपि उपधावकारयोरूकारः । मकारार्थः – **मानादिति** ॥ ज्ञानादित्यर्थः । अवनान्मानादित्येकं व्याख्यानमिति श्रुतेरर्थं इत्याहुः । अधिकोच्चत्व-कारणादित्यपरम् । अधिकोच्चत्वकारणादित्यकारोकारयोरर्थः । यद्वा, अधिकेत्यकारस्य उच्चत्वेत्युकारस्य, कारणेति मकारस्यार्थ उक्तः । "मा निर्माणे" इति धातोः । मानं ज्ञानमित्यन्यत्रोत्पादनस्यापि मानशब्दार्थ-त्वोक्तेश्च । प्रणवावयवाकारादेः प्रकारान्तरेणार्थमाह – **आनन्दादिति** ॥ आनन्दादित्यकारस्यार्थः । "आनन्दत्वाद इत्युक्तः" इति वचनात् । ओजस इत्युकारार्थः । भरणादिति मकारार्थः । धातूनामनेकार्थत्वात् । चशब्दो व्याख्यानान्तरसमुच्चयार्थः । एवशब्देनाकारवाच्येन तत्पदार्थेनो-कारवाच्यस्य त्वम्पदार्थस्याभेदो मकारेणोच्यत इति परव्याख्यानं व्यावर्तयति । अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च । ॐकारस्या-र्थान्तराभिधानाय स्वकृतसमग्रवाक्यव्याख्यानदार्ढ्याय च स्पष्टं

प्रमाणमाह – **ओतमिति** ।। **ओतं** प्रविष्टम् । समस्तोङ्कारार्थकथनमेतत् । व्यस्तस्य तस्यार्थमाह – **अत्युच्चश्चेति** ।। आधिक्यार्थकाकारास्यार्थः – **अतीति** ।। उकारस्यार्थः – **उच्च इति** ।। गुणसङ्ख्यानार्थकमकारार्थः – **अखिलैर्गुणैरिति** ।।

ननु ''ओमिति नामकं भगवन्तमुपासीत'' इति व्याख्यानमयुक्तम् । तथा सति ''ओमिति ह्युद्गायति'' इत्युत्तरवाक्यासङ्गतेः । तत्रोमित्यारभ्य हि यस्मादुद्गायति तस्मादुद्गीथ ओङ्कार इत्योङ्कारस्योद्गीथवाच्यत्वे हेतुरुच्यते । तच्च मत्पक्ष एव सङ्गतं न त्वत्पक्ष इति चेत् । न । भगवत ॐनामकत्वसमर्थनार्थत्वेनास्मत्पक्षेऽपि सङ्गतत्वादिति भावेन तद् वाक्यं व्याचष्टे – **ओमित्येनमिति** ।। हि यस्मादेनमुद्दिश्योद्गाता स्फुटमो-मित्युच्चार्य सङ्गायति । तस्मादोंनामकत्वं भगवतः सिद्धम् । अन्यथा तद्वाचकशब्दस्यैवोच्चार्यत्वेनातथाभूतोङ्कारोच्चारणस्यासङ्गतत्वादिति भावः। ''तस्योपव्याख्यानम्''इत्येतद् व्याचष्टे – **विष्णोरिति** ।। अस्य विष्णोर्यद् ओमिति नाम तस्य व्याख्यानमधिकोच्चतेत्यर्थः । तेन तस्याक्षरस्योद्गीथस्य विष्णोरुप समीपे वर्तमानं यदोमिति नाम तस्य व्याख्यानं क्रियत इत्यर्थ उक्तो भवति । कथमयमोङ्कारार्थ इत्यत आह – **अकारेणेति** ।। कस्तर्हि मकारार्थ इत्यत आह – **तथेति** ।। अधिको-च्चत्वेनेत्यर्थः । नेदं शब्दार्थान्तर्गतम् । सति चैवं त्र्यक्षरात्मकोङ्कारस्य कोऽर्थः सम्पन्न इत्यत आह – **अधिकेति** ।। १ ।।

**भाष्यम्**

*मुक्तये तारतम्यज्ञानमावश्यकम्*

**तदेतत् परमत्वं तु यथाक्रममुदीर्यते ।**
**देवतानुक्रमज्ञाश्च विष्णोः परमताविदः ।।**

एकान्तिनस्ते विज्ञेया यथाक्रमपरास्तथा ।
अस्मादसावुच्च इति क्रमस्यान्तगतं हरिम् ॥
एकमेव तु ये विद्युस्ते ह्येकान्तिन ईरिताः ।
एवं यथाक्रमज्ञाश्च सदैकान्तपरायणाः ॥
प्रविशन्ति परं देवं नारायणमनामयम् ।
उच्चक्रमान्तगत्वेन कुर्युः पूजां हरेः सदा ॥
लक्ष्म्यादेः क्रमशः पूजां ज्ञात्वा भागवता इति ।
स्वतन्त्रपूज्यताबुद्ध्या न दद्युः किञ्च कस्यचित् ॥
ब्रह्माद्या मनुसञ्ज्ञा ये वर्णत्वेनोदिताः[१] श्रुतौ ।
मानवाख्याश्च मुनयस्तान् यजन्ति न चेतरान् ॥
पितृत्वेन गुरुत्वेन साक्षाद् भागवतत्वतः।
अपभ्रष्टा अदेवाश्च ब्रह्माद्याख्यायुता अपि ॥
देवसञ्ज्ञाश्च दीनत्वात् पूजयेयुर्न तान् क्वचित् ।
यद्भागवतबुद्ध्यैव दत्तं ब्रह्मादयः सुराः ॥
वैदिकाः प्रतिगृह्णीयुरपभ्रष्टास्तथेतरत् ।
यथाक्रमपरिज्ञानादेकान्तित्वाच्च केवलम् ॥
अच्छिद्रत्वाच्च नियतो मोक्षोऽन्यत्तु विडम्बनम् ।

*भक्तिविरक्ती अपि मोक्षसाधने*

विष्णौ भक्तिर्विशेषेण मोक्षावाप्तौ हि कारणम् ॥
तद्भक्तेषु क्रमेणैव रमाद्येषु त्वनन्तरम् ।

---

१. 'उदितान्' - इ.पाठः ।

तृतीयमपि वैराग्यं [१]नचान्यन्मोक्षकारणम् ॥
एतत्साधनताहेतोस्तदन्यद्धि विधीयते ।
अतोऽन्यत् सर्वकृच्चापि गच्छेदेवाधरं तमः ॥
अस्मिन् सुनिष्ठितो नित्यं मोक्ष्येवान्योज्झकोऽपि सन् ।
अतस्तेषां क्रमं वक्ष्ये देवानां यः श्रुतौ श्रुतः ॥
पृथिवी सर्वभूतेभ्यः सदा सर्वगुणैर्वरा ।
रसः सारो वरश्चेति शब्दा एकार्थवाचकाः ॥
पृथिव्या वरुणः श्रेष्ठस्तस्मादोषधिदेवता ।
सोमस्तस्मात्तु पुरुषो रुद्रो यत्पौंस्यदेवता ॥
तस्मात् सरस्वती वाग्घि श्रेष्ठाऽस्या ऋक्स्वरूपिणी ।
सैव श्रेष्ठा ततो वायुर्वरिष्ठः सामनामकः ॥
समत्वात् सर्वभूतेषु साम साम्नां च देवता ।
ततः श्रेष्ठतमो विष्णुः श्रेष्ठश्रेष्ठतमः[२] सदा ॥
श्रेष्ठाच्छ्रेष्ठतमाच्चापि परमात् परमो विभुः ।
परमर्धियुतत्वाच्च पराध्यं इति कीर्तितः ॥' इति सारनिर्णये ।

अतिशयेन परमर्धिगुणः परमः पराध्यः । उत्तमेभ्योऽप्यतिपरमोत्तमोत्तमो रसानां रसतमः परमः पराध्यः । रसानां सकाशादपि परमपराध्यरसतम[३] इत्यर्थः । प्राणादीनां भूतादिभ्यः श्रेष्ठत्ववदस्य श्रेष्ठत्वं न भवति किन्तु महान् विशेष इति ज्ञापयितुं रसानां रसतम

---

१. 'नैवान्यत्' - हृपाठः । २. 'श्रेष्ठः श्रेष्ठतमः' प्र.पाठान्तरम् । ३. 'परमः परमर्द्धरसतमः' - हृ

इत्यादि बहुविशेषणम् । भूतेभ्यः पृथिव्या रसत्वं, तेभ्यो वरुणस्य रसतरत्वं, सोमस्य रसतमत्वं, रुद्रस्य परमरसतमत्वं[१], वाचः परमर्द्धरसतमत्वं[२], प्राणस्य परमपरर्धरसतमत्वं, अयं तु भगवान् प्राणादपि परमपरर्द्धरसतममात्रो[३] न भवति । किन्तु प्राणस्यापि रसभूताया रमाया अपि परमपरार्ध्यरसतमः । अस्मादप्यतिशयेन परमित्यसङ्ख्यागोचरत्वेन परार्धेन ज्ञेयं हि परार्ध्यम् । ऋग्रूपाया वाचः पृथक्परत्वाङ्गीकारेऽपि भूतेभ्यः प्राणस्य परमपरार्धरसतमत्वमेव न तु परमपराद्धर्यरसतमत्वम्[४]। परस्मादा[५] समन्ताद् ऋद्धं हि परार्धम्[६]। तेनासङ्ख्यागोचरत्वेन ज्ञेयं पराद्ध्यम् । परार्धोत्तमं परार्धि । तेनासङ्ख्यागोचरत्वेन ज्ञेयं पराद्धर्यमित्यतः परार्धित्वं श्रियो भवति । श्रियोऽपि परार्ध्यो भगवान् । अतो रसानां रसतमः परमः परार्ध्यः ॥ २ ॥

## पदार्थकौमुदी

### भाष्यार्थः

यद्यधिकोच्चत्वेन प्रमितत्वमोङ्कारार्थतया विवक्षितं तर्ह्युत्तरत्र तदेव वक्तव्यम् । नच तदुच्यते । "स एष रसानां रसतमः" इत्यादावधिको-च्चत्ववचनेऽप्यधिकोच्चत्वेन प्रमितत्वस्यावचनात् । नचोङ्कारावयवार्थभूत-मधिकोच्चत्वमेव श्रुत्योच्यते । अत एव व्याख्यानमधिकोच्चतेत्ये-

१. 'रुद्रस्य च रसरसतमत्वम्'-ह. २. 'परमपररसतमत्वम्'-ह. ३. 'परमपरार्ध-रसतममात्रोऽपि' प्र. ४. परमपरार्धिरसतमत्वम् प्र. ५. 'परस्मादपि' ह. ६. 'तेन उत्तमत्वेन ज्ञेयं परार्धि' इत्यधिकः क्वचित् अर्वाचीनमुद्रितपुस्तके ।

वोक्तमिति वाच्यम् । तथाऽपि ''एषां भूतानां पृथिवी रसः'' इत्यादिना देवतातारतम्योक्तेरसङ्गतत्वादित्यतस्तस्य सङ्गतिमाह – **तदेतदिति** ॥ ॐकारस्यावयवार्थभूतमित्यर्थः ॥ अधिकोच्चत्वमिति वक्तव्ये ''स एष रसानां रसतमः परमः परार्ध्यः'' इति श्रुतौ परमत्वस्याभिधानात् परमत्वमित्युक्तम् । यथाक्रमं देवतातारतम्यक्रममनुसृत्येत्यर्थः । उदीर्यते ''एषां भूतानां'' इत्यादिनेति शेषः । नन्वोङ्कारार्थभूतं विष्णोः परमत्वमेव श्रुत्या वक्तव्यम् । देवतातारतम्यं किमर्थमुच्यते ? तज्ज्ञानस्य व्यर्थत्वादित्यत आह – **देवतेति** ॥ यथाक्रमपराः यथाक्रमज्ञाने तात्पर्यवन्तः । ननु विष्णोः परमताविद एवैकान्तिन इत्यस्तु । किं देवतानुक्रमज्ञानामप्येकान्तित्वकथनेन । तथा च श्रुतौ तदुक्तिर्व्यर्थैवेत्यत एकान्तिशब्दं निर्वक्ति – **अस्मादिति** ॥ एक एवान्ते वर्तत इत्येकान्तो हरिः, एकान्त एषामस्तीत्येकान्तिनः । षष्ठ्यर्थस्तु तज्ज्ञानविषयत्वमिति भावेन ''ये विद्युः'' इत्युक्तम् । अस्त्वेवं देवतानुक्रमज्ञत्वमप्येकान्ति-शब्दार्थः । तेनैकान्तित्वेनापि किं फलम् ? येन तदर्थमिदं ज्ञातव्यं स्यादित्यत आह – **एवमिति** ॥ एकान्तिकशब्दार्थानुवादोऽयम् । एक एवान्तेऽवसित इत्येकान्तो भगवान् परमयनमाश्रयो येषां ते तथोक्ताः । यद्यपि देवतातारतम्यज्ञानपुरस्सरं भगवत्सर्वोत्तमत्वज्ञानस्य भगवत् प्रवेशाख्यमोक्षहेतुत्वात् तदेतत्परमत्वं यथाक्रममुदीर्यत इत्येव वक्तव्यम् । तथाऽप्येकान्तित्वस्यैवान्यत्र मोक्षसाधनत्वेनोक्तत्वात् कथमेतदित्यतस्त-द्विरोधपरिहारायैतदेवैकान्तित्वमित्युक्तमिति मन्तव्यम् । न केवलं देवता-तारतम्यज्ञानपूर्वं भगवत्सर्वोत्तमत्वज्ञानमेव मोक्षहेतुः, अपितु तथा ज्ञात्वा तत्पूजा चेति भावेनाऽह – **उच्चेति** ॥ अन्तगत्वेन ज्ञात्वेत्यपि सम्बन्धः । कुर्युरित्यस्योत्तरत्रापि सम्बन्धः । तर्हि ''पूजयेन्नान्यदेवताः'' इत्यादेः का

गतिरित्यत उक्तम्– **भागवता इति ज्ञात्वेति** ।। एवं सति निषेधविषयः क इत्यत आह – **स्वतन्त्रेति** ।। ननु देवतानामप्रधानतयाऽपि पूज्यत्वे कथं

''विप्रक्षत्रियविट्शूद्रभेदेन सर्वशः ।

मनवो मानवाश्चैव सम्पूज्या नैव देवताः ।।'' इत्येवंरूपं क्वचिद्वचनमित्यतस्तद्घटयन्नाह – **ब्रह्माद्या इति** ।। वर्णत्वेन विप्रादिवर्णभेदेनेत्यर्थः । ये श्रुतौ वर्णत्वेनोदिता मनुसञ्ज्ञास्ते ब्रह्माद्या एवेत्यन्वयः । चशब्दोऽवधारणे । मुनयो मरीचाद्याः । उक्तं च

''मनवो बोधवैशेष्याद् देवा ब्रह्मादयः स्मृताः ।

विप्रादिवर्णभेदेन चत्वारो बह्वोऽपि ते ।

मरीच्याद्यास्तु तत्पुत्रा मानवा नामतः स्मृताः ।।'' इति । तेषामपि न देवत्वेन पूज्यत्वम् । किन्तु प्रकारान्तरेणैवेत्यभिप्रेत्याऽह – **पितृत्वेनेति** ।। इदं तु कार्तयुगजनप्रवृत्तिमभिप्रेत्य । यथोक्तमन्यत्र -

''देवतात्वेन चेज्यः स ब्रह्माद्या मनुनामकाः ।

वक्तृत्वेन पितृत्वेन कारित्वेनैव चाऽदरात् ।।

इज्यन्ते देवताः सर्वा नतु देवतया क्वचित् ।

अनन्ययाजिनस्ते तु तस्मात् कार्तयुगा जनाः ।।'' इति । तर्हि ''सम्पूज्या नैव देवताः'' इत्युक्तेः का गतिरित्यतो ''न चेतरान्'' इत्युक्तं विवृणोति– **अपभ्रष्टा इति** ।। ''ब्रह्माद्याख्यायुता अपि'' इत्यनेन ब्रह्माद्या न सम्पूज्या इत्युक्तेरपि गतिरुक्ता । एतेन देवा इति ब्रह्माद्या इति वा प्रसिद्धप्रयोगं विहाय किमप्रसिद्धप्रयोगेणेत्यपि परास्तम् । देवादिशब्दानामसुरादिसाधारणत्वान्मनुशब्दस्यैव देवेष्वसाधारणत्वात् तस्यैव प्रयोग इति भावः । द्विविधदेवानां कुत्र विनियोग इत्यत आह– **यदिति** ।।

ननु देवानामसुराणां च ब्रह्मादिनामित्वे ब्रह्मादिभ्यः स्वाहेत्युक्तावसुराणामपि प्राप्तेः कथं कर्मप्रवृत्तिनिर्णय इत्यतो वाऽऽह– **यदिति** ॥ यदिति श्रवणात् तदिति लभ्यते । यदुक्तं देवतातारतम्यज्ञानं भगवत्परायणत्वलक्षणमेकान्तित्वं च मोक्षसाधनमिति, तदयुक्तम् । कदाचित् तदुभयसद्भावेऽपि मोक्षानुपलम्भादित्यत आह– **यथाक्रमेति** ॥ अच्छिद्रत्वाच्च अच्छिद्रादेव । अन्यत् कादाचित्कं देवतातारतम्य-ज्ञानमेकान्तिकत्वं च । विडम्बनमेव न मोक्षसाधनमित्यर्थः । एवमेकं मोक्षसाधनमुक्त्वा द्वितीयमपि तदाह – **विष्णोरिति** ॥[१] विशेषेण सर्वोत्तमत्वेन । विशेषेण कारणमित्यपि सम्बन्धः । तेन ज्ञानस्य भक्तिव्यापकत्वं सिद्ध्यति । न केवलं विष्णावेव भक्तिर्मोक्षकारणम् । किन्त्वित्यत आह– **तद्भक्तेष्वेति** ॥ विष्णोरनन्तरं रमाद्येषु तद्भक्तेषु क्रमेणैव भक्तिश्च मोक्षावाप्तौ कारणमित्यन्वयः । मोक्षसाधनान्तरमाह– **तृतीयमपीति** ॥ वैराग्यमपि मोक्षावाप्तौ कारणमित्यन्वयः । ज्ञानभक्ति-समकक्ष्यतानिरासाय तृतीयमित्युक्तम् । ज्ञानं भक्तिं वा प्रतीदं साधनमिति भावः । एवमेव साधनान्तरमस्ति किं ? नेत्याह – **नचेति** ॥ कथं तर्हि मुमुक्षोर्यज्ञादिकं विधीयत इत्यत आह – **एतत्साधनतेति** ॥

ननु तर्हि ''तद्धेतोरेवास्तु तद्धेतुत्वं किं तेन'' इति न्यायेन ज्ञानभक्तिवैराग्यसाधनयज्ञादीनामेव मोक्षसाधनत्वोपपत्तेः किं ज्ञानादि-भिरित्यतो ज्ञानादीनामेव मोक्षसाधनत्वमनन्यथासिद्धान्वयव्यतिरेकाभ्यां साधयति – **अत इति** ॥ ज्ञानादिकं परित्यज्येत्यर्थः । तमश्चेति चशब्दान्वयः । तेन न केवलं मोक्षं न गच्छेदित्यस्य समुच्चयः । अनेन व्यतिरेक उक्तो भवति । तस्यान्यथासिद्धिपरिहाराय सर्वकृदपीत्युक्तम् ।

---

१. अत्र ''विष्णोर्भक्तिर्विशेषेण'' इति वेदेशीयाभिमतः पाठः, प्रकृतभाष्यपाठस्तु 'विष्णौ भक्तिविशेषेण' इत्यवधेयम् ।

अस्मिन्नित्यनेनान्वय उच्यते । अत्राप्यन्यथासिद्धिपरिहाराय ''अन्यो-ज्झकोऽपि'' इत्युक्तम् । एतच्च ज्ञानयोगिषु सनकादिषु द्रष्टव्यम् ।

नन्वस्त्वेवं देवतातारतम्यज्ञानं मोक्षसाधनम् । किं तत इत्यत आह– **अत इति** ॥ देवतातारतम्यज्ञानस्य मोक्षसाधनत्वादित्यर्थः । एवम् ''एषां भूतानां पृथिवी रसः'' इत्यादेः सङ्गतिमभिधाय तद्वाक्यं व्याचष्टे– **पृथिवीति** ॥ एषां भूतानां सकाशादित्यध्याहारमभिप्रेत्य सर्वभूतेभ्य इत्युक्तम् । ऋभ्वादिभ्य इत्यर्थः । ''पृथिव्यामृभवो विलीयन्ते'' इति श्रुतेः। ''सर्वगुणैः'' इत्यस्य योग्यतया सम्बन्धः । रसशब्दार्थः – **वरेति** ॥ तदुपपादयति– **रस इति** ॥ ''पृथिव्या आपो रसः'' इति वाक्यं व्याचष्टे– **पृथिव्या इति** ॥ ''अपामोषधयो रसः'' इति वाक्यं व्याचष्टे– **तस्मा-दिति** ॥ ''ओषधीनां पुरुषो रसः'' इत्येतद् व्याचष्टे– **तस्मात्त्विति** ॥ रुद्रस्य पुरुषनामकत्वमुपपादयति – **यत्पौंस्यदेवतेति** ॥ शिश्नदेवतेति यावत् । ''पुरुषस्य वाग्रसः'' इति वाक्यं व्याचष्टे – **तस्मादिति** ॥ वाक् सर्ववेदाभिमानिनी । ''वाच ऋग् रसः'' इति वाक्यं व्याचष्टे – **अस्या इति** ॥ वागभिमानिन्याः । ''ऋचः साम रसः'' इत्येतद् व्याचष्टे – **तत इति** ॥ वायौ सामशब्दं निर्वक्ति – **समत्वादिति** ॥ निमित्तान्तरमाह– **साम्नां देवता चेति** ॥ ''साम्न उद्गीथो रसः'' इत्येतद् व्याचष्टे– **तत इति** ॥ यद्यपि श्रुतौ तमप् न श्रूयते । तथाऽपि प्राणादीनां भूतादिभ्यः श्रेष्ठत्ववदस्य श्रेष्ठत्वं न भवतीति भावेन तमप्प्रयोगः ।

एतेन पृथिव्यादिशब्दाः प्रसिद्धार्था एवेति परकीयं व्याख्यानमपास्तम् । ''स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः'' इति वाक्ये ''योऽष्टम उद्गीथः स एष रसानां रसतमः'' ''स एष परमः'' ''स एष परार्द्ध्यः'' इति वाक्यत्रयमङ्गीकृत्य ''स एष रसानां रसतमः'' इति

वाक्यं तावद् व्याचष्टे – **श्रेष्ठश्रेष्ठतमस्सदेति** ।। श्रेष्ठानां वाय्वादीनां सकाशाच्छ्रेष्ठतम इत्यर्थः । ''स एष परमः'' इति वाक्यं परमत्वस्य सावधिकत्वादवधिप्रदर्शनपूर्वकं' व्याचष्टे – **श्रेष्ठादिति** ।। श्रेष्ठादपि सरस्वत्यादेः श्रेष्ठतमो यो वायुस्तस्मादपि परमं यच्छ्रीतत्वं तस्माद् परतम इत्यर्थः । ''स एष परार्ध्यः'' इति वाक्यं व्याचष्टे– **परमर्द्धियुतत्वाच्चेति** ।। परार्ध्य इति चेतिच शब्दान्वयः । ननु परमर्द्धियुतत्वेन परर्ध्य इति यावत् । परा च सा ऋद्धिश्च परर्द्धिस्तया युतः परर्द्ध्य इत्येव प्राप्तेः । नतु परार्ध्य इति । तत् कथं ''परमर्धियुतत्वाच्च परार्द्ध्यः इति कीर्तितः'' इति व्याख्यानमित्यतः स्मृत्यभिप्रायप्रकटनाय परार्द्ध्यशब्दं स्वयं व्याचष्टे– **अतिशयेनेति** ।। परार्द्ध्य इत्यत्र दीर्घस्यार्थः – **अतिशयेनेति** ।। परशब्द-स्यार्थः – **परमेति** ।। परमर्द्धिरेव गुणो यस्य स परमर्द्धिगुण इति बहुव्रीहि-समासकरणेन परार्द्ध्या युतः परार्द्ध्य इत्यर्थ उक्तो भवति । स्मृतौ ''परमो विभुः'' इत्येतदुत्तरत्राप्यनुवर्तत इति भावेन परम इत्युक्तम् । परमो विभुरतिशयेन परमर्धिगुणो यतोऽतः परार्द्ध्य इत्युच्यत इत्यर्थः । तथाच स्मृतावप्यतिशयेनेति ग्राह्यमिति नानुपपत्तिरिति भावः ।

यद्वा, पूर्वं ''स एष रसानां रसतमः परमः परार्द्ध्यः'' इत्यत्र वाक्यत्रयमङ्गीकृत्य व्याख्यातम् । इदानीं ''स एष रसानां रसतमः'' इत्येकं वाक्यं, ''परमः परार्द्ध्यः'' इत्यपरं वाक्यमिति वाक्यद्वयमेवेद-मित्यङ्गीकृत्य प्रथमवाक्यस्योक्त एवार्थः । द्वितीयवाक्ये तु परमत्वं न पृथग्भगवद्विशेषणम् । किन्तु ऋद्धिलक्षणगुणविशेषणमिति भावेन ''परमः परार्द्ध्यः'' इत्येतद् व्याचष्टे – **अतिशयेनेति** ।। परेत्यस्यार्थः – **अतिशयेनेति** ।। परमशब्दस्य तु परमेत्येवानुवादः । अतिशयेन परम-र्द्धिगुणो भगवान् परमः परार्द्ध्य इत्युच्यत इत्यर्थः । ननु ''परमः

पराद्धर्यः'' इत्यत्र परमत्वं यदि ऋद्धिलक्षणगुणविशेषणं तर्हि परमपराद्धर्य इत्येव स्यात्। नतु परमः परापराद्धर्य इति परमशब्दस्य विभक्त्यन्ततया निर्देश इति चेत्। न। ''अहमेवेदं सर्वोऽस्मि'' इति श्रुतौ ''अजानता महिमानं तवेदम्'' इति स्मृतौ चेदन्त्वस्य सर्वशब्दार्थ-पूर्णत्वमहिमत्वविशेषणत्वेऽपीदंशब्दस्य विभक्त्यन्ततया निर्देशदर्शनात्। उक्तं च – ''इदमिति पूर्णत्वविशेषणम्। 'अजानता महिमानं तवेदम्' इतिवत्'' इति।

अथवा ''स एष रसानां रसतमः परमः पराध्र्यः'' इत्येकमेव वाक्यम्। सम्भवत्येकवाक्यत्वे वाक्यभेदाश्रयणायोगादिति भावेन तद्वाक्यं तात्पर्यतो व्याचष्टे – **उत्तमेभ्योऽपीति** ॥ रसानामित्यस्यार्थः – **उत्तमे-भ्योऽपीति** ॥ रसतमः परमः पराद्धर्य इत्यस्यार्थः – **अतिपरमोत्तमोत्तम इति** ॥ उत्तमेभ्योऽपि योऽतिपरमस्तस्मादपि य उत्तमः तस्मादप्युत्तम इत्यर्थः। ''रसानां रसतमः परमः पराद्धर्यः'' इत्युच्यत इति शेषः।

ननु रसानामिति षष्ठ्याः कथमुत्तमेभ्य इति पञ्चम्या व्याख्यानम्? रसतमः परमः पराद्धर्य इति प्रत्येकं विशेषणत्वप्रतीतेः कथमति-परमोत्तमोत्तम इति व्याख्यानं चेत्यतो ''रसानां रसतमः परमः पराद्धर्यः'' इति वाक्ययोजनामाह – **रसानामिति** ॥ तथाच रसानामिति षष्ठ्याः सकाशादिति पूरणे पञ्चम्यर्थस्यैव लाभादुत्तमेभ्य इत्युपपन्नम्। रसतमः परमः पराद्धर्य इति तु न पृथग्विशेषणम्। किन्तु परमपराद्धर्यरसतम इत्येकमेव। तस्य चातिपरमोत्तमोत्तम इति व्याख्यानं च युज्यत एवेति भावः।

ननु ''स एष रसानां रसतमः परमः पराद्धर्यः'' इत्यत्र वाक्यत्रय-मङ्गीकृत्य रसतमत्वादीनां प्रत्येकं भगवद्विशेषणत्वाङ्गीकारपक्षे विशेषण-

त्रयोपादानं व्यर्थमेकेनैव चारितार्थ्यादित्यत आह – **प्राणादीनामिति ॥** परमपराध्यर्रसतम इत्यस्यातिपरमोत्तमोत्तम इति व्याख्यानं कृतम् । इदानीं परमपराध्यर्रसतम इत्यस्याक्षरार्थमाह – **भूतेभ्य इत्यादिना ॥** ननु यदि प्राणस्य परमपरर्द्धरसतमत्वं तर्हि भगवतः परमपरार्द्धरसतमत्वं स्यात्। दीर्घस्यातिशयार्थकत्वात् । नतु परमपराध्यर्रसतमत्वमित्यत आह – **अयं त्विति ॥** प्राणस्यापि रसभूताया अत एव परमपरार्द्धरसतमशब्दवाच्याया इति शेषः । ननु परमपराद्धर्च्यरसतमशब्देन परमपरार्द्धरसतमशब्दवाच्याया रमाया उत्तमत्वं भगवतः कथं लभ्यते । तद्वाचकपदाभावात् । नच यकारस्योत्तमार्थत्वं कुत्रचिदुपलब्धमित्यतः पराद्धर्च्यशब्दं निर्वक्ति – **अस्मादिति ॥** परार्द्धेन परार्द्धनामकश्रीतत्वेन ज्ञेयं हि पराध्यर्म् । यातेर्गत्यर्थात् कर्मणि कप्रत्यये यकारस्य ज्ञेयवाचकत्वात् । अकारलोपो निर्वचनत्वात् । नन्वेवं तर्हि पराद्धर्च्यो भगवान् स्यात् । परार्द्धज्ञेयत्वस्य ब्रह्मादिसाधारणत्वादित्यत उक्तम् – **अस्मादप्यतिशयेन परमिति ॥** अस्मात् स्वस्माच्छ्रीतत्वादप्यतिशयेन परमित्यनेन प्रकारेण परार्द्धेन ज्ञेयमित्यर्थः । ननु यथा सरस्वत्याः प्राणः स्वस्मादप्यतिशयेन परम इति ज्ञेयः, प्राणेन वा श्रीतत्वं यथा परमिति ज्ञेयं तथा परार्द्धेन श्रीतत्वेनापि स्वस्मादेतावत्सङ्ख्याकगुणविशिष्टत्वेन परमिति ज्ञेयं चेद् भगवतोऽतिमाहात्म्यं न लभ्यत इत्यत उक्तम् – **असङ्ख्यागोचरत्वेनेति ॥** असङ्ख्यागोचरत्वेन परार्द्धेन ज्ञेयत्वं जीवराशावप्यस्ति । अतोऽस्मादप्यतिशयेनेत्युक्तम् । यद्यपि परार्द्धेन ज्ञेयत्वमेव शब्दलभ्यम् । तथाऽपि योग्यतयाऽन्यस्य लाभः । नन्वेवं परमपराद्धर्च्यरसतमत्वं भगवतः किमर्थं वक्तव्यम् । देवतातारतम्यज्ञानपुरःसरं भगवतः सर्वोत्तमत्वकथनार्थमिति चेत् । न । ''एषां भूतानां पृथिवी रसः'' इत्यादिना ''साम्न उद्गीथो रसः'' इत्यन्तेन तस्योक्तत्वादिति चेत् सत्यम् । तदेव सङ्ग्रहेणानूद्य

प्राणोत्तमरमोत्तमत्वं चात्र कथ्यत इत्यदोषः ।

ननु यदि ''एषां भूतानां पृथिवी रसः'' इत्याद्युक्तमेव सङ्ग्रहेण परमपराध्यर्रसतम इत्यनेनानूद्यते तर्हि पूर्वं ''वाच ऋग् रसः'' इति वागपेक्षया ऋच आधिक्यस्योक्तत्वादत्र वाचः परमपररसतमत्वं, ऋचः परमपरर्द्धरसतमत्वं, प्राणस्य परमपरार्द्धरसतमत्वं परार्द्धेन ज्ञेयस्य भगवतः परमपरार्द्धरसतमत्वमिति प्राणादेव भगवत आधिक्यं लब्धम् । नतु रमाया इति चेत् । न । वागृचोरैक्यविविक्षयैवं व्याख्यानात् । अस्तु वा ऋग्रूपायाः सरस्वत्याः स्वस्या एव पृथक्परत्वम् । तथाऽपि रमोत्तमत्वं भगवतः सिध्यत्येवेत्याह – **ऋग्रूपाया इति** ॥ ननु पूर्वव्याख्याने रमायाः परम-परार्द्धरसतमत्वमुक्तम् । तत्कथं परमपरार्द्धरसतमशब्दवाच्यप्राणोत्तम-त्वमनेन लभ्यत इत्यतः परार्द्धशब्दं व्याचष्टे – **परस्मादपीति** ॥ तस्मिन्नेव पक्षे पराध्यर्शब्दार्थं पूर्वोक्तं स्मारयति – **तेनेति** ॥ परार्द्धेन श्रीतत्वेने-त्यर्थः । अस्मादप्यतिशयेन परमितीत्यपि ग्राह्यम् । यद्वा सङ्ख्याऽगोचर-गुणवत्त्वेनेत्यर्थः । न विद्यन्ते सङ्ख्यागोचरा गुणा यस्यासावसङ्ख्यागोचर इति विग्रहाश्रयणात् । एवं चेदं व्याख्यानान्तरमिति बोद्धव्यम् । ननु द्वितीयपक्षे प्राणस्य परमपरार्द्धरसतमत्वमेव । नतु परमपरार्द्धिरस-तमत्वमित्युक्तम् । किं ततः । न ह्येतावता भगवतः परार्द्ध्यशब्दवाच्यस्य रमोत्तमत्वं लब्धमित्यतो लब्धमेवेति भावेन परार्द्धिपरार्द्ध्यशब्दार्थमाह– **परार्द्धेति** ॥ इकारस्येशत्ववाचकत्वेनोत्तमत्वार्थकत्वादिति भावः । परार्द्धोत्तमं परार्द्धीति यतोऽतः परार्द्धित्वं श्रियो भवति । श्रिय एव परार्द्धशब्दवाच्यप्राणोत्तमत्वात् । तेन परार्द्धिनाऽसङ्ख्यातत्वेन ज्ञेयं परार्द्ध्यमित्यतः श्रियोऽपि पराध्यो भगवानिति योजना । पूर्वमकारलोपोऽत्र त्विकारलोप इति वैलक्षण्यसूचनाय पुनः

परार्द्धर्चशब्दव्याख्यानमुपसंहरति – **अत इति** ।। ''इत्युच्यते भगवान्'' इति शेषः ।। २ ।।

## भाष्यम्

**पृथिव्याः सोमवरुणयोश्चौषध्यब्देवतात्वेन रुद्रस्य च लिङ्गदेवतात्वेन प्रसिद्धेः ऋगादीनामेव विमर्शः क्रियते कतमा कतमर्गित्यादिना । तज्ज्ञानस्य विशिष्टफलत्वाच्च । वाचश्च सरस्वतीत्वेन प्रसिद्ध-वागृचोरैक्याच्च न विमर्शः कृतः ।**

' विशेषात् प्राणसंयुक्ता वागृगित्यभिधीयते ।
ऋ गताविति धातोर्हि ऋक्त्वं सर्गभिमानिनी ।।
विशेषसंयोगहीना यदा सा वै[१] सरस्वती ।
तदा तस्यावरा सैव प्राणसंयोगिनी मता ।।
प्राणयोगवियोगाभ्यां सैषैकाऽपि विभिद्यते ।
वागेवर्क् तच्छ्रुतौ प्रोक्ता प्राणः सामेति कीर्तितः ।।
अक्षयाद् गतिरूपत्वादक्षेषु रमणादपि ।
अक्षरं भगवान् विष्णुरोमित्युच्चत्वहेतुतः[२] ।।
इति शब्दोऽन्यथाभावनिवृत्त्यर्थ उदाहृतः ।
एवमत्युच्च एवासौ सर्वदैतद्धृदि स्थितः[३] ।
उद्गीयमान उद्गीथो भगवान् पुरुषोत्तमः।।३।।

---

१. 'सैव' ह. प्रभ पाठः २. 'अत्युच्चत्वहेतुतः' ह. पाठः ३.'स्थितेः' ह.पाठः

## पदार्थकौमुदी

### भाष्यार्थः

ननु पूर्वं पृथिवीसोमवरुणरुद्राणामपि प्रकृतत्वात् तान् विहाय कतमा कतमर्गित्यादिना ऋक्सामोद्गीथमात्रस्वरूपविमर्शकरणे किं निमित्त-मित्यत आह– **पृथिव्या इति** ॥ पृथिव्याः पृथिवीदेवतात्वेनेति शेषः । ननु पृथिव्यादीनां जडपृथिव्यादिदेवतात्वेन प्रसिद्धिः किं लौकिकी वैदिकी वा। नाऽद्यः तदभावात् । न द्वितीयः । ऋगादिस्वरूपस्यापि श्रुत्यादिसिद्धत्वेन तद्विमर्शकस्याप्यकर्तव्यत्वापातादित्यतो हेत्वन्तरमाह – **तज्ज्ञानस्येति** ॥ ऋगादिज्ञानस्येत्यर्थः । विशिष्टं फलं येन तद् विशिष्टफलम् । ऋगादीनामेव विमर्शः क्रियत इति सम्बन्धः । पृथिव्यादिज्ञानस्य विशिष्टफलसाधनत्वाभावेऽपि तत्स्वरूपस्याप्रसिद्धत्वे तद्विमर्शः कर्तव्य एवेति प्राचीनहेतूपन्यासः । यदि ऋगादिज्ञानस्य विशिष्टफलसाधनत्वात् तद्विमर्शः कर्तव्यस्तर्हि वाचो ज्ञानस्यापि विशिष्टफलसाधनत्वात् तद्विमर्शोऽपि कर्तव्य इत्यत आह – **वाचश्चेति** ॥ चशब्दस्तुशब्दार्थः । तर्ह्युक्तन्यायेन ऋगादिविमर्शोऽपि न कार्यः स्यादित्यत उक्तम् – **वागृचोरिति** । ''वागेवर्क्'' इति वागृचोरैक्यस्योक्तत्वादिति भावः । तथा च ऋग्विमर्शे वाग्विमर्शोऽपि कृत एवेति भावः । ऐक्येऽपि रूपान्तरस्याप्रसिद्धत्वे तद्विमर्शः कर्तव्य एवेति प्राचीनहेतूपन्यासः ।

नन्वेतदयुक्तम् । पूर्वं ''वाच ऋग्ररसः'' इति वागपेक्षया ऋचो रसत्वमुक्तम् । इदानीं तयोरैक्यमुच्यते । तत्कथमुपपन्नम् । नहि स्वस्मात् स्वस्य श्रैष्ठ्यं भवतीत्यत आह – **विशेषादिति** ॥ वाक् सरस्वती । विशेषेण प्राणसंयुक्तत्वं कथं ऋक्शब्दलब्धमित्यतआह– **ऋगताविति** ॥ धातोर्धातुव्याख्यानादित्यर्थः । ऋक्शब्दप्रवृत्तिनिमित्तं हि ऋक्त्वमेव ।

ऋक्त्वं च गतत्वम् । ऋ गताविति धातोः । गतत्वं चात्र संयुक्तत्वमेव । कारणशब्देन कार्योपलक्षणात् । संयुक्तत्वं च योग्यतया प्राणेनैव । रूपान्तरादतिशयलाभाय विशेषादित्यपि योग्यतया लब्धम् । तेन विशेषात् प्राणसंयुक्तत्वं ऋक्शब्दलभ्यमिति भावः । प्रकारान्तरेण सरस्वत्या ऋक्शब्दाभिधेयत्वमुपपादयति – **सर्गभिमानिनीति** ॥ अभिमान्यभिमन्यमानयोरेकशब्दत्वस्य ''महतश्चतुर्मुखात्'' इत्यादौ दृष्टत्वादिति भावः। अस्त्वेवं प्राणसंयुक्ता वाग् ऋक्शब्दाभिधा । तथाऽपि कथं तस्याः स्वस्या एवोत्तमत्वमुच्यत इत्यत आह – **विशेषेति** ॥ तथाचावस्थाविशेषमादायैकस्या एव तस्याः स्वापेक्षया रसत्वोक्तिरुपपन्नेति भावः । अत एवोरस्थलाश्रितयज्ञनाम्न्या लक्ष्म्या भगवद्रतियोगस्था दक्षिणाख्याऽपि सैव विशिष्टेत्युच्यते ।

''यज्ञाख्या सैव विष्णोस्तु या तूरस्थलमाश्रिता ।
हरिणा रतियोगस्था दक्षिणाख्याऽपि सैव तु ।
उत्तरोत्तरतः साऽपि विशिष्टा दक्षिणा सुखे ॥'' इत्यादौ । नन्वस्या एकत्वे ''वाच ऋग्ररसः'' इति भेदोक्तिरयुक्ता । भेदे च ''वागेवर्क्'' इत्यभेदोक्तिरनुपपन्नेत्याशङ्काऽप्येवं सति निरस्तेति भावेनाऽह – **प्राणयोगेति** ॥ यस्मात् सैषैका तत् तस्माद् ''वागेवर्क्'' इति श्रुतावभेदेन प्रोक्ता । यस्माच्च सैषैकाऽपि प्राणयोगवियोगाभ्यां भिद्यते तत्तस्मात् ''वाच ऋग्रसः'' इति भेदेन प्रोक्तेति योज्यम् । अनेन ''वागेवर्क्'' इति वाक्यव्याख्यानमपि लब्धम् ।

इदानीं ''प्राणः साम'' इति वाक्यं व्याचष्टे – **प्राण इति** ॥ ''ओमित्येतदक्षरमुद्गीथ'' इति वाक्यं प्रणवपरमिति निरासाय व्याचक्षाणस्तावदक्षरशब्दार्थमाह – **अक्षयादिति** ॥ अक्षेत्यस्यार्थः –

**अक्षयादिति** ।। एतेन नञुपपदात् क्षै क्षय इत्यस्माद्धातोः ''आतोऽनुपसर्गे कः'' इति कप्रत्यय इत्युक्तं भवति । र इत्यस्यार्थः – **रतिरूपत्वादिति** ।। रमु क्रीडायामित्यस्माड्डः । अक्षश्चासौ रश्चेत्यक्षरः । तस्यैवार्थान्तरमाह– **अक्षेष्विति** ।। इन्द्रियेष्वित्यर्थः । ओमित्यस्यार्थमाह – **ओमितीति** ।।

ननु ''ओमित्येतदक्षरम्'' इत्यत्रेतिशब्दबलाद् ओङ्काराख्यः शब्दो लभ्यते । अर्थप्रकरणे पठितस्येतिशब्दस्य शब्दपदार्थकत्वव्यवस्थापकत्वात् । अन्यथा तद्वैयर्थ्यं स्यादित्यत आह – **इतिशब्द इति** ।। इतिशब्दार्थस्योङ्कारार्थेनान्वयं दर्शयति – **एवमिति** ।। एवमित्येनेतिशब्दस्य प्रकृतपरामर्शकत्वमप्यर्थ इत्यभिप्रेत्य इति ओमित्यन्वय उक्त इत्यपि ज्ञातव्यम् । एतच्छब्दार्थमाह – **एतदिति** ।। उद्गीथशब्दार्थमाह– **उद्गीयमान इति** ।। उच्चत्वेन गीत उद्गीतः, उद्गीत एवोद्गीथः ।। ३ ।।

**भाष्यम्**

**तस्मादोमित्यनुज्ञानं कुर्वन्त्येते जनाः सदा ।**
**त्वदुक्तं तत् तथा कुर्याद् भगवानेव केशवः ।।**
**इत्यभिप्रायतः शब्दः प्रवृत्तः स पुरातनैः।**
**तदेतदज्ञैस्तु जनैः स्वानुज्ञेति प्रदीयते[१] ।।**
**ओमित्ययं पूर्णवाची समृद्धिर्ह्योमितीरिता ।**
**समृद्धस्ते हि कामोऽयमित्यनुज्ञाऽथवा भवेत् ।।**
**अतः समृद्धिवाची स्याद्धरेरोंशब्द ईरितः ।**
**इति वा दीयतेऽनुज्ञा हरिस्तव समृद्धिदः ।। ६ ।।**

---

(१) 'प्रतीयते' पाठान्तरम् ।

## पदार्थकौमुदी

### भाष्यार्थः

''तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदाह'' इति वाक्यमसङ्गतिपरिहाराय व्याचष्टे – **तस्मादिति** ।। ओंनाम्नो भगवद्वाचकत्वादेवेत्यर्थः । एतत्परामर्शसौकर्यायैव श्रुतिक्रमोल्लङ्घनम् । नन्वोमित्यनुज्ञानेन कथमोङ्कारस्य भगवद्वाचकत्वसिद्धिरित्यत आह– **त्वदुक्तमिति** ।। कुर्यादिवेति सम्बन्धः । तस्मादोंशब्दो भगवद्वाचक इति शेषः । तथाच ''तद्वै'' इति वाक्यमोङ्कारस्य भगवद्वाचकत्वसमर्थनाय प्रवृत्तमिति नासङ्गतमिति भावः । कथं तर्ह्यधुनातनैर्नोक्ताभिप्रायतः स शब्दः प्रयुज्यत इत्यत आह – **तदेतदिति** ।। ''एषो एव समृद्धिर्यदनुज्ञा'' इति वाक्यं व्याख्यातुं तावत् तात्पर्यमाह – **ओमित्ययमिति** ।। शब्द इति शेषः ।। तत्र हेतुमाह – **समृद्धिरिति** ।। समृद्धेरोंशब्दवाच्यत्वं कुत इत्यत आह – **समृद्ध इति** ।। अथवेति प्राचीनानुज्ञाभिप्रायकथनात् पक्षान्तर-द्योतकः । हि यस्मादयं ते कामः समृद्धो भवत्वित्यभिप्रायेणानुज्ञा भवेत्, अनुज्ञा चोङ्कार इत्युक्तम् । अतः ॐशब्दो हरेः समृद्धिवाची ईरितः स्यादित्यर्थः । नन्वनुज्ञायाः उक्ताभिप्रायकत्वे ॐशब्दः समृद्धिमात्रवाची स्यात् । नतु हरिसमृद्धिवाची । तत्कथं हरेः समृद्धिवाची स्यादित्युक्त-मित्यितोऽनुज्ञाया अभिप्रायान्तरमाह – **इति वेति** ।। यतो हरिस्तव समृद्धिद इति वाऽनुज्ञा दीयते अतो हरेः समृद्धिवाची ॐशब्द इत्यन्वयः । ॐशब्दस्य समृद्धिमात्रवाचकत्वे पूर्वोक्तो हेतुः । हरिसमृद्धिवाचकत्वे त्वयं हेतुरिति भावः ।। ६ ।।

### भाष्यम्

**वाक्प्राणौ दम्पती चापि संसृज्येते जनार्दने ।**

**मुक्तौ तु तत्प्रसादेन संसृज्यन्ते ततः परे ।**
**तद्द्वारेणैव साक्षात्तु प्राणः संसृज्यते हरौ ॥ ४ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

एवं ''तद्वा एतदनुज्ञाक्षरम्'' इति वाक्यं परामर्शसौकर्याय पूर्वं व्याख्यायेदानीं ''तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते'' इति वाक्यं व्याचष्टे – **वाक्प्राणाविति** ॥ चापिशब्दौ वाक् च प्राणश्चेति वाक्प्राणा-विति परस्परसमुच्चयार्थौ । अत एव श्रुतौ वाक् च प्राणश्चेत्युक्तम् । यद्वा, अपिशब्दः कैमुत्यार्थः । यदाऽतिशयितमाहात्म्यविशिष्टवाक्प्राणप्राप्यो जनार्दनस्तदा तन्माहात्म्यं किं वक्तव्यमिति । चशब्दो ऋक्साम-समुच्चयार्थः । अत एव श्रुतौ ''तद्वा एतन्मिथुनं यद्वाक् च प्राणश्च ऋक् साम च'' इत्युक्तम् । तुशब्दो विशेषार्थः । ननु सर्वेऽपि मुक्तौ भगवति संसृज्यन्ते । अतः को विशेष इत्यत आह – **तत्प्रसादेनेति** ॥ तयोः प्रसादेनेत्यर्थः । तुशब्दोऽवधारणार्थः । साक्षादेव भगवदन्याधिकारि-प्रसादमन्यद्वारं चानपेक्ष्येत्यर्थः । वाक्प्राणयोः प्रकृतयोरप्यत्र प्राणमात्र-ग्रहणेन वाक्प्राणद्वारेति गम्यते ॥ ४ ॥

### भाष्यम्

तेनैव विष्णुनेयं च त्रयीविद्या प्रवर्तते ।
ओमित्युक्त्वा हि तद्व्याख्या सर्वैर्मन्त्रैः प्रवर्तते ॥
ॐनामकस्य पूजार्थं विष्णोरेव सदैव हि ।
महिम्ना सारभूतेन विष्णुना ज्ञोऽज्ञ एव च ।

**कुरुतः कर्म ....... ....... ॥ ७ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''तेनेयं त्रयीविद्या वर्तते'' इति वाक्यं तच्छब्दपरामृश्यं दर्शयन् व्याचष्टे – **तेनैवेति** ॥ तेनैव प्रणवार्थभूतेनैव विष्णुना स्वप्रतिपाद्यभूतेनेयं त्रयीविद्या प्रवर्तत इत्यनेन प्रणवार्थ एव सर्ववेदार्थ इत्युक्तं भवति । प्राचीनप्रणवव्याख्यानसमुच्चयार्थश्चशब्दः । प्रणवार्थ एव सर्ववेदार्थ इत्युक्तमुपपादयितुं प्रवृत्तं ''ओमित्याश्रावयति'' ''ओमिति शंसति'' ''ओमित्युद्गायति''इति वाक्यत्रयं व्याचष्टे– **ओमित्युक्त्वेति** ॥ सर्वैर्मन्त्रैराश्रावणादिमन्त्रैः ॥ ''एतस्यैवाक्षरस्यापचित्या'' इत्येतद् व्याचष्टे– **ॐनामकस्येति** ॥ ''महिम्ना रसेन तेनोभौ कुरुतः'' इत्यादि व्याचष्टे– **महिम्नेति** ॥ विष्णुनैवेति सम्बन्धः ॥ ७ ॥

### भाष्यम्

**....... ......नाज्ञस्य मुक्तिर्ज्ञस्य भवेत्तु सा ।**
**स्वयोग्यं तु परिज्ञानं यत् तस्योपनिषत् स्मृतम् ।**
**अक्षरं भगवान् विष्णुस्तस्योपप्रणवः स्मृतः ।**
**उपव्याख्या तु तद्व्याख्येत्येवमाह श्रुतिः परा ॥' इति तार्तीये ।**
**'परर्धं परमादुच्चं परार्धं तु ततोऽधिकम् ।**
**ततोऽधिकं परार्धिः स्यात् परार्ध्यमिति तत्परम् ।**
**परतः परमाच्चैव परार्धो वायुरीरितः ।**
**परार्धिनी श्रीरुद्दिष्टा परार्ध्यो भगवान् हरिः ॥'**

**इति शब्दनिर्णये ॥ ८ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

"नाना तु विद्या चाविद्या च" इत्युक्तं वैलक्षण्यं फलकृतमिति भावेन प्रवृत्तस्य "यदेव विद्यया" इति वाक्यस्य व्यावर्त्यप्रदर्शनपूर्वकं तात्पर्यमाह – **नाज्ञस्येति** ॥ तुशब्द एवार्थः । ज्ञस्यैवेति सम्बन्धः । ननूपनिषदो विद्याजनकत्वात् कथं "उपनिषदा विद्यया" इति सामानाधिकरण्यमित्यत उपनिषच्छब्दार्थमाह – **स्वयोग्यमिति** ॥ तस्य ज्ञस्य । अत्र स्वयोग्यमित्येवोपनिषच्छब्दार्थः । उप निषदीत्युपनिषदिति व्युत्पत्तेः । परिज्ञानमिति विद्याशब्दार्थानुवादः । अन्यथा पुनरपि सामानाधिकरण्यानुपपत्तेः । अत एवोक्तं कर्मनिर्णयटीकायाम्– उपनिषदीत्युपनिषत् । **योग्येति** ॥ "इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति" इति वाक्येऽक्षरशब्दस्य प्रणववाचकत्वावश्यम्भावात् पूर्वत्रापि सर्वत्र तस्य प्रणवपरत्वमेव युक्तं नतु भगवत्परत्वमित्यतस्तद् यथावद् व्याचष्टे – **अक्षरमिति** ॥ तस्य विष्णोरुप समीपे वर्तमानः प्रणवः । असाधारण्येन तद्वाचकतया तत्प्रीतिविषयत्वात् । वागृचोरैक्याविवक्षापक्षे परर्द्धं परार्द्धर्च्यं परार्द्धि परार्ध्यमिति चतस्रः कक्ष्या निरूपिताः । तत्राप्रतीत्या परर्धादिशब्दार्थमाह – **परर्द्धमिति** ॥ तस्मिन्नेव पक्षे परार्द्धो वायुः, परार्द्धिनी श्रीः, परार्द्धर्च्यो भगवानित्युक्तमपि प्रमाणेन द्रढयति – **परत इति** ॥ वायुरेवेति सम्बन्धः ॥ ८ ॥ **प्रथमः खण्डः** ॥

### ततश्चायं खण्डार्थः

ओमितिनामकमक्षरं न क्षीयत इत्यक्षं, रतिरूपत्वाद् रं, अक्षं च तद्रं चेत्यक्षरं, अक्षेष्विन्द्रियेषु रमणाद्वाऽक्षरं, एतत् सर्वसन्निहितत्वादेत-

न्नामकं, उद्गीथम् उच्चत्वादुत्, गीतत्वाद् गीः, सर्वस्थानत्वात् थः, उच्चासौ गीश्चासौ थश्चेत्युद्गीथस्तमुद्गीथं भगवन्तमुपासीत । भगवत ॐनामकत्वं कुत इत्यतस्तत्समर्थयते – '**ओमिति ह्युद्गायतीति** ॥ हि यस्माद् भगवन्तमुद्दिश्योद्गातोमित्युच्चार्योद्गायति उद्गानं करोति तस्मादोंनामकत्वं भगवतः सिद्धम् । अन्यथाऽसङ्गतेरिति भावः । न केवलमश्वकर्णादि-शब्दवद् रूढिमात्रप्रवृत्तोङ्कारवाच्यं भगवन्तमुपासीत किन्तु ॐकारार्थ-गुणविशिष्टतयेति भावेन भगवद्वाचकोङ्कारव्याख्यानं प्रतिजानीते – **तस्येति** ॥ तस्याक्षरस्योद्गीथस्य विष्णोरुप समीपे वर्तमानो यः प्रणवस्तस्य व्याख्यानं क्रियत इत्यर्थः । तस्य प्रणवस्योपपन्नं व्याख्यानं क्रियत इत्यर्थः इत्यप्याहुः ॥ १ ॥

तत्र तावदधिकोच्चत्वेन प्रमितत्वमोङ्कारार्थ इति भावेन देवतातारतम्य-ज्ञानपूर्वं भगवदधिकोच्चत्वज्ञानस्यैव मोक्षहेतुत्वेन देवतातारतम्योक्तिपूर्वं भगवत अधिकोच्चत्वमाह – एषां **भूतानामित्यादिना** ॥ एषां प्रसिद्धानां सर्वेषां भूतानामृभ्वादीनां सकाशात् पृथिवी पृथिव्यभिमानिदेवता रसः सर्वगुणैर्वरा । पृथिव्याः सकाशादापस्तदभिमानिवरुणो रसः । अपां वरुणस्य सकाशादोषधय ओषधिदेवता सोमो रसः । ओषधीनां सोमस्य सकाशात् पुरुषः पौंस्यदेवता रुद्रो रसः । पुरुषस्य रुद्रस्य सकाशाद् वाग् वेदाभिमानिनी सरस्वती रसः । वाचः सरस्वत्याः सकाशाद् ऋक् रसः ऋङ्नाम्नी सैव श्रेष्ठा । ऋचः सकाशात् साम रसः सामदेवता मुख्यवायुः श्रेष्ठः । साम्नः सकाशादुद्गीथो रसः नारायणः श्रेष्ठः । सामादीनां भूतादिभ्यः श्रेष्ठत्ववदस्योद्गीथस्य श्रेष्ठत्वं न भवति । किन्तु महान्विशेष इति ज्ञापयितुमाह – **स एष इति** ॥ अष्टमः पृथिव्यपेक्षयाऽष्टमत्वेनोक्तो य उद्गीथः स एष रसानां श्रेष्ठानां पृथिव्यादीनां सकाशाद् रसतमः श्रेष्ठतमः परमश्रेष्ठादपि श्रेष्ठतमाच्च यत्परमं तस्मादुत्तम इत्यर्थः । पराद्ध्र्यः अतिशयेन परार्द्धियुतत्वात् पराद्ध्र्य इत्यर्थः ।

यद्वा, स एष परमः पराद्ध्र्यः अतिशयेन परमर्द्धिगुण इत्यर्थः । अथवा न केवलमुद्गीथस्य साम्न एवोत्तमत्तम् । किन्तु सामोत्तमरमोत्तमत्वं चेति भावेन पूर्वोक्तं सङ्ग्रहेणानूद्य रमोत्तमत्वमाह – **स एष इति** ॥ योऽष्टम उद्गीथः स एष रसानां सकाशात् रसतमः परमः पराध्र्यः परमपराध्र्य रसतम इत्यर्थः ।

अत्रायं विवेकः । वक्ष्यमाणरीत्या यदि वागृचोरैक्यविवक्षा तदा भूतेभ्यः पृथिव्या रसत्वं, तेभ्यो वरुणस्य रसतरत्वं, सोमस्य रसतमत्वं, रुद्रस्य परमरसतमत्वं, वाचः परमपररसतमत्वं, साम्नः परमपरर्द्धरसतमत्वं, रमायाः परमपरार्द्धरसतमत्वं, उद्गीथस्य परमपराद्ध्र्यरसतमत्वम् । यदि च ऋग्रूपायाः वाचः पृथक्परत्वविवक्षा तदा ऋचः परमपरर्द्धरसतमत्वं, साम्नः परमपरार्द्धरसतमत्वं, रमायाः परमपरार्द्धिरसतमत्वं, उद्गीथस्य परम-पराध्र्यरसतमत्वमिति ॥ २ ॥

पृथिव्याः पृथिवीदेवतात्वेन, सोमवरुणयोश्चौषध्यब्देवतात्वेन, रुद्रस्य च लिङ्गदेवतात्वेन, वाचश्च सरस्वतीत्वेन प्रसिद्धेः । पृथिव्यादिविमर्शस्य कर्तव्यत्वाद् ऋगादिज्ञानस्य विशिष्टफलसाधनत्वाच्च ऋगादीनामेव विमर्शः क्रियते – **कतमा कतमर्गित्यादिना** ॥ ऋक् कतमा का ? साम कतमत् किम् ? उद्गीथः कतमः कः ? इति विमृष्टं भवति विमर्शः कृतो भवति । कतमेत्यादिरुक्तिः[१] कुतूहलनिमित्ता । क्रमेणोत्तरमाह – **वागेवर्गित्यादिना** ॥ वागेव पूर्वं पुरुषसारत्वेनोक्ता सर्ववेदाभिमानिनी सरस्वत्येवर्गित्यर्थः । अत एव न वाचो विमर्शः कृतः । नचैवं पूर्वं "वाच ऋग्रसः" इत्युक्तिरनुपपन्नेति वाच्यम् । सरस्वती ह्यनेकरूपा । तत्रैकं रूपं सर्ववेदाभिमानि प्राणसंयोगविशेषहीनं च । अपरं तु ऋगभिमानि-प्राणसंयोगविशेषयुक्तं च । सर्ववागभिमानिप्राणसंयोगविशेषरहिताद्

१. 'कतमेत्यादिद्विरुक्तिः' इति पाठेन भाव्यमिति भाति ।

रूपाद् ऋगभिमानिप्राणसंयोगविशेषविशिष्टरूपस्य स्वरूपोत्तमत्वा-भावेऽप्यवस्थाविशेषमादाय रसत्वोक्तिः । वेदात्मकरमारूपापेक्षया भगवदङ्कस्थयज्ञाभिमानिरमारूपस्य धन्याश्चर्यत्वोक्तिवदित्यवधेयम् । प्राणो मुख्यप्राणः साम सर्वभूतेषु समत्वात् । सामदेवतात्वाच्च । ॐ उच्चत्वादिना ॐनामकम् । इतिशब्दोऽन्यथाभावनिवृत्त्यर्थः । सर्वदाऽप्युच्च एवेति । यद्वा इति ओमित्यन्वयः । पूर्वोक्तप्रकारेणेत्यर्थः । एतत् एतन्नामकमक्षरं यत्प्रागभिहितं स एवोद्गीथ इत्यर्थः ।। ३ ।।

ननूद्गीथाख्यस्य भगवतः ऋक्सामनामकाभ्यां सरस्वतीप्राणाभ्या-मुत्तमत्वमुक्तम् । तत्कथम् ? तयोरतिमाहात्म्यवत्त्वेन श्रुत्यादिप्रसिद्धत्वा-दिति चेत् । न । तदपेक्षयाऽपि भगवतोऽतिमाहात्म्यवत्त्वेन तदुपपत्तेरिति भावेन तयोर्मुक्तौ भगवदाश्रितत्वं वक्तुमाह – **तद्वा इति** ।। तदेतन्मिथुनं वै किं तत् । वाक् च प्राणश्च, ऋक्च साम चेति यत् । इतरेतरयोगे चशब्दाः । किं तत इत्यत आह –**तदेतदिति** ।। तदेतन्मिथुनमोमिति नामके एतस्मिन्नक्षरे भगवति संसृज्यते । मुक्ताविति शेषः । सायुज्यलक्षणां मुक्तिं प्राप्नोतीति भावः ।। ४ ।।

को विशेषस्तत्रेत्यत आह – **यदा वा इति** ।। यदा मिथुनौ वाक्प्राणादिरूपौ दम्पती समागच्छत उद्गीथे संसृज्येयातां तदा तावन्योन्यस्य काममभिलषितमापयतो ह वै प्राप्नुत इति प्रसिद्धमित्यर्थः । उक्तरीत्या भगवदुपासकस्य फलमाह – **आपयितेति** ।। योऽधिकारी एतत् वाक्प्राणादिरूपं मिथुनमेवं मुक्तौ भगवदाश्रितत्वादिना विद्वानक्षर-मुद्गीथमेवमुक्तरीत्या तदुत्तमत्वेनोपास्ते स कामानां काम्यानामापयिता प्रापयिता प्राप्ता, ह वै प्रसिद्धमित्यर्थः ।। ५ ।।

भगवत ॐनामकत्वे ''ओमिति ह्युद्गायति'' इति पूर्वं युक्तिरुक्ता । इदानीं युक्त्यन्तरेणापि तत्समर्थयते – **तद्वा इति** ।। तदेतदोङ्काररूप-

मनुज्ञाक्षरमनुज्ञाप्रदमक्षरं वै । कुतः ? हि यस्माज्जनो यद् यदा किञ्च किञ्चिदनुजानाति अनुज्ञानं करोति तत् तदा ओमित्येवाऽऽह तस्मादेव तदनुज्ञाक्षरमिति सम्बन्धः । भगवांस्त्वदुक्तं तत्तथा कुर्यादित्यभिप्रायतोऽनुज्ञां प्रदातुं हि ज्ञानिभिरोमित्युच्यते । तत्रोङ्कारस्य भगवद्वाचकत्वाभावे उक्ताभिप्रायेणानुज्ञाप्रदानायोमित्युच्चारणं न स्यादिति भावः । पूर्वमोङ्कारस्याधिकोच्चत्वेन प्रमितत्वमर्थ इत्यभिप्रेत्याधिकोच्चत्वं समर्थितम् । इदानीं भगवतः पूर्णत्वं चोङ्कारार्थ इति भावेनाऽऽह – **एषो एवेति** ॥ ओमित्ययंशब्दः पूर्णत्ववाची । समृद्धिवाचकत्वात् । तदेव कुतः ? ॐकारस्तावदनुज्ञाक्षरमित्युक्तम् । किं ततः ? यदनुज्ञा याऽनुज्ञा एषैव समृद्धिर्वै । अयं ते कामः समृद्ध इति भावेनैवानुज्ञाप्रदानात् । अतः ॐकारः समृद्धिवाचक इत्यर्थः । नन्वोङ्कारस्य पूर्णत्ववाचकत्वेऽपि भगवत्पूर्णत्ववाचित्वं कुत इति चेत् । न । भगवत्समृद्धिवाचकत्वादेव । तदेव कुतः? ॐकारो ह्यनुज्ञाक्षरमित्युक्तम् । यदनुज्ञा एषैव भगवतः समृद्धिर्वै भगवांस्तव समृद्धिद इति भावेनैवानुज्ञाप्रदानात् । अतो भगवत्समृद्धिवाच्योङ्कार इत्यर्थः । एवमुपासकस्य फलमाह – **समर्धयितेति** ॥ योऽधिकारी एतत्पूर्वप्रकृतभगवत्स्वरूपमेवं समृद्धत्वनिमित्तिकमोंनामकत्वेन विद्वानक्षरमुद्गीथं भगवन्तमुपास्ते स मुक्तस्सन् कामानां काम्यानां समर्धयिता समृद्धिकारको भवति ह वै ॥ ६ ॥

सर्ववेदार्थोऽप्योङ्कारार्थ इति भावेनाऽऽह – **तेनेति** ॥ तेनोङ्कारप्रतिपाद्येन विष्णुना स्वप्रतिपाद्यभूतेनेयं त्रयीविद्या वर्तते प्रवर्तते । वेदप्रतिपाद्यस्यैवोङ्कारप्रतिपाद्यत्वं कुत इत्यत ॐकारव्याख्यानत्वात् सर्ववेदस्येति भावेनाऽऽह – **ओमितीति** ॥ अध्वर्युरोमित्युच्चार्याऽश्रावयति आश्रावमन्त्रं पठति । तथा होतोमित्युच्चार्य शंसति शंसनमन्त्रं पठति । तथोद्गातोमित्युच्चार्योद्गायति उद्गानमन्त्रं पठति । तेन तेषां मन्त्राणामोङ्कारव्याख्यानरूपत्वमवगम्यत इति भावः । अध्वर्य्वादिरोमित्युच्चार्या-

श्रावादिमन्त्रं किमर्थं पठतीत्यत आह – **एतस्येति** ॥ एतस्यैवाक्षरस्योंनामकस्य विष्णोरपचित्यै पूजार्थम् । एवमधिकोच्चत्वं पूर्णत्वं सर्ववेदार्थश्च प्रणवार्थ इत्युक्तम् । इदानीं तदनुवादेनार्थान्तरमाह – **महिम्नेति** ॥ महिम्ना पूर्णेन रसेनाधिकोच्चेन तेन सर्ववेदप्रसिद्धेनोंनामकेन भगवता प्रेरितावुभौ कर्म कुरुतः । तौ कौ ? यश्चैतद् भगवत्स्वरूपमेवमुक्तरीत्या वेद यश्च न वेद तावुभाविति पूर्वेण सम्बन्धः ॥ ७ ॥

सर्वोऽपि कर्म कुरुत इत्यनुक्त्वा ज्ञान्यज्ञानिविभागोक्तिः किमर्थेत्यतस्तत्रावान्तरवैलक्षण्यज्ञापनार्थेति भावेन ज्ञान्यज्ञानिनोः कुतो वैलक्षण्यमित्यतो ज्ञानाज्ञानयोरेव वैलक्षण्यादिति भावेनाऽह – **नाना त्विति** ॥ विद्या चाविद्या च, परस्परयोगे चशब्दौ । तु विशेषेण नाना विलक्षणे । कुतः ? फलवैलक्षण्यादित्याह – **यदेवेति** ॥ श्रद्धया श्रद्धायुक्तया उपनिषदा उप निषीदतीत्युपनिषद्, योग्यया । विद्यया ज्ञानेनैव यत्कर्म करोति तदेव वीर्यवत्तरमनन्तफलसाधनं भवति । अत्र विद्याशब्दस्यापरोक्षज्ञानपरत्वे मोक्षगतानन्दातिशयसाधनं भवतीत्यर्थः । परोक्षज्ञानपरत्वे त्वपरोक्षज्ञानद्वारा मोक्षसाधनं भवतीत्यर्थः । अविद्यया यत्करोति न तदेवमिति भावः । एवंकृतमोङ्कारव्याख्यानमुपसंहरति – **इतीति** ॥ इति पूर्वोक्तप्रकारेणैतस्यैव पूर्वोक्तस्यैवाक्षरस्याक्षरनामकस्य भगवत उप समीपे वर्तमानस्य प्रणवस्य व्याख्यानं भवतीत्यर्थः ।

अत्र केचिदध्यापकाः "अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासीत । तस्येतरैः प्राणैरुपव्याख्यानं भवति" इति पठन्ति । तस्यायमर्थः । अथ प्रणवाख्यस्य भगवत उपास्तिकथनानन्तरं तदुपास्त्यधिष्ठानमुच्यत इति शेषः । य एवायं प्रमाणसिद्धो मुख्यप्राणस्तं तत्रोद्गीथं भगवन्तमुपासीत । को विशेषस्तस्य । येन तत्रैव भगवदुपास्तिः कर्तव्येत्यत आह – **तस्येति** ॥ तस्य मुख्यप्राणस्येतरैः प्राणैर्नासिक्यप्राणादिभिरुपव्याख्यानमुपपन्नं

विशिष्टतया कथनं भवतीति ॥ ८ ॥ इति प्रथमः खण्डः ॥ १ ॥

## उपनिषत् (खण्डः २)

*मुख्यप्राणरूपप्रतीके देवकृताध्यात्मभगवदुपासना*

देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ॥ १ ॥

ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तꣳ हासुराः पाप्मना विविधुस्तस्मात् तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः ॥ २ ॥

अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ताꣳहासुराः पाप्मना विविधुस्तस्मात् तयोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा ॥ ३ ॥

अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद् विद्धम् ॥ ४ ॥

अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभयꣳ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद् विद्धम् ॥ ५ ॥

अथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुराः विविधुस्तस्मात् तेनोभयं सङ्कल्पते सङ्कल्पनीयं चासङ्कल्पनीयं च पाप्मना ह्येतद् विद्धम् ॥ ६ ॥

अथ ह य एवायं [१]मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिरे तꣳहासुरा

१. ''मुख्यः प्राणः'' प्रभपाठः ।

ऋत्वा विदध्व९सुर्यथाऽश्मानमाखणमृत्वा विध्व९सेतैवम् ॥ ७ ॥

*प्राणज्ञानस्य फलम्*

स यथाऽश्मानमाखणमृत्वा विध्व९सत एव९ हैव स विध्व९सत य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माऽऽखणः ॥ ८ ॥

*मुख्यप्राणस्य महिमा*

नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत् पिबति तेनेतरान् प्राणानवत्येतमु एवान्ततो वित्त्वोत्क्रामति व्याददात्येवान्तत इति ॥ ९ ॥

*देवर्षिभिः मुख्यप्राणे कृताया भगवदुपासनायाः फलनिरूपणम्*

त९हाङ्गिरा उद्गीथमुपासाञ्चक्र एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥ १० ॥

तेन त९ ह बृहस्पतिरुद्गीथमुपासाञ्चक्र एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिस्तेन ॥ ११ ॥

त९ हायास्य उद्गीथमुपासाञ्चक्र एतमु एवायास्यं मन्यन्त आस्याद् यदयते तेन ॥ १२ ॥

त९ ह बको दाल्भ्यो विदाञ्चकार स ह नैमिशीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति ॥ १३ ॥

आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त

इत्यध्यात्मम् ॥ १४ ॥ २ ॥

भाष्यम्

[१]उद्गीथाख्यस्यविष्णोर्विशिष्टप्रतिमा वायुरेव । अतस्तस्य सर्वोत्तमत्वज्ञानपूर्वकं तस्मिंस्ततोऽप्युत्तमत्वेनोपासित एव भगवान् सम्यक् फलं ददातीति दर्शयति ।

'[२]वायौ मुख्यधियेति च' इति भगवद्वचनम् ।

'यस्माद् वायौ स्मृतो विष्णुर्वायोर्मुख्यतयाऽखिलात् ।
स्वस्य मुख्यतया तस्मात् परां तुष्टिं गमिष्यति ॥
अतो विचार्य सकलैर्देवैः प्राणे जनार्दनः ।
उपासितो दैत्यजयकारणात् पापवर्जिते ॥
वायुपुत्रं च नासिक्यमग्निं वागात्मकं तथा ।
सोमं श्रोत्रात्मकं चैव सूर्यं चक्षुःस्वरूपिणम् ॥
रुद्रं मनःस्वरूपं च शेषं चाहंस्वरूपिणम् ।
चित्तात्मकं च गरुडं पापेन विविधुः सुरान् ॥
असुरास्तैर्यतो विद्धास्तस्मात् ते दोषयोगिनः ।
मुख्यवायौ यदा देवाः शरीरस्थे च सूर्यगे ॥
विष्णुमुद्गीथनामानं तदा तं च विदध्वसुः ।
यदा विदध्वसुः प्राणं विध्वस्तास्ते तदाऽसुराः ॥
अखन्याश्मानमेवाऽप्य लोष्टो विध्वंसते यथा ।

१. 'उद्गीताख्यविष्णोः' ह् पाठः । २.' ''वायौ मुख्यधिया'' इति च भगवद्वचनम्' ह् पाठः ।

प्रतिमां प्रेयसीं प्राप्य विष्णोः प्राणं तथाऽसुराः ॥
तस्मादादित्यसंस्थे वा शरीरस्थेऽपि वाऽनिले[१] ।
बलज्ञानात्मके दिव्याकृतिमत्युज्ज्वलात्मनि ॥
[२]सर्वदेवोत्तमे विष्णुमुपासीत ततोऽधिकम् ।
अस्योपासनया देवाः सर्वे नामानि[३] भेजिरे ॥
इन्द्रो बृहस्पतिः शम्भुरित्याद्याः प्राणगा यतः ।
प्राणस्य नामशब्दाश्च मुख्यतो विष्णुसंस्थिताः ॥' इति प्रध्याने ।
'उद्गीथाख्यं परं विष्णुमुपास्त्या जहुरञ्जसा ।
तथाऽपि प्राण एवासौ प्रीतिमागादुपासितः ॥' इति च ।
'प्राणं प्राप्यैव विध्वस्ता यथा सर्वेऽसुरास्तथा ।
तदुपासकस्य यश्चापि प्रतीपं दातुमिच्छति ॥' इति च ।
[४]'एवं विदित्वा संसारान्मुक्तिमेष्यत्यसंशयम् ।
विष्णुमप्यन्ततो वेत्ति प्राणवेत्ता यतः स्फुटम् ॥
वीति विष्णुः समुद्दिष्टो विशिष्टत्वात्तु सर्वतः ।
आददात्येव तं प्राणवेत्ताऽन्ते तत्प्रसादतः ॥
प्राणात् परं तु ये विष्णुं जीवांश्चैवावरांस्ततः ।
ये विदुस्ते विदुः प्राणं नान्यथा तु कथञ्चन ॥' इति च ।
'प्राण उद्गीथ इत्याद्या नाम ब्रह्मादिकास्तथा ।
सप्तम्यर्थाः समुद्दिष्टाः सप्तसु प्रथमा यतः ।

---

१. 'चानिले' इति प्रभपाठः । २. 'सर्वदेवोत्तमम्' प्रपाठः । ३ 'सर्वनामानि' प्रपाठः ।
४. 'एतं विदित्वा' हपाठः ।

**प्राणमुद्गीथमित्याद्या द्वितीया सप्तमी मता ॥' इति च ।**

**॥ खण्डः- २ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

तात्पर्याप्रतीतेरुत्तरखण्डमवतारयति – **उद्गीथाख्यस्येति** ॥ ''ओमित्येतदक्षरमुद्गीथमुपासीत''इत्युद्गीथाख्यस्य विष्णोरुपास्तिः कर्तव्येत्युक्तम् । तत्र न तावत् केवलस्य विष्णोरुपास्तिः कर्तुं युक्ता । सर्वेषां तदनधिकारात् । किन्तु क्वचित् प्रतिमायाम् । तत्रापि न साधारणप्रतिमायां तदुपास्तिर्युक्ता । फलाधिक्याभावात् । किन्तु विशिष्टायामेव । अतः सा केत्याशङ्कायामिदमाहेति भावः । वायुरेव, आधिकारिवर्ग इति शेषः । किं तत इत्यत उक्तम् – **अत इति** ॥ वायोः सर्वलोकाधारत्वेन तदाश्रितेतरपदार्थसाधारण्यव्यावर्तनाय ततोऽप्युत्तमत्वेनेत्युक्तं दर्शयति ''देवासुराः'' इति खण्डेन वेदपुरुष इति शेषः । ''विष्णोर्विशिष्टप्रतिमा वायुरेव'' इत्यत्र प्रमाणमाह – **वायाविति** ॥

''सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ।
भूरात्मा सर्वभूतानि भद्रपूजापदानि मे ॥''

इति पूर्ववाक्ये मरुतो भगवत्पूजास्थानत्वमुक्त्वा तत्प्रकारो वायावित्यनेनोच्यते । वायौ मुख्यधिया वायोः सर्वोत्तमज्ञानेन मां यजेतेति पूर्वेणान्वयः । यदि वायुर्विष्णोर्विशिष्टप्रतिमा न स्यात् तदा वायुसर्वोत्तमत्वज्ञानं कथं विष्णुपूजा स्यादिति भावः । उक्तं च –

''सर्वदेवोत्तमो वायुरिति ज्ञानान्न चापरम् ।
प्रियमस्ति हरेः किञ्चित् तथा वायोर्हरेर्विदः ॥'' इति ।

मां यजेतेत्युक्तास्मच्छब्दवाच्यः क इत्याशङ्कानिरासाय भगवद्वचन-मित्युक्तम् । भगवतो वासुदेवस्य वचनमित्यर्थः । न केवलं वेदपुरुषो दर्शयति । किन्तु भगवद्वचनं च विवक्षितमर्थं दर्शयतीति चशब्दार्थः ।

ननु ज्ञानिनो देवा मुख्यप्राणमुद्गीथाख्यविष्णोर्विशिष्टप्रतिमां जानन्त्येव । अतः किमर्थं स्वशत्रुजयाय पापवेध्यनासिक्यप्राणादा-वुद्गीथमुपास्य तेषामसुरकृतपापवेधेऽन्ततो मुख्यप्राण उद्गीथमुपासितवन्त इत्याशङ्कां परिहर्तुं तस्य सर्वोत्तमत्वज्ञानपूर्वकमित्याद्युक्तमर्थं प्रमाणेन द्रढयन्नाह – **यस्मादिति** ॥ अखिलात् जगतो वायोर्मुख्यतया । तस्माद् वायोः स्वस्य मुख्यतया वायौ स्मृतो विष्णुः परां तुष्टिं गमिष्यतीति सम्वन्धः ॥ **विचार्येति** ॥ ''ज्ञानिभिरपि देवैर्वायोः सर्वोत्तमत्वनिर्णयाय'' इति पूरणीयम् । ''पापवर्जिते प्राणे'' इत्यन्वयः । ''सकलैर्देवै दैत्यजय'' इति चोक्त्या श्रुतौ देवासुरशब्दौ प्रसिद्धदेवासुरपरावेवेत्युक्तं भवति । तेन शास्त्रोद्भासिता इन्द्रियवृत्तयो द्योतनाद् देवाः, तद्विपरीता इन्द्रियवृत्तयः स्वेष्वेवासुषु रमणादसुरा इति परकीयं व्याख्यानमपास्तम् । देवासुरशब्दयो रूढिपरित्यागेन यौगिकार्थग्रहणे कारणाभावात् । ''ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे'' इत्यादौ प्राणवाक्चक्षुःश्रोत्रमनः-शब्दा इन्द्रियपरा इत्यसत् । ''तद्ध देवाः'' इति देवोपक्रमविरोधात् । ''एवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाविध्यन्'' इति श्रुत्यन्तरे देवानामेवासुरकृतपापविद्धत्वोक्तेश्चेति भावेनान्येषामपि पापवर्जितत्वे को विशेषो मुख्यप्राणस्येत्यतः ''तं हासुराः पाप्मना विविधुः'' इत्यादिवाक्यपञ्चकं व्याचष्टे – **वायुपुत्रमिति** ॥ यदा देवा नासिक्यप्राणादावुद्गीथनामानं विष्णुमुपासाञ्चक्रिरे तदेति ग्राह्यम् । नासिकायां भवो नासिक्यस्तदभिमानीति यावत् । वागात्मकं

वागभिमानिनम् । एवमुत्तरत्र । प्राणस्य सर्वदेवोत्तमत्वलाभाय मनःप्रभेदाहंचित्ताभिमानिनौ शेषगरुडावुपात्तौ । बुद्धिचेतनाभिमानिनावपि ग्राह्यौ । अन्येन्द्रियाभिमानिनामुपलक्षणमेतत् । विविधुरेवेत्येवशब्दसम्बन्धः । तस्मात् ''तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च । पाप्मना ह्येष विद्धः'' इति वाक्यपञ्चकं व्याचष्टे – **तैरिति** ॥ ''अथ ह एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिरे तं हासुरा ऋत्वा विदध्वसुः'' इति वाक्यं ''तमुद्गीथं'' इति सामानाधिकरण्येन मुख्यप्राणोद्गीथयोरभेद उच्यत इति प्रतीतिनिरासाय व्याचष्टे – **मुख्यवायाविति** ॥ अनेन तमिति द्वितीया सप्तम्यर्थेत्युक्तं भवति । प्राणोद्गीथयोरभेदस्य बाधितत्वात् । नासिक्यप्राणमुद्गीथमित्यादिसामानाधिकरण्येन तदभेदप्राप्तावुद्गीथाख्यस्य विष्णोः पापवेधप्राप्तेश्च । शरीरस्थ इत्यनेनायमित्यस्य शरीरस्थ इत्यर्थः सूचितो भवति ॥ ''सूर्यगे'' इति ''य एवासौ तपति तमुद्गीथमुपासीत'' इत्युत्तरखण्डविवक्षयोक्तं उद्गीथनामानमुपासाञ्चक्रिर इति शेषः । विदध्वसुः विविधुः । ''स यथाऽश्मानम्''इति दृष्टान्तवाक्यसङ्घटनाय तं विदध्वसुरित्येतदेवापेक्षितपूरणेन पुनर्व्याचष्टे – **यदेति** ॥ इदानीं ''स यथाऽश्मानमाखणमृत्वा विध्वंसत एवम्'' इति वाक्यं व्याचष्टे – **अखन्याश्मानमिति** ॥ तथाऽसुरा विध्वस्ता इति सम्बन्धः । अस्त्वेवमसुरकृतपापवेधशून्यत्वात् पापवर्जिते मुख्यप्राणे देवैर्जनार्दन उपासित इति । किं तत इत्यत आह – **तस्मादिति** ॥ देवैः पापवर्जिते शरीरस्थे सूर्यगे च मुख्यवायौ विष्णोरुपासितत्वादित्यर्थः । ''आदित्यसंस्थेऽनिले विष्णुमुपासीत'' इत्यनेन ''य एवासौ तपति तमुद्गीथमुपासीत'' इत्युत्तरखण्डगतमुपासनविधिवाक्यं व्याख्यातम् । ''शरीरस्थेऽनिले विष्णुमुपासीत'' इत्यनेन पूर्वखण्डे यत्किञ्चिदध्यापका ''अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासीत''इति पठन्ति तद्

व्याख्यातं भवति। "बलज्ञानात्मके" इति प्राणशब्दार्थः। प्रकर्षेणाऽ-समन्ताण्णं बलं यस्यासौ तथोक्तः। "णकारो बलम्" इति श्रुतेः। प्रकृष्टमणनं ज्ञानं यस्यासौ तथोक्त इति वा। "अण पण गतौ" इति धातोः। तपतीत्युक्त्यनुरोधेन "उज्ज्वलात्मनि"इत्युक्तम्। तल्लब्ध-मर्थमाह – **दिव्याकृतिमतीति**॥ ततो वायोः। "तं बृहस्पति-रुद्गीथमुपासाञ्चक्रे" इति वाक्यं सजातीयोपलक्षणपरमिति भावेन "एतमु एव बृहस्पतिं मन्यन्ते" इति वाक्यसङ्घटनायैतदुपास्तिफलमाह – **अस्येति**॥ देवा इत्युपलक्षणम्। ऋषयश्चेत्यपि ग्राह्यम्। तेन "तं हाङ्गिरा उद्गीथमुपासाञ्चक्रे" इत्युक्तोपासनस्य फलं लब्धम्। सर्वनामानि स्वस्वनामानि। अनेनोपासाञ्चक्र इत्यनन्तरं "तथा बृहस्पतिरिति नाम भेजे" इति पूरणीयमित्युक्तं भवति।

नन्विन्द्रबृहस्पतीत्यादीनि देवनामान्यङ्गिरःप्रभृतीनि ऋषिनामानि चेन्द्रबृहस्पत्यादीनां स्वत एव सिद्धानि। अथ कथमस्योपासनया तेषां तत्तन्नामलाभ इत्युच्यत इत्यतो नैतानि तेषां नामानि। किन्तु मुख्यप्राणस्यैव मुख्यतः। नच प्रसिद्धिविरोधः। तदुपासनालब्धतत्त-न्नामकत्वेन तदुपपत्तेरिति भावेन प्रवृत्तं "एतमु एव बृहस्पतिं मन्यन्ते" इति वाक्यमुपलक्षणपरमित्यभिप्रेत्य व्याचष्टे – **इन्द्र इति**॥ इत्याद्याः शब्दाः। आदिपदेनर्षिवाचकशब्दा अपि ग्राह्याः। नन्वेवं तर्हि "यो देवानां नामधा" "इन्द्रं मित्रं वरुणमग्निमाहुः" इत्यादिश्रुतिविरोध इत्यत आह– **प्राणस्येति**॥ नामशब्दाः अभिधायिशब्दाः। प्राणस्य शब्दा अपि मुख्यतो विष्णुसंस्थिताः। नाम प्रसिद्धमिति वाऽर्थः। "तद्ध देवा उद्गीथमाजह्रुः"इत्यत्रोद्गीथनामानं विष्णुं बलादाहृतवन्तो देवा इति प्रतीयते। तदयुक्तम्। तथा सति विष्णोरशक्तत्वापत्तेरित्यतस्तद्व्याचष्टे–

**उद्गीथाख्यमिति** ।। आजह्रुरभीष्टदं चक्रुः । ननु बलादाहरणे प्राण एवोपासनं कार्यमिति निर्बन्धोऽयुक्तः । बलादाहृतस्यान्यत्र मनः प्रसादाभावेन यत्र मनःप्रसादस्तत्रैव फलप्रदत्वोपपत्तेः । उपास्त्याहरणे तु स निर्बन्धो व्यर्थः । अन्यत्राप्युपासितस्य फलप्रदत्व सम्भवादित्यत आह– **तथाऽपीति** ।। यदप्युपास्त्याऽऽजह्रुर्नतु बलात् तथाऽपीत्यर्थः । ''यथाऽश्मानमाखणमृत्वा विध्वंसत एवं हैव स विध्वंसते'' इत्यत्र पूर्ववाक्यवदेव यथाऽश्मानमाखणमृत्वा विध्वंसते लोष्ट इति व्याख्यानमसत् । उपासके उपास्यसाम्यस्यैव वक्तव्यत्वादिति भावेन ''यथाऽश्मानम्'' इत्यारभ्य ''अभिदासति'' इत्यन्तं वाक्यं व्याचष्टे – **प्राणमिति** ।। अनेनाश्मानमाखणमित्ययंशब्दः प्राणपरः । विध्वंसत इत्यनन्तरमसुरवर्ग इति शेष इत्युक्तं भवति । अत एव वाक्यशेषे ''स एषोऽश्माखणः'' इत्युक्तम् । उक्तं चान्यत्र – ''आखणाश्मसमो हि सः'' इति । अभिदासतीत्यस्यार्थः – **दातुमिच्छतीति** ।। प्रतीपमिति शेषोक्तिः । तदुपासकस्यापीत्यपिशब्दसम्बन्धः । चशब्दात् पापं कामयत इति ग्राह्यम् । सोऽपि विध्वंसत इति शेषः । ''एतमु एवान्ततो वित्त्वोत्क्रामति'' इत्यत्रान्तत इत्येतत्परित्यज्यान्यांशं व्याचष्टे – **एतमिति** ।। मुख्यप्राणमित्यर्थः । अवधारणार्थः – **असंशयमिति** ।। नन्वेवं ''तमेवं विद्वान्'' इत्यादिश्रुतिविरोध इत्यत आह – **विष्णुमपीति** ।। अनेन श्रौत उशब्दोऽपिशब्दार्थः । तेन विष्णुसमुच्चयः । ततश्चैतं मुख्यप्राणं विदित्वाऽन्ततो विष्णुमपि विदित्वोत्क्रामत्येवेति वाक्यं योजनीयमिति सूचितं भवति । तद्विवरणरूपं ''व्याददात्येवान्ततः'' इति वाक्यं व्याचष्टे– **वीतीति** ।। तत्र निमित्तमाह – **विशिष्टत्वादिति** ।। न रमादीनां ब्रह्मादिभ्यो विशिष्टत्ववदस्य विशिष्टत्वमपितु महान् विशेष इति ज्ञापनाय तुशब्दः । आददात्येवावगच्छत्येव । अन्ते प्राणस्य ।

ननु प्राणवेत्ताऽन्ते विष्णुमवगच्छतीत्यनुपपन्नम्। विष्णुज्ञानाभावेऽपि प्राणपरिज्ञानसम्भवादित्यतोऽत्र विवक्षितं प्राणज्ञानमाह – **प्राणादिति ॥** तुशब्दोऽवधारणार्थः । अवरानेवेत्येवशब्दसम्बन्धः । विष्णोरवरत्वेन जीवेभ्य उत्तमत्वेन ये प्राणं विदुरिति यावत्। एतादृशं च प्राणज्ञानमन्ततो विष्णुज्ञानं विना न सम्भवतीति भावः। ''य एवायं मुख्यप्राणस्तमुद्गीथ-मुपासाञ्चक्रिरे'' इत्यत्र तमिति द्वितीया ''मुख्यवायौ यदा देवाः'' इत्यनेन सप्तम्यर्था व्याख्याता । तत्र नियामकं प्रमाणं पठति – **प्राण इति ॥** ''प्राण उद्गीथः'' इत्यादिवाक्यगताः प्राणइत्यादिप्रथमाः ''नाम ब्रह्म'' इत्यादिवाक्यगता नामेत्यादिप्रथमाश्च सप्तम्यर्थाः समुद्दिष्टा इति प्रसङ्गादुत्तरश्रुतिव्याख्यानायोक्तम् । तत्र नियामकं सूत्रं पठति– **सप्तस्विति ॥** प्रकृतमाह – **प्राणमिति ॥** प्राणमुद्गीथमित्यादिवाक्यगता प्राणमित्यादिद्वितीयेत्यर्थः ॥ २ ॥ **इति द्वितीयः खण्डः ॥**

## ॥ ततश्चायं खण्डार्थः ॥

देवाश्चासुराश्च देवासुराः ह वा इति वृत्तार्थस्मरणार्थौ निपातौ। यत्र यदा संयेतिरे योद्धुं सन्नद्धा अभवन्। योद्धुं सन्नद्धत्वे दायादत्वं कारण-माह – **उभय इति ॥** उभयेऽपि ते देवासुराः प्राजापत्याः प्रजापतेर्ब्रह्मणः कश्यपस्य वा पुत्राः। यदा संयेतिरे। किं तदेतत्यत आह – **तद्धेति ॥** तत्तदाऽसुराणां वहुत्वाच्छङ्करवरसद्भावाच्च तैर्जिता देवा उद्गीथं उद्गीथनामकं विष्णुमुपास्त्याऽऽजह्रुराहृतवन्तः अभीष्टदं कृतवन्त इति यावत्। हेति प्रसिद्धिमाह। उद्गीथाहरणे तेषामभिप्रायमाह – **अनेनेति ॥** अनेनोद्गीथेनोपासितेन तत्प्रसादाप्तबलेन एतानसुरानभिभविष्यामो जयाम इति भावेनाऽजह्रुरिति सम्बन्धः ॥ १ ॥

उद्गीथाख्यस्य विष्णोर्विशिष्टप्रतिमा मुख्यप्राण एव । अतस्तस्य

सर्वोत्तमत्वज्ञानपूर्वं तस्मिंस्ततोऽप्युत्तमत्वेनोपासित एव भगवान् सम्यक् फलं ददातीति जानन्तोऽपि मुख्यप्राणस्य सर्वोत्तमत्वप्रकटनायाऽदौ तावत् ते देवाः नासिक्यं नासिकायां भवम् । प्राणम् । द्वितीया सप्तम्यर्थे । नासिकाभिमानिनि प्राणे मुख्यवायुपुत्रे उद्गीथं विष्णुम् उपासाञ्चक्रिरे । ह प्रसिद्धम् । तेऽसुरा अनेनोद्गीथेन नो जेष्यन्तीति विदुरिति वक्तव्यम् । एवं ज्ञातदेवाभिप्राया असुराः तम् उद्गीथोपास्तिप्रतिमाभूतं नासिक्यप्राणं पाप्मना पापेन विविधुः वेधितवन्तः । नासिक्यप्राणस्य पापविद्धत्वे कार्यं प्रमाणयति – **तस्मादिति ॥** हि यस्माद् एष नासिक्यप्राणः पाप्मना विद्धस्तस्मादेव तेन तदभिमतेन नासिकारूपकरणेन । सुरभि च दुर्गन्धि चेत्युभयं जिघ्रति जीवः । अन्यथा तन्न स्यादिति भावः ॥ २ ॥

एवमुत्तरत्रापि योजना द्रष्टव्या । अथ नासिक्यप्राणस्य पापवेधानन्तरं वाचं वागभिमानिन्यग्नौ ॥ ३ ॥

चक्षुस्तदभिमानिसूर्ये ॥ ४ ॥

श्रोत्रं तदभिमानिसोमे ॥ ५ ॥

मनस्तदभिमानिरुद्रशेषगरुडेषु ॥ ६ ॥

उपलक्षणमेतत् । अथ सर्वेषामिन्द्रियदेवतानामसुरकृतपापवेधानन्तरं तेषां विशिष्टप्रतिमात्वाभावं प्रकटीकृत्य । य एवायं पूर्वं सामनामकत्वेनोक्तो मुख्यप्राणः तं तत्रोद्गीथं भगवन्तमुपासाञ्चक्रिरे । तं मुख्यप्राणमसुराः पूर्ववदेव ऋत्वा प्राप्य विदध्वसुर्विविधुः । यदा तं विदध्वसुस्तदा विध्वस्ता अभवन्निति योज्यम् । तत्र दृष्टान्तमाह – **यथेति ॥** यथा आखणं सर्वथा अखन्यमश्मानं पाषाणम् ऋत्वा प्राप्य विध्वंसेत लोष्ट एवं तं हासुरा ऋत्वा विदध्वसुरिति सम्बन्धः ॥ ७ ॥

एवं मुख्यप्राणोपासकस्य फलमाह – **यथेति ॥** यथाऽखन्यमश्मानम्

ऋत्वा विध्वंसतेऽसुरवर्ग इति शेषः । एवमेव स विध्वंसते ह निश्चितम् । कोऽसौ? यः पुरुष एवंविदि असुरकृतपापाविद्धतया भगवन्मुख्य-प्रतिमात्वेन मुख्यप्राणोपासके पापं पापफलं दुःखं कामयते । यश्चैनं मुख्यप्राणोपासकं प्रति अभिदासति प्रतीपं दातुमिच्छति स विध्वंसत इति पूर्वेणान्वयः । नन्वसुरवर्गो मुख्यप्राणं प्राप्यैव विध्वंसत इत्युक्तम् । नत्वाखणमश्मानं प्राप्य । नच पूर्ववाक्यवदत्रापि लोष्ट एव ग्राह्यः । उपासके उपास्यसाम्यस्य वक्तव्यत्वादित्यत आखणमश्मानमित्यस्यार्थमाह – **स एष इति** ॥ स एष मुख्यप्राणोऽश्माखणः आखणाश्मेत्युच्यते । आखणाश्मसदृशत्वात् । ''आखणाश्मसमो हि सः'' इत्युक्तेः । एवं चाश्मानमाखणमित्यस्याऽखणाश्मसदृशं मुख्यप्राणमित्यर्थ इति नानुपपत्तिरिति भावः ॥ ८ ॥

मुख्यप्राणे नासिक्यप्राणादिवैलक्षण्यमाह – **नैवेति** ॥ यद्वा, मुख्य-प्राणस्य पापाविद्धत्वे कार्यं प्रमाणयति – **नैवेति** ॥ हि यस्मादेषोऽपहतपाप्मा तस्मादेवैतेन मुख्यप्राणेन (तदभिमानेन मौक्तेन स्वरूपदेहेन) सुरभि न विजानाति दुर्गन्धि च न विजानाति । केवलं सुरभ्येव जानाति । नतूभयविधमिति भावः । उपलक्षणमेतत् । सत्यं चानृतं च न वदतीत्याद्यपि ग्राह्यम् । एवं मुख्यप्राणस्यैव सर्वदेवोत्तमत्वे पापाविद्धत्वं हेतुरित्युक्तम् । इदानीं हेत्वन्तरमाह – **तेनेति** ॥ तेन मुख्यप्राणेन प्रेरितो जीवो यदश्नाति यत् पिबति तेनेतरान् प्राणानिन्द्रियदेवानवति रक्षति । मुख्यप्राणस्यैव सर्वोत्तमत्वे हेत्वन्तर-माह – **एतमिति** ॥ उशब्दोऽपिशब्दार्थः । एतं मुख्यप्राणं [१]विदित्वोत्क्रामत्येव ॥ संसारान्मुक्तिमेष्यत्यसंशयम् । नच श्रुत्यन्तरविरोधः । अन्ततः सर्वोत्तमत्वेन विष्णुमपि विदित्वोत्क्रामति ।

१. अत्र 'वित्वा विदित्वा' इति पाठेन भाव्यमिति भाति ।

प्राणज्ञानी विष्णुं कथं सर्वोत्तमत्वेन जानीयादित्यत उक्तं विवृणोति – **व्याददातीति** ॥ यतः प्राणवेत्ताऽततस्तस्याप्युत्तमत्वेन विशिष्टत्वाद् विष्णुमाददात्येव सम्यगवच्छत्येव । प्राणप्रसादाद् विष्णववरत्वेन सर्वजीवोत्तमत्वेन । प्राणज्ञानिन एव प्राणवेत्तृत्वादिति भावः ॥ ९ ॥

एवं देवा मुख्यप्राणे भगवन्तमुपास्य स्वकार्यसिद्धिं प्राप्ता इत्युक्तम् । इदानीमृषयस्तमुपास्य स्वस्वनामानि भेजिर इत्युपलक्षणमाह – **तं हेत्यादिना** ॥ अङ्गिरा नामर्षिस्तं तत्र मुख्यप्राणे उद्गीथं भगवन्तमुपासाश्चक्रे । तेन सोऽङ्गिरा इति नामधेयं लेभ इति वक्तव्यम् । नन्वङ्गिरा इति नाम तस्यर्षेरेव प्रसिद्धम् । अतः कथं मुख्यप्राणे उद्गीथोपासनेन तस्यैतन्नामधेयलाभ इत्यतो नेदमृषिनाम । किन्तु मुख्यप्राणस्यैव । इतरत्र प्रसिद्धेस्तद्दत्तत्वेनोपपत्तेरिति भावेनाऽह – **एतमिति** ॥ एतमेव मुख्यप्राणमेवाङ्गिरसं मुख्यतोऽङ्गिरसनामकं मन्यन्ते वै ज्ञानिनः । तत्राङ्गिरसशब्दं निर्वक्ति – **अङ्गानामिति** ॥ यद् यस्मादङ्गानां शरीरावयवानां रसो नियामकोऽङ्गानामप्रधानानां पृथिव्यादिसरस्वत्यन्तानां रसः श्रेष्ठो वा तेन कारणेनाङ्गिरसं मन्यन्त इत्यन्वयः ॥ १० ॥

न केवलमृषय एव तमुपास्य स्वस्वनामानि भेजिरे किन्तु देवा अपीत्युपलक्षणयाऽऽह – **तं ह बृहस्पतिरिति** ॥ व्याख्यातप्रायम् । वाग् वागभिमानिनी सरस्वती । बृहती स्त्रीगुणैः सर्वपूर्णत्वात् । यथोक्तम् – "स्त्रीगुणैः सर्वपूर्णत्वाद् वृहती तु सरस्वती" इति । तस्या बृहत्या एष मुख्यप्राणः पतिर्हि यस्मात् तेन बृहस्पतिं मन्यत इत्यर्थः ॥ ११ ॥

उपलक्षणमेतत् । "तमिन्द्र उद्गीथमुपासाञ्चक्रे एतमु एवेन्द्रं मन्यते" इत्याद्यपि ग्राह्यम् । उपलक्षणतया ज्ञापनायैवाऽह – **तं हाऽयास्य इति** ॥ अयास्यः कश्चिद् ऋषिः । यद् यस्मादास्यादयते मुखाद् गच्छति तत्र प्रविश्य तं नियमयतीति यावत् । तथाहि श्रुतिः – "चक्षुःश्रोत्रे

मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते'' इति । मुखान्निर्गच्छति श्वासोच्छ्वासरूपेणेति वाऽर्थः ।। १२ ।।

यज्ञे वायुरेवोद्गाता कर्तव्यः । तदभावे तज्ज्ञानी वा । तस्यैव तत्र प्राप्त-विघ्नपरिहारक्षमत्वात् । यजमानाभीष्टप्रदानसमर्थत्वाच्चेति भावेनाऽह – **तं हेति** ।। तं मुख्यप्राणं दाल्भ्यो दल्भपुत्रो बको नामतो विदाञ्चकार ज्ञातवान् । अतः स बको नैमिषीयानां नैमिषदेशीयानामृषीणां सत्रिणा-मुद्गाता बभूव । स बको मुख्यप्राणज्ञानसामर्थ्यादेवैभ्यः ऋषिभ्यः कामान् काम्यान्नुद्धिश्याऽगायति । ह स्मेत्याश्चर्यद्योतकम् । ते कामास्तैः प्राप्ताश्च ।। १३ ।।

यजमानाभीष्टप्रदानसमर्थोद्गातृज्ञेयमुख्यप्राणाख्यविशिष्टप्रतिमात्वेन भगवदुपासकस्य फलमाह – **आगातेति** ।। आगन्ता । यद्वा अन्योऽप्युद्गाता यदि मुख्यप्राणज्ञानी तत्र भगवन्तमुपास्ते तर्हि सोऽपि यजमानाभीष्टप्रदानसमर्थ इत्याह – **आगातेति** ।। इत्यध्यात्मं मुख्यप्राणोद्गीथोपास्तिरुक्तेति शेषः ।। १४ ।।

**इति द्वितीयखण्डः ।।**

## उपनिषत् (खण्डः-३)

*अधिदैवं मुख्यप्राणे भगवदुपासना*

**अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीतोद्यन् वा एष प्रजाभ्य उद्गायत्युद्यंस्तमोभयमपहन्त्यपहन्ता हवै उभयस्य तमसो भवति य एवं वेद ।। १ ।।**

*शरीरस्थप्राणे सूर्यमण्डलस्थप्राणे च भगवदुपासना*

**समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते**

स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिमममुं चोद्गीथमुपासीत ॥ २ ॥

*व्याननामके वायौ भगवदुपासना*

अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानोऽथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक् तस्मादप्राणन्ननपानन् वाचमभिव्याहरति या वाक् सर्क् तस्मादप्राणन्ननपानन्नृचमभिव्याहरति या ऋक् तत् साम तस्मादप्राणन्ननपानन् साम गायति यत् साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायत्यतः ॥ ३ ॥
यान्यन्यानि वीर्यवन्ति कर्माणि यथाऽग्रेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानन् तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ४ ॥

*उद्गीथाक्षरोपासना*

अथ खलूद्गीथाक्षराण्युपासीतोद्-गी-थ इति प्राण एवोत् प्राणेन ह्युत्तिष्ठति वाग् गीर्वाचो हि गिर इत्याचक्षतेऽन्नं थमन्ने हीदं सर्वं स्थितं द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थं सामवेद एवोद् यजुर्वेदो गीर्ऋग्वेदस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥ ५ ॥

*काम्यसाधकवस्तुषु भगवदुपासना*

अथ खल्वाशीः समृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन् स्यात् तत्सामोपधावेद् यस्यांमृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन् स्यात् तां देवतामुपधावेद् येन च्छन्दसा स्तोष्यन् स्यात्तच्छन्द उपधावेद् येन स्तोमेन स्तोष्यमाणः स्यात् तꣳ स्तोममुपधावेद् यां दिशमभिष्टोष्यन् स्यात् तां दिशमुपधावेदात्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥ ६ ॥ खण्डः ३॥

भाष्यम्

'आदित्यसंस्थितो नित्यं प्राणस्तपति नापरः ।
प्रकाशनं च तपनं काष्ठवत् सूर्यगं भवेत् ॥

सूर्यमण्डलगो वायुरुदयास्तमयोज्झितः ।
अपि प्रजाभ्य उद्यंश्चैवोद्गायति जनार्दनम् ॥

आदित्यमण्डलस्थश्च सर्वप्राणिगतस्तथा ।
वायुः समान एवायमुष्णोऽसावपि च स्फुटम् ॥

तस्मादस्मिन्नमुष्मिन् वाऽप्युद्गीथाख्यं जनार्दनम् ।
उपासीत विमोक्षाय सर्वकामाप्तये तथा ॥' इति च ।

केशवः स्वः स्वतन्त्रत्वात् तद्गतेर्मारुतः स्वरः ।

शरीरस्थश्च सूर्यस्थः प्रतिप्रत्या[१] समन्ततः ॥
मां प्रतीत्यत एवासौ प्रत्यास्वर उदाहृतः ।

*त्रिविधप्राणादिपञ्चकनिरूपणम्*

प्राणाद्यास्त्रिविधाः पञ्चप्रधानो वायुरेव च ॥
मुख्यपञ्चकरूपः सन् गरुडो मध्यपञ्चकः ।
अवमः पञ्चकस्त्वन्ये प्राणाद्यास्तस्य सूनवः ॥
इति त्रेधा विभागोऽयं विभागोऽन्यश्चतुर्थकः ।
प्राणापानौ शेषवीन्द्रौ तथोदानसमानकौ ॥
रुद्रेन्द्रौ तत्परः श्रेष्ठो वायुर्व्यान उदाहृतः ।
तस्मिन्नुद्गीथनामानमुपासीत हरिं परम् ॥
योऽसौ व्यानगतो विष्णुः स वागृक्सामगः सदा ।
उद्गीथे च स एवैकस्तस्माद् व्यानाद्धि तत्क्रियाः ॥
उद्गीथनामा भगवान् स्थितो व्यानादिपञ्चके ।
वीर्यवत् कर्मकृत् तस्माद् व्यान एव ह्युदाहृतः ॥
तस्माद् व्यानगतं विष्णुमुपासीतैव नित्यशः ।
यद्यप्येको हि भगवान् सर्वदा सर्ववस्तुगः ॥
अनूनोद्रिक्तमहिमो निर्विशेषः सदैव च ।
तथाऽपि तत्क्रियाभेदान्नामरूपादिकं पृथक् ॥
उच्यते ह्यपृथक्त्वेऽपि पूर्णैश्वर्यैकहेतुतः ।

१. 'प्रति प्रत्या' ह पाठः ।

अविशेषोऽपि भगवान् सर्वशक्तित्वहेतुतः ।।
विशेषहेतुकं सर्वं करोत्यविकृतः सदा ।
उद्गीथाक्षरगं चैव प्राणादिषु च संस्थितम् ।।
आशीःसमृद्धिहेतुष्वप्यखिलेषु व्यवस्थितम् ।
एकमेव हरिं वेद यः स सर्वेष्टमाप्नुयात् ।।' इति च ।
'उच्छब्दवाच्याः प्राणाद्या वागाद्या गीरितीरिताः ।
अन्नाद्यास्थमिति प्रोक्तास्तेषूद्गीथो हरिः स्थितः ।।' इति च[१] ।
आत्मानं परमात्मानमन्ततः सर्वोत्तमत्वेन सर्वत्रोपसृत्य ।।३।।

## पदार्थकौमुदी

### भाष्यार्थः

एवमध्यात्मं वायोः सर्वोत्तमत्वज्ञानपूर्वकं तस्मिंस्ततोऽप्युत्तमत्वेनोपासनीयो भगवानित्युक्तम् । इदानीमधिदैवतं तथोद्गीथोपास्तिमाह – **अथेत्यादिना** ।। ''तत्र य एवासौ तपति तमुद्गीथमुपासीत'' इति वाक्यं सूर्यगे मुख्यवायावुद्गीथोपास्तिः कर्तव्येति प्राग् व्याख्यातम् । तदसत् । ''य एवासौ तपति'' इति तपनकर्तृत्वेन सूर्यस्यैव प्रतीत्या सूर्यान्तर्गतभगवदुपास्तिकर्तव्यताया एव प्रतीतेरित्यतस्तपनकर्तृत्वमपि सूर्यस्थप्राणस्यैव धर्मो न सूर्यस्येति प्रमाणेनैवाऽऽह – **आदित्येति** ।। अपर आदित्यः । किं तत्तपनमित्याशङ्कां परिहरन् तपनस्याऽऽदित्यस्थत्वगोचरप्रमाणविरोधं च परिहरति – **प्रकाशनमिति** ।। काष्टवत् काष्टगततपनमिव ।

---

१. 'इति' ह.पाठः ।

ननु यदि "य एवासौ तपति"इत्यत्र सूर्यमण्डलगतो वायुरुच्यते तदोत्तरवाक्ये उद्यन्नित्युक्तिरयुक्ता स्यात्। सूर्यमण्डलस्य नित्योदितत्वेन तद्गतस्य तस्योदयास्तमयशून्यत्वादित्यतस्तदर्थमेव प्रजाभ्य इत्युक्तमित्याशयेन "उद्यन् वा एष प्रजाभ्यः" इत्यादिवाक्यं व्याचष्टे – **सूर्येति** ॥ एवशब्देन वा इत्येतदवधारणार्थकमित्युक्तं भवति । गायति चेति चशब्दान्वयः । तेन "तमोभयमपहन्ति"इति श्रुत्युक्तस्य समुच्चयः । जनार्दनमिति शेषोक्तिः ।

ननु "समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ" इत्यत्र देहसूर्यमण्डलयोरुष्णत्वेन साम्यमुच्यते । तथाच पूर्वं देहसूर्यमण्डलयोरेवोद्गीथोपास्तिः कार्येति व्याख्येयमित्यतस्तद् यथावद्व्याचष्टे – **आदित्यमण्डलस्थ इति** ॥ चशब्दतथाशब्दौ परस्परसमुच्चये । द्वितीयचशब्देन उष्ण इत्यस्यानुकर्षः । अस्त्वेवं साम्यं किं तत इत्यतः प्राप्तं "तस्माद् वा एतमिममम‍ुं चोद्गीथमुपासीत" इति वाक्यं सामानाधिकरण्यभ्रान्तिनिरासाय द्वितीयायाः सप्तम्यर्थत्वमभिप्रेत्य व्याचष्टे – **तस्मादिति** ॥ वाशब्दोऽवधारणार्थ उपासीत्यनेन सम्बध्यते । अपिशब्दोऽस्मिन्नित्युक्तसमुच्चयार्थः । वा इत्यनुवादेनापीति व्याख्यानं वा । श्रुतावुपासनफलानुक्तेस्तदाह – **विमोक्षायेति** ॥ "स्वर इतीममाचक्षते स्वर इति प्रत्यास्वरः इत्यमुम्"इति वाक्यं व्याचष्टे – **केशव इति** ॥ शरीरस्थः सूर्यस्थमारुतः स्वर इत्युदाहृतः इति सम्बन्धः । असौ सूर्यस्थः प्रत्यास्वर उदाहृतः । तत्र प्रतीत्येतद् वीप्साभिप्रायमिति भावेन प्रतिप्रतीत्युक्तम् । आ इत्यनुवादेन समन्तत इति व्याख्यानम् । किं प्रतीत्यत उक्तम् – **मामिति** ॥ तथाच यतः आसमन्तान्मां प्रति वर्तत इत्युदाहृतोऽत एव प्रत्यास्वरः । नतु निमित्तान्तरेण । स्वनामकविष्णु-

**अविशेषोऽपि भगवान् सर्वशक्तित्वहेतुतः ॥**

**विशेषहेतुकं सर्वं करोत्यविकृतः सदा ।**

**उद्गीथाक्षरगं चैव प्राणादिषु च संस्थितम् ॥**

**आशीःसमृद्धिहेतुष्वप्यखिलेषु व्यवस्थितम् ।**

**एकमेव हरिं वेद यः स सर्वेष्टमाप्नुयात् ॥' इति च ।**

**'उच्छब्दवाच्याः प्राणाद्या वागाद्या गीरितीरिताः ।**

**अन्नाद्यास्थमिति प्रोक्तास्तेषूद्गीथो हरिः स्थितः ॥' इति च[१] ।**

**आत्मानं परमात्मानमन्ततः सर्वोत्तमत्वेन सर्वत्रोपसृत्य ॥३॥**

## पदार्थकौमुदी

### भाष्यार्थः

एवमध्यात्मं वायोः सर्वोत्तमत्वज्ञानपूर्वकं तस्मिंस्ततोऽप्युत्तमत्वेनोपासनीयो भगवानित्युक्तम् । इदानीमधिदैवतं तथोद्गीथोपास्तिमाह – **अथेत्यादिना** ॥ ''तत्र य एवासौ तपति तमुद्गीथमुपासीत'' इति वाक्यं सूर्यगे मुख्यवायावुद्गीथोपास्तिः कर्तव्येति प्राग् व्याख्यातम् । तदसत् । ''य एवासौ तपति'' इति तपनकर्तृत्वेन सूर्यस्यैव प्रतीत्या सूर्यान्तर्गतभगवदुपास्तिकर्तव्यताया एव प्रतीतेरित्यतस्तपनकर्तृत्वमपि सूर्यस्थप्राणस्यैव धर्मो न सूर्यस्येति प्रमाणेनैवाऽह – **आदित्येति** ॥ अपर आदित्यः । किं तत्तपनमित्याशङ्कां परिहरन् तपनस्याऽदित्यस्थत्वगोचरप्रमाणविरोधं च परिहरति – **प्रकाशनमिति** ॥ काष्टवत् काष्टगततपनमिव ।

---

१. 'इति' ह्.पाठः ।

ननु यदि ''य एवासौ तपति''इत्यत्र सूर्यमण्डलगतो वायुरुच्यते तदोत्तरवाक्ये उद्यन्नित्युक्तिरयुक्ता स्यात्। सूर्यमण्डलस्य नित्योदितत्वेन तद्गतस्य तस्योदयास्तमयशून्यत्वादित्यतस्तदर्थमेव प्रजाभ्य इत्युक्तमित्याशयेन ''उद्यन् वा एष प्रजाभ्यः'' इत्यादिवाक्यं व्याचष्टे – **सूर्येति** ॥ एवशब्देन वा इत्येतदवधारणार्थकमित्युक्तं भवति । गायति चेति चशब्दान्वयः । तेन ''तमोभयमपहन्ति''इति श्रुत्युक्तस्य समुच्चयः । जनार्दनमिति शेषोक्तिः ।

ननु ''समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ'' इत्यत्र देहसूर्यमण्डलयोरुष्णत्वेन साम्यमुच्यते । तथाच पूर्वं देहसूर्यमण्डलयोरेवोद्गीथोपास्तिः कार्येति व्याख्येयमित्यतस्तद् यथावद्व्याचष्टे – **आदित्यमण्डलस्थ इति** ॥ चशब्दतथाशब्दौ परस्परसमुच्चये । द्वितीयचशब्देन उष्ण इत्यस्यानुकर्षः । अस्त्वेवं साम्यं किं तत इत्यतः प्राप्तं ''तस्माद् वा एतमिममम़ुं चोद्गीथमुपासीत'' इति वाक्यं सामानाधिकरण्यभ्रान्तिनिरासाय द्वितीयायाः सप्तम्यर्थत्वमभिप्रेत्य व्याचष्टे – **तस्मादिति** ॥ वाशब्दोऽवधारणार्थ उपासीत्यनेन सम्बध्यते । अपिशब्दोऽस्मिन्नित्युक्तसमुच्चयार्थः । वा इत्यनुवादेनापीति व्याख्यानं वा । श्रुतावुपासनफलानुक्तेस्तदाह – **विमोक्षायेति** ॥ ''स्वर इतीममाचक्षते स्वर इति प्रत्यास्वरः इत्यमुम्''इति वाक्यं व्याचष्टे – **केशव इति** ॥ शरीरस्थः सूर्यस्थमारुतः स्वर इत्युदाहृतः इति सम्बन्धः । असौ सूर्यस्थः प्रत्यास्वर उदाहृतः । तत्र प्रतीत्येतद् वीप्साभिप्रायमिति भावेन प्रतिप्रतीत्युक्तम् । आ इत्यनुवादेन समन्तत इति व्याख्यानम् । किं प्रतीत्यत उक्तम् – **मामिति** ॥ तथाच यतः आसमन्तान्मां प्रति वर्तत इत्युदाहृतोऽत एव प्रत्यास्वरः । नतु निमित्तान्तरेण । स्वनामकविष्णु-

रतत्वात् स्वरः । प्रत्या चासौ स्वरश्चेति प्रत्यास्वर इत्यर्थः । "अथ यः प्राणापानयोः सन्धिः स व्यानः" इत्यत्र प्राणापानसन्धिप्रवर्तकत्वेन व्यानस्योत्तमत्वमुच्यते । तत्र कौ तौ प्राणापानौ ? न तावन्मुख्य-प्राणस्वरूपभूतौ । ताभ्यां तत्स्वरूपभूतव्यानस्योत्तमत्वासम्भवात् । अत एव न दासभूतौ । नापि प्राणापानौ दासभूतौ व्यानः स्वरूपभूत इति युक्तम् । भिन्नपञ्चकग्रहणायोगादित्यतोऽत्र विवक्षितप्राणादिस्वरूपं वक्तुं प्राणादिपञ्चकस्वरूपं तावदाह – **प्राणाद्या इति** ॥ प्राणाद्याः पञ्च त्रिविधा इत्यन्वयः । त्रैविध्यमेव दर्शयति – **मुख्येति** ॥ मुख्यपञ्चकरूप एव सन्नस्ति । चशब्दोऽवधारणार्थो मध्यपञ्चक एवेत्येतेन सम्बध्यते । तुशब्दोऽवधारणार्थः । तस्य प्रधानवायोः । उक्तविभागस्य प्रकृतानुप-योगात् प्रकृतोपयुक्तविभागान्तरमाह – **विभागोऽन्य इति** ॥ तमेव दर्शयति – **प्राणेति** ॥ तथाचात्र प्राणापानौ शेषवीन्द्रौ व्यानः श्रेष्ठो वायुर्विवक्षित इति नानुपपत्तिरिति भावः । अत एव तत्पर इत्युक्तम् ।

"अथ खलु व्यानमेवोद्गीथमुपासीत" इति वाक्यं सामानाधिकरण्ये-नाभेदोक्तिभ्रमनिरासाय व्याचष्टे – **तस्मिन्निति** ॥ व्यान इत्यर्थः । श्रुतौ "यो व्यानः सा वाक्" "या वाक् सर्क्" "यर्क् तत्साम" "यत्साम स उद्गीथः" इत्यत्र व्यानवाकृक्साकसामोद्गीथनामभेद उच्यत इति प्रतीयते, तदसत् । तस्य बाधितत्वात् । नच व्यानस्यैव वागादिस्थत्वमुच्यत इति व्याख्येयम् । व्यानस्यापि स्वातन्त्रेण तत्क्रियाप्रवर्तकत्वाभावादित्यतस्तद् व्याचष्टे – **योऽसाविति** ॥ व्यानगत इत्युक्त्या विशेषणीभूतव्यानस्यापि वागादिगतत्वं लभ्यते । अन्यथा व्यानस्य विशिष्टप्रतिमात्वानुप-पादकत्वेनास्यासाङ्गत्यापत्तेः । अत एव "व्यानाद्धि तत्क्रिया" इति वक्ष्यति । उद्गीथे च गतः । उद्गीथो नाम सामभेदः । स्थानभेदेन

भेदशङ्कानिरासायैक इत्युक्तम् ।

''तस्मादप्राणन्ननपानन्वाचमभिव्याहरति'' इत्यादि ''उद्गायति'' इत्यन्तं वाक्यं व्याचष्टे – **तस्मादिति** ॥ तत्क्रियाः वागृगभिव्याहरण-सामगानोद्गानरूपक्रिया इत्यर्थः । तस्मादित्युक्तं हेतुं विवृण्वन्नुत्तरत्रापि हेतुमाह – **उद्गीथनामेति** ॥ अत्र व्यानशब्देन पृथक्स्थितो व्यान उच्यते । आदिपदेन वागृक्सामोद्गीथगतं व्यानरूपचतुष्टयं ग्राह्यम् । तथा च भगवतो वागादिचतुष्टयगतव्यानगतत्वं पूर्वत्र हेतुः । तेन तस्मादित्येतद् विष्ण्वाविष्टस्य व्यानस्य वागादिगतत्वादिति विवृतम् । पृथक्स्थितव्यानगतत्वं तूत्तरत्र हेतुरिति बोध्यम् ।

''अतो यान्यन्यानि वीर्यवन्ति कर्माणितानि करोति''इति वाक्यं व्यानस्य स्वातन्त्र्येण वीर्यवत्कर्मकर्तृत्वमुच्यत इति भ्रमनिरासाय व्याचष्टे– **वीर्यवदिति** ॥ यस्माद् व्यानगतो भगवांस्तस्मादित्यर्थः । एवशब्देन प्राणापानव्यवच्छेदः । एतस्य हेतोः ''व्यानमेवोद्गीथमुपासीत'' इति वाक्यं सामानाधिकरण्यभ्रमनिरासाय व्याचष्टे – **तस्मादिति** ॥ ''उपासीतैव'' इत्युक्त्या श्रुतावेवशब्दो भिन्नक्रम इत्युक्तं भवति । श्रुत्यनुसारात् प्राणापानव्यवच्छेदाय व्यानगतमेवेति वा सम्बन्धः ।

ननु तत्र तत्र स्थितानि भगवद्रूपाणि किं भिन्नान्युताभिन्नानि । आद्ये ''स एवैकः'' इत्युक्तविरोधः । द्वितीये नामरूपादिपार्थक्योक्तिविरोधः । किञ्च, वागादिगतं रूपमृगादिगतरूपकार्यकारणासमर्थं न वा । आद्ये न्यूनोद्रिक्तमहिमत्वेन सविशेषत्वप्रसङ्गः । द्वितीये सर्वत्राविशिष्टत्वात् सर्वमप्यविशेषं कुर्यात् । कुर्वाणो वा जीववत् सुखदुःखादिविकारवांश्च स्यादित्याशङ्क्य निराकरोति – **यद्यपीत्यादिना** ॥ एकोऽभिन्नः । आद्यार्धेनाभेदपक्षोऽङ्गीकृतः । प्रामाणिकत्वज्ञापनाय हिशब्दः । द्वितीया-

र्धेन सामर्थ्याभावपक्षमनभ्युपगमेन पराचष्टे । निर्विशेषश्चेत्यन्वयः । अभेदपक्षोक्तं दोषं परिहरति – **तथाऽपीति** ।। तथाऽपीत्यस्य विवरणम्- **अपृथक्त्वेऽपीति** ।। नामरूपादिकं पृथगुच्यत इत्यत्र हेतुः – **तत्क्रिया-भेदादिति** ।। तत्तत्क्रियाकर्तृत्वभेदादित्यर्थः । अपृथक्त्वे तदपि कथमित्यत उक्तम् – **पूर्णेति** ।। सामर्थ्यसद्भावपक्षोक्तदोषं परिहरति– **अविशेषोऽ-पीति** ।। सामर्थ्यविशेषशून्योऽपीत्यर्थः । विशेषहेतुकं सामर्थ्यविशेषोपेत-मिति यावत् । अविकृतो दुःखादिविकारशून्यः । ''दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः'' इत्यादिवाक्यमुद्गीथाक्षरादिमात्रोपास्त्योक्तं फलं भवतीति प्रतीतिनिरासाय व्याचष्टे – **उद्गीथेति** ।। एवशब्देनोद्गीथाक्षरव्यावृत्तिः । चशब्दौ परस्परसमुच्चये । उद्गीथाक्षराण्युपास्ते उद् गी थ इतीत्यत्रोद्गीथ इतीत्यस्य तात्पर्यम् – **उद्गीथाक्षरगमिति** ।। उद्गीथाक्षराणीत्यस्य तात्पर्यम् – **प्राणादिषु च संस्थितमिति** ।। ''आशीःसमृद्धिहेतुष्वपि''इत्यनेन ''अथ खल्वाशीः समृद्धिः'' इत्यादि व्याख्यातम् । ''सर्वेष्टमाप्नुयात्'' इत्यनेन ''अभ्याशो ह यदस्मै स कामः समृद्ध्येत'' इति वाक्यमपि व्याख्यातम् ।

ननु ''उद्गीथाक्षराण्युपास्ते'' इत्युक्तोद्गीथाक्षरशब्दस्य ''प्राणादिषु च संस्थितम्'' इति व्याख्यानमयुक्तम् । पूर्वं ''प्राण एवोद् वाग्गीरन्नं थम्'' इत्यादिना प्राणादीनामेवोच्छशब्दादिवाच्यत्वेनोक्ततयाऽत्राप्यु-द्गीथाक्षरशब्देन तेषामेव ग्राह्यत्वात् । नह्यनुक्तस्य भगवतोऽनुवादे ग्रहणं सम्भवतीत्यतस्तानि पूर्ववाक्यान्यपि भगवत्परतया प्रमाणेन व्याचष्टे – **उच्छब्देति** ।। ''आत्मानं तत उपसृत्य'' इति वाक्यमात्मशब्दस्य जीवाद्यर्थत्वप्रतीतिं निवारयन् व्याचष्टे – **आत्मानामिति** ।। सर्वत्र सर्वोपास्तिषु उपसृत्य ज्ञात्वा ।। ३ ।। **इति तृतीयः खण्डः** ।।

**॥ ततश्चायं खण्डार्थः ॥**

अथ, अध्यात्मं मुख्यप्राणे उद्गीथोपास्तिकथनानन्तरम् । अधिदैवतं मुख्यवायावुद्गीथोपास्तिरुच्यत इति शेषः । य एवासौ आदित्यसंस्थितो मुख्यप्राणस्तपति तं तत्रोद्गीथं भगवन्तमुपासीत । तस्योद्गीथाख्यविष्णु-प्रेमास्पदप्रतिमात्वमुपपादयति – **उद्यन् वा इति** ॥ एष आदित्यसंस्थितो मुख्यप्राणः स्वयमुदयास्तमयोज्झितोऽपि प्रजाभ्यः प्रजार्थमेवोद्यन्नुद्गायति जनार्दनमिति शेषः । उद्यन्नेव तमोऽन्धकारं तज्जन्यं भयं च प्राणिनामप-हन्ति । एवं ज्ञानिनः फलमाह – **अपहन्तेति** ॥ य एवमुक्तरीत्याऽऽ-दित्यस्थं प्राणं वेद स तमसोऽज्ञानस्य तत्कृतभयस्य चापहन्ता भवति ह वै ॥ १ ॥

एवमध्यात्ममधिदैवतं च मुख्यप्राणे भगवदुपास्तिः कर्तव्येत्युक्तम् । तत्र नाध्यात्ममधिदैवतं च मुख्यप्राणे विशेषः । अतस्तत्रोभयत्रापि भगवदुपास्तिः कर्तव्येति भावेनाध्यात्ममधिदैवतं च तयोः साम्यमाह – **समान इति** ॥ अयं देहस्थश्च असावादित्यस्थश्च मुख्यप्राणः समान एव वै । कथम् ? अयं देहस्थो मुख्यप्राण उष्णः असावादित्यमण्डलस्थ-श्चोष्णः । तदधिष्ठिते देहे मण्डले चौष्ण्यदर्शनात् । अस्त्वेवं साम्यं, किं तत इत्यत आह – **तस्मादिति** ॥ यस्मादध्यात्ममधिदैवतं च समान एव वायुस्तस्मादेव हेतोरेतमेतस्मिन् मुख्यवायाविममस्मिन् देहस्थे अमुष्मिन् सूर्यस्थे चोद्गीथमुपासीतेति योजना । अध्यात्ममधिदैवं च मुख्यप्राणस्य विशिष्टप्रतिमात्वे हेत्वन्तरमाह – **स्वर इति** ॥ इमं देहस्थं मुख्यप्राणम् । स्वतन्त्रत्वेन स्वनामकविष्णुरतत्वात् स्वर इत्याचक्षते । अमुमादित्यस्थं स्वर इति प्रत्यास्वर इत्याचक्षते । आसमन्तान्मां प्रति वर्तत इत्युक्तत्वात् प्रत्यास्वरनामकविष्णुरत्वात् स्वरः प्रत्या चासौ स्वरश्चेति प्रत्यास्वरः । तस्मादेतमिममभुं चास्मिन्नमुष्मिंश्चोद्गीथमुपासीतैव ॥ २ ॥

इदानीं व्याननामकमुख्यप्राणनिष्ठतयोद्गीथोपास्तिमाह – **अथेति** ॥ **अथ खल्विति** पक्षान्तरद्योतकम् । व्यानमेव व्याननामकमुख्यवायावेवो-द्गीथमुपासीत । व्यानस्य भगवद्विशिष्टप्रतिमात्वोपपादनाय तन्माहात्म्यं वक्तुं तदुपयुक्तत्वेन प्राणापानस्वरूपमाह – **यद्वा इति** ॥ यद् यः प्राणिति ऊर्ध्वप्राणनं करोति स प्राणो वै । यदपानिति योऽधोनयनं करोति सोऽपान इत्यर्थः । अत्र प्राणापानशब्दौ शेषवीन्द्रवाचकौ । यदर्थमेतदुक्तं तदाह – **अथेति** ॥ यः प्राणापानयोः सन्धिः सन्धिप्रवर्तकः स व्यान इत्यर्थः । व्यानाख्यमुख्यवायोर्विशिष्टप्रतिमात्वोपपादनाय वागादिप्रवर्तकत्वं माहा-त्म्यान्तरमाह – **यो व्यान इत्यादिना** ॥ यो व्यानो मुख्यवायुः । सा वाग् वागन्तर्गतो वाङ्नामा वाक्प्रवर्तकश्च । व्यानस्य स्वातन्त्र्येण वाक्-प्रवर्तकत्वं किमित्यतो नेत्याह – **यो व्यान इति** ॥ यो व्यानो व्यानगतो विष्णुः । सा वाग् वाङ्नामा वाक्प्रवर्तको वागन्तर्गतश्च । अतो विष्ण्वाविष्टस्यैव व्यानस्य वाक्प्रवर्तकत्वमिति भावः । ननु व्यानस्यैव वाक्प्रवर्तकत्वं कुतः ? प्राणापानयोरेव तत्प्रवर्तकत्वं किं न स्यादित्यतो व्यतिरेकेण तदुपपादयति – **तस्मादिति** ॥ तस्माद् वाचो व्यान-प्रवर्त्यत्वादेवाप्राणन्ननपानन् प्राणापानाख्यशेषवीन्द्रव्यापारशून्यः प्राणा-पानौ निरुद्ध्येति यावत् । वाचमभिव्याहरति । अतो न प्राणापानौ वाक्प्रवर्तकौ किन्तु व्यान एवेति भावः ॥

या वाग् वाङ्नामा वागन्तर्गतो वाक्प्रवर्तको व्यानः सा ऋग् ऋङ्नामा ऋगन्तर्गतो ऋक्प्रवर्तकः । किं स्वातन्त्र्येण ? न । किन्तु या वाग् वाङ्नामा वाक्प्रवर्तको व्यानगतो विष्णुः सा ऋग् ऋङ्नामा ऋक्प्रवर्तक व्यानगतश्च । अतस्तदाविष्टस्यैव ऋक्प्रवर्तकत्वमिति योज्यम् । प्राणापानयोरेव ऋक्प्रवर्तकत्वं किं न स्यादित्यत आह – **तस्मादिति** ॥ पूर्ववदर्थः । या ऋग् ऋगन्तर्गतो ऋङ्नामा ऋक्प्रवर्तको

व्यानः तत् साम सामनामकः सामान्तर्गतः सामप्रवर्तकश्च । किं स्वातन्त्र्येण ? न । किन्तु या ऋग् ऋङ्नामा ऋक्प्रवर्तकव्यानगतो विष्णुस्तत् साम सामनामा सामप्रवर्तकव्यानगतश्च । प्राणापानयोरेव सामप्रवर्तकत्वं किं न स्यादित्यत आह – **तस्मादिति** ।। यत् साम सामनामकः सामगतः सामप्रवर्तको व्यानः स उद्गीथः उद्गीथो नाम सामभेदः । उद्गीथनामोद्गीथस्थस्तत्प्रवर्तकश्च । किं स्वातन्त्र्येण ? न । किन्तु यत्साम सामनामकः सामप्रवर्तकव्यानगतो विष्णुः स उद्गीथनामोद्गीथप्रवर्तकव्यानगतश्च । उद्गीथप्रवर्तकत्वं न प्राणापानयोरित्याह – **तस्मादिति** ।। यद्यपि प्राग् वागृक्सामोद्गीथशब्दैर्द्विरूपसरस्वतीप्राणपरमात्मान एवोक्तास्तथाऽप्यत्र तेषामसम्भवाद् वेदग्वेंदसामवेदोद्गीथसामभेदानां तदवान्तराभिमानिनां वा ग्रहणमिति ज्ञेयम् ।। ३ ।।

न केवलं वागादिप्रवर्तक एव व्यानः किन्तु अतः पूर्वोक्तादन्यान्यपि यानि वीर्यवन्ति प्रयत्नाधिक्यसाध्यानि कर्माणि । कानि तानि ? यथाऽग्नेर्मथनं निर्घर्षणोत्पादनमाजेर्मर्यादायाः सरणमवनमाजेः सङ्ग्रामस्यार्थं सरणं गमनं वा । दृढस्य धनुष आयमनमाकर्षणमित्यादीनि । तान्यपि अप्राणन्ननपानन् करोति । अतो व्यान एव सर्वप्रवर्तकतया सर्वोत्तम इति भावः । किं तत इत्यत आह – **एतस्येति** ।। एतस्य पूर्वोक्तस्य हेतोस्सकाशाद् व्यानमेव व्यान एवोद्गीथं भगवन्तमुपासीत ।। ४ ।।

इदानीमुद्गीथाक्षरप्रतिपाद्यप्राणादिस्थितभगवदुपास्तिमाह – **अथेति** ।। उद्गीथाक्षराणि उद्गीथाक्षराप्रतिपाद्यदेवतासु स्थितानि भगवद्रूपाण्युपासीत । कान्युद्गीथाक्षराणीत्यत आह – **उद्गीथ इति** ।। कास्ता उद्गीथाक्षरदेवता यासु भगवदुपास्तिः कर्तव्येत्यत आह – **प्राण एवेत्यादिना** ।। प्राणो मुख्यप्राण एवोद् उच्छब्दवाच्यः । कुतः ? हि यस्मात् प्राणेनेदं जगदुत्तिष्ठति उत्पद्यते । वाक् सरस्वती गीः । कुतः ?

वाचो हि गिर इत्याचक्षते विद्वांसः। अन्नमन्नाभिमानिचतुर्मुखस्थम् । ''अन्नाभिमानी ब्रह्मैव प्राणो वायुरितीरितः'' इति ह्यन्यत्रोक्तम् । कुतः ? अन्नेहीदं सर्वं जगत् स्थितम् ।

एवमुत्तरत्रापि द्व्यन्तरिक्षादिशब्दैस्तदभिमानिनो ग्राह्याः । उद्गीथाक्षरवाच्यप्राणादिस्थितभगवदुपासकस्य फलमाह – **दुग्ध इति** ॥ योऽधिकारी एतानि एवमुच्छब्दादिवाच्यतया विद्वानुद्गीथाक्षराणि उद्गीथाक्षरवाच्यप्राणादिस्थितभगवद्रूपाणि उपास्ते, किमिति उद्गीथ इति उद्गीथाक्षराणीति यावत् । अस्मै उपासकाय वाग् वाङ्नामा भगवान् वाग्दोहं वाचःफलं दुग्धे । कोऽसौ वाग्दोहः यो वाचो दोहः श्रुत्यादिसिद्धो मोक्षादिलक्षणस्तमिति सम्बन्धः । स उपासकोऽन्नवानन्नादश्चान्नादनसमर्थश्च भवति ॥ ५ ॥

इदानीमाशीः समृद्धिहेतुष्वपि भगवदुपास्तिमाह – **अथेति** ॥ आशीः समृद्धिराशिषः काम्यस्य समृद्धिर्येन स आशीः समृद्धिः । कामसमृद्धिहेतुरुच्यत इति शेषः । सामादिस्थितानि भगवद्रूपाणि उपसारयन्तीष्टमित्युपसरणानीत्युपासीत । उपास्तिप्रकारमेवाऽह– **येनेति** ॥ पुरुषो येन साम्ना सामविशेषेण स्तोष्यन् स्तोत्रं करिष्यन् स्यात् तत्सामोपधावेद्आददीत । (तत्सामगं हरिं सर्वोत्तमत्वेन ज्ञात्वा तत्साम गायेदित्यर्थः ।) ।

यस्यामृचि आरूढेन साम्ना स्तोष्यन् स्यात् ताम् ऋचमुपधावेत् । यदार्षेयं येनर्षिणा दृष्टं साम स्तोतुमिष्टं तमृषिमुपधावेत् । यां देवतामभिष्टोष्यन् स्यात् सम्यक् स्तोत्रं करिष्यन् स्यात् तां देवतामुपधावेत् ।

येन छन्दसा गायत्र्यादिना स्तोष्यन् स्यात् तच्छन्द उपधावेत् । येन

स्तोमेन गानविशेषेण वाक्यसमूहेन वा स्तोष्यमाणः स्यात् तं स्तोममुपधावेत्।

यां दिशं दिग्देवतामभिष्टोष्यन् स्यात् तां दिशम् उपधावेत्।

ननु कथमेतद्भगवदुपासनम् ? यां देवतामिति स्वाभिप्रेतयत्किञ्चिद्देवताया एव स्तुत्यत्वोक्तेरित्यतो न सर्वोत्तमत्वेनेतरदेवतास्तोत्रं कर्तव्यं किन्त्वित्यत आह – **आत्मानमिति** ।। काममभिलषितं ध्यायन्नप्रमत्तः प्रमादरहितः पुरुष आत्मानं परमात्मानम् अन्ततः सर्वोत्तमत्वेनोपसृत्य ज्ञात्वा स्तुवीतेतरदेवतामिति शेषः। कुत एवं ज्ञात्वा स्तोत्रं कर्तव्यमित्यत आह – **अभ्याश इति** ।। यद् यस्माद् यत्कामो यः कामो यस्य सो यत्कामः पुरुषः, सर्वोत्तमत्वेन भगवन्तं ज्ञात्वेतरदेवतां स्तुवीत । स काम अस्मै स्तावकायाभ्याशः शीघ्रं समृद्ध्येत सम्यक् परिपूर्णो भवति । तस्मादात्मानमन्तत उपसृत्य स्तुवीतेति सम्बन्धः । इतिशब्दो विद्यासमाप्त्यर्थः । खण्डत्रयस्याप्युद्गीथोपास्तिप्रतिपादकत्वनैकविद्यात्वात्। द्विरुक्तिस्तु पूर्वोक्तविद्यार्थावधारणार्था। उक्तं च –

''अध्यायान्ते द्विरुक्तिः स्याद् वेदे वा वैदिकेऽपि वा।

विचारो यत्र सज्ज्येत पूर्वोक्तस्यावधारणे ।।'' इति। अत्राध्यायान्तेऽपीत्यपिशब्दसम्बन्धः । तेन विद्यान्तरस्य समुच्चय इति नानुपपत्तिरिति ज्ञेयम्। एवमुत्तरत्रापि ।। ६ ।।

**।। इति तृतीयखण्डः ।।**

## उपनिषत् (खण्डः- ४)

*प्रणवोपासना, तत्फलं च*

**ॐइत्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ।**

**देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशꣳस्ते छन्दोभिराच्छादयन् यदेभिराच्छादयꣳस्तच्छन्दसां छन्दस्त्वं तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि ते नु वित्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥ १ ॥**

**यदा वा ऋचमाप्नोत्योमित्येवातिस्वर[१]त्येवꣳ सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत् प्रविश्य देवा अमृता अभया अभवन् स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳ स्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ २ ॥ खण्डः ४ ॥**

### भाष्यम्

'स्वरतेस्तु स्वरो विष्णुस्तद्गतेर्वायुरुच्यते ।
वायुस्वरे स्वरं विष्णुमोमाख्यं समुपासिरे ॥
देवास्तेनामृतं प्राप्ता मुक्त्याख्यं मृत्युवर्जिताः ।
मारणान्मृत्युरित्युक्ता दुर्गा तद्भयतः सुराः ।
ओमित्युपास्य तं विष्णुं परमामृतमापिरे ॥' इति सन्ध्याने[२] ।
ऊर्ध्वाः उत्तमाः ॥ ४ ॥

### पदार्थकौमुदी

#### भाष्यार्थः

वायुगतत्वेन प्रणवोपस्तेः पूर्वं फलानुक्तेस्तामनुवदन् संसारनिवृत्ति-लक्षणं फलमाख्यायिकयाऽऽह– **ओमित्येतदक्षरमित्यादिना** ॥ तत्र

---

१. 'अभिस्वरति' इति क्वचित् पाठः । २. 'सद्ध्याने' इति ह पाठः ।

''स्वरमेव प्राविशन्''इत्यत्र स्वरशब्दः प्रणवपर इत्यसत्। ''एष उ स्वरो यदेतदक्षरमेतदमृतमभयम्'' इत्यक्षरत्वामृतत्वाभयत्वोक्तिविरोधात् । तेषां च ब्रह्मलिङ्गत्वात् । ''तत् प्रविश्य देवा अमृता अभवन्'' इत्युक्तिविरोधाच्चेति भावेन प्रमाणेनैव स्वरशब्दार्थमाह – **स्वरतेरिति** ॥ तुशब्दोऽवधारणार्थः ।

तद्रतेः स्वतन्त्रत्वात् स्वनामकविष्णुरर्वायुः स्वर इत्युच्यत इत्यर्थः । अस्त्वेवं विष्णुर्वायुश्च स्वरनामकस्तथाऽपि ''स्वरमेव प्राविशन्''इत्युक्तः प्रवेशो न प्रसिद्ध एवोपपद्यते । ''तत् प्रविश्य देवा अमृता अभवन्'' इत्युक्त्ययोगात् । अन्यथा सुषुप्तिप्रलययोरप्यमृतत्वापत्तेरित्यतस्तद्वाक्यं व्याचष्टे– **वायुस्वर इति** ॥ अनेन स्वरमित्येतदावर्तनीयम्। तत्रैकं वायु-परम् । तदा द्वितीया सप्तम्यर्थे । द्वितीयं विष्णुपरम् । तदा द्वितीया यथाश्रुतैवेत्युक्तं भवति । ''ओमित्येवातिस्वरति''इत्येतदनुरोधेन ''ओमाख्यम्'' इत्युक्तम्। प्राविशन् इत्यस्यार्थः – **समुपासिर इति** ॥ ''तत् प्रविश्य देवा अमृता अभवन्'' इति वाक्यं व्याचष्टे – **तेनेति** ॥ उपासनेन । अमृतमिति भावप्रधानो निर्देशः । प्रसिद्धामृतव्यावृत्त्यर्थं ''मुक्त्याख्यम्'' इत्युक्तम् । मृत्युवर्जिताः मृत्युनिमित्तभयवर्जिताः । अमृतशब्दस्यार्थान्तरकथनमेतत् । ''देवा वै मृत्योर्बिभ्यतः'' इत्यत्र मृत्युशब्दो यमपर इत्यसत् । सर्वदेवानां यमाद् भयाभावादित्यतोऽत्र विवक्षितं मृत्युशब्दार्थमाह – **मरणादिति** ॥ खण्डतात्पर्यमाह – **तद्भयत इति** ॥ ''तेऽनुवित्त्वोर्ध्वाः'' इत्यत्रोर्ध्वाः प्रांशव इत्यन्यथा-प्रतीतिनिरासार्थं तदनूद्य व्याचष्टे – **ऊर्ध्वा इति** ॥ मत्स्यः स्वमारकं न जानाति देवास्तु ज्ञातवन्त इत्यत्र हेतुतयोत्तमत्वस्यैव वक्तव्यत्वादिति भावः ॥ **इति चतुर्थः खण्डः** ॥

## ॥ ततश्चायं खण्डार्थः ॥

ॐमित्येतदक्षरमित्यादिकमुक्तार्थम् ।

देवा मृत्योः मारणान्मृत्युर्दुर्गा तस्या बिभ्यतः भीताः सन्तः त्रयीं विद्यां वेदविद्यां प्राविशन् वै । वेदाभिमानिदेवतारूपाधिष्ठाने भगवदुपास्तिमन्नकुर्वन्नित्यर्थः । ततस्ते देवाः छन्दोभिः छन्दस्सु भगवदुपासनैरात्मन आच्छादयन् । तत्र ज्ञापकमाह – **यदिति** ॥ ''छन्दोभिराच्छादयन्'' इति यत् छन्दसां देवाच्छादकत्वं तदेव छन्दसां छन्दस्त्वं छन्दःशब्दप्रवृत्तिनिमित्तम् । छन्दःशब्दप्रवृत्तिनिमित्तपर्यालोचनयैव छन्दसां देवाच्छादकत्वं ज्ञायत इति भावः ।

मृत्युर्दुर्गा तांस्त्रयीविद्याप्रविष्टान् देवान् । तत्र, तस्यैव विवरणं ऋचि साम्नि यजुषि पर्यपश्यत् । कथम् ? यथा लोके कश्चन पक्षिविशेषो मत्स्यमुदके परिपश्येदेवं पर्यपश्यत् । ते देवा अस्मान् मृत्युर्दृष्टवानिति ज्ञातवन्त इति वक्तव्यम् । ते देवा यत ऊर्ध्वा उत्तमा अतोऽनुवित्त्वा मृत्युरस्मान् दृष्टवानिति ज्ञात्वा ऋचः साम्नो यजुषः, ल्यब्लोपनिमित्ता पञ्चमी । ऋगादिदेवतां परित्यज्य स्वरमेव प्राविशन् । द्वितीया सप्तम्यर्थे च । स्वतन्त्रत्वेन स्वनामकविष्णुरतेः स्वरनामके वायौ स्वरतेः स्वरनामकम् ओमाख्यं विष्णुं समुपासिर इत्यर्थः ॥ १ ॥

ऋगादिपरित्यागेन स्वरप्रवेशो देवैः कृत इत्यत्र ज्ञापकमाह – **यदा वा इति** ॥ लोको यदा वा ऋचमाप्नोति तदा ओमित्येव स्वरति । एवं सामैवं यजुरिति । यदा साम यजुश्चाऽप्नोति तदा ओमित्येव स्वरतीत्यर्थः । केवलं ऋगादीनां रक्षणेऽशक्तत्वात् खल्विदानीमपि प्रणवपूर्वमृगादि जपतीति भावः । ''स्वरमेव प्राविशन्'' इत्युक्तं विवरितुं स्वरशब्दार्थं तावदाह–**एष इति** ॥ यदेतत् सर्वसन्निहितत्वादेतन्नामकमक्षरमविनाशिब्रह्म एष उ एष

एव स्वरः । तन्महिमानमाह – **एतदमृतमिति** ॥ एतद्ब्रह्मामृतं नित्य-मुक्तम् । अभयं भयशून्यमभयप्रदं वा । यद्यत्रापि मृत्युर्देवान् परिपश्येत् तर्हि को विशेषो ऋगादिभ्यः स्वरस्येत्यत आह– **तत् प्रविश्येति** ॥ तदमृतत्वा-भयत्वादिविशिष्टमक्षरं स्वरशब्दवाच्यं प्रविश्यौंनामकं भगवन्तमुपास्य देवा अमृता अभवन्नित्यर्थः ।

न केवलं देवानामेव प्रणवोपास्तिरमृतत्वप्रदा । अपि तर्ह्यद्यतनस्यापि तद्योग्यस्येत्याह – **स य इत्यादिना** ॥ योऽधिकारी एतद् ओंनामकं ब्रह्मैवं देवानाममृतत्वप्रदत्वेन विद्वानक्षरमक्षरनामकं भगवन्तं प्रणौति प्रणवेन स्तौति स एतदेवाक्षरं स्वरं स्वरमणमोङ्काररूपस्वरवाच्यममृतत्तमभयं प्रविशति । किं ततः ? नहि तत्प्रवेश एव फलमित्यत आह – **तत् प्रविश्येति** ॥ यत्तच्छब्दौ यथातथाशब्दार्थौ । यत्प्रविश्य देवा यथा अमृता अभवंस्तथा तत् परंब्रह्म प्रविश्यामृतो भवतीत्यर्थः ॥ २ ॥

**॥ इति चतुर्थः खण्डः ॥ ४ ॥**

## उपनिषत् ( खण्डः -५)

*उद्गीथः प्रणवश्चैक एव*

**अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वाऽऽदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ॥ १ ॥**

*सूर्यकिरणगतवायौ भगवदुपासनाफलकथनम्*

**एतमु एवाहमभ्यागासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्यावर्तयताद् बहवो वै ते भविष्यन्तीत्यधिदैवतम् ॥ २ ॥**

*इन्द्रियगतवायौ भगवदुपासनाफलकथनम्*

अथाध्यात्मं य एवायं मुख्यप्राणस्तमुद्गीतमुपासीतोमिति ह्येष स्वरन्नेति ॥ ३ ॥

एतमु एवाहमभ्यागासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणांस्त्वं भूमानमभिगायताद् बह्वो वै ते भविष्यन्तीति ॥ ४ ॥

*अग्निस्थभगवदुपासनया सामगानदोषस्य प्रायश्चित्तनिरूपणम्*

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति ॥५॥

॥ खण्डः ५ ॥

भाष्यम्

आदित्यसंस्थितो वायुः प्रणवस्तद्गतो हरिः ।
प्रकृष्टत्वाच्च नेतृत्वाद् गतित्वादखिलस्य च ॥
उद्गीथ उच्चैर्गेयत्वात् स एव पुरुषोत्तमः ।
स एव प्राणगो देहे ओमित्येव सदा जपन् ॥
एत्येष भगवान् विष्णुर्ध्यायन्नेकं तमक्षरम् ।
एकपुत्रो मुक्तिमेति ध्यायन् प्राणेषु रश्मिषु ।
बहुपुत्रो विमुक्तः स्यात् तस्माद् ध्यायेत् तथा परम् ॥' इति च ।

प्राणस्थं भूमानमभिगाय दुरुद्गीतमनुसमाहरति । अनुरूपमेव करोति ।

**होतृसदनस्थमग्निस्थं भगवन्तं ध्यात्वा ।**
**'अन्यथागानजं दोषमग्नौ ध्यात्वा हरिं परम् ।**
**अपाकरोति तस्मात् तं ध्यायेदेवाग्निगं सदा ॥'इति त्रैविद्ये ॥ ५ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

इदानीमधिदैवमध्यात्मं च मुख्यप्राणे उद्गीथस्योपास्त्यन्तरं तत्फलं चाऽख्यायिकयाऽऽह – **अथ खल्विति** ॥

तत्रोद्गीथप्रणवयोराभेदपरं मन्त्रमुदाहृत्य क उद्गीथः प्रणवश्चेत्याशङ्कायां ''असौ वा आदित्य उद्गीथः, एष प्रणवः'' इत्यादित्यस्योद्गीथत्वं प्रणवत्वं चोच्यते । तत् पूर्वोक्तिविरुद्धमित्यतस्तद्वाक्यं प्रमाणेनैव व्याचष्टे – **आदित्येति** ॥ तद्गतो हरिः प्रणव इति सम्बन्धः । नचैवमादित्यशब्दस्य लक्षितलक्षणाप्रसङ्गः । अव्यक्ताधिकरणन्यायेनाऽदित्यशब्दस्य वायुभगवतोरेव मुख्यत्वात् । आदित्यस्थो हरिरित्येव कुतो न व्याख्यायते । किं वायुग्रहणेनेति चेन्न । पूर्वं वायुस्थत्वेनैव भगवदुपास्तेः प्र(स्तुत)कृतत्वात् । अध्यात्मप्रकरणे ''य एवायं मुख्यप्राणस्तमुद्गीथमुपासीत'' इति वक्ष्यमाणत्वेनाधिदैवप्रकरणेऽपि वायुस्थत्वेनैवोद्गीथोपास्तेर्वक्तव्यत्वाच्च । हरौ प्रणवशब्दं निर्वक्ति – **प्रकृष्टत्वाच्चेति** ॥ श्रुतावुद्गीथस्य प्रणवत्वोक्तेः कथमेतदित्यत उद्गीथशब्दवाच्योऽपि स एवेत्याह – **उद्गीथ इति** ॥ अध्यात्मप्रकरणे ''अथाध्यात्मम्'' इत्यस्यानन्तरं ''अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथः'' इति मन्त्रोदाहरणरूपमुत्तरवाक्यं संयोज्यम् । अधिदैवप्रकरणे तथोक्तत्वात् । उत्तरत्रोक्तेर्व्यर्थत्वाच्च । तदनन्तरम् ''अयं वै मुख्यप्राण उद्गीथ

एष प्रणवः'' इति मन्त्रव्याख्यानरूपं वाक्यमधिदैवप्रकरणवदत्रापि ग्राह्यमिति भावेन तद्वाक्यं व्याचष्टे – **स एवेति** ॥ (यो) देहे प्राणगः स एव हरिः प्रणव उद्गीथश्चेति सम्बन्धः । स्थानभेदेन भेदशङ्कां निवर्तयितुं ''स एव''इत्युक्तम् । अधिदैवाध्यात्मप्रकरणगतम् ''ओमिति ह्येष स्वरन्नेति'' इति वाक्यं व्याचष्टे – **ओमित्येवेति** ॥ अधिदैवाध्यात्म-प्रकरणयोरादित्यदेहस्थवायुगतभगवदुपासकस्य फलं ''एतमु एवाह-मभ्यगासिषं तस्मान्मम त्वमेकोऽसि'' इत्युत्तरवाक्यानुसारेणाऽऽह – **ध्यायन्निति** ॥ भगवद्ध्यानस्यैकपुत्रत्वरूपैहिकमात्रफलकत्वानुपपत्तेः ''मुक्तिमेति''इत्युक्तम् । एवमुत्तरत्रापि । ''रश्मींस्त्वं पर्यावर्तयतात्'' ''प्राणांस्त्वं भूमानमभिगायतात्'' इति वाक्यानुसारेणाऽऽदित्यरश्मीतर-प्राणस्थितवायुगतभगवदुपासकस्य फलमाह – **ध्यायन्निति** ॥ ''विमुक्त'' इत्यत्र वीत्युपसर्गेणाऽऽनन्दाधिक्यं फलमाह । ''य एवायं मुख्यप्राणस्तमुद्गीथमुपासीत'' इत्यध्यात्मप्रकरणवदधिदैवप्रकरणेऽपि ''एष प्रणवः'' इत्यनन्तरं ''य एवासावादित्यस्तमुद्गीथमुपासीत'' इति वाक्यं ग्राह्यमिति भावेन तदुभयमपि वाक्यं व्याचष्टे – **तस्मादिति** ॥ तथा आदित्ये रश्मिषु देहे प्राणेषु च विद्यमानवायुगतत्वेन । अनेना-धिदैवाध्यात्मप्रकरणयोः ''य एवामी रश्मयस्तमुद्गीथमुपासीत'' ''य एवेमे प्राणास्तं भूमानमभिगायतात्''इति वाक्यमध्याहर्तव्यमिति सूचयति ।

''प्राणास्त्वं भूमानमभिगायतात्'' इत्येतद्वाक्यं सामानाधिकरण्येन भूम्नः प्राणाभेदप्रतीतिनिरासाय व्याचष्टे – **प्राणस्थमिति** ॥ श्रुतौ त्वमिति युष्मच्छब्दश्रवणादभिगायतादिति प्रथमपुरुषप्रयोगानुपपत्तिरित्यतः मध्य-मपुरुष एवायमिति भावेन ''अभिगाय''इत्युक्तम् । अभिगानं कुर्वित्यर्थः ।

"होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरति" इति वाक्यं होतृषदनाद् हौत्रात् कर्मणो दुरुद्गानमनुसन्धत्त इति व्याख्याननिरासाय व्याचष्टे – **दुरुद्गीतमिति** ।। अनुरूपमेव करोति ।। प्रतिकूलं यथा न भवेत् तथा करोतीत्यर्थः । ध्यात्वाऽनुरूपमेव करोतीत्यन्वयः । अनेन होतृणां सदनमाश्रयोऽग्निः तत्स्थो भगवान् होतृषदनशब्दाभिधेयः । पञ्चमी ल्यब्लोपनिमित्तेत्युक्तं भवति । परोक्त एवार्थः किं न स्यादित्यतः स्वोक्तार्थे प्रमाणमाह – **अन्यथेति** ।। **इति पञ्चमः खण्डः** ।।

## ततश्चायं खण्डार्थः

प्रणवोपास्तिरुद्गीथोपास्तिश्च प्रागुक्ता । तत्र प्रणवोद्गीथयोर्भेदशङ्का-वारणायाभेदपरं मन्त्रमुदाहरति – **अथ खल्विति** ।। मन्त्रारम्भ-द्योतनार्थमेतत् । य उद्गीथः स एव प्रणवः । नेदं "य इन्द्रः सोऽर्जुनः" इत्यादिवदिति भावेनोक्तम् – **यः प्रणवः स उद्गीथ इति** ।। मन्त्रोदाहरणसमाप्तिद्योतनायेतिशब्दः । क उद्गीथः कश्च प्रणवो ययोरभेदो बोध्यत इत्यत उद्गीथप्रणवशब्दार्थमाह – **असौ वा आदित्य इति** ।। असावादित्य आदित्यनामाऽऽदित्यगतो मुख्यवायुस्तद्गतो हरिरेवोद्गीथ उद्गीथनामा उच्चैर्गेयत्वात् । एष आदित्यस्थमुख्यवायुगत एव प्रणव इत्युच्यते । प्रकृष्टत्वान्नेतृत्वाद् गतित्वादखिलस्य । किं तत इत्यतोऽत्र "य एवासावादित्यस्तमुद्गीथमुपासीत" इति वक्तव्यम् । अध्यात्मप्रकरणे तथा वक्ष्यमाणत्वात् । आदित्यस्थमुख्यवायुगतस्य भगवतः प्रणवनामकत्वे युक्तिमाह – **ओमितीति** ।। हि यस्मादेष आदित्यस्थमुख्यवायुगतो विष्णुरोमिति स्वरन् इतरजनशिक्षणायोमिति स्वात्मनं जपन्नेति तस्मादेष प्रणव इत्यर्थः । एवं ध्यायन्नेकं तमक्षरम् एकपुत्रो मुक्तिमेतीति वक्तव्यम् । तथा, य एवामी रश्मयस्तमुद्गीथमुपासीत । एवं रश्मिषु वायुगतत्वेन

भगवन्तं ध्यायन् बहुपुत्रो विमुक्तः स्यादित्यपि वक्तव्यम् ।। १ ।।

आदित्यस्थवायुगतभगवदुपास्तावेकपुत्रत्वं तद्रश्मिस्थवायुगतभगवदुपास्तौ बहुपुत्रत्वं भवतीत्यत्र विश्वासजननायाऽख्यायिकामाह – **एतमिति** ।। कुषीतकस्यापत्यं पुमान् कौषितकिः स्वपुत्रमुवाच । किमिति ? एतमेवाऽदित्यस्थमुख्यवायुगतमेव विष्णुं, नत्वादित्यरश्मिस्थवायुगतमहमभ्यगासिषं सम्यग्गानं कृतवान् । सम्यगुपास्तिं कृतवानिति यावत् । तस्मान्मम त्वमेक एव पुत्रोऽसीति । त्वं रश्मीन् आदित्यरश्मिस्थमुख्यवायुगतं भगवन्तं पर्यावर्तयतात् । पर्यावर्तयोपासनं कुरु । तथा सति बहवः पुत्रास्ते भविष्यन्ति । वै प्रसिद्धम् । इत्यधिदैवतं भगवदुपास्तिफलमुक्तम् ।। २ ।।

अथाध्यात्मं तदुपास्तिफलमुच्यत इति शेषः । ''अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथः'' इति मन्त्रोदाहरणरूपमुत्तरवाक्यमत्र संयोज्यम् । तदनन्तरम् ''अयं मुख्यप्राण उद्गीथ एष प्रणवः'' इति मन्त्रव्याख्यानरूपं वाक्यं ग्राह्यम् । किं तत इत्यत आह– **य एवायमिति** ।। य एवायं मुख्यप्राणस्तं तत्रोद्गीथं भगवन्तमुपासीत । देहस्थमुख्यप्राणगतस्य भगवतः प्रणवनामकत्वमुपपादयति– **ओमिति ह्येष इति** ।। व्याख्यातम् ।। ३ ।।

अत्रापि एवं ध्यायन्नेकं तमक्षरं एकपुत्रो मुक्तिमेतीति च वक्तव्यम् । तथा, य एवेमे प्राणास्तं भूमानमभिगायतात् । प्राणस्थवायुगतत्वेन भगवन्तं ध्यायन् बहुपुत्रो विमुक्तः स्यादित्यपि वक्तव्यम् । अत्राप्याख्यायिकामाह – **एतमेवेति** ।। व्याख्यातम् । त्वं प्राणानिन्द्रियगतमुख्यप्राणस्थं भूमानं पूर्णगुणं भगवन्तमभिगायतात् । अभिगाय सम्यग् गानं कुरु । केनाभिप्रायेण ? मम बहवः पुत्रा भविष्यन्ति वै इत्यभिप्रायेणाभिगानं कुर्वित्यर्थः ।। ४ ।।

दुरुद्गानहेतुकपापनिवृत्त्यर्थमुपास्तिमाह – **होतृषदनादिति** ॥ ल्यब्लोप-निमित्ता पञ्चमी । होतृसदनस्थमग्निस्थं भगवन्तं ध्यात्वा दुरुद्गीतं प्रामादिकं स्वरादिहीनमुद्गानमनुरूपमेव करोतीत्यर्थः । द्विरुक्तिः पूर्ववत् ॥ ५ ॥

॥ इति पञ्चमः खण्डः ॥

## उपनिषत् (खण्डः- ६)

*सरस्वतीवाय्वोरुपासना*

इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳसाम गीयते इयमेव साऽग्निरमस्तत् साम ॥ १ ॥

अन्तरिक्षमेवर्ग् वायुः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत् साम ॥ २ ॥

द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयते द्यौरेव साऽऽदित्योऽमस्तत् साम ॥ ३॥

नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत् साम ॥ ४ ॥

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयतेऽथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् साम ॥ ५ ॥

भगवन्तं ध्यायन् बहुपुत्रो विमुक्तः स्यादित्यपि वक्तव्यम् ।। १ ।।

आदित्यस्थवायुगतभगवदुपास्तावेकपुत्रत्वं तद्रश्मिस्थवायुगतभगवदुपास्तौ बहुपुत्रत्वं भवतीत्यत्र विश्वासजननायाऽख्यायिकामाह – **एतमिति** ।। कुषीतकस्यापत्यं पुमान् कौषितकिः स्वपुत्रमुवाच । किमिति ? एतमेवाऽदित्यस्थमुख्यवायुगतमेव विष्णुं, नत्वादित्यरश्मिस्थवायुगतमहमभ्यगासिषं सम्यग्गानं कृतवान् । सम्यगुपास्तिं कृतवानिति यावत् । तस्मान्मम त्वमेक एव पुत्रोऽसीति । त्वं रश्मीन् आदित्यरश्मिस्थमुख्यवायुगतं भगवन्तं पर्यावर्तयतात् । पर्यावर्तयोपासनं कुरु । तथा सति वहवः पुत्रास्ते भविष्यन्ति । वै प्रसिद्धम् । इत्यधिदैवतं भगवदुपास्तिफलमुक्तम् ।। २ ।।

अथाध्यात्मं तदुपास्तिफलमुच्यत इति शेषः । ''अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथः'' इति मन्त्रोदाहरणरूपमुत्तरवाक्यमत्र संयोज्यम् । तदनन्तरम् ''अयं मुख्यप्राण उद्गीथ एष प्रणवः'' इति मन्त्रव्याख्यानरूपं वाक्यं ग्राह्यम् । किं तत इत्यत आह– **य एवायमिति** ।। य एवायं मुख्यप्राणस्तं तत्रोद्गीथं भगवन्तमुपासीत । देहस्थमुख्यप्राणगतस्य भगवतः प्रणवनामकत्वमुपपादयति– **ओमिति ह्येष इति** ।। व्याख्यातम् ।। ३ ।।

अत्रापि एवं ध्यायन्नेकं तमक्षरं एकपुत्रो मुक्तिमेतीति च वक्तव्यम् । तथा, य एवेमे प्राणास्तं भूमानमभिगायतात् । प्राणस्थवायुगतत्वेन भगवन्तं ध्यायन् वहुपुत्रो विमुक्तः स्यादित्यपि वक्तव्यम् । अत्राप्याख्यायिकामाह – **एतमेवेति** ।। व्याख्यातम् । त्वं प्राणानिन्द्रियगतमुख्यप्राणस्थं भूमानं पूर्णगुणं भगवन्तमभिगायतात् । अभिगाय सम्यग् गानं कुरु । केनाभिप्रायेण ? मम बहवः पुत्रा भविष्यन्ति वै इत्यभिप्रायेणाभिगानं कुर्वित्यर्थः ।। ४ ।।

दुरुद्गानहेतुकपापनिवृत्त्यर्थमुपास्तिमाह – **होतृषदनादिति** ॥ ल्यब्लोप-निमित्ता पञ्चमी। होतृसदनस्थमग्निस्थं भगवन्तं ध्यात्वा दुरुद्गीतं प्रामादिकं स्वरादिहीनमुद्गानमनुरूपमेव करोतीत्यर्थः। द्विरुक्तिः पूर्ववत् ॥ ५ ॥

॥ इति पञ्चमः खण्डः ॥

## उपनिषत् (खण्डः- ६)

*सरस्वतीवाय्वोरुपासना*

इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳसाम गीयते इयमेव साऽग्निरमस्तत् साम ॥ १ ॥

अन्तरिक्षमेवर्ग् वायुः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत् साम ॥ २ ॥

द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयते द्यौरेव साऽऽदित्योऽमस्तत् साम ॥ ३॥

नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत् साम ॥ ४ ॥

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्माद् ऋच्यध्यूढꣳ साम गीयतेऽथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् साम ॥ ५ ॥

*सूर्यान्तर्गतप्राणस्थभगवन्महिमा*

अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः ॥ ६ ॥

तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ७ ॥

तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात् त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥ ८ ॥ खण्डः ६ ॥

भाष्यम्

'अग्नीरसूर्यनीलेषु वायुस्थः[१] सामदेवता ।
उर्वीवियद्द्युशुक्लेषु ऋग्देवीस्था[२] सरस्वती ॥
सेति भार्या हि वाग्देवी प्राणोऽमः पतिरीरितः ।
एवं तौ सामनामानावुभावेवाप्युदाहृतौ[३] ॥
अतो हि सामवेदोऽयं ऋक्सामात्मक ईरितः ।
वागादिष्वेवमेवैतौ वाक्प्राणौ सर्वदा स्थितौ ॥
तयोरन्तःस्थितो विष्णुर्गायकौ तस्य तावुभौ ।
ऋक्सामभ्यां स उन्नामा पापोद्गश्चोच्च एव च ॥'इत्यादि सत्तत्त्वे ।

---

१. 'वायुः स्थः' इति ह. पाठः । २. 'ऋग्देवी स्था' इति ह.पाठः
३. 'उभावेतावुदाहृतौ' प्रचलितपाठान्तरम् ।

'कप्यासरक्तपद्माक्षः सूर्यगश्चाक्षिगश्च सः ।
गायकस्तस्य विष्णोर्यः स स्वर्ग्यांश्च नृलोकगान् ॥
कामान् दद्यान्नरश्चेत् स्यात् सुराणां च नृणामपि ।
मोक्षदो यदि वायुः स्यान्मुख्योद्गाता ततोऽनिलः ॥' इति च ।
तस्मादुद्गीथ उच्चोऽसौ गीयते चेति ॥ ६ ॥

## पदार्थकौमुदी

### भाष्यार्थः

"वाच ऋग्रस ऋचः साम रसः" इति प्रकृतऋक्सामयोरीश्वर-वर्गत्वादधिदैवमध्यात्मं च तदुपास्तिपूर्वं तत्परिवृतोद्गीथोपास्तिमाह– **"इयमेव"इत्यादिखण्डद्वयेन** ॥ यद्वा "ऋचः साम रसः साम्न उद्गीथो रसः" इत्यृक्सामाभ्यमुद्गीथस्य श्रैष्ठ्यमुक्तम् । ऋक्सामोत्तमत्वेऽप्यु-द्गीथस्य किं माहात्म्यम् ? कथं चोद्गीथस्य ऋक्सामोत्तमत्वमित्यत ऋक्साममाहात्म्योक्तिपुरःसरं भगवतस्तदुत्तमत्वं दर्शयति– **"इयमेव" इत्यादिखण्डद्वयेन** ॥ तत्र "इयमेवर्गग्निः साम"इत्यादौ भूरादीनामेव ऋगादित्वमुच्यत इति प्रतीतिनिरासाय "इयमेवर्गग्निः साम" "अन्तरिक्षमेवर्ग् वायुः साम" "द्यौरेवर्गादित्यः साम" "नक्षत्राण्येव चन्द्रमाः साम" "अथ यदेतदादित्यस्य शुक्लं भाः सैवर्क्" "अथ यन्नीलं परः कृष्णं तत्साम" इति वाक्यपञ्चकं व्याचष्टे – **अग्नीरेति** ॥ सूर्येत्यतः परं चन्द्रेति ग्राह्यम् । तथा द्यु इत्यतः परं नक्षत्रेत्यपि ग्राह्यम् । सामदेवतावायुरग्नीरसूर्यचन्द्रनीलेषु । स्थः तिष्ठतीत्यर्थः । एवमुत्तरार्धोऽपि व्याख्येयः । यद्यपि श्रुतौ "इयमेवर्क्" इत्यादीनि प्रथमवाक्यानि । तथाऽपि प्राधान्यक्रममनुसरता "अग्निः साम"इत्यादीन्येव प्रथमं

व्याख्यातानि । ''इयमेव साऽग्निरमस्तत्साम'' इत्यादि वाक्यपञ्चकं व्याचष्टे– **सेतीति ॥** ''एवं तावुभावपि मिलित्वा सामनामानावुदाहृतौ'' इत्यनेनेदमर्धनारीनरात्मकवायुस्वरूपकथनपरमिति ज्ञायते । उक्तं च - ''अर्धनारीनरवपुर्वायुः कुत्रचिदीरितः'' इति । ''तस्माद् ऋच्यध्यूढं साम गीयत'' इति वाक्यपञ्चकं व्याचष्टे – **अतो हीति** ॥ यतोऽग्न्यादौ सामदेवता वायुरस्ति उर्व्यादौ च ऋग्देवी सरस्वती यतश्च तदेतस्या-मृच्यध्यूढं साम अत एवेत्यर्थः ।

''अध्यात्मं वागेवर्क् प्राणः साम'' इत्याद्युत्तरखण्डस्थवाक्यचतुष्टयं व्याचष्टे – **वागादिष्विति** ॥ अत्राऽदिपदेन प्राणचक्षुरात्मश्रोत्रमनः शुक्लनीलानां ग्रहणम् । ''य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते'' ''य एषोऽन्तरक्षिणि पुरुषो दृश्यते'' इति वाक्यद्वयमादित्यचक्षुर्मात्रा-न्तस्थभगवत्परमिति प्रतीतिनिरासाय व्याचष्टे – **तयोरिति** ॥ आदित्यस्थचक्षुःस्थवायुसरस्वत्योरित्यर्थः । ''तस्यर्क् च साम च गेष्णौ'' इति वाक्यं व्याचष्टे – **गायकाविति** ॥ ऋक्समाभ्यामृग्वेदसामवेदाभ्यां गायकाविति सम्बन्धः । ''तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः'' इति वाक्यं व्याचष्टे – **स उन्नामेति** ॥ ''उच्च'' इत्यु-च्छब्दस्यार्थान्तरम् । स एवेत्येव-शब्दान्वयः । तस्य ''यथा कप्यासं पुण्डरीकमेवमक्षिणी'' इति वाक्यं व्याचष्टे – **कप्यासेति** ॥ पुण्डरीकशब्दो रक्तपद्मपरः । कं पिबन्नालसम्बन्धीति योगेन कप्यासत्वं रक्तपद्मविशेषणमित्यर्थः । एवं च कप्यासशब्देनाम्लानत्वं लभ्यत इति तात्पर्यम् । अक्षिगश्चेत्यनेन ''तस्यैतस्य तदेव रूपं यदमुष्य रूपम्'' इत्येतदपि व्याख्यातम् । ''स एष ये चामुष्मात् पराञ्चो लोकास्तां-श्चाऽप्नोति देवकामांश्च'' ''ये चैतस्मादर्वाञ्चो लोकास्तांश्चाऽप्नोति

मनुष्यकामांश्च'' इत्यत्रोद्गातुरेव परागवार्ग्लोकप्राप्तिर्देव-मनुष्यकाम-प्राप्तिश्चोच्यत इत्यसत् । ''तस्मादु हैवंविदुद्गाता ब्रूयात् कं ते काममागायानि'' इत्याद्युत्तरवाक्यानुपपत्तेः । तस्मात् पराग्लोकादि-प्रापकत्वमेवोच्यते । तदपि न सर्वस्योद्गातुर्मुख्यतः सम्भवतीत्यतो व्यवस्थया तद्व्याचष्टे – **गायक इति** ॥ ''तस्मादुद्गीथः'' इत्यत्र तस्मादिति कस्य परामर्श इति न ज्ञायते । अतस्तदनूद्य तत्परामृश्यं दर्शयति – **तस्मादिति** ॥ पूर्वं ''तस्योदिति नाम'' इति भगवत उन्नामकत्वमुक्तम् । ''तस्य ऋक् च साम च गेष्णौ'' इति गीयमानत्वमुक्तम् । तदुभयं तस्मादिति परामृश्यत इति भावः ॥ **इति षष्ठः खण्डः ॥ ६ ॥**

**॥ ततश्चायं खण्डार्थः ॥**

ऋग् ऋगभिमानिनी ऋङ्नाम्नी सरस्वती इयमेव पृथिवीलोकगतैव । साम सामाभिमानी सामनामको वायुः अग्निरग्निस्थः तदेतदग्र्यन्त-र्गतमग्निनामकं सामैतस्यां पृथिव्यन्तर्गतायामृचि अध्यूढमाश्रितम् । अग्निर्हि पृथिव्याश्रितो दृश्यते । अतोऽग्निस्थस्य वायोः पृथिवीस्थसरस्वत्या-श्रयत्वमुपपन्नम् । सामनामकवायोः ऋच्यध्यूढत्वे युक्तिमाह– **तस्मा-दिति** ॥ तस्मात् तयोः सम्बद्धत्वादेव बाह्यमपि साम ऋच्यध्यूढं गीयते सामगातृभिः । एवं पृथक् स्थितयोर्ऋक्सामयोः सरस्वतीवाय्वोः पृथिव्यग्निस्थरूपमाहात्म्यमुक्तम् । इदानीं सरस्वती वायुश्चेत्येतद्द्वयं मिलित्वैकशरीरं सदर्धनारीनरात्मकं सामनामकं वर्तते । तत्र सरस्वतीभागः सेत्युच्यते । वायुभाग अमेत्युच्यते । तस्यार्धनारीनरात्मकभागद्वयस्यापि पृथिव्यग्निस्थत्वमाह – **इयमेव सेत्यादिना** ॥ सारत्वात् स्त्रीषु सा देवी इयमेव पृथिवीगतैव । न मीयत इत्यमो मुख्यवायुः अग्निरग्निस्थः । तत् सा

अम इत्येतदुभयं मिलित्वा साम सामनामकं भवतीत्यर्थः ।। १ ।।

एवमुत्तरत्रापि । अन्तरिक्षमन्तरिक्षलोकस्था । वायुर्बाह्यवायुस्थः ।। २ ।।

द्यौर्द्युलोकस्था। आदित्य आदित्यस्थः ।। ३ ।।

नक्षत्राणि नक्षत्रस्था। चन्द्रमाः चन्द्रस्थः ।। ४ ।।

यदेतदादित्यस्य शुक्लं भाः तेजः सैव तदन्तस्थैव ऋक् । अथाऽदित्यस्य यन्नीलं नेदमौपचारिकं किन्तु परः परम्। कृष्णमतिशयेन कृष्णं तेजस्तत् तत्स्थं साम ।। ५ ।।

अस्त्वेवमृक्सामयोः सरस्वतीवाय्वोरुक्तमाहात्म्यम् । किं तत इत्यत एवंविधाभ्यामपि भगवानुपास्यो यतोऽतस्तस्य युक्तमृक्सामोत्तमत्वमिति भावेनोद्गीथाख्यभगवत्स्वरूपमाह – **अथेति** ।। अथशब्दः प्रकरणान्तरद्योतकः । य एष आदित्ये आदित्यस्थसरस्वतीवाय्वोरन्तर्हिरण्मयः । हिरुक् बाह्यविलक्षणं सुखं हिरण्यं स्यात्। मयडाधिक्यार्थे स्वरूपार्थे च। इतरविलक्षणपूर्णानन्दस्वरूपः। पूर्णौ हि हितौ निहितौ रश्च णश्चेति रणौ रत्यानन्दौ यस्मिन् स हिरण्मयो वा सुवर्णवर्णो वा, पुरुषो दृश्यते ज्ञानदृष्ट्येति शेषः। उक्तं च –

“ ........ स एव च हिरण्मयः।
हिरुक् सुखं हिरण्यं स्याद् बाह्यानन्दात् पृथग् यतः ।।
आधिक्यार्थे मयड् यस्मादधिकानन्दरूपक इति।
रत्यानन्दौ पूर्णनित्यौ हि तौ तेन हिरण्मयः।
स्वर्णवर्णतया वाऽपि वासुदेवो हिरण्मयः ।।” इति च । न केवलं भगवत्स्वरूपस्यैव हिरण्मयत्वम् । किन्तु तदवयवानामपीत्याह – **हिरण्मश्मश्रुरिति** ।। आप्रणखात् प्रणखमारभ्य सर्व एवावयवः

सुवर्णः सुवर्णवर्णः सुखपूर्णो वेत्यर्थः ॥ ६ ॥

"सर्व एव सुवर्णः" इत्युक्त्या चक्षुषोऽपि सुवर्णवर्णत्वप्राप्तेस्तत्र विशेषमाह – **तस्येति** ॥ तस्याऽदित्यान्तर्गतसरस्वतीवायुगतस्य पुरुषस्य यथा कप्यासं कं पिबन्नालसम्बन्धी अम्लानमिति यावत् । पुण्डरीकं रक्तपद्मम् एवमक्षिणी वर्तेते । तस्य रहस्यं नामाऽह – **तस्येति** ॥ तस्य पुरुषस्योदिति नाम कुतः ? स एष आदित्यस्थसरस्वतीवायुगतः पुरुषः सर्वेभ्यः पाप्मभ्य उदित उद्गतो यतः । एवंविदः फलमाह – **उदेतीति** ॥ योऽधिकारी एवं पापोद्गतत्वप्रवृत्तिनिमित्तकोन्नामतया भगवन्तं वेद स सर्वेभ्यः पाप्मभ्यः उदेति उद्गतो भवति । ह वै प्रसिद्धमित्यर्थः ॥ ७ ॥

तस्याऽदित्यस्थसरस्वतीवायुगतस्य भगवत ऋक् च साम च परस्परसमुच्चये चशब्दौ । ऋगाभिमानिनी सरस्वती सामाभिमानी वायुश्च गेष्णौ गायकौ । ऋग्वेदसामवेदाभ्यामिति शेषः । एतस्यैव भगवतः प्रसिद्धमुद्गीथनामाप्यत एव जातमित्याह – **तस्मादिति** ॥ यस्मात् तस्योदिति नाम यस्माच्च तस्यर्क् साम च गेष्णौ तस्मात् स उद्गीथः । उच्चासौ गीयते चेति व्युत्पत्तेरित्यर्थः । न केवलमृक्सामनामकसरस्वतीवायू एव तस्य गेष्णौ किन्त्वित्यत आह – **तस्मादिति** ॥ यस्मादेवमत्युत्तमौ सरस्वतीवायू तस्य गायकौ तस्मादेव यः कोऽप्युद्गाता तस्यैव भगवतो गाता गायको भवेत् । तस्यैव भगवतः सामर्थ्यमाह – **स एष इति** ॥ स एष आदित्यस्थसरस्वतीवायुगत उद्गीथाख्यो भगवान् ये चामुष्मा-दन्तरिक्षलोकात् पराञ्चो लोकाः स्वर्गादयस्तेषां अधिपतिर्भवतीत्यर्थः । न केवलममुष्य लोकस्यैव किन्तु तेषामपीति चशब्दः । देवकामानां देवकाम्यानां देवकामितदानार्थं चेष्टे समर्थो भवतीत्यधि-दैवतमृक्सामोद्गीथस्वरूपमुक्तम् ॥ ८ ॥

॥ इति षष्ठः खण्डः ॥

## उपनिषत्- (खण्डः - ७)

*देहगतऋक्साम्नोरुपासना*

अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदस्यामृच्यध्यूढ९ँ साम तस्माद् ऋच्यध्यूढ९ँ साम गीयते वागेव सा प्राणोऽमस्तत् साम ॥ १ ॥

चक्षुरेवगात्मा साम तदेतदेतस्यामृच्यध्यूढ९ँ साम तस्माद् ऋच्यध्यूढ९ँ साम गीयते चक्षुरेव सा प्राणो[१]ऽमस्तत् साम ॥ २ ॥

श्रोत्रमेवर्ङ् मनः साम तदेतदेतस्यामृच्यध्यूढ९ँ साम तस्माद् ऋच्यध्यूढ९ँ साम गीयते श्रोत्रमेव सा मनोऽमस्तत् साम ॥ ३ ॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढ९ँ साम तस्माद् ऋच्यध्यूढ९ँ साम गीयतेऽथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् साम ॥ ४ ॥

*अक्षिस्थोद्गीथमहिमा*

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत् साम तदुक्थं तद्यजुस्तद् ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति

---

१. '' साऽत्माऽमः'' इति हृ, प्रभ पाठः ।

तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात् ते धनसनयः ॥ ६ ॥

अथ यदेतदेवं[१] विद्वान् साम गायत्युभौ साम गायति[२] सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्ताꣳश्चाऽऽप्नोति देवकामाꣳश्च ॥ ७ ॥

अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाऽऽप्नोति मनुष्यकामाꣳश्च तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥ कं ते काममागायानीत्येष ह्येष कामगानस्येष्टे य एवं विद्वान् साम गायति साम गायति ॥ ९ ॥ सप्तमः खण्डः ७ ॥

भाष्यम्

आत्मा जीवः ।

'सरस्वती हि चक्षुःस्था जीवस्थो वायुरीरितः[३] ।
विदित्वा तावुभौ देवौ तद्वं ध्यायेद्धरिं सदा ॥' इति मानसे ।

'दृश्यते ज्ञानदृष्ट्या यः सूर्ये चक्षुषि चैकराट् ।
ऋङ्नामा ज्ञानरूपत्वात् साम नित्यसमत्वतः ॥
उक्थमुत्थापकत्वाच्च यजुर्याज्यस्वरूपतः ।
ब्रह्मासौ [४]पूर्णरूपत्वादेवं सर्वाभिधानवान् ॥' इति च ।

'यथा बदरिकानाथो द्वारकानाथ इत्यपि ।
अर्वाङ्नाथः पराङ्नाथ इति तद्वदिहोच्यते ।

---

१. 'य एतदेवं' इति ह्, प्रभ पाठः । २. 'उभौ स गायति' इति क्वचित् पाठः ।
३. 'वायुरीश्वरः' इति ह् पाठः ४. 'गुणपूर्णत्वात्' इति प्रचलितपाठः ।

## उपनिषत्- (खण्डः - ७)

*देहगतऋक्साम्नोरुपासना*

अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदस्यामृच्यध्यूढ१ँ साम तस्माद् ऋच्यद्यूढ१ँ साम गीयते वागेव सा प्राणोऽमस्तत् साम ॥ १ ॥

चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढ१ँ साम तस्माद् ऋच्यध्यूढ१ँ साम गीयते चक्षुरेव सा प्राणो[१]ऽमस्तत् साम ॥ २ ॥

श्रोत्रमेवर्ङ् मनः साम तदेतदेतस्यामृच्यध्यूढ१ँ साम तस्माद् ऋच्यध्यूढ१ँ साम गीयते श्रोत्रमेव सा मनोऽमस्तत् साम ॥ ३ ॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढ१ँ साम तस्माद् ऋच्यध्यूढ१ँ साम गीयतेऽथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् साम ॥ ४ ॥

*अक्षिस्थोद्गीथमहिमा*

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत् साम तदुक्थं तद्यजुस्तद् ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति

---

१. '' साऽत्माऽमः'' इति ह., प्रभ पाठः ।

तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात् ते धनसनयः ॥ ६ ॥

अथ यदेतदेवं[१] विद्वान् साम गायत्युभौ साम गायति[२] सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्ताꣳश्चाऽप्नोति देवकामाꣳश्च ॥ ७ ॥
अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाऽप्नोति मनुष्यकामाꣳश्च तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥ कं ते काममागायानीत्येष ह्येष कामगानस्येष्टे य एवं विद्वान् साम गायति साम गायति ॥ ९ ॥ सप्तमः खण्डः ७ ॥

भाष्यम्

आत्मा जीवः ।

'सरस्वती हि चक्षुःस्था जीवस्थो वायुरीरितः[३] ।
विदित्वा तावुभौ देवौ तद्गं ध्यायेद्धरिं सदा ॥' इति मानसे ।

'दृश्यते ज्ञानदृष्ट्या यः सूर्ये चक्षुषि चैकराट् ।
ऋङ्नामा ज्ञानरूपत्वात् साम नित्यसमत्वतः ॥
उक्थमुत्थापकत्वाच्च यजुर्याज्यस्वरूपतः ।
ब्रह्मासौ [४]पूर्णरूपत्वादेवं सर्वाभिधानवान् ॥' इति च ।

'यथा बदरिकानाथो द्वारकानाथ इत्यपि ।
अर्वाङ्नाथः पराङ्नाथ इति तद्वदिहोच्यते ।

---

१. 'य एतदेवं' इति ह्, प्रभ पाठः । २. 'उभौ स गायति' इति क्वचित् पाठः ।
३. 'वायुरीश्वरः' इति ह् पाठः ४. 'गुणपूर्णत्वात्' इति प्रचलितपाठः ।

**सर्वनाथोऽपि भगवान् सन्निधानविशेषतः' इति च ॥७॥**

## पदार्थकौमुदी

### भाष्यार्थः

''चक्षुरेवर्गात्मा साम''इत्यत्राऽत्मशब्देन छायात्मोच्यत इति व्याख्याननिरासायाऽत्मशब्दार्थमाह– **आत्मेति** ॥ कुतोऽयमर्थः? परोक्त एवार्थः किं न स्यादित्यतः श्रुत्यार्थनिश्चायकं प्रमाणमाह – **सरस्वतीति** ॥

ननु ''य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते'' ''य एषोऽन्तरक्षिणि पुरुषो दृश्यते''इत्ययुक्तम् । ''न चक्षुषा पश्यति कश्चिदेनम्'' इत्यादिश्रुतिविरोधादित्यतस्तद् व्याचष्टे– **दृश्यत इति** ॥ ''सैवर्क् तत्साम तदुक्थं तद्यजुस्तद् ब्रह्म'' इति वाक्यमृगाद्यात्मकत्वप्रतीतिनिरासाय व्याचष्टे – **ऋङ्नामेति** ॥ एतेन जीवाख्यचाक्षुषपुरुषपरमित्येतदपि परास्तम् । किञ्च यदीदं प्रकरणं जीवपरं स्यात् तदा ''स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे'' इति पातालादिलोकाधिपत्यकथनमयुक्तं स्यात् । नच जीवस्यार्वाग्लोकाधिपत्यमस्ति । सर्वेषां तदनुपलम्भेऽपि कस्यचित् स्यादिति चेन्न । सर्वस्यापि भगवद्भिक्षुकत्वेन कस्याप्यसम्भवात् । उक्तं चैतरेयभाष्ये – ''नहि कश्चिद् भिक्षुकः पातालाद्यधिपतिरित्यत्र किञ्चिन्मानम्'' इति ।

ननु चाक्षुषपुरुषस्येश्वरत्वेऽपि नैतदुपपन्नम् । तस्य सर्वलोकनाथत्वेन विशिष्यार्वाग्लोकनाथत्वकथनस्याधिदैवप्रकरणे ''स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे'' इति पराग्लोकनाथत्वकथनस्य चानुपपत्तेरित्यत आह – **यथेति** ॥

## ततश्चायं खण्डार्थः

अधिदैवतमृक्सामादिस्वरूपकथनानन्तरम् अध्यात्ममृक्सामस्वरूप-कथनपूर्वकमुद्गीथस्वरूपमुच्यत इति शेषः । ''वागेवर्क्''इत्यादेः पूर्व-वदेवाक्षरार्थः । वागेव वागिन्द्रियगतैव । प्राणः श्वासरूपप्राणस्थः ।। १ ।।

चक्षुश्चक्षुस्था । आत्मा जीवस्थः ।। २ ।।

श्रोत्रं श्रोत्रस्था । मनो मनस्थः ।। ३ ।।

यदेतदक्ष्णश्चक्षुषः शुक्लं भास्तेजः सैव तत्स्थैव ऋक्, अथ यन्नीलं परः परं कृष्णं तत्स्थं साम ।। ४ ।।

एवमध्यात्ममृक्सामनामकसरस्वतीवाय्वोर्माहात्म्यमुक्त्वेदानीं तदन्तर्गतोद्गीथाख्यभगवत्स्वरूपमाह – **अथेति** ।। य एष पुरुष उद्गीथाख्यो भगवानक्षण्यक्षिस्थ[१]सरस्वतीवाय्वोरन्तर्दृश्यते । ज्ञानदृष्ट्येति शेषः । तस्य माहात्म्यमाह – **सैवेति** ।। सैव योऽन्तरक्षणि पुरुषो दृश्यते सा ऋक् ऋङ्नामा ज्ञानरूपत्वात् । ऋक्शब्दस्य स्त्रीलिङ्गत्वात् तदपेक्षया सेत्यु-क्तम् । एवमुत्तरत्रापि । तत् साम सामनामकं नित्यसमत्वात् । तदुक्थम् उक्थनामकमुत्थापकत्वात् । तद् यजुर्यजुनामकं याज्यस्वरूपत्वात् । तद् ब्रह्म ब्रह्मनामकं पूर्णरूपत्वात् । इदमधिदैवप्रकरणेऽपि ग्राह्यम् । चक्षुस्थस्य भगवतः कीदृशं रूपादिकमित्यतो यादृशं सूर्यस्थस्य तादृश-मेवास्यापीत्याह – **तस्येति** ।। तस्यैतस्याक्षिस्थसरस्वतीवायुगतस्य भगवतस्तदेव रूपम् । किम् ? यदमुष्य सूर्यस्थसरस्वतीवायुगतस्य रूपं हिरण्मयत्वादिकं, यौ ऋक्सामनामकौ सरस्वतीवायू अमुष्य गेष्णौ, तावेवास्य गेष्णौ यदमुष्य नामोदिति उद्गीथ इति च तदेवास्य नाम ।। ५ ।।

---

१. एतेन 'य एषोन्तरक्षिणि पुरुषो दृश्यते' इत्यत्र 'अक्षणि' इति वेदेशीयाभिमतः पाठः इति ज्ञायते ।

स एषोऽक्षिस्थो भगवान् ये चास्मादर्वाञ्चो लोकाः पातालाद्यास्तेषां चेष्टे । तेषामप्यधिपतिर्भवति । न केवलमस्य लोकस्येति चशब्दार्थः । मनुष्यकामानां चेष्टे मनुष्यकामितदानाय समर्थो भवति । इतिशब्दो भगवत्स्वरूपनिरूपणसमाप्तिद्योतकः । ''मनुष्यकामानां चेष्टे'' इत्युक्तमनुभवारूढं कर्तुमाह – **तद्य इति** ॥ तत् तस्माद् भगवतो मनुष्यकामदानसमर्थत्वाद् य इमे प्रसिद्धा गायका वीणायां गायन्ति राजादिपुरतस्ते एतमक्षिस्थं भगवन्तमेव गायन्ति । तस्माद् भगवद्गायकत्वादेव भगवत एव ते गायका धनसनयो धनप्राप्तिमन्तः । राजादेर्धनदाने स्वातन्त्र्याभावादित्यर्थः ॥ ६ ॥

उक्तरीत्या ज्ञात्वा सामगायकस्य सामर्थ्यमाह – **अथेति** ॥ य उद्गाता एतद् अधिदैवमादित्यस्थसरस्वतीवायुगतमध्यात्मं चक्षुस्थसरस्वतीवायुगतं भगवत्स्वरूपं एवमुक्तप्रकारेण विद्वान् साम गायति स उभावादित्यचक्षुस्थितौ भगवन्तावेव गायति । किं स्वसामर्थ्येन ? नेत्याह – **सोऽमुनैवेति** ॥ स उद्गाता गायतीति यत् तदमुनैव भगवत्प्रेरणयैवेत्यर्थः । इष्टफलप्रापकत्वलक्षणं सामर्थ्यान्तरमाह – **स इति** ॥ स एष भगवदुद्गाता ये चामुष्मादन्तरिक्षलोकात् पराञ्चो लोकाः स्वर्गादयो वैकुण्ठादयश्च तांश्चाऽप्नोति उद्गानेन योग्यान् प्रापयतीत्यर्थः । न केवलममुं लोकमिति चशब्दः । देवकामांश्च देवकाम्यान् स्वर्ग्यांश्चाऽप्नोति प्रापयतीत्यर्थः । पराग्लोकादिप्रापकत्वं न स्वसामर्थ्यादिवेति वक्तुं ''सोऽमुनैव'' इत्येतदत्रापि योज्यम् । स उद्गाता पराग्लोकादि प्रापयतीति यत् तदमुनाऽऽदित्यगतभगवत्प्रसादेनेत्यर्थः ॥ ७ ॥

अथानेनैव चक्षुःस्थभगवत्प्रसादेनैव ये चास्मादर्वाञ्चो लोकास्तांश्चाऽप्नोति उद्गानेन प्रापयति । न केवलमिमं लोकमिति चशब्दः । मनुष्यकामांश्च नृलोकगान् मनुष्यकामां(म्यां)श्च प्रापयतीत्यर्थः ।

अत्रायं विवेकः । भगवदुद्गाता हि मुख्यो वायुरमुख्यस्त्वाधुनिको मनुष्यः । तत्र वायुविवक्षाया परागर्वाग्लोकप्रापकत्वमुच्यते । मनुष्यविवक्षया स्वर्ग्यनृलोकगकामप्रापकत्वमिति । तस्मादेवं-विदुद्गातुरतिसमर्थत्वाद् एवंविदुद्गाता यजमानं प्रति ब्रूयात् । किमिति ? ते तव कं काममुद्दिश्याऽऽगायानि उद्गानं कुर्यामिति । नैतद्वचनमात्रम् । य एवंविद्वान् साम गायति एष एव हि यजमानकामगानस्येष्टे उद्गानेन यजमानेष्टप्रदानसमर्थ इत्यर्थः । द्विरुक्तिः पूर्ववत् ॥ ८-९ ॥

॥ इति सप्तमः खण्डः ॥

## उपनिषत् (खण्डः- ८)

*उद्गीथनामकभगवद्विषये कथा*

**त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो [१]जैबिलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥ १ ॥**

**तथेति ते ह समुपविविशुः स ह प्रवाहणो जैबिलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच का साम्नो गतिरिति ॥ २ ॥**

*शिलककृतप्रश्नानां दाल्भ्याभिहितोत्तराणि*

**स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य**

१. 'जैबलिः' इति ह पाठः ।

का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाचापां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति ॥ ३ ॥

न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकं सामाभिसंस्थापयामः स्वर्गसꣳस्तावं हि सामेति तं ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यं उवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ४ ॥

*दाल्भ्यकृतप्रश्नानां शिलकाभिहितोत्तराणि*

हन्ताहमेतद् भगवतो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामः प्रतिष्ठासंस्तावं हि सामेति ।

*प्रवाहणस्याऽऽशयः*

तं ह प्रवाहणो जैबिलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद् भगवतो वेदानीति विद्धीति होवाच ॥ ५ ॥ अष्टमः खण्डः ॥

भाष्यम्

अग्निः सामाभिमानी स्याद् वरुणस्तु स्वरात्मकः ।

प्राणावराभिमानी तु सूर्य एव प्रकीर्तितः ॥

अन्नाभिमानी दक्षश्च शक्रस्त्वबभिमानवान् ।

[१]व्यात्मकश्च शिवः प्रोक्तः क्रमेणैवोत्तरोत्तराः ।

क्रमेण मोक्षे प्राप्याश्च पूर्वेषामुत्तरोत्तराः ॥' इति निवृत्ते ।

अग्नेर्वागात्मकत्वात् । [२]उदकात्मकत्वात् स्वरस्य ।

'आदित्य एव प्राणोऽन्नं वै प्रजापतिः ॥' इति श्रुतेः ।

'आप एवेन्द्रो द्यौर्वाव रुद्रः' इत्यादेश्च ।

*कथायाः उद्देशः*

'विशेषज्ञानसम्प्राप्त्यै जानन्तोऽपि परं हरिम् ।

ब्रूयुर्देवाश्च ऋषयस्तदन्यस्य परात्मताम् ॥' इति ब्रह्मतर्के ।

[३]स्वर्गाभिमानिरुद्रं प्रति सामाभिसंस्थापयामः । तत्स्तावकं हि साम ।मूर्धा ते विपतेदिति यः कश्चिद् ब्रूयाच्चेद् विपतिष्यति ।

'ब्रह्मैव हि पृथिव्यात्मा .......... ।

## पदार्थकौमुदी

### भाष्यार्थः

उद्गीथख्यो भगवान् सर्वोत्तम इत्युक्तम् । तन्मीमांसारूपाख्यायिकया समर्थयते – **त्रय इत्यादिखण्डद्वयेन** ॥ अत्र "का साम्नो गतिः" इत्यादिना सामस्वरप्राणान्नाब्द्युलोकाः क्रमेणोत्तरोत्तराः कथिताः ।

---

१. 'द्युवात्मकश्च'इति ह्र पाठः । २. 'स्वरस्योदकात्मकत्वात्' इति प्रचलित-पाठान्तरम् । ३. 'स्वर्गाभिमानिनं रुद्रं' इति प्रचलितपाठान्तरम् ।

ते प्रसिद्धा एवेति प्रतीतिनिरासाय प्रमाणेनैव तत्स्वरूपमाह – **अग्नि-रिति** ॥ उच्छ्वासनिश्वासरूपप्राणावराभिमानी । मुख्यप्राणव्यावृत्त्यर्थ-मवरेत्युक्तम् । प्रसिद्धगमनार्थत्वप्रतीतिनिरासाय गतिशब्दार्थमाह – **क्रमेण मोक्ष इति** ॥ ''अग्निः सामाभिमानी'' इत्यत्र युक्तिमप्याह – **अग्नेरिति** ॥ अग्नेर्वागिन्द्रियाभिमानित्वात् साम्नश्च वागधीनाभि-व्यक्तित्वादग्निः सामाभिमानीत्यर्थः । अग्नेर्वेदवागभिमानित्वात् साम्नश्च तद्विशेषत्वात् तस्याप्यभिमानीति वाऽर्थः । ''वरुणस्तु स्वरात्मकः'' इत्यत्रापि युक्तिमाह – **स्वरस्येति** ॥ स्वरस्य वर्णव्यञ्जकध्वने-रुदकात्मकत्वात् ताल्वादिस्थोदकजन्यत्वाद् वरुणस्य चोदकाभि-मानित्वाद् वरुणः स्वरात्मक इत्यर्थः । ''प्राणः सूर्योऽन्नं दक्षः'' इत्यत्र श्रुतिमप्याह – **आदित्य एवेति** ॥ प्रजापतिर्दक्षः । ''शक्रस्त्व-वभिमानवान्'' ''द्व्यात्मकश्च शिवः'' इत्यत्रापि श्रुतिमाह – **आप एवेति** ॥

ननु ''न दैवं केशवात् परम्''इति लोके पामरोऽपि जानाति । अतः कथं ''न स्वर्गं लोकमतिनयेत्'' इति ''न प्रतिष्ठां लोकमतिनयेत्'' इति च रुद्रब्रह्मणोरेव सर्वोत्तमत्वं दाल्भ्यशिलकाभ्यामुक्तमित्यत आह – **विशेषेति** ॥ ''स्वर्गं वयं लोकं सामाभिसंस्थापयामः'' इत्यत्र स्वर्ग-शब्दस्य प्रसिद्धस्वर्गपरत्वमिन्द्रपरत्वं वा । साम्नः स्वर्गाभेदं च निराकर्तुं तद् व्याचष्टे– **स्वर्गेति** ॥ तदुपपादकं ''स्वर्गसंस्तावं हि साम''इति वाक्यं स्वर्गलोकस्य सामवेदत्वमुच्यत इति प्रतीतिं निवारयन् व्याचष्टे – **तत्स्तावकमिति** ॥ हि यस्मात् साम सामवेदस्तस्य स्वर्गलोकाभि-मानिरुद्रस्य स्तावकं तस्मात् तं प्रत्यभिसंस्थापयाम इत्यर्थः । ननु ''स्वर्गो वै लोकः सामवेदः'' इति श्रुतेः स्वर्गलोकस्य सामवेदाभेद एव श्रुत्यर्थः किं

न स्यादिति चेत् । न । बाधितार्थत्वप्रसङ्गेन तस्या अपि स्वर्गाभिमानी रुद्रः सामवेदप्रतिपाद्य इत्यर्थोपपत्तेः । ''यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेत् इति'' इति वाक्ये, यस्तु ते मूर्धा विपतिष्यतीति ब्रूयात् तर्हि विपतेदिति योजना न युक्ता । विपतेदित्यस्यैव विधिप्रत्ययान्तस्य शापरूपत्वेन विपतिष्यतीत्यस्य शापरूपत्वा-सम्भवादिति भावेनान्वयमुखेन तद्योजयति-- **मूर्धा त इति** ॥

किञ्च, यदि स्वर्गलोकशब्दस्य प्रसिद्ध एवार्थः स्यात् तदा ''अमुष्य लोकस्य का गतिरित्ययं लोक इति होवाच'' इति पृथिव्याः स्वर्गा-श्रयत्वोक्तिरनुपपन्ना स्यात् । नच ''यागो होमादिभिरमुं लोकं पुष्यति । इतः प्रदानं हि देवा उपजीवन्ति''इति श्रुतेः प्रत्यक्षं हि सर्वभूतानां धरणी प्रतिष्ठेत्यतः स्वर्गलोकस्याप्ययं लोको गतिरेवेति वाच्यम् । अयं लोक इत्युक्तस्य तत्स्थयागलक्षकत्वापातात् । धरण्याः सर्वभूताश्रयत्वप्रतीता-वपि स्वर्गलोकाश्रयत्वाप्रतीतेश्च । नच पृथिव्या अधस्तनत्वात् स्वर्गस्योपरितनत्वादाश्रयाश्रयिभावोक्तिरुपपन्नेति वाच्यम् । तथा सति ''अस्य लोकस्य का गतिरित्याकाश इति होवाच'' इत्यस्यानुपपत्तेः । नह्यूर्ध्वलोके अधस्तनलोक आश्रितः । ननु भवत्पक्षेऽपि कथमुपपत्तिः ? नहि स्वर्गाभिमानिरुद्रात् पृथिवीलोकस्य तदभिमानिधराया वोत्तमत्वम् । नवा आकाशस्य तदभिमानिगणेशस्य वा रुद्रोत्तमत्वमित्यतः प्रमाणेनैव पृथिव्याकाशशब्दार्थमाह -- **ब्रह्मैवेति ॥ अष्टमः खण्डः ॥**

## ततश्चायं खण्डार्थः

त्रय उद्गीथे उद्गीथाख्यभगवद्विषये कुशला बभूवुर्ह । के ते ? शिलको नामतः शलावत्यां भवः शालावत्यः । चिकितायनस्यापत्यं चैकितायनः ।

दाल्भ्यो दल्भगोत्रापत्यं दाल्भ्यो, नामत इति वा । प्रवाहणो नामतः । जिबिलस्यापत्यं जैबिलिरिति त्रय इति सम्बन्धः । ते त्रयोऽन्योन्यमूचुर्ह । किमिति ? वयमुद्गीथविषये कुशला वै निपुणाः स्मः । अतो हन्त यद्यनुमतिर्भवतां तर्हि उद्गीथे कथां वीतरागकथारूपवादकथां वदाम इति ॥ १ ॥

तथाऽस्त्वित्युक्त्वा ते ह समुपविविशुरुपविष्टवन्तः । तेषां मध्ये स प्रवाहणो जैबिलिः शिलकचैकितायनौ प्रति उवाच ह । किमिति ? भगवन्तौ पूजार्हावग्रे वदताम् । अहं ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति । अनेनास्य क्षत्रियत्वमवगम्यते । एवमुक्तः स शिलकः शालावत्य-श्चैकितायनं दाल्भ्यमुवाच । हन्त यद्यनुमतिस्तव तर्हि त्वा त्वामहं पृच्छामीति[१] । एवमुक्तो दाल्भ्यः पृच्छेति होवाच ॥ २ ॥

प्रश्नोत्तरक्रमं दर्शयति – **का साम्न इति** ॥ साम्नः शुभाशुभानां दाहादौ साम्यात् सामनामकस्य सामाभिमानिनोऽग्नेः का गतिः ? किं मोक्षे गम्यमिति पृष्टे स्वरः स्वो विष्णू रमत्यस्मिन्निति स्वरनामकः स्वराभिमानी वरुण इति होवाच । एवमुत्तरत्रापि । प्राणः सूर्यः, उदयेन जगत्प्रणेतृत्वात् प्राणावराभिमानित्वाच्च । अन्नं दक्षः । रुद्रेणाद्यत्वादन्नाभिमानित्वाच्च । आप इन्द्रः । आपालनादवभिमानित्वाच्च ।

असौ लोको रुद्रः । असौ मुख्यप्राणे स्थितत्वात् प्रकाशरूपत्वाद् द्युलोकाभिमानित्वाच्च । अमुष्य लोकस्य रुद्रस्य का गतिरिति पृष्टे स्वर्गं स्वनामकविष्णुरते वायौ मुक्तौ गच्छतीति स्वर्गनामकं लोकं प्रकाशरूपं स्वर्गलोकाभिमानिनं रुद्रं नातिनयेद् अतिक्रम्यान्यमुत्तमत्वेन न जानीयादिति होवाच । हरेः सर्वोत्तमत्वं जानन्नपि ऋषिर्विशेषज्ञानसम्प्राप्त्यै

१. 'पृच्छामि' इत्येतद् उपनिषत्स्थपृच्छानीत्यस्यार्थकथनं वा, अथवाऽत्र पृच्छानीति पाठेन भाव्यमिति वाऽवधेयम् ।

रुद्रस्य सर्वोत्तमत्वमाह । कस्मान्न स्वर्गं लोकमतिनयेदित्यत आह– **स्वर्गमिति** ॥ वयं स्वर्गलोकं स्वर्गाभिमानिनं रुद्रं प्रति सामाभिसंस्थापयामः सामरुद्र प्रतिपादकमिति जानीम इति यावत् । तदपि कुतः ? हि यस्मात् साम स्वर्गसंस्तावं स्वर्गाभिमानिरुद्रस्तावकमिति तस्मात् स्वर्गं लोकं प्रति सामाभिसंस्थापयाम इति सम्बन्धः ।

एवमुक्तः शिलकः शालावत्यस्तं दाल्भ्यं प्रत्युवाच ह । हे दाल्भ्य ! ते तव साम सामप्रतिपाद्यतया ज्ञातं वस्तु अप्रतिष्ठितं वै किल अपर्यवसितमेव खलु । सर्वोत्तमं न भवतीति यावत् । अतो यस्तु यः कश्चिदेतर्हि इदानीं ते तव ''न स्वर्गं लोकमनतिनयेत्'' इति वदतो मूर्धा ते विपतेदिति ब्रूयाच्चेत् तर्हि ते मूर्धा विपतिष्यति । विस्पष्टं पतिष्यति । अहं तु त्वत्स्नेहात् तथा न वदिष्यामीति भावः। इत्युवाचेति द्वितीयेतिशब्दसमन्वयः ॥ ३-४ ॥

एवमुक्तो दाल्भ्यो यदि मदीयं सामाप्रतिष्ठितं हन्त तर्हि अहमेतत्साम भगवतः पूजार्हाद् वेदानीत्युवाच । एवमुक्तः शिलको विद्धीति होवाच । दाल्भ्यः पृच्छति– **अमुष्येति** ॥ अमुष्य लोकस्य रुद्रस्य का गतिरिति पृष्टे अयं लोकः सर्वदेवान्तरत्वादयमिति नामकः प्रकाशरूपत्वाल्लोकनामकः पृथिव्यभिमानी ब्रह्मैवेति होवाच शिलकः । अस्य लोकस्य पृथिव्याभिमानिनो ब्रह्मणः का गतिरिति दाल्भ्येन पृष्टे न प्रतिष्ठां लोकं सर्वाधारपृथिव्यभिमानिनं ब्रह्माणमतिक्रम्यान्यमुत्तमत्वेन न जानीयादिति होवाच शिलकः शालावत्यः । प्रतिष्ठां वयमित्यादि पूर्ववत् ।

तं शिलकं शालावत्यं प्रवाहणो जैबिलिरुवाच । हे शालावत्य ते साम त्वया सामप्रतिपाद्यत्वेन ज्ञातं वस्तु अन्तवद् वै उत्तमवस्त्वन्तरोपेतमेव खल्वित्यर्थः । यस्त्वेतर्हीत्यादि पूर्ववत् । वेदानीति शिलकेनोक्ते विद्धीति होवाच प्रवाहणः ॥ ५ ॥

॥ इति अष्टमखण्डः ॥

## उपनिषत् (खण्डः- ९)

*उद्गीथनामकभगवानेव सर्वोत्तमः*

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्तः ॥ १ ॥

*हरिसर्वोत्तमत्वज्ञानफलम्*

परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतमेवं[१] विद्वान् परोवरीयांसमुद्गीथमुपास्ते तं [२]हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति तथाऽमुष्मिँल्लोके लोक इति स य एतमेवं[३] विद्वानुपास्ते परोवरीय एवास्यास्मिँल्लोके जीवनं भविष्यति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥ २ ॥ नवमः खण्डः ९ ॥

### भाष्यम्

'............ विष्णुराकाशनामकः ।
आदीप्तत्वाद् वरीयांश्च परमो हरिरेव हि ॥' इति सत्तत्त्वे ।
'शुभाशुभानां दाहादौ साम्यात् सामाग्निरीरितः ।
स्वो विष्णुः सागरे रन्ता वरुणोऽतः स्वरः स्मृतः ॥

१. 'एतदेवम्' प्रभपाठः । २. 'हैनम्' इति प्रचलितपाठः । ३. 'एतदेवं' इति ह पाठः

उदयाज्जगत्प्रणेतृत्वात् सूर्यः प्राण उदाहृतः ।
अत्ता रुद्रस्तद्विरोधाद् दक्षः स्यादन्ननामकः ॥
स्वो विष्णुस्तद्रतिर्वायुस्तद्रो मुक्तौ सदाशिवः ।
अतः स्वर्गोऽसुसंस्थत्वादसाविति च कीर्तितः ॥
सर्वदेवान्तरत्वात् तु ब्रह्माऽयं समुदाहृतः ।
लोको ज्ञानस्वरूपत्वादेतेषां परमो हरिः ॥' इति ब्रह्मतर्के ।

आपालनादाप इन्द्रः । अधिकं वरीयान् परोवरीयान् । तत् परोवरीयोऽस्य रक्षकं भवति । यावत्तः द्वापरादिपर्यन्तम् ॥ ८ ॥ नवमः खण्डः ९ ॥

## पदार्थकौमुदी

### भाष्यार्थः

आकाशशब्दं विष्णौ निर्वक्ति – **आदीप्तत्वादिति** ॥ नन्वाकाशो भूताकाशमेव किं न स्यात् । आकाशशब्दस्य तत्र रूढत्वाद् विष्णौ तु यौगिकत्वात् । नहि रूढिपरित्यागेन योगाङ्गीकारो विना बाधकं युक्त इति चेत् । न । “ स एष परोवरीयानुद्गीथः स एषोऽनन्तः” इत्याकाशस्य परोवरीयस्त्वानन्तत्वाद्युक्तेः । तस्य विष्णावेव सम्भवादन्यत्रासम्भवादिति भावेनाऽह – **वरीयांश्चेति** ॥ “परमो वरीयान्” इत्यनेन परोवरीयश्शब्दार्थ उक्तः । चशब्दोऽनन्तत्वादिसमुच्चायकः । तथाच सूत्रम्– “**आकाशस्तल्लिङ्गात्**”(ब्र.सू. १-१-१२) इति । पूर्वमग्न्याद्याः सामाद्यभिमानित्वात् सामादिशब्दवाच्या इत्युक्तम् । इदानीं योगेनापि सामादिशब्दवाच्यास्त इत्याह – **शुभेति** ॥ दाहादावित्यन्तस्य योग्यतया लाभः । स्वो विष्णुः रमत्यस्मिन् सागर इति वरुणः स्वरः स्मृत इत्यर्थः ।

## उपनिषत् (खण्डः- ९)

*उद्गीथनामकभगवानेव सर्वोत्तमः*

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्तः ॥ १ ॥

*हरिसर्वोत्तमत्वज्ञानफलम्*

परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतमेवं[१] विद्वान् परोवरीयांसमुद्गीथमुपास्ते तं [२]हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति तथाऽमुष्मिँल्लोके लोक इति स य एतमेवं[३] विद्वानुपास्ते परोवरीय एवास्यास्मिँल्लोके जीवनं भविष्यति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥ २ ॥ नवमः खण्डः ९ ॥

### भाष्यम्

'............ विष्णुराकाशनामकः ।
आदीप्तत्वाद् वरीयांश्च परमो हरिरेव हि ॥' इति सत्तत्त्वे ।
'शुभाशुभानां दाहादौ साम्यात् सामाग्निरीरितः ।
स्वो विष्णुः सागरे रन्ता वरुणोऽतः स्वरः स्मृतः ॥

१. 'एतदेवम्' प्रभपाठः । २. 'हैनम्' इति प्रचलितपाठः । ३. 'एतदेवं' इति ह. पाठः

उदयाज्जगत्प्रणेतृत्वात् सूर्यः प्राण उदाहृतः ।
अत्ता रुद्रस्तद्विरोधाद् दक्षः स्यादन्ननामकः ॥
स्वो विष्णुस्तद्रतिर्वायुस्तद्रो मुक्तौ सदाशिवः ।
अतः स्वर्गोऽसुसंस्थत्वादसाविति च कीर्तितः ॥
सर्वदेवान्तरत्वात् तु ब्रह्माऽयं समुदाहृतः ।
लोको ज्ञानस्वरूपत्वादेतेषां परमो हरिः ॥' इति ब्रह्मतर्के ।

आपालनादाप इन्द्रः । अधिकं वरीयान् परोवरीयान् । तत् परोवरीयोऽस्य रक्षकं भवति । यावत्तः द्वापरादिपर्यन्तम् ॥ ८ ॥ नवमः खण्डः ९ ॥

## पदार्थकौमुदी

### भाष्यार्थः

आकाशशब्दं विष्णौ निर्वक्ति – **आदीप्तत्वादिति** ॥ नन्वाकाशो भूताकाशमेव किं न स्यात् । आकाशशब्दस्य तत्र रूढत्वाद् विष्णौ तु यौगिकत्वात् । नहि रूढिपरित्यागेन योगाङ्गीकारो विना बाधकं युक्त इति चेत् । न । " स एष परोवरीयानुद्गीथः स एषोऽनन्तः" इत्याकाशस्य परोवरीयस्त्वानन्तत्वाद्युक्तेः । तस्य विष्णावेव सम्भवादन्यत्रासम्भवादिति भावेनाऽह – **वरीयांश्चेति** ॥ "परमो वरीयान्" इत्यनेन परोवरीय-श्शब्दार्थ उक्तः । चशब्दोऽनन्तत्वादिसमुच्चायकः । तथाच सूत्रम्– "**आकाशस्तल्लिङ्गात्**"(ब्र.सू. १-१-१२) इति । पूर्वमग्न्याद्याः सामाद्यभिमानित्वात् सामादिशब्दवाच्या इत्युक्तम् । इदानीं योगेनापि सामादिशब्दवाच्यास्त इत्याह – **शुभेति** ॥ दाहादावित्यन्तस्य योग्यतया लाभः । स्वो विष्णुः रमत्यस्मिन् सागर इति वरुणः स्वरः स्मृत इत्यर्थः ।

उदयेन जगत्प्रवृत्तिहेतुत्वादित्यर्थः । दक्ष अद्यत इत्यन्ननामकः स्यात् । को दक्षोऽत्तेत्यत उक्तम् – **अत्ता रुद्र इति ॥** तथाऽपि दक्षस्य तदद्यत्वं कुत इत्यत उक्तम् – **तद्विरोधादिति ।** रुद्रविरोधादित्यर्थः ।

"स्वर्गं वयं लोकम्"इति "असौ लोकः" इति च रुद्रे स्वर्गासौलोकशब्दाः प्रयुक्ताः । तत्र स्वर्गशब्दं निर्वक्ति– **स्व इति ॥** यतः स्वतन्त्रत्वात् स्वे विष्णौ रमत इति स्वरिति वायुरुच्यते । यतश्च मुक्तौ सदाशिवस्तस्मिन् गतोऽन्तः सः स्वर्ग इत्युच्यत इत्यर्थः । असावित्य-स्यापेक्षितपूरणेनार्थमाह – **असुसंस्थत्वादिति ॥** "अयं लोकः" इति ब्रह्मणि प्रयुक्तस्यायमित्यस्यार्थमाह – **सर्वेति ॥** लोकशब्दं निर्वक्ति– **लोक इति ॥** रुद्रे प्रयुक्तलोकशब्दस्याप्ययमेवार्थः । "अस्य लोकस्य का गतिरित्याकाश इति होवाच" इत्यत्र ब्रह्मोत्तमत्वोक्तावपि सर्वोत्तमत्वं लब्धमेवेति भावेनाऽह – **एतेषामिति ॥** अकाशशब्दस्तु प्रागेव निरुक्तः । इन्द्रे प्रमाणेनाप्शब्दस्यानिरुक्तेः स्वयं निर्वक्ति – **आ पालनादिति ॥** आ समन्तादित्यर्थः ।

*परव्याख्यानिरासः*

वरीयसः परः परोवरीयानिति व्याख्यानमसत् । तथा सति परवरीया-नित्येव प्रयोगापातात् । एतेन परश्च वरीयांश्च परोवरीयानित्यप्यपास्तम् । परत्वस्य पृथग्विशेषणत्वे पुनरुक्त्यापाताच्चेति भावेन तत्तात्पर्यमाह – **अधिकमिति ॥** अक्षरार्थं तूत्तरत्र वक्ष्यति ।

ननु "परोवरीयो हास्य भवति" इति कथम् ? भगवतः सर्वान् प्रत्यविशिष्टत्वादित्यतस्तद् व्याचष्टे – **तत्परोवरीय इति ॥** पूर्वं "परोवरीयान्" इति पुल्लिङ्गान्तशब्दश्रवणादत्र नपुंसकलिङ्गान्तशब्द-

श्रवणादन्यदेवैतदिति शङ्कापरिहाराय ''तत्परोवरीय'' इत्युक्तम्। ''यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते'' इत्यत्र यावत्ते तव प्रजायामुद्गीथं वेदिष्यन्त इति व्याख्यानमसत् । प्रजाशब्दस्यैवाधिकारिप्रजामात्र-परत्वसम्भवे ते तवेति विशिष्योक्त्ययोगात् । अतो यावत्त इति तसिल्प्रत्ययान्तोऽयं शब्दः प्रमाणप्रमितयावत्कालपर्यन्तमित्यर्थमाह। तत्र कोऽसौ प्रमाणप्रमितः कालः ? इत्यत आह – **यावत्त इति** ।। **नवमः खण्डः** ।।

## ।। ततश्चायं खण्डार्थः ।।

अस्य लोकस्य पृथिव्यभिमानिब्रह्मणः का गतिरिति पृष्टे आकाशः आदीप्तत्वादाकाशनामको विष्णुरिति होवाच प्रवाहणः । कथमेतस्य पृथिव्यभिमानिब्रह्मगतित्वमित्यतस्तस्य माहात्म्यमाह – **सर्वाणीति** ।। सर्वाणीमानि प्रमाणप्रसिद्धानि भूतानि ब्रह्मरुद्रादीनि आकाशादेव समुत्पद्यन्ते । हवा इति अस्यार्थस्य वैदिकीं सुप्रसिद्धिमाह । आकाशं प्रत्यस्तमदर्शनं यन्ति। तत्रैव प्रलये मुक्तौ च लीनानि भवन्ति। कुतः ? हि यस्मादाकाश एवैभ्यो ब्रह्मरुद्रादिभूतेभ्यो ज्यायान् । तदपि कुतः ? आकाशः परायणमुत्तमाश्रयः । नैतस्मादप्युत्तमं वस्त्वाशङ्क्यमिति भावेनाऽऽह – **स इति** ।। स एष आकाशनामा भगवान् परोवरीयान् । अधिकं वरीयान् । उद्गीथ उच्चैर्गेयत्वात् । स एषोऽनन्तो देशतः कालतो गुणतश्च परिच्छेदशून्यत्वादनन्तनामकः।। १ ।।

उक्तरीत्या भगवदुपासकस्य फलमाह – **परोवरीय इति** ।। योऽधिकारी एतमाकाशनामकं परोवरीयांसमुद्गीथमेवमुक्तरीत्या ब्रह्म-गतित्वेन विद्वानुपास्ते। अस्योपासकस्य परोवरीयः परोवरीयोनामकं ब्रह्म रक्षकं भवति । स उपासकः परोवरीयसोऽधिकं वरीयसो लोकान्

उदयेन जगत्प्रवृत्तिहेतुत्वादित्यर्थः । दक्ष अद्यत इत्यन्ननामकः स्यात् । को दक्षोऽत्तेत्यत उक्तम् – **अत्ता रुद्र इति** ॥ तथाऽपि दक्षस्य तदद्यत्वं कुत इत्यत उक्तम् – **तद्विरोधादिति** । रुद्रविरोधादित्यर्थः ।

"स्वर्गं वयं लोकम्"इति "असौ लोकः" इति च रुद्रे स्वर्गासौलोकशब्दाः प्रयुक्ताः । तत्र स्वर्गशब्दं निर्वक्ति– **स्व इति** ॥ यतः स्वतन्त्रत्वात् स्वे विष्णौ रमत इति स्वरिति वायुरुच्यते । यतश्च मुक्तौ सदाशिवस्तस्मिन् गतोऽन्तः सः स्वर्ग इत्युच्यत इत्यर्थः । असावित्यस्यापेक्षितपूरणेनार्थमाह – **असुसंस्थत्वादिति** ॥ "अयं लोकः" इति ब्रह्मणि प्रयुक्तस्यायमित्यस्यार्थमाह – **सर्वेति** ॥ लोकशब्दं निर्वक्ति– **लोक इति** ॥ रुद्रे प्रयुक्तलोकशब्दस्याप्ययमेवार्थः । "अस्य लोकस्य का गतिरित्याकाश इति होवाच" इत्यत्र ब्रह्मोत्तमत्वोक्तावपि सर्वोत्तमत्वं लब्धमेवेति भावेनाऽह – **एतेषामिति** ॥ अकाशशब्दस्तु प्रागेव निरुक्तः । इन्द्रे प्रमाणेनाप्शब्दस्यानिरुक्तेः स्वयं निर्वक्ति – **आ पालनादिति** ॥ आ समन्तादित्यर्थः ।

*परव्याख्यानिरासः*

वरीयसः परः परोवरीयानिति व्याख्यानमसत् । तथा सति परवरीयानित्येव प्रयोगापातात् । एतेन परश्च वरीयांश्च परोवरीयानित्यप्यपास्तम् । परत्वस्य पृथग्विशेषणत्वे पुनरुक्त्यापाताच्चेति भावेन तत्तात्पर्यमाह – **अधिकमिति** ॥ अक्षरार्थं तूत्तरत्र वक्ष्यति ।

ननु "परोवरीयो हास्य भवति" इति कथम् ? भगवतः सर्वान् प्रत्यविशिष्टत्वादित्यतस्तद् व्याचष्टे – **तत्परोवरीय इति** ॥ पूर्वं "परोवरीयान्" इति पुल्लिङ्गान्तशब्दश्रवणादत्र नपुंसकलिङ्गान्तशब्द-

श्रवणादन्यदेवैतदिति शङ्कापरिहाराय ''तत्परोवरीय'' इत्युक्तम् । ''यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते'' इत्यत्र यावत्ते तव प्रजायामुद्गीथं वेदिष्यन्त इति व्याख्यानमसत् । प्रजाशब्दस्यैवाधिकारिप्रजामात्र-परत्वसम्भवे ते तवेति विशिष्योक्त्ययोगात् । अतो यावत्त इति तसिल्प्रत्ययान्तोऽयं शब्दः प्रमाणप्रमितयावत्कालपर्यन्तमित्यर्थमाह । तत्र कोऽसौ प्रमाणप्रमितः कालः ? इत्यत आह – **यावत्त इति** ।। **नवमः खण्डः** ।।

## ।। ततश्चायं खण्डार्थः ।।

अस्य लोकस्य पृथिव्यभिमानिब्रह्मणः का गतिरिति पृष्टे आकाशः आदीप्तत्वादाकाशनामको विष्णुरिति होवाच प्रवाहणः । कथमेतस्य पृथिव्यभिमानिब्रह्मगतित्वमित्यतस्तस्य माहात्म्यमाह – **सर्वाणीति** ।। सर्वाणीमानि प्रमाणप्रसिद्धानि भूतानि ब्रह्मरुद्रादीनि आकाशादेव समुत्पद्यन्ते । हवा इति अस्यार्थस्य वैदिकीं सुप्रसिद्धिमाह । आकाशं प्रत्यस्तमदर्शनं यन्ति । तत्रैव प्रलये मुक्तौ च लीनानि भवन्ति । कुतः ? हि यस्मादाकाश एवैभ्यो ब्रह्मरुद्रादिभूतेभ्यो ज्यायान् । तदपि कुतः ? आकाशः परायणमुत्तमाश्रयः । नैतस्मादप्युत्तमं वस्त्वाशङ्क्यमिति भावेनाऽह – **स इति** ।। स एष आकाशनामा भगवान् परोवरीयान् । अधिकं वरीयान् । उद्गीथ उच्चैर्गेयत्वात् । स एषोऽनन्तो देशतः कालतो गुणतश्च परिच्छेदशून्यत्वादनन्तनामकः ।। १ ।।

उक्तरीत्या भगवदुपासकस्य फलमाह – **परोवरीय इति** ।। योऽधिकारी एतमाकाशनामकं परोवरीयांसमुद्गीथमेवमुक्तरीत्या ब्रह्म-गतित्वेन विद्वानुपास्ते । अस्योपासकस्य परोवरीयः परोवरीयोनामकं ब्रह्म रक्षकं भवति । स उपासकः परोवरीयसोऽधिकं वरीयसो लोकान्

वैकुण्ठानन्तासनश्वेतद्वीपाख्यान् जयति प्राप्नोति ह ।

"परोवरीयो हास्य रक्षकं भवति" इत्युक्तं विवरितुं विश्वास-जननायाऽऽख्यायिकामाह – **तमिति** ॥ अतिधन्वा नामतः शुनकस्यापत्यं शौनकः तम् उद्गीथं भगवन्तम् उदरशाण्डिल्याय स्वशिष्यायोक्त्वोवाच । किमिति ? ये प्रजायामधिकारिजीवसमूहे एनमुद्गीथं त्रेतायां वेदिष्यन्ते एभ्य उद्गीथवेत्तृभ्यः परोवरीयो ब्रह्मास्मिँल्लोके यावत्तः प्रमाणेन यावत्कालपर्यन्तमुक्तं द्वापरादिपर्यन्तं तावज्जीवनं भविष्यति । न केवलमेतावत् तथाऽमुष्मिँल्लोके जीवनं भविष्यति । पुनर्लोक इत्युक्तिरादरार्था । इदानीं "परोवरीयो हास्य भवति" इत्युक्तं विवृणोति– **स इति** ॥ स प्रसिद्धो योऽधिकारी एतमेवं विद्वानुपास्तेऽस्योपासकस्य परोवरीय एवास्मिंल्लोके जीवनं भविष्यति । तथाऽमुष्मिँल्लोके जीवनं भविष्यतीति द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ २ ॥

**॥ इति नवमः खण्डः ॥**

## उपनिषत् (खण्डः - १० )

*उषस्तेर्वृत्तान्तः*

**मटचीहतेषु कुरुष्वाटक्या[१] सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे ॥ १ ॥**

**तꣳहोवाच नेतोऽन्ये विद्यन्ते यच्च [२]ये म इम उपनिहिता इत्येतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं**

१. 'आटिक्या' इति ह्.पाठः । २. 'ये म उपनिहिताः' ह्. पाठः ।

वै मे पीतꣳ स्यादिति होवाच न स्विदेतेऽप्युच्छिष्टा इति ॥ २ ॥ न वा अजीविष्यमिमान् अखादन्निति होवाच कामो म उदपानमिति स ह खादित्वाऽतिशेषान् जायाया आजहार साऽग्र एव सुभिक्षा बभूव तान् प्रतिगृह्य निदधौ स ह प्रातः सञ्जिहान उवाच यद् बतान्नस्य लभेमहि लभेमहि धनमात्रां राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ३ ॥

तं जायोवाच हन्त पत इम एव कुल्माषा इति तान् खादित्वाऽमुं यज्ञं विततमेयाय तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोप विवेश स ह प्रस्तोतारमुवाच प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीत्येवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीत्येवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ ४ ॥ दशमः खण्डः १०॥

भाष्यम्

'उपला इष्टकाः स्थूला मटचीति प्रकीर्तिताः' इति शब्दनिर्णये ।
'आसन्नयौवना योषिद् [१]आटकीत्यभिधीयते' इति च ।
'प्रद्रवन्नन्नपानार्थं प्रद्राणक इतीरितः' इति च ॥१०॥

---

१. 'आटिकी' ह. पाठः ।

## पदार्थकौमुदी

### भाष्यार्थः

सामैकदेशप्रस्तावप्रतिहारोद्गीथनिष्ठां भगवदुपास्तिं वक्तुं तदर्थां काञ्चनाऽख्यायिकामाह – **मटचीत्यादिखण्डद्वयेन** ॥ तत्र मटच्यशनाया इत्यन्यथाप्रतीतिनिरासाय प्रमाणेन मटचीशब्दार्थमाह – **उपला इति** ॥ वर्षोपला इत्यर्थः । आटक्येत्येतद् दुर्गमार्थत्वाद् व्याचष्टे – **आसन्नेति** ॥ दुर्गमार्थत्वात् प्रद्राणक इत्यस्यार्थमाह – **प्रद्रवन्निति** ॥ इति दशमः खण्डः ॥

### ॥ ततश्चायं खण्डार्थः ॥

उषस्तिर्नामतश्चक्रमयनं यस्यासौ चक्रायणः प्रायो रथचक्रसमीपे तिष्ठति । चक्रायणस्यापत्यं चाक्रायणः । कुरुदेशे वसन् कुरुषु मटचीहतेषु वर्षोपलैर्नाशितेषु सत्सु अत एवातिवृष्ट्या दुर्भिक्षे पतिते आटक्या आसन्नयौवनया जायया सहेभ्यग्रामे धनिकग्रामे इभाधिपतिग्रामे वा प्रद्राणकोऽन्नपानार्थं प्रद्रवन्नुवास । स चाक्रायण अन्नार्थी अटन् कुल्माषान् कुत्सितमाषान् खादन्तमिभ्यं यदृच्छयोपलभ्य बिभिक्षे याचितवान् ॥ १ ॥

स इभ्यस्तं प्रत्युवाच । चशब्दोऽवधारणे । ये मे ममोपनिहिताः समीपस्थिताः कुल्माषा इम एव विद्यन्ते । यद् यस्मात् तस्मात् कुल्माषा न सन्ति दातुम् । इमे च न देयाः उच्छिष्टत्वादिति भावः । एतेषामुच्छिष्टानामेव कुल्माषाणां मध्ये कांश्चन मे देहीति होवाच चाक्रायणः । एवमुक्त इभ्यस्तान् कुल्माषानस्मै चाक्रायणाय प्रददौ । हन्त तर्हि अनुपानमुच्छिष्टजलपानं च कुर्वित्युवाच । अनुपानं करभस्त्रिकास्थितोदकपानमित्यप्याहुः । एवमुच्छिष्टजलपानार्थं प्रार्थित-श्चाक्रायण एतदुदकपाने उच्छिष्टमेव मे मया पीतं स्यादिति होवाच ।

तत्रेभ्यो बभाषे। एतेऽपि कुल्माषा उच्छिष्टा न स्वित् न किम् ।। २ ।।

तत्र मुनिरुवाच । इमान् कुल्माषानखादन्नभक्षयन्नैवाजीविष्यं न जीविष्यामि। अतः प्राणात्यये दोषाभावात् ते भक्षिताः। उदपानं जलपानं तु मे कामो ममेच्छाधीनमिदानीं वर्तते। वृथोच्छिष्टस्वीकारे दोषप्राप्तेर्न तत् पिबामीति । उक्तं च सूत्रकृता – **''ॐसर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्''**(ब्र.सू. ३-४-२८)इति। स चाक्रायणस्तान् कुल्मषांस्तत्र खादित्वाऽतिशेषानतिशिष्टाञ्जायाया आजहार ह । सा जायाऽग्र एव पत्युरागमनात् पूर्वमेव सुभिक्षा शोभनभिक्षा लब्धान्ना बभूव। अतस्तान् कुल्माषान् प्रतिगृह्य निदधौ स्थापितवती।

स चाक्रायणस्तां रात्रिं नीत्वा प्रातः सञ्जिहानः शयनं निद्रां वा परित्यत्यजन् उत्तिष्ठन्निति यावत् । उवाच । प्रत्यहमन्नार्थं खिद्यन्तीं स्वजायां प्रति। बतेत्यास्वादने। यद् यस्माद् वयमन्नं लभेमहि। अन्नस्य मात्रां भारमिति वा। धनमात्रां धनभारं च लभेमहि। तेनास्माकं जीवनं भविष्यति ।। अतस्तव खेदो मा भूदित्यर्थः । अन्नादिलाभे कारणमाह– **राजेति** ।। असौ दूरे स्थितो राजा यक्ष्यते तत्राहं गमिष्यति। स राजा मां सर्वैरार्त्विज्यैः ऋत्विक्कर्मभिर्वृणीते । अतस्तत्र गमनाय पाथेयं किमप्य-स्तीत्युवाचेति सम्बन्धः ।। ३ ।।

एवमुक्तवन्तं पतिं प्रति जायोवाच– **हन्तेति** ।। हन्तेति खेदे। हे पते ये भवद्भिः पूर्वेद्युरानीताः इम एव कुल्माषा वर्तन्त इति। त एव नेया इत्युक्त्वा तान् प्रतिगृह्य खादित्वाऽमुं यज्ञं विततं विस्तृतमेयाय गतवान्। तत्र यज्ञे। आस्तावे आस्तुवन्त्यस्मिन्नित्यास्तावाख्ये कर्मणि स्तोष्यमाणान् स्तोतॄनुप समीपे उपविवेशोपविष्टवान्। स चाक्रायणः प्रस्तोतारमुवाच ह ।

हे प्रस्तोतरित्यभिमुखीकृत्य या देवता प्रस्तावं प्रस्तावभक्तिमन्वायत्ता

सम्बद्धा तत्प्रतिपाद्या तत्स्था च तां देवतां चेद् यदि त्वमविद्वान् प्रस्तोष्यसि तर्हि ते तव मूर्धा विपतिष्यतीति।

एवमेवोद्गातारं प्रत्युवाच । उद्गातारं प्रति "प्रस्तोतर्या देवता" इत्याद्युक्तेरसङ्गतेरेवमित्युक्तं विवृणोति – **उद्गातरिति** ॥ पूर्ववदर्थः । एवमेव "प्रतिहर्तारम्" इत्यादिकमपि व्याख्येयम्।

एवं चाक्रायणेनोक्तास्ते प्रस्तोत्रादयः प्रस्तावादिदेवता ज्ञानाभावात् समारताः स्वस्वव्यापारान्निवृत्तास्तूष्णीमासाञ्चक्रिरे ॥ ४ ॥

॥ इति दशमः खण्डः ॥

उपनिषत् (खण्डः -११)

**अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैशिषं भगवतो वा अहमवित्त्याऽन्यानवृषि भगवांस्त्वेव मे सर्वैरार्त्विज्यैरिति ॥१॥ तथेत्यथ तर्ह्येत एव समतिसृष्टाः[1] स्तुवन्तां यावत् तेभ्यो[2] धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ २ ॥ अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति ॥ ३ ॥**

**प्राण इति होवाच सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावम-**

---

१. 'मदतिसृष्टाः' ह्. पाठः। २. 'यावत्त्वेभ्यो धनं' प्रभ. पाठः।

न्वायत्ता तां चेदविद्वान् प्रस्तोष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति ॥ ४ ॥

अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेत्यादित्य इति होवाच सर्वाणि हवा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेत्यथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेत्यन्नमिति होवाच ॥ ५ ॥

सर्वाणि हवा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ ६ ॥ ११ ॥

भाष्यम्

'प्राणस्थविष्णुना सर्वे प्रसूयन्ते यतस्ततः ।
प्रस्तावदेवता स स्यात् प्रस्तावस्तु जनिर्यतः ॥
आदित्यसंस्थितो विष्णुर्यत् सदा सर्वगीतभुक् ।
राजादौ गीतमप्यज्ञैर्भुङ्क्ते गानस्य देवता ॥
उद्गीथदेवता तस्मात् स एव पुरुषोत्तमः ।
अन्नस्थेनैव जीवन्ति भूतान्येतानि विष्णुना ।
प्रतिहारदेवताऽतः स प्रतिहारो हि भोजनम् ॥' इति च ।

**उच्चैः सन्तमुत्तमं सन्तम् ॥ ११ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''कतमा सा देवता'' इति प्रश्ने ''प्राण इति होवाच'' इति प्रसिद्धप्राणस्यैव प्रस्तावदेवतात्वमुच्यत इत्यसत् ॥ ''सर्वाणि'' इति वाक्यशेषे भगवल्लिङ्गश्रवणादिति भावेन तद्भगवत्परतया व्याचष्टे – **प्राणस्थेति** ॥ स विष्णुः प्रस्तावदेवता स्यात् । तत्र हेतुः – **प्राणस्थविष्णुनेति** ॥ अनेन ''सर्वाणि भूतानि प्राणमभ्युज्जिहते'' इत्येतद् व्याख्यातम् ।

ननु सर्वप्रसवितृत्वेऽपि प्रस्तावदेवतात्वं कुत इत्यत आह – **प्रस्ताव इति** ॥ जनिर्जनिकर्तृत्वम् । भावार्थकथनं चैतत् । ''कतमा सा देवतेत्यादित्य इति होवाच''इत्यत्र प्रसिद्धादित्यस्यैवोद्गीथदेवतात्वमुच्यत इति प्रतीतिनिरासाय तद्व्याचष्टे– **आदित्येति** ॥ आदित्यसंस्थितः स एव पुरुषोत्तमो विष्णुरुद्गीथदेवतेत्यन्वयः । स्थानभेदेन भेदशङ्कानिरासाय ''स एव'' इत्युक्तम् । तत्र हेतुमाह – **गानस्य देवतेति** ॥ तदपि कुत इत्यत उक्तम् – **यत् सदा सर्वगीतभुगिति** ॥ सर्वगानानुभवितेत्यर्थः । राजादि- पुरतो यद्गीतं तद्भोक्तृत्वाभावे कथं सर्वगीतभोक्तृत्वमित्यत आह – **राजादाविति** ॥ अनेन ''सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति''इत्येतद् व्याख्यातम् । ''कतमा सा देवतेत्यन्नम्''इत्यत्र प्रसिद्धान्नस्यैव प्रतिहारदेवतात्वमुच्यत इति प्रतीतिनिरासाय तद् व्याचष्टे– **अन्नस्थेनैवेति** ॥ सोऽन्नस्थो विष्णुः प्रतिहारदेवता । तत्र हेतुः – **अन्नस्थेनेति** ॥ अनेन ''सर्वाणि हवा इमानि भूतान्यन्नमेव प्रतिहर- माणानि जीवन्ति''इत्येतद् व्याख्यातम् । अन्नस्थेन विष्णुना भूतानां

जीवनेऽपि विष्णुः प्रतिहारदेवतेति कुत इत्यत आह – **प्रतिहार इति** ॥ उच्चैः सन्तम् ऊर्ध्वं सन्तमुपरि वर्तमानमित्यन्यथाप्रतीतिनिरासाय तदनूद्य व्याचष्टे – **उच्चैरिति** ॥ उच्चैरित्यस्याव्ययत्वादुत्तममिति व्याख्यानम् । अर्थान्तरं तु प्रत्यक्षादिसिद्धमिति न वक्तव्यम् ॥ **एकादशः खण्डः** ॥

## ततश्चायं खण्डार्थः

अथ तेषां तूष्णीम्भावानन्तरमेनं चाक्रायणं प्रति यजमानो राजोवाच । अहं भगवन्तं पूजार्हं, वैशब्देनैवंज्ञानिनस्तव पूजार्हत्वं प्रसिद्धमित्याह । विविदिषाणि त्वं किंनामकः कस्य पुत्र इति वेत्तुमिच्छामीति । एवमुक्तो मुनिरहं नाम्नोषस्तिरस्मि चाक्रायणः चक्रायणस्य पुत्रोऽस्मीति होवाच । एवमुक्तः स राजोवाच । भगवन्तमेवाहमेभिः सर्वैरार्त्विज्यैः ऋत्विक्कर्मभिः पर्यैषिषं पर्येषणं कृतवानस्मि । भगवन्तमेव सर्वैः ऋत्विक्कर्मभिर्वृणीतुं विचारितवानस्मीति यावत् । तर्हि पूर्वं किमर्थमेते प्रस्तोतृत्वादिना वृता इत्यत आह – **भगवत इति** ॥ पूर्वमहं भगवतोऽगतेरवित्त्या वा अज्ञानेनैवान्यान् प्रस्तोत्रादीनवृषि । यद्वा, भगवतोऽवित्त्या वा अलाभेनैवेत्यर्थः । इदानीं भगवाल्लब्धः । अतो भगवानेव तु विशेषेण मे मया सर्वैरार्त्विज्यैर्वृत इति ॥ १ ॥

एवमुक्तो मुनिर्यद्यहमेवैतत्कर्म कुर्यां तर्हि ब्राह्मणद्रोहो यद्यत्रानङ्गीकारस्तर्हि धनाप्राप्तिरिति विचार्य तथाऽस्त्वित्युवाच । किन्तु अथ तर्हि एवं तर्हि ये पूर्वं त्वया वृता एत एव समतिसृष्टा मदाज्ञप्ताः स्तुवन्तां स्तुवन्तु । त्वया त्वेतत्कार्यम्। यावत्तेभ्यः प्रस्तोत्रादिभ्यः सर्वेभ्यो धनं दद्याः तावन्मम दद्या इति । एवमुक्तो यजमानस्तथेति होवाच । हेति यजमानस्य हर्षद्योतकम् । उभयविधब्राह्मणापराधाभावो मम सम्पन्न इति ॥ २ ॥

अथैवं चाक्रायण राजसंवादानन्तरमेनं चाक्रायणं प्रति

**उच्चैः सन्तमुत्तमं सन्तम् ॥ ११ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''कतमा सा देवता'' इति प्रश्ने ''प्राण इति होवाच'' इति प्रसिद्धप्राणस्यैव प्रस्तावदेवतात्वमुच्यत इत्यसत् ॥ ''सर्वाणि'' इति वाक्यशेषे भगवल्लिङ्गश्रवणादिति भावेन तद्भगवत्परतया व्याचष्टे – **प्राणस्थेति** ॥ स विष्णुः प्रस्तावदेवता स्यात् । तत्र हेतुः – **प्राणस्थविष्णुनेति** ॥ अनेन ''सर्वाणि भूतानि प्राणमभ्युज्जिहते'' इत्येतद् व्याख्यातम् ।

ननु सर्वप्रसवितृत्वेऽपि प्रस्तावदेवतात्वं कुत इत्यत आह – **प्रस्ताव इति** ॥ जनिर्जनिकर्तृत्वम् । भावार्थकथनं चैतत् । ''कतमा सा देवतेत्यादित्य इति होवाच''इत्यत्र प्रसिद्धादित्यस्यैवोद्गीथदेवतात्वमुच्यत इति प्रतीतिनिरासाय तद्व्याचष्टे– **आदित्येति** ॥ आदित्यसंस्थितः स एव पुरुषोत्तमो विष्णुरुद्गीथदेवतेत्यन्वयः । स्थानभेदेन भेदशङ्कानिरासाय ''स एव'' इत्युक्तम् । तत्र हेतुमाह – **गानस्य देवतेति** ॥ तदपि कुत इत्यत उक्तम् – **यत् सदा सर्वगीतभुगिति** ॥ सर्वगानानुभवितेत्यर्थः । राजादि-पुरतो यद्गीतं तद्भोक्तृत्वाभावे कथं सर्वगीतभोक्तृत्वमित्यत आह – **राजादाविति** ॥ अनेन ''सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति''इत्येतद् व्याख्यातम् । ''कतमा सा देवतेत्यन्नम्''इत्यत्र प्रसिद्धान्नस्यैव प्रतिहारदेवतात्वमुच्यत इति प्रतीतिनिरासाय तद् व्याचष्टे– **अन्नस्थेनैवेति** ॥ सोऽन्नस्थो विष्णुः प्रतिहारदेवता । तत्र हेतुः – **अन्नस्थेनेति** ॥ अनेन ''सर्वाणि हवा इमानि भूतान्यन्नमेव प्रतिहर-माणानि जीवन्ति''इत्येतद् व्याख्यातम् । अन्नस्थेन विष्णुना भूतानां

जीवनेऽपि विष्णुः प्रतिहारदेवतेति कुत इत्यत आह – **प्रतिहार इति** ॥ उच्चैः सन्तम् ऊर्ध्वं सन्तमुपरि वर्तमानमित्यन्यथाप्रतीतिनिरासाय तदनूद्य व्याचष्टे – **उच्चैरिति** ॥ उच्चैरित्यस्याव्ययत्वादुत्तममिति व्याख्यानम् । अर्थान्तरं तु प्रत्यक्षादिसिद्धमिति न वक्तव्यम् ॥ **एकादशः खण्डः** ॥

**ततश्चायं खण्डार्थः**

अथ तेषां तूष्णीम्भावानन्तरमेनं चाक्रायणं प्रति यजमानो राजोवाच । अहं भगवन्तं पूजार्हं, वैशब्देनैवंज्ञानिनस्तव पूजार्हत्वं प्रसिद्धमित्याह । विविदिषाणि त्वं किंनामकः कस्य पुत्र इति वेत्तुमिच्छामीति । एवमुक्तो मुनिरहं नाम्नोषस्तिरस्मि चाक्रायणः चक्रायणस्य पुत्रोऽस्मीति होवाच । एवमुक्तः स राजोवाच । भगवन्तमेवाहमेभिः सर्वैरार्त्विज्यैः ऋत्विक्कर्मभिः पर्यैषिषं पर्येषणं कृतवानस्मि । भगवन्तमेव सर्वैः ऋत्विक्कर्मभिर्वृणीतुं विचारितवानस्मीति यावत् । तर्हि पूर्वं किमर्थमेते प्रस्तोतृत्वादिना वृता इत्यत आह – **भगवत इति** ॥ पूर्वमहं भगवतोऽगतेरवित्त्या वा अज्ञानेनैवान्यान् प्रस्तोत्रादीनवृषि । यद्वा, भगवतोऽवित्त्या वा अलाभेनैवेत्यर्थः । इदानीं भगवाल्लब्धः । अतो भगवानेव तु विशेषेण मे मया सर्वैरार्त्विज्यैर्वृत इति ॥ १ ॥

एवमुक्तो मुनिर्यद्यहमेवैतत्कर्म कुर्यां तर्हि ब्राह्मणद्रोहो यद्यत्रानङ्गीकारस्तर्हि धनाप्राप्तिरिति विचार्य तथाऽस्त्वित्युवाच । किन्तु अथ तर्हि एवं तर्हि ये पूर्वं त्वया वृता एत एव समतिसृष्टा मदाज्ञप्ताः स्तुवन्तां स्तुवन्तु । त्वया त्वेतत्कार्यम्। यावत्तेभ्यः प्रस्तोत्रादिभ्यः सर्वेभ्यो धनं दद्याः तावन्मम दद्या इति । एवमुक्तो यजमानस्तथेति होवाच । हेति यजमानस्य हर्षद्योतकम् । उभयविधब्राह्मणापराधाभावो मम सम्पन्न इति ॥ २ ॥

अथैवं चाक्रायण राजसंवादानन्तरमेनं चाक्रायणं प्रति

प्रस्तोतोपससाद गुरुभावेनोपजगाम। ''प्रस्तोतर्या देवता'' इत्यादिना मा मां भगवानवोचत् पूर्वम्। कतमा सा देवता या प्रस्तावभक्तिमन्वायत्तेति पृष्टः प्राणो मुख्यप्राणस्थः प्राणनामा विष्णुरिति होवाच। युक्तं प्राणस्थविष्णोः प्रस्तावदेवतात्वं प्रस्तावशब्दार्थस्यात्रैव सत्त्वादिति भावेनाऽह – **सर्वाणि हवा इमानि भूतानि प्राणमभ्युज्जिहत इति ॥** अभ्युज्जिहते त्यजन्ति। प्राणान्निस्सरन्ति उत्पद्यन्त इति यावत्। अनेन प्रसूयन्तेऽनेनेति प्रस्ताव इति प्रसवकर्तृत्वं प्रस्तावशब्दार्थः। तच्च प्राणस्थविष्णोरेव वर्तत इति स एव प्रस्तावदेवतेत्युक्तं भवति। लोके पितुरन्यस्य मारकत्वदर्शनात् संहर्ताऽन्य एवेति न मन्तव्यमिति भावेन ''सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति'' प्रलयकाल इत्युक्तम्। सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यस्तर्हि मया तथोक्तस्य ''तां चेदविद्वान् प्रस्तोष्यसि'' इत्याद्युक्तस्य ते मूर्धा शिरो व्यपतिष्यत्। मद्वचनस्यामोघत्वात्। त्वं तु तथा न कृतवान्। अतो महान् प्रमादः परिहृत इति भावः।

अथ प्रस्तावदेवतानिर्णयानन्तरम्। अन्यत् पूर्ववत्। आदित्यः आदित्यस्थो विष्णुः। युक्तमादित्यस्थस्य विष्णोरुद्गीथदेवतात्वम्। तस्य गानदेवतात्वादिति भावेन तत्र हेतुमाह – **सर्वाणीति ॥** यद्वा, उद्गीथ-शब्दार्थस्य तत्रैव भावात् स एवोद्गीथ इति युक्तमित्याह – **सर्वाणीति ॥** सर्वाणीमानि भूतानि गानकर्तॄणि आदित्यमादित्यस्थं विष्णुमुच्चैः सन्त-मुत्तमं सन्तं गायन्ति। हवा इति बहुप्रमाणसिद्धिमाह। अनेनाऽदित्यस्थस्य सर्वगीतभुक्त्वाद् गानदेवतात्वमित्युक्तं भवति ॥ ३-५ ॥

सैषेत्यादि पूर्ववत्। अन्नमन्नस्थो विष्णुः। युक्तमन्नस्थविष्णोः प्रतिहारदेवतात्वम्। प्रतिहारशब्दार्थस्य तत्रैव मुख्यतो भावादिति भावेनाऽह – **सर्वाणीति ॥** सर्वाणीमानि भूतान्यन्नमेवान्नस्थं भगवन्तमेव

प्रतिहरमाणानि भोजनं कुर्वाणानि तदुपजीवकानीति यावत् । जीवन्ति । अन्यद् व्याख्यातम् ॥ ६ ॥

॥ इति एकादशः खण्डः ॥

## उपनिषत् (खण्डः-१२)

*शौवोद्गीथोपासना*

अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति ॥ १ ॥
तान् होवाचेहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः स\ꣳरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिङ्चक्रुरो३मदा३मोंपिबा३मों देवो वरुणः प्रजापतिः सविता३-न्नमिहा३हरदन्नपते३न्नमिहा३हराऽहरोमिति ॥ २ ॥ १२ ॥

भाष्यम्

दल्भपुत्रो बको मित्रया पुत्रार्थं स्वीकृतो [१]ग्लाववत् तूष्णीं स्थितत्वात् तया ग्लावेत्युक्तो ग्लावनामको जातः । अत उभयथाऽस्य निर्देशो भवतीत्यर्थः ।

'प्रसादार्थं बकस्यापि वायुनोक्तः श्वरूपिणा ।
शौवोद्गीथ इति प्रोक्तो रुद्रादीनां श्वरूपिणाम् ॥

---

१. 'ग्राववत्' ह.

**उपासितः पौर्णमास्यां शौवोद्गीथेन केशवः ।**
**सर्वाभीष्टं ददातीति प्रातरित्याह मारुतः ॥**
**ओमदामादिकं मन्त्रं वायुनोक्तं तु देवताः ।**
**वायुस्थविष्णुमुद्दिश्य हिङ्कृत्य प्रापुरीप्सितम् ॥**
**देवौ विष्णुश्च वायुश्च सर्वज्ञत्वात् क्रमेण तु ।**
**वरुणौ वरणीयत्वात् सवितारौ प्रसूतितः ।**
**प्रजानां च पती तद्वत् क्रमादेव प्रकीर्तितौ ॥' इति च ॥१२ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

पूर्वमुद्गीथोपासकस्य पापाविद्धत्वादिकं फलमुक्तम् । इदानीमन्नप्राप्तिलक्षणफलमाख्यायिकयाऽऽह – **अथेति** ॥ "बको दाल्भ्यो ग्लावो वा मैत्रेयः" इत्यत्र बको दाल्भ्य इत्येको ग्लावो मैत्रेय इत्यपर इत्यसत् । तथा सति विकल्पार्थकवाशब्दायोगात् । उद्वव्राज प्रतिपालयाञ्चकारेत्येकवचनानुपपत्तेश्च । कथं तर्हि एकस्यैव बको दाल्भ्य इति ग्लावो वा मैत्रेय इति चोभयथा निर्देश इत्यत आह – **दल्भपुत्र इति** ॥ दल्भपुत्रो दाल्भ्यः, बको नामतः मित्रया पुत्रार्थं स्वीकृतो मित्रापालितपुत्रोऽतो मैत्रेयः, प्रयोजनार्थमाह्वानेऽपि ग्लाववत् तूर्ष्णी स्थितत्वात् तया ग्लावेत्युक्तो ग्लावनामको जात इत्यर्थः । किं तत इत्यत आह – **अत इति** ॥ बको दाल्भ्य इत्येको निर्देशः । ग्लावो मैत्रेय इत्यपरः । उभयनिर्देशज्ञापको वाशब्द इति भावः । श्वभिर्दृष्टः शौव इत्यन्यथाप्रतीतिनिरासाय शौव उद्गीथ इत्येतद् व्याचष्टे – **प्रसादार्थमिति** ॥ श्वरूपिणां रुद्रादीनां बकस्यापि प्रसादार्थं श्वरूपिणा वायुनोक्त उद्गीथः

शौवोद्गीथ इति प्रोक्त इत्यन्वयः । यद्यपि श्वसम्बन्धित्वमेव शौवशब्दार्थः । तथाऽपि श्वरूपवायुनोक्तत्वमेव शौवशब्दप्रवृत्तिनिमित्तम्, नतु श्वभिर्दृष्टत्वम् । श्वरूपदेवानां वायूक्तमन्त्रश्रोतृत्वेन तद्द्रष्टृत्वाभावादिति भावः । रुद्रादीनामित्यनेन ''तमन्ये श्वानः'' इत्युक्ताः श्वानः सन्दर्शिताः ।

ननु ''अन्नं नो भगवानागायतु'' इत्यन्नयाचनावसर एवोद्गीथमनुक्त्वा ''इहैव मा प्रातरुपसमीयात'' इति वचने कोऽभिप्राय इत्यत आह – **उपासित इति** ॥ ते श्वान ''आससृपुस्ते ह समुपविश्य हिङ्चक्रुरोमदाम'' इत्यनेन वायूपदेशं विनैव देवा ओ३मदा३मेत्यादिमन्त्रं हिङ्चक्रुरिति प्रतीयते, तदयुक्तम् । तथा सति श्वेतशुनः प्रादुर्भावोक्त्ययोगात् । प्रातरेनं प्रत्यागमनायोगाच्चेति भावेन तद् व्याचष्टे – **ॐमदामादिकमिति** ॥ ओमदामेत्यादिकमित्यर्थः । ''वायुस्थविष्णुमुद्दिश्य'' इत्यनेन ''देवो वरुणः'' इत्यादिकं वायुस्थविष्णुपरमित्युक्तं भवति । तेन वायोरपि देववरुणादिशब्दवाच्यत्वममुख्यतोऽस्तीति गम्यते । तत्र विष्णुवाय्वोर्देववरुणसवितृप्रजापतिशब्दप्रवृत्तिनिमित्तान्याह – **देवाविति** ॥ दीव्यतेर्गत्यर्थत्वाद् गत्यर्थानां ज्ञानार्थत्वात् ''सर्वज्ञत्वात्'' इत्युक्तम् । तुशब्दोऽवधारणार्थः । क्रमेणैव सर्वज्ञत्वात् । स्वपरगतसर्वज्ञत्वाद् विष्णोः । अन्यत्राऽलोचन एव सर्वज्ञत्वाद् वायोरित्यर्थः ॥

**॥ ततश्चायं खण्डार्थः ॥**

अथशब्दः प्रकरणान्तरद्योतकः । अतः प्रयोजनसद्भावात् । शौवः शुनोक्त उद्गीथ उच्यते । तद् तदा कदाचिद् बको नामतः, दाल्भ्यो दल्भ्यपुत्रो ग्लावो वा आह्वानेऽपि ग्लाववत् तूर्ष्णीं स्थितत्वान्मित्रया ग्लावेत्युक्तत्वाद् ग्लावनामको मैत्रेयो मित्रया पुत्रार्थं स्वीकृतः ।

उभयथानिर्देशज्ञापको वा शब्दः । स्वाध्यायमुद्दिश्योद्वव्राज ह । तदित्येतदुत्तरत्र वा सम्बध्यते । तद् तदा तस्मै बकाय बकस्य प्रसादार्थमिति यावत् । उपलक्षणमेतत् । देवानां प्रसादार्थमित्यपि ग्राह्यम् । श्वेतः श्वा श्वरूपो वायुः प्रादुर्बभूव । तं श्वरूपं वायुम् अन्ये श्वानः श्वरूपा देवा उपसमेत्य समीपं प्राप्योचुः । उपलक्षणमेतत् । बकश्चेत्यपि ग्राह्यम् । किमिति ? नोऽस्माकमन्नमुद्दिश्य भगवानागायतु अन्नप्राप्तिहेतूद्गीथोपासनमुपदिशेति भावः । वयं तु अशनायाम वै अशितुमिच्छामो वै ॥ १ ॥

"उपासितः पौर्णमास्यां शौवोद्गीथेन केशवः । सर्वाभीष्टं ददाति" इति भावेन तान् होवाच श्वरूपो वायुः । इहैवात्रैव मा मां प्रति प्रातःकाले उपसमीयातेति । तत् तदा बको दाल्भ्यो ग्लावो वा मैत्रेयः श्वरूपं वायुं प्रतिपालयाञ्चकार ह । ते श्वानः प्रातःकाले यथेदं निदर्शनं बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणाः संरब्धाः संरम्भवन्तस्त्वरिताः सर्पन्त्येवं संरब्धाः सन्तः आससृपुः निर्दिष्टस्थलं प्रतिसंरब्धाः अन्योन्यसंलग्नाः सर्पन्त्येवं मुखेनान्योन्यस्य पुच्छं गृहीत्वा ससृपुरिति वा । तेष्वागतेषु श्वरूपो वायुरोमदामेत्यादिकं मन्त्रं तेषामुपदिदेशेति ग्राह्यम् । ते वायुनोपदिष्टाः श्वरूपा देवाः समुपविश्य वायुं तत्स्थविष्णुं चोद्दिश्य हिञ्चक्रुर्हिङ्कारं कृतवन्तः । तत्प्रकारमेव दर्शयति – **ओमिति** ॥ ॐ हे गुणपरिपूर्ण वायो तत्स्थभगवंश्च । वयमन्नमदाम ओं पिबाम । ॐअतो गुणपूर्णत्वादोंनामकः, सर्वज्ञत्वाद् देवः, वरणीयत्वाद् वरुणः, प्रजानां पालनात् प्रजापतिः, प्रसवितृत्वात् सविता वायुस्तद्गतो विष्णुश्चेहान्नमाहरद् आहरतु । एवं परोक्षतः प्रार्थयित्वाऽपरोक्षतोऽपि प्रार्थयते – **अन्नपत इति** ॥ हे अन्नपते वायो तद्गतविष्णविहास्मदर्थमन्नमाहर । द्विरुक्तिः विद्यार्थावधारणार्थे । इतिशब्दो विद्यासमाप्त्यर्थ इत्युक्तम् ॥ २ ॥

**॥ इति द्वादशः खण्डः ॥**

## उपनिषत् (खण्डः- १३)

*स्तोभाक्षरेषु देवतोपासना*

अयं वाव लोको हावुकारो वायुर्हायिकारश्चन्द्रमा अथकार आत्मेहकारोऽग्निरीकारः आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोयिकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं याया वाग् विराडनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुष्कारो दुग्धेऽस्मै वाग् दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद इति ॥ १ ॥ १३ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि प्रथमोऽध्ययः ॥१ ॥

### भाष्यम्

हूयतेऽ[१]त्राग्निहोत्रादिर्हावुकारस्त्वियं यतः[२]।
हेत्याश्चर्यवदायाति हेति वा सुखकृत्त्वतः ॥
हायिकारस्ततो वायुरथेत्युक्तमनन्तरम् ।
आनन्तर्यात् प्रकाशस्य सूर्याच्चन्द्रस्त्वथेरितः ॥
सर्वसामीप्यतो विष्णुरिहेति कथितः सदा ।
इन्धनादग्निरीकार ऊकारः सूर्य उष्टितः ॥
नितरामाह्वयन्त्येनमितीन्द्रो निहवः स्मृतः ।
एतीत्येकार एवासौ औहोयीत्यखिलाः सुराः ॥
उच्चत्वाद् विष्णुरुः प्रोक्तो हूयन्तेऽस्मिन् यतोऽखिलाः ।

१. 'हूयते चाग्निहोत्रादिः' प्र.पाठान्तरम् । २. 'ततः' ह्.पाठः ।

उभयथानिर्देशज्ञापको वा शब्दः । स्वाध्यायमुद्दिश्योद्व्राज ह । तदित्येतदुत्तरत्र वा सम्बध्यते । तद् तदा तस्मै बकाय बकस्य प्रसादार्थमिति यावत् । उपलक्षणमेतत् । देवानां प्रसादार्थमित्यपि ग्राह्यम् । श्वेतः श्वा श्वरूपो वायुः प्रादुर्बभूव । तं श्वरूपं वायुम् अन्ये श्वानः श्वरूपा देवा उपसमेत्य समीपं प्राप्योचुः । उपलक्षणमेतत् । बकश्चेत्यपि ग्राह्यम् । किमिति ? नोऽस्माकमन्नमुद्दिश्य भगवानागायतु अन्नप्राप्तिहेतूद्गीथोपासनमुपदिशेति भावः । वयं तु अशनायाम वै अशितुमिच्छामो वै ॥ १ ॥

''उपासितः पौर्णमास्यां शौवोद्गीथेन केशवः । सर्वाभीष्टं ददाति'' इति भावेन तान् होवाच श्वरूपो वायुः । इहैवात्रैव मा मां प्रति प्रातःकाले उपसमीयातेति । तत् तदा बको दाल्भ्यो ग्लावो वा मैत्रेयः श्वरूपं वायुं प्रतिपालयाञ्चकार ह । ते श्वानः प्रातःकाले यथेदं निदर्शनं बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणाः संरब्धाः संरम्भवन्तस्त्वरिताः सर्पन्त्येवं संरब्धाः सन्तः आससृपुः निर्दिष्टस्थलं प्रतिसंरब्धाः अन्योन्यसंलग्नाः सर्पन्त्येवं मुखेनान्योन्यस्य पुच्छं गृहीत्वा ससृपुरिति वा । तेष्वागतेषु श्वरूपो वायुरोमदामेत्यादिकं मन्त्रं तेषामुपदिदेशेति ग्राह्यम् । ते वायुनोपदिष्टाः श्वरूपा देवाः समुपविश्य वायुं तत्स्थविष्णुं चोद्दिश्य हिञ्चक्रुर्हिङ्कारं कृतवन्तः । तत्प्रकारमेव दर्शयति – **ओमिति** ॥ ॐ हे गुणपरिपूर्ण वायो तत्स्थभगवंश्च । वयमन्नमदाम ओं पिबाम । ॐअतो गुणपूर्णत्वादोंनामकः, सर्वज्ञत्वाद् देवः, वरणीयत्वाद् वरुणः, प्रजानां पालनात् प्रजापतिः, प्रसवितृत्वात् सविता वायुस्तद्गतो विष्णुश्चेहान्नमाहरद् आहरतु । एवं परोक्षतः प्रार्थयित्वाऽपरोक्षतोऽपि प्रार्थयते – **अन्नपत इति** ॥ हे अन्नपते वायो तद्गतविष्णविहास्मदर्थमन्नमाहर । द्विरुक्तिः विद्यार्थावधारणार्थे । इतिशब्दो विद्यासमाप्त्यर्थ इत्युक्तम् ॥ २ ॥

**॥ इति द्वादशः खण्डः ॥**

## उपनिषत् (खण्डः- १३)

*स्तोभाक्षरेषु देवतोपासना*

अयं वाव लोको हावुकारो वायुर्हायिकारश्चन्द्रमा अथकार आत्मेहकारोऽग्निरीकारः आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोयिकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं याया वाग् विराडनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुप्कारो दुग्धेऽस्मै वाग् दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद इति ॥ १ ॥ १३ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि प्रथमोऽध्ययः ॥१ ॥

### भाष्यम्

हूयतेऽ[१]त्राग्निहोत्रादिर्हावुकारस्त्वियं यतः[२]।
हेत्याश्चर्यवदायाति हेति वा सुखकृत्त्वतः ॥
हायिकारस्ततो वायुरथेत्युक्तमनन्तरम् ।
आनन्तर्यात् प्रकाशस्य सूर्याच्चन्द्रस्त्वथेरितः ॥
सर्वसामीप्यतो विष्णुरिहेति कथितः सदा ।
इन्धनादग्निरीकार ऊकारः सूर्य उष्टितः ॥
नितरामाह्वयन्त्येनमितीन्द्रो निहवः स्मृतः ।
एतीत्येकार एवासौ औहोयीत्यखिलाः सुराः ॥
उच्चत्वाद् विष्णुरुः प्रोक्तो हूयन्तेऽस्मिन् यतोऽखिलाः ।

---

१. 'हूयते चाग्निहोत्रादिः' प्र.पाठान्तरम् । २. 'ततः' ह.पाठः ।

मुक्तावौहोयिनस्तस्मात् सर्वदेवाः[१] प्रकीर्तिताः ॥
हीति निश्चय उद्दिष्टो निश्चयज्ञानतः सदा ।
ब्रह्मा हिङ्कार इत्युक्तो वायुः प्राणः शरीरगः ॥
स्वे विष्णौ रमयत्येनं जीवं तस्मात् स्वरः स्मृतः ।
ययिर्नित्यगतेर्वायुस्तद्वा याया सरस्वती ॥
सैवान्नदेवता प्रोक्ता याऽत्रा[२] प्राणेन नीयते ।
सर्ववागात्मिका या तु श्रीर्विशेषेण राजनात् ॥
विराडुक्ता निरुक्तस्तु व्याप्तो नारायणस्तु यः ।
आहूत एव पातीति हुप्कार इति कीर्तितः ॥
हुबित्याक्रियते यस्माद्धुप्कारस्तु जनार्दनः[३]।
अनिरुक्तस्त्ववाच्यत्वात् परमः पुरुषो हरिः ॥' इति माहात्म्ये ।
सम्यक् चरतीति स एव सञ्चरः ॥१३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छान्दोग्योपनिषद्भाष्ये प्रथमोऽध्यायः ॥ १ ॥

## पदार्थकौमुदी

### भाष्यार्थः

सामैकदेशोपास्तेः प्रकृतत्वात् तदेकदेशहावित्यादित्रयोदशस्तोभनिष्ठामुपास्तिमाह– **अयमित्यादिना** ॥ सामानाधिकरण्येनाभेद-

---

१. 'सर्वे देवाः' प्र. पाठान्तरम् । २.'यात्रा' प्रभ पाठः, प्र.पाठान्तरम् । ३. 'हुप्कारस्तज्जनार्दनः' ह.

प्रतीतिनिरासाय खण्डं प्रमाणेन व्याचक्षाणस्तावदादिवाक्यं व्याचष्टे – **हूयत इति** ॥ अत्र पृथिव्याम् । यतोऽग्निहोत्रादि हूयते अत इयं पृथिवी हावुकार इत्युच्यत इति सम्बन्धः । अत्र हाब्वित्यादिस्तोभ एव व्याक्रियते । हावित्याक्रियमाणत्वाद्धावुकार इत्यर्थो ज्ञेयः । "वायुर्हायिकारः" इति वाक्यं व्याचष्टे – **हेतीति** ॥ हेति तावदाश्चर्ये वर्तते । आश्चर्यवदायाति यतस्ततो वायुर्हायिकार इत्येकोऽर्थः । वाशब्दो व्याख्यानान्तरद्योतकः । हेति सुखमुच्यते । तदापयति सुखकृदिति यावत् । सुखकृत्त्वतो वायुर्हायिकार इत्यन्योऽर्थः ।

"चन्द्रमा अथकारः" इति वाक्यं व्याख्यातुमथशब्दार्थमाह – **अथेतीति** ॥ अस्त्वानन्तर्यमथशब्दार्थः । प्रकृते किमानन्तर्यं चन्द्रमसो विविक्षितमित्यतस्तद्दर्शयन् वाक्यं व्याचष्टे – **आनन्तर्यादिति** ॥ सूर्याचन्द्रमसोः स्वरूपेण समत्वात् "प्रकाशस्य" इत्युक्तम् । "तथेरितः" अथकार इतीरितः । "आत्मेहकारः" इति इति वाक्यं व्याचष्टे – **सर्वेति** ॥ "अग्निरीकारः" इति वाक्यं व्याचष्टे – **इन्धनादिति** ॥ दीपनादित्यर्थः । "आदित्य ऊकारः" इत्येतद् व्याचष्टे – **ऊकार इति** ॥ उष्टितः आतपदाहात् । उष प्लुष दाह इति धातुः । "निहव एकारः" इति वाक्यं व्याख्यातुं तावन्निहवशब्दोक्तां देवतामप्रतीतेराह– **नितरामिति** ॥ पदार्थमुक्त्वा वाक्यार्थमाह – **एतीति** ॥ "विश्वे देवा औहोयिकारः" इति वाक्यं व्याचष्टे – **औहोयीतीति** ॥ स्मृता इति वचनविपरिणामेन वर्तते । तेष्वौहोयिशब्दं निर्वक्ति – **उच्चत्वादिति** ॥ यतोऽस्मिन्नुशब्दवाच्ये विष्णावखिलाः सुरा मुक्तौ हूयन्ते तस्मात् सर्वे देवा औहोयिनः प्रकीर्तिता इत्यन्वयः । अनेन उशब्दस्य सप्तमी औ इति । औ हूयन्त इत्यौहोयिन इति निरुक्तिर्दर्शितेति ज्ञातव्यम् ।

मुक्तावौहोयिनस्तस्मात् सर्वदेवाः[१] प्रकीर्तिताः ॥
हीति निश्चय उद्दिष्टो निश्चयज्ञानतः सदा ।
ब्रह्मा हिङ्कार इत्युक्तो वायुः प्राणः शरीरगः ॥
स्वे विष्णौ रमयत्येनं जीवं तस्मात् स्वरः स्मृतः ।
ययिर्नित्यगतेर्वायुस्तद्वा याया सरस्वती ॥
सैवान्नदेवता प्रोक्ता याऽत्त्रा[२] प्राणेन नीयते ।
सर्ववागात्मिका या तु श्रीर्विशेषेण राजनात् ॥
विराडुक्ता निरुक्तस्तु व्याप्तो नारायणस्तु यः ।
आहूत एव पातीति हुप्कार इति कीर्तितः ॥
हुबित्याक्रियते यस्माद्धुप्कारस्तु जनार्दनः[३]।
अनिरुक्तस्त्ववाच्यत्वात् परमः पुरुषो हरिः ॥' इति माहात्म्ये ।
सम्यक् चरतीति स एव सञ्चरः ॥१३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छान्दोग्योपनिषद्भाष्ये प्रथमोऽध्यायः ॥ १ ॥

## पदार्थकौमुदी

### भाष्यार्थः

सामैकदेशोपास्तेः प्रकृतत्वात् तदेकदेशहावित्यादित्रयोदशस्तोभनिष्ठामुपास्तिमाह– **अयमित्यादिना** ॥ सामानाधिकरण्येनाभेद-

---

१. 'सर्वे देवाः' प्र. पाठान्तरम् । २.'यात्रा' प्रभ पाठः, प्र.पाठान्तरम् । ३. 'हुप्कारस्तज्जनार्दनः' ह.

प्रतीतिनिरासाय खण्डं प्रमाणेन व्याचक्षाणस्तावदादिवाक्यं व्याचष्टे – **हूयत इति** ॥ अत्र पृथिव्याम् । यतोऽग्निहोत्रादि हूयते अत इयं पृथिवी हावुकार इत्युच्यत इति सम्बन्धः । अत्र हाव्वित्यादिस्तोभ एव व्या-क्रियते । हावित्याक्रियमाणत्वाद्धावुकार इत्यर्थो ज्ञेयः । ''वायुर्हायि-कारः'' इति वाक्यं व्याचष्टे – **हेतीति** ॥ हेति तावदाश्चर्ये वर्तते । आश्चर्यवदायाति यतस्ततो वायुर्हायिकार इत्येकोऽर्थः । वाशब्दो व्याख्यानान्तरद्योतकः । हेति सुखमुच्यते । तदापयति सुखकृदिति यावत् । सुखकृत्त्वतो वायुर्हायिकार इत्यन्योऽर्थः ।

''चन्द्रमा अथकारः'' इति वाक्यं व्याख्यातुमथशब्दार्थमाह – **अथेतीति** ॥ अस्त्वानन्तर्यमथशब्दार्थः । प्रकृते किमानन्तर्यं चन्द्रमसो विविक्षितमित्यतस्तद्दर्शयन् वाक्यं व्याचष्टे – **आनन्तर्यादिति** ॥ सूर्या-चन्द्रमसोः स्वरूपेण समत्वात् ''प्रकाशस्य'' इत्युक्तम् । ''तथेरितः'' अथकार इतीरितः । ''आत्मेहकारः'' इति इति वाक्यं व्याचष्टे – **सर्वेति** ॥ ''अग्निरीकारः'' इति वाक्यं व्याचष्टे – **इन्धनादिति** ॥ दीपनादित्यर्थः । ''आदित्य ऊकारः'' इत्येतद् व्याचष्टे – **ऊकार इति** ॥ उष्टितः आतपदाहात् । उष प्लुष दाह इति धातुः । ''निहव एकारः'' इति वाक्यं व्याख्यातुं तावन्निहवशब्दोक्तां देवतामप्रतीतेराह– **नितरामिति** ॥ पदार्थमुक्त्वा वाक्यार्थमाह – **एतीति** ॥ ''विश्वे देवा औहोयिकारः'' इति वाक्यं व्याचष्टे – **औहोयीतीति** ॥ स्मृता इति वचनविपरिणामेन वर्तते । तेष्वौहोयिशब्दं निर्वक्ति – **उच्चत्वादिति** ॥ यतोऽस्मिन्नुशब्दवाच्ये विष्णावखिलाः सुरा मुक्तौ हूयन्ते तस्मात् सर्वे देवा औहोयिनः प्रकीर्तिता इत्यन्वयः । अनेन उशब्दस्य सप्तमी औ इति । औ हूयन्त इत्यौहोयिन इति निरुक्तिर्दर्शितेति ज्ञातव्यम् ।

"प्रजापतिर्हिङ्कारः" इति वाक्यं व्याचष्टे – **हीतीति** ॥ सदेत्यनुस्वारार्थः । "प्राणः स्वरः" इति वाक्यं व्याचष्टे – **वायुरिति** ॥ प्राण इत्यनुवादेन वायुरिति व्याख्यातम् । हायिकारत्वेन वायोरुक्तत्वाच्छरीरग इत्युक्तम् । तेनाध्यात्माधिदैवभेदेनैकस्यैव द्विर्ग्रहणमिति सूचितं भवति । तस्मिन् स्वरशब्दं निर्वक्ति – **स्वे विष्णाविति** ॥ "अन्नं याया" इति वाक्यं व्याचष्टे – **ययिरिति** ॥ तद्वा तदनुगा सरस्वती यायेति प्रोक्ता । "अन्नं याया" इत्युक्तेः । कथमेतदित्यत आह – **सैवेति** ॥ यायाशब्दं प्रकारान्तरेण निर्वक्ति – **यात्रेति** ॥ यात्रा नेत्रा नीयत इति याया ॥ "वाग् विराट्" इति वाक्यं व्याचष्टे – **सर्वेति** ॥ सा श्रीः । "अनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुप्कारः" इति वाक्यं व्याचष्टे – **अनिरुक्त इति** ॥ आद्यस्तुशब्दो नारायण एवानिरुक्तशब्दस्य विशेषद्योतनार्थः । द्वितीयस्त्ववधारणार्थः । "आत्मेहकारः" इत्युक्तेः पुनर्ग्रहणं कथमित्यतो व्याप्त इत्युक्तम् । तेन पूर्वोक्तः क्षेत्रज्ञ इति लभ्यते । यच्छब्दश्रवणात् तच्छब्दलाभः । अहूत एव पातीति हुबिति नामधेयं स्यान्नतु हुप्कार इतीत्यत आह – **हुबित्याक्रियत इति** ॥ नारायणेऽनिरुक्तशब्दं निर्वक्ति – **अनिरुक्त इति** ॥ अवाच्यत्वात् साकल्येन वक्तुमशक्यत्वात् । सञ्चरशब्दस्य प्रमाणेनाव्याख्याततत्वात् तस्यान्यपरत्वप्रतीतिनिरासाय तं व्याचष्टे – **सम्यगिति** ॥ स एव हरिरेव ॥

**॥ ततश्चायं खण्डार्थः ॥**

अयं पृथिवी लोकस्तदभिमानी हावुकारः हूयतेऽत्राग्निहोत्रादीति हाव्वित्युच्यते । हाव्वित्याक्रियमाणत्वाद्धावुकारः । वायुर्मुख्यवायुर्हायिकारः । हेत्याश्चर्ये । आश्चर्यवदायातीति हायीत्युच्यते । अथवा हेति सुखमुच्यते । तदापयति सुखकर्तेति यावत् । तस्माद्धायीत्युच्यते ।

कारप्रत्ययार्थः पूर्ववत् । चन्द्रमा अथकारः । चन्द्रप्रकाशस्य सूर्यप्रकाशा-नन्तर्यात् । आत्मा क्षेत्रज्ञो विष्णुरिह्कारः । सर्वसामीप्यात् । अग्निरीकारः इन्धनात् ।

आदित्य ऊकारः उष्टितः आतपदाहात् । नितरामाह्वयन्त्येनमिति निह्वनामक इन्द्र एकारः । एतीति हेतोः । विश्वे देवा औहोयिकारः । उच्चत्वाद् विष्णुरुः प्रोक्तः तस्य सप्तमी औ इति । औ विष्णौ हूयन्ते मुक्ताविति औहोयिन इत्युच्यन्ते । प्रजापतिर्हिङ्कारः । निश्चयज्ञानरूप-त्वात् । प्राणः शरीरगो वायुः स्वरः स्वे विष्णौ जीवं रमयतीति स्वर-नामकः । अन्नमन्नाभिमानिनी सरस्वती याया नित्यगतेर्वायुर्ययिरित्युच्यते । तद्गतत्वाद् यायेत्युच्यते । यात्रा नियन्त्रा प्राणेन नीयत इति वा यायेत्यु-च्यते । वाक् सर्ववागभिमानिनी श्रीर्विराट् विशेषेण राजनाद् विराडुक्ता । अनिरुक्तः साकल्येन निर्वक्तुमशक्यत्वादनिरुक्तनामकः । सञ्चरः सम्यक् चरतीति सञ्चरनामको व्याप्तो नारायणस्त्रयोदशः स्तोभः । कोऽसौ हुप्कारः आहूत एव पातीति हुप् । हुबित्यनेनाक्रियमाणत्वादित्यर्थः । एवंवेत्तुः फलमाह – **दुग्ध इति** ॥ व्याख्यातमेतत् । विद्यार्थस्य सर्वाध्यायार्थस्य वाऽवधारणार्था द्विरुक्तिः ॥१ ॥ इति त्रयोदशः खण्डः ॥ १३ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य
च्छान्दोग्योपनिषद्भाष्यस्य टीकायां श्रीमद्वेदव्यासतीर्थपूज्यपादशिष्य-
वेदेशभिक्षुविरचितायां पदार्थकौमुद्यां प्रथमोऽध्यायः ॥ १ ॥

***

## अथ द्वितीयाध्यायस्य प्रथमः खण्डः

॥ हरिः ॐ ॥

*साधु सामपदयोः समानार्थकत्वम्*

ॐ समस्तस्य खलु साम्न उपासनं साधु यत् खलु साधु तत् सामेत्यचक्षते यदसाधु तदसामेति ॥ १ ॥
तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुर-साम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥
अथोताप्याहुः साम नो बतेति यत् साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥
स य एतदेवंविद्वान् साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥ खण्डः१ ॥

भाष्यम्

समस्तस्य पूर्णस्य साधुत्वात् सामनाम्नो विष्णोरुपासनं साधु । सारत्वेन मेयं साम । सारत्वेन धार्यं साध्वित्येक एवार्थः।

'साधुत्वात् सामनामानं समस्तगुणपूर्तितः ।
समस्तं य उपासीत नारायणमनामयम् ।
[1]सर्वसाम्नां देवतेति स मुक्तः साधुधर्मभाक् ॥' इति साम-संहितायाम् ॥ १ ॥

पदार्थकौमुदी

भाष्यार्थः

प्रद्युम्नादिस्वरूपेण हिङ्काराद्यभिधं परम् ॥

१. 'सर्वनाम्नां' प्रचलितपाठान्तरम् ।

**समस्तसामगं वन्दे सामनामानमीश्वरम् ॥**

सामैकदेशोद्गीथस्तोभनिष्ठामुपास्तिमुक्त्वा पञ्चभक्तिकसप्तभक्तिक-समस्तसामनिष्ठामुपास्तिमाहानेनाध्यायेन । तत्र समस्तस्यैव साम्न उपासनं कर्तव्यमिति भावेनैतत् स्तौति – **समस्तस्येति प्रथमखण्डेन** ॥ तत्राऽदि-वाक्यं समस्तस्य साम्नः सामवेदस्योपासनं पठनादि साध्वित्युच्यत इति प्रतीतिनिरासाय व्याचष्टे– **समस्तस्येति** ॥ साधु शोभनमित्यर्थः । साधुत्वं कथं सामशब्दप्रवृत्तिनिमित्तमित्यतः साधुसामशब्दयोरेकार्थत्वादिति भावेन तदुभयं निर्वक्ति – **सारत्वेनेति** ॥ सेत्यस्य सारत्ववाचकत्वादि-त्यर्थः । अनेन "यत् खलु साधु तत् सामेत्याचक्षते" इति, श्रुतौ यत् साधुसामशब्दयोः पर्यायत्वमुक्तं तद् विवृतं भवति । "समस्तस्य खलु साम्नः" इत्युपक्रमवाक्यस्योक्त एवार्थ इति भावेन "स य एतदेवं विद्वान् साधु सामेत्युपास्तेऽभ्याशो ह यदेनं साधवो धर्मा आ च गच्छेयुः" इत्युपसंहारवाक्यं व्याचष्टे – **साधुत्वादिति** ॥ "सर्वसाम्नां देवता"इति "सामनामानम्"इति सामशब्दस्यार्थान्तरम् ॥

**॥ ततश्चायं खण्डार्थः ॥**

समस्तस्य पूर्णस्य खलु वै साम्नः सामनाम्नो विष्णोरुपासनं साधु । कः सामशब्दार्थः ? यद्विशिष्टतया भगवदुपासनं साध्वित्यतः साधुत्वमेव सामशब्दार्थः । साधुसामशब्दयोः पर्यायत्वादिति भावेन तयोः पर्यायत्वं वृद्धप्रयोगेण समर्थयते – **यत् खल्विति** ॥ यत् खलु साधु तत् सामेत्या-चक्षते विद्वांसः । यदसाधु तदसामेत्याचक्षते । अतस्तयोः पर्यायत्वमिति भावः ॥ १ ॥

ननु विद्वांसोऽप्येवं किमर्थमाचक्षत इत्यतस्तत्रापि मूलभूतप्रयोग–दर्शनादित्याह – **तदुतेति** ॥ यद्वा, साधुसामशब्दयोरेकार्थत्वे वृद्धप्रयोगा-

न्तरमाह – **तदुतेति** ।। तदुत तत्रैव साधुसामशब्दयोरेकार्थत्व एवाऽन्येऽपि विद्वांस आहुः । किमाहुरित्यत आह – **साम्नेति** ।। "साम्नैनं भगवन्तमुपागात्" इति मन्त्रो यदाह तत्साधुनैनमुपागादित्येवाऽहेत्याहुः । "असाम्नैनमुपागात्" इति मन्त्रो यदाह तदसाधुनैनमुपागादित्येवाऽहेत्याहुः । एवं च सामासामशब्दयोः साधुत्वासाधुत्वार्थकत्वेन व्याख्यानात् साधुसामशब्दयोरेकार्थत्वमिति भावः ।। २ ।।

तत्रैव वृद्धान्तराणामपि प्रयोगं दर्शयति – **अथेति** ।। अथशब्दः पूर्वप्रयोगविच्छेदप्रदर्शकः । अप्युत अपि चाऽहुः । प्रकारान्तरेणापि ज्ञानिन आहुरित्यर्थः । साम नोऽस्माकं बत भवेदिति मन्त्रो यद् यस्मात् सामशब्दार्थः साधु भवति तत् तस्मात् साधु बतेत्येवाऽहेत्याहुः । "असाम नो बत" इति मन्त्रो यद् यस्माद् असाधु असामशब्दार्थो भवति तत् तस्मादसाधु बतेत्येवाऽहेत्याहुः । अत्रापि सामासामशब्दयोः साधुत्वासाधुत्वार्थकत्वेन व्याख्यानात् साधुसामशब्दयोः पर्यायत्वमिति भावः । एवं साधुत्वार्थकसामनामकत्वेन भगवदुपासकस्य फलमाह – **स य इति** ।। स प्रसिद्धो योऽधिकारी एतत्समस्तं सामैवं साधुत्वेन सामनामकतया विद्वान् साधु सामेत्युपास्ते एनमुपासकं प्रति साधवो धर्मा आगच्छेयुश्च उप च नमेयुरचञ्चलास्तिष्ठन्ति । उपनमेयुश्च भोग्यत्वेनोपतिष्ठन्तीति वा ।।३-४।।

**।। इति प्रथमः खण्डः ।।**

**उपनिषत् (खण्डः- २)**

*लोकेषु भगवदुपासना*

**लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ।। १ ।।**

**अथाऽवृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ।। २ ।।**

कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽवृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पञ्चविधꣳ सामोपास्ते ॥ ३ ॥ खण्डः-२ ॥

भाष्यम्

'नारायणाख्य उद्गीथ उद्गेयः प्रणवेन यत् ।
उद्गच्छन्ति यतोऽस्माद्वा वासुदेवादिमूर्तयः ॥
प्रथमावताररूपत्वाद् वासुदेवः परः पुमान् ।
प्रस्तावो निधनं चापि सङ्कर्षण उदाहृतः ॥
सङ्कर्षणो हि संहर्ता प्रद्युम्नः परमेश्वरः ।
हिङ्कार इति सम्प्रोक्तो हीति सृष्टिरुदीर्यते ॥
प्रसिद्धता हि सृष्टिः स्यादनिरुद्धः परो विभुः ।
प्रतिहार इति प्रोक्तः स हि कार्येष्विदं जगत् ॥
प्रतिप्रति हरेर्नित्यं मूर्तिप्रतिहृतेस्तथा ।
ते पृथिव्यादिषु सदा तन्नामानः प्रतिष्ठिताः ॥
पृथिवीत्यादिशब्दार्थास्ते हि मुख्यत ईरिताः ।
तत्सम्बन्धात् तदर्थत्वं पृथिव्यादेरमुख्यतः ॥
प्रथनादेव सस्यादेः पृथिवीत्वमुदाहृतम् ।
अग्नित्वमदनाच्चैव ह्यन्तरीक्षणयोगतः ॥
अभावाद् व्यवधानस्य त्वन्तरिक्षमितीर्यते ।
आदानादायुषश्चैव[1] स आदित्य उदीरितः ।

---

१. 'आयुषां चैव' ह.

**द्यौः क्रीडाकारणत्वाच्च तत् सर्वं हि परे हरौ ॥' इति च ।**
**'पञ्चात्मकं यो लोकेषु सदोपास्ते हरिं परम् ।**
**ऊर्ध्वाधःसंस्थितास्तस्य पञ्चैव दशमूर्तयः।**
**मोक्षादिकमभीष्टं यत् कल्पन्तेऽस्य सदैव हि ' इति च ॥ २ ॥**

**भाष्यार्थः**

लोकेषु पञ्चभक्तिकसामप्रतिपाद्यस्य भगवत उपास्तिमाह– **लोकेष्वित्यादिना** ॥ अत्र "पृथिवी हिङ्कारः" इत्यादिना सामानाधि– करण्येन पृथिव्यादीनां हिङ्काराद्यभेदः प्रतीयते । तदयुक्तम् । हिङ्कारादेः शब्दत्वेन पृथिव्यादित्वानुपपत्तेः । अत्र सङ्करः – पृथिवीदृष्ट्या "पृथिवी हिङ्कारः" इत्युपासीतेति व्याख्येयमित्याह । तदसत् । "लोकेषु पञ्चविधं सामोपासीत" इति प्रक्रमविरोधात् । नचोत्तरवाक्यानुसारेण लोकेष्वित्य- स्यापि प्रथमात्वेन विपरिणामः । "पञ्चविधं साम" इत्यस्य द्वितीया- न्तत्वेन लोका इत्यनेन सामानाधिकरण्यायोगेनानन्वयप्रसङ्गात् । इति- शब्दकल्पने चाश्रुतकल्पनाप्रसङ्गात् । हिङ्कारादौ पृथिव्यादिदृष्टे- र्मिथ्यादृष्टित्वेनानर्थहेतुत्वस्य वक्ष्यमाणत्वाच्च । अतोऽत्र सर्वत्र भगवदुपासनमेव कथ्यत इति भावेन खण्डं प्रमाणेनैव व्याचक्षाणस्तावदत्र बहुषु खण्डेषु सतां हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनशब्दानामर्थमाह – **नारायणाख्य इत्यादिना** ॥ अवतारक्रमानुसरणेन श्रुतिक्रमोल्लङ्घनम् । उद्गेय उच्चतया गातुं योग्यः । उद्गीथशब्दस्यार्थान्तरमाह– **उद्गच्छन्तीति** ॥ प्रस्तावशब्दार्थमाह – **प्रथमेति** ॥ प्रस्तावशब्दस्य प्रारम्भार्थत्वादिति भावः ॥ निधनशब्दार्थमाह – **निधनमिति** ॥ चापिशब्दाववधारणार्थौ । वासुदेव एव प्रस्तावः । सङ्कर्षण एव निधनमिति सम्बन्धः । तेन परोक्तार्थनिरासः । तत्र तं शब्दमुत्पादयति – **सङ्कर्षण इति** ॥ निधन-

शब्दश्च संहर्तृत्वार्थक इति भावः । हिङ्कारशब्दार्थमाह – **प्रद्युम्न इति** ॥ हीति कथं सृष्टिरुदीर्यत इत्यत उक्तम् – **प्रसिद्धता हीति** । प्रसिद्धता खलु हिशब्दार्थः । सृष्टिश्च प्रागसिद्धानां प्रसिद्धतैव । अतो हीति सृष्टिरुदीर्यते । तथाच हिं सृष्टिं करोतीति व्युत्पत्त्या सृष्टिकर्ता प्रद्युम्नो हिङ्कार इति प्रोक्त इति भावः । प्रतिहारशब्दार्थमाह – **अनिरुद्ध इति** ॥ स हि प्रति प्रतिकार्येष्विदं जगद्धरेदित्यनेन स्थितिकर्तृत्वमुच्यते । मूर्तिप्रतिहृतेः स्वमूर्तीनां स्वात्मन्येकीकरणादिति प्रतिहारशब्दस्यार्थान्तरम् । तथाशब्दः समुच्चये ।

अस्त्वेवं हिङ्कारादिनामको भगवान्, तथाऽपि "पृथिवी हिङ्कारः" इत्यादिनोक्तं पृथिव्याद्यात्मकत्वं कथं तस्येत्यतः खण्डं व्याचष्टे – **ते पृथिव्यादिष्विति** ॥ ते प्रद्युम्नाद्याः । अनेन "पृथिवी हिङ्कारः" इत्यादौ पृथिव्यादि शब्दाः "लोकेषु" इत्युपक्रमानुसारेण सप्तम्यर्था इत्युक्तं भवति । अनन्वयपरिहाराय प्रतिष्ठिता इति शेषोक्तिः । "तन्नामानः" इत्यनेन पृथिव्यादिशब्दानां प्रथमान्तत्वेऽपि नानुपपत्तिरिति सूचितम् । पृथिव्यादिषु स्थितेः प्रद्युम्नाद्याः पृथिव्यादिनामान इत्युक्ते पृथिव्यादय एव तच्छब्दमुख्यार्थाः, भगवन्मूर्तयस्तु तत्सम्बन्धात् पृथिव्यादिनामिका इति प्रतीतावाह – **पृथिवीत्यादीति** ॥ ते प्रद्युम्नाद्याः । के पृथिव्यादिशब्दार्थाः? ये भगवति मुख्या अन्यत्रामुख्या इत्यतः पृथिव्यादिशब्दान्निर्वक्ति– **प्रथनादिति** ॥ चशब्दोऽवधारणार्थ उत्तरत्र सम्बध्यते । अग्ग्रत्वादि-निमित्तान्तरसमुच्चये वा । "अन्तरीक्षणयोगत अन्तरिक्षमितीर्यते" इति सम्बन्धः । अन्तरीक्षणं किं परोक्षेण ? नेत्युक्तम्– **अभावाद् व्यवधान-स्येति** ॥ आयुषश्चेति चशब्दो रससमुच्चयार्थः । कारणत्वाच्चेति चशब्दोऽ-वधारणार्थः । "कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽवृत्ताश्च" इत्यत्र

लोकानामेवाभीष्टकल्पकत्वमुच्यत इति प्रतीतिनिरासाय प्रमाणेनैव तद् व्याचष्टे – **पञ्चात्मकमिति** ।। "मोक्षादिकमभीष्टम्" इति शेषोक्तिः ।।

## ।। ततश्चायं खण्डार्थः ।।

लोकेषु पृथिव्यादिषु पञ्चविधा हिङ्काराद्याः यस्य तत्पञ्चविधं साम सामनामकं ब्रह्मोपासीत । कुत्र कस्योपासनं कर्तव्यमित्यतस्तद्विशदमाह – **पृथिवीत्यादिना** ।। हिङ्कारः सृष्टिकर्तृत्वाद्धिङ्कारनामकः तन्नामकसामभक्तिप्रतिपाद्यः प्रद्युम्नः पृथिवी-सस्यादेः प्रथनात् पृथिवीनामकः पृथिव्यां स्थितश्च । प्रस्तावः प्रथमावताररूपत्वात् प्रस्तावनामकः प्रस्तावरूपसामभक्तिप्रतिपाद्यो वासुदेवोऽग्निरदनादग्निनामकोऽग्निस्थश्च । उद्गीथः प्रणवेनोद्गेयत्वाद् वासुदेवादिमूर्त्युद्गमावधित्वाद् वोद्गीथनामोद्गीथाख्यसामभक्तिप्रतिपाद्यो नारायणोऽन्तरिक्षमन्तरीक्षणादन्तरिक्षनामकोऽन्तरिक्षस्थश्च । प्रतिहारः कार्येषु जगतः प्रति प्रति हरणान्नित्यं मूर्तिप्रतिहृतेर्वा प्रतिहारनामकः प्रतिहाररूपसामभक्तिप्रतिपाद्योऽनिरुद्ध आदित्य आयुष आदानाद् आदित्यनामाऽऽदित्यस्थश्च । निधनं संहारान्निधननामा निधनाख्यसामभक्तिप्रतिपाद्यः सङ्कर्षणो द्यौः क्रीडाकारणत्वाद् द्युनामा द्युस्थश्च । इत्युक्तप्रकारेणोर्ध्वेषु उत्तरोत्तरेषु लोकेषु पञ्चविधं सामोपासीतेत्यन्वयः ।। १ ।।

अथाऽवृत्तेषु प्रतिलोमेषु लोकेषु पञ्चविधं सामोपासीत । तदेव विशदयति – **द्यौरित्यादिना** ।। योजना तु पूर्ववदेव ।।२।।

एवं ज्ञात्वोपासकस्य फलमाह – **कल्पन्त इति** ।। योऽधिकारी एतत् प्रद्युम्नादिरूपं पञ्चविधसामनामकं ब्रह्मैवमुक्तरीत्या विद्वांल्लोकेषूर्ध्वेष्वावृत्तेषु च पञ्चविधं सामोपास्ते अस्मा अस्योपासकस्य "अभीष्टम्" इति शेषः । ऊर्ध्वश्चाऽवृत्ताश्चोर्ध्वाधः संस्थिता लोकाः प्रकाशरूपत्वाल्लोक-

नामानः प्रद्युम्नाद्याः पञ्चैव दशमूर्तयः कल्पन्ते कल्पयन्तीत्यर्थः ।। ३ ।।

॥ इति द्वितीयः खण्डः ॥

## उपनिषत् (खण्डः- ३ )

*वृष्टौ भगवदुपासना*

**वृष्टौ पञ्चविधꣳ सामोपासीत पुरोवातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥ उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधꣳ सामोपास्ते ॥ २ ॥ ३ ॥**

### भाष्यम्

**'पञ्चरूपं तु यो विष्णुं पुरोवातादिषु स्थितम् ।**
**उपास्ते वृष्टिरस्मै स्याद् वर्षयत्यस्य मुक्तिगान् ।**
**सर्वभोगांश्च भगवान् पञ्चरूपी जनार्दनः' इति च ॥ ३ ॥**

### पदार्थकौमुदी

### भाष्यार्थः

एवं लोकेषु पञ्चविधभगवदुपास्तिमुक्त्वा लोकस्थितेर्वृष्टिनिमित्त–कत्वाद् वृष्टौ पञ्चविधभगवदुपास्तिः कर्तव्येत्याह – **वृष्टाविति** ।। अयमपि खण्डो भगवत्पर एवेति ज्ञापनाय ''वर्षति हास्मै'' इत्यादिफलवाक्यं प्रमाणेनैव व्याचष्टे – **पञ्चरूपमिति** ।। वर्षतीत्यस्यार्थः – **वृष्टिरस्मै स्यादिति** ।। वर्षयतीत्यस्य कर्मानुक्तेः ''मुक्तिगान् सर्वभोगान्''इत्युक्तम् । वर्षयति चेति चशब्दान्वयः । मुक्तिगांश्चेति वा ।

*// अत्र खण्डार्थः पूर्वोक्तरीत्या स्पष्टः । एवमुत्तरत्रापि । अस्पष्टांशस्तु*

*व्याख्यास्यते । अत्र पुरोवातादिशब्दानां भगवति व्युत्पत्तिः प्रमाणान्तरेण द्रष्टव्या ॥*

॥ इति तृतीयः खण्डः ॥

उपनिषत् (खण्डः -४ )

*अप्सु भगवदुपासना*

**सर्वास्वप्सु पञ्चविधꣳ सामोपासीत मेघो यत् सम्प्लवते स हिङ्कारो यद् वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥ १ ॥**

**न हाप्सु प्रैत्यप्सुमान् भवति य एतदेवंविद्वान् सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥ २ ॥ खण्डः - ४ ॥**

भाष्यम्

'अप्सु पञ्चविधोपासी यो नारायणवान् भवेत् ।
न चास्य मृतिरप्सु स्यादप्सुषद् भगवान् हरिः ॥' इति च ।
अप्सु स्थितनारायणवान् मुक्तो भवतीत्यर्थः ।
अपः सूत इत्यप्सूर्भगवान् । दीर्घलोपेनाप्सुमानिति वा ॥ ४ ॥

पदार्थकौमुदी

भाष्यार्थः

एवं वृष्टौ पञ्चविधभगवदुपास्तिमभिधाय वृष्टिपूर्वकत्वात् सर्वासामपां तत्र भगवदुपास्तिकर्तव्यतामाह – **सर्वास्विति** ॥ अयमपि खण्डो भगवत्पर इति ज्ञापनाय ''न हाप्सु प्रैत्यप्सुमान् भवति'' इति फलवाक्यं प्रमाणेनैव व्याचष्टे– **अप्स्विति** ॥ पञ्चविधस्य भगवत उपासाऽस्यास्तीति

तथोक्तः । अप्सुमानित्यस्यार्थः – **नारायणवानिति** ॥ ''न हाप्सु प्रैति'' इत्यस्यार्थः– **नचेति** ॥ तत्र हेतुः – **अप्सुषदिति** ॥ यद्वाऽप्सुमानित्येतन्नारायणवानिति व्याख्यातम् । तत्कथं शब्दतो लब्धमित्यत आह – **अप्सुषदिति** ॥ यतो भगवान् हरिरप्सुषदतोऽप्सुमानित्यस्य नारायणवानिति व्याख्यानमुपपन्नमित्यर्थः । नन्वेवमप्सुषद्वानिति स्यान्न त्वप्सुमानितीत्यतो मध्यमपदलोपीसमासोऽयमित्याह – **अप्सुस्थितनारायणवानिति** ॥

नन्वन्तर्यामितया नारायणवत्त्वं सर्वसाधारणमिति कथमिदमुपासनफलमित्यतस्तदर्थमाह – **मुक्त इति** ॥ नन्वप्सुमानित्यत्राप्स्वित्यस्य सप्तम्यन्तत्वात् कथं समासः ? समासे तु अम्मानित्येव प्रयोगापत्तेरिति चेत् । न । सप्तम्या अलुक्त्वाङ्गीकारात् । अथवा नाप्स्वित्येतत् सप्तम्यान्तम् । येनालुक्त्वं मध्यमपदलोपो वाऽऽश्रयणीयः । किन्तु योगेन भगवद्वाचकमिति पक्षान्तरमाह – **अप इति** ॥ तद्वानप्सुमानिति योज्यम् । एवं तर्ह्यप्सूमानिति दीर्घः स्यादित्यत उक्तम्– **दीर्घलोपेनेति** ॥ छान्दसत्वादिति भावः ।

**ततश्चायं खण्डार्थः**

सम्प्लवते सञ्चरति । नानादेशस्थ एकदेशस्थो भवतीति यावत् ॥१॥

**॥ इति चतुर्थः खण्डः ॥**

## उपनिषत् (खण्डः -५ )

*ऋतुषु भगवदुपासना*

**ऋतुषु पञ्चविधꣳ सामोपासीत वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम् ॥ १ ॥**

**कल्पन्ते हास्मै ऋतव ऋतुमान् भवति य एतदेवं विद्वान् ऋतुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥ ५ ॥**

## भाष्यम्

हेमन्तशिशिरयोरैक्येन पञ्चत्वम् ।

'ऋतुनामानमृतुगमृतत्वाद्[1] ऋतुनामकः ॥

इत्युपासीत यो विष्णुं पञ्चात्मानममुष्य हि ।

मोक्षादीन् कल्पते चास्य ऋतुसंस्थो जनार्दनः ।

रक्ष्यत्वात् तेन तद्वांश्च सदैव स्यादुपासकः ॥' इति च ।

'वासस्य सुखकारित्वाद् वसन्तः पुरुषोत्तमः ।

नीरादेर्गरणाद् ग्रीष्मो वर्षणाद् वर्ष उच्यते ।

शं रातीति शरत् प्रोक्तो हेमन्तो हिमकारणात् ॥' इति च ॥५॥

## पदार्थकौमुदी

### भाष्यार्थः

सर्वासामपामुत्पत्त्यादि ऋत्वधीनमिति ऋतुषु भगवदुपास्तिकर्तव्यतामाह – **ऋतुष्विति** ॥ ननु ऋतूनां षट्त्वान्मूर्तीनां पञ्चत्वात् कथम् ''ऋतुषु पञ्चविधम्'' इत्युक्तिरित्यत आह– **हेमन्तेति** ॥ ऐक्येनैक्यविवक्षया । अयमपि खण्डो भगवत्पर इति ज्ञापनाय पूर्ववत् ''कल्पन्ते हा स्मा ऋतवो ऋतुमान् भवति''इत्यादिफलवाक्यं प्रमाणेन व्याचष्टे – **ऋतुनामानमिति** ॥ ऋतुत्वाद् ऋतूनां ऋतुत्वप्रदत्वादित्यर्थः । सर्वशास्त्रावगतत्वादिति वाऽर्थः । अमुष्य विष्णोः । पञ्चात्मानं पञ्चस्वरूपम् । ''कल्पन्ते हास्मा ऋतवः'' इत्यत्र मोक्षादीनिति शेषोक्तिः ।

१. 'ऋतुत्वात्' ग.

कल्पते दातुं समर्थो भवति । अस्योपासकस्येत्यनेनास्मा इति चतुर्थी षष्ठ्यार्थेत्युक्तं भवति । प्रसिद्धर्तुमत्त्वमृतुनामकभगवद्धत्त्वं वा सर्वसाधारणमिति कथमिदं फलमित्यत उक्तम् – **रक्ष्यत्वादिति** ॥ हिङ्कारादिनामकप्रद्युम्नादीनां वसन्ताद्यभेदोऽभिधीयत इति भ्रान्तिनिरासाय भगवति वसन्तादिशब्दनिर्वचनपरं प्रमाणमेवोदाहरति – **वासस्येति** ॥ स्ववासस्य जीवसुखकारित्वादित्यर्थः । वसतेः पचाद्यच् वसतीति वसः तनोतेरौणादिको डप्रत्ययः । तनोतीति तः । ''वर्णागमो वर्णविपर्ययश्च'' इत्यादिना पूर्वपदस्य नकारागमः । ''नीरादेः'' इत्येतस्य वर्षणादित्यनेनापि सम्बन्धः । राति ददाति । रा दान इत्यतो डत् । हिमं तनोतीति हेमन्तः ॥ ५ ॥ इति पञ्चमः खण्डः ॥[१]

## उपनिषत् (खण्डः ६ )

*पशुषु भगवदुपासना*

**पशुषु पञ्चविधꣳ सामोपासीताजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनं भवन्ति हास्य पशवः पशुमान् भवति य एतदेवं विद्वान् पशुषु पञ्चविधꣳ सामोपास्ते ॥ ६ ॥**

### भाष्यम्

'पालनात् सुखरूपत्वात्[२] पशुनामा जनार्दनः ।
मुक्तस्तद्वान् भवत्येव पशुषूपासको हरेः ॥' इति च ।

[३]'यज्ञेनाञ्चनहेतुत्वादजस्थो भगवानजः ।

---

१. एतत्खण्डमारभ्य सप्तमखण्डपर्यन्तस्यार्थः पूर्वोक्तरीत्या स्पष्ट इति न व्याख्यातः।

२. 'सुखकारित्वात्' प्र. ३. 'यज्ञोदजनिहेतुत्वात्' - हृ.पाठः ।

**अविस्थस्त्वविरेवोक्त ऊर्णया शीततोऽवनात् ॥**

**गौश्च सद्गतिहेतुत्वाद् गोस्थः स पुरुषोत्तमः ।**

**अश्वश्चैवाऽऽशुगन्तृत्वात् पुरुषः पूर्तिहेतुतः ॥' इति च ।**

**भवन्ति हास्य पशव इति प्रसिद्धपशव एव । अजा इत्यादिबहुवचनं बहुरूपत्वाद् भगवतः ॥ ६ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

ऋतुषु सम्यग्वृत्तेषु पशवोऽपि सम्यगवस्थिता इति पशुषु भगवदुपास्तिः कर्तव्येत्याह – **पशुष्विति** ॥ अयमपि खण्डो भगवत्पर इति ज्ञापनाय ''भवन्ति हास्य पशवः पशुमान् भवति'' इति फलवाक्ये पुनरुक्तिपरिहाराय पशुमानित्येतत्तावत् प्रमाणेनैव व्याचष्टे – **पालनादिति** ॥ पालनात् पः सुखरूपत्वाच्छुः उकारस्ताच्छील्यार्थः । अतिप्रसङ्गवारणाय तद्वानित्यस्य व्याख्यानम् – **मुक्त इति** ॥ हिङ्कारादिनामकप्रद्युम्नादीनामजादिपश्वभेद उच्यत इति भ्रान्तिनिरासायाजादिशब्दनिर्वचनपरं प्रमाणमेवोदाहरति – **यज्ञेनेति** ॥ अजस्थो भगवानज इत्युक्तः । यज्ञेन यज्ञद्वारा सद्गतिहेतुत्वादित्यर्थः । अज गतौ क्षेपणे चेति धातुः । गतिपूजार्थस्याञ्चुधातोश्चकारस्य स्ववर्गतृतीयजकारादेशेऽनुस्वारस्य च लोपे च यति प्रवर्तत इति यज्ञेन पूजनेनेति यज्ञेनाञ्चनहेतुत्वादजस्थो भगवानज इत्यर्थः । यजधातोर्यकारलोपेऽज इति भवति । तथा च यजत्यनेनेति यज्ञेनाञ्चनहेतुत्वादज इति वाऽर्थ इत्याहुः । अविस्थ एवेति सम्बन्धः । अवनात् सर्वरक्षणाद् अविरुक्तः । अविस्थस्य कथं रक्षकत्वमित्यत उक्तम् – **ऊर्णयेति** ॥ कम्बलादिना शीततो रक्षणादित्यर्थः । आशुगन्तृत्वादेवेति सम्बन्धः ॥ **पुरुष इति** ॥ नच ''पशुषु''

इत्युपक्रम्य "पुरुषो निधनम्"इति कथमुच्यते ? पुरुषस्यापशुत्वादिति वाच्यम्। यज्ञविशेषे तस्यापि पशुत्वमभिप्रेत्य तथोक्तेः।

ननु पशुमानित्यस्य पशुनामकभगवद्वानित्यर्थत्वेऽपि "भवन्ति हास्य पशवः"इत्यनेन पुनरुक्तिः स्यादेव । तस्यापि तदर्थकत्वप्रतीतेरित्यत आह – **भवन्तीति** ॥ एवं च भिन्नार्थकत्वान्न पुनरुक्तिरिति भावः । नन्वजादिशब्दानां भगवद्वाचकत्वेऽजा इत्यादिबहुवचनानुपपत्तिः । "एकमेवाद्वितीयम्" इति श्रुत्या भगवत एकत्वावगमादित्यत आह – **अजा इत्यादीति** ॥ उपपद्यत इति शेषः ॥ इति षष्ठः खण्डः ॥ ६ ॥

## उपनिषत् (खण्डः -७)

### *इन्द्रियेषु भगवदुपासना*

**प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिङ्कारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयांसि [१]वैतानि परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥ ७ ॥**

### *भाष्यम्*

'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् ।
परोवरं परं तस्मात् प्रोक्तं पारोवरीयकम्[२] ॥
परोवरीयांस्येतानि विष्णोः रूपाणि सर्वशः ।

१. 'वा एतानि' ह. २. 'परोवरीयकम्' ह. ।

**तेषां विशेषो नैवास्ति सदा तानि समानि हि ।**
**अत्युत्तमोत्तमान्येतान्यन्यस्मात् सर्वतोऽपि तु ।।' इति च ।**
**'प्राणो नेतृत्वतो विष्णुर्वाक् सर्ववचनात् सदा ।**
**चक्षुश्च दर्शनान्नित्यं श्रोत्रं श्रवणहेतुतः ।**
**मनो मन्तृत्वतश्चास्य ह्येक एव तु पञ्चधा ।।' इति च ।**
**परोवरीयो ब्रह्मास्य भवति सर्वापेक्षितदातृत्वात् ।। ७ ।।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं पशुषु भगवदुपास्तिमुक्त्वेन्द्रियाणां पशुपुरुषाश्रितत्वादिन्द्रियेषु पञ्चविधभगवदुपास्तिकर्तव्यतामाह – **प्राणेष्विति ।।** अत्र ''परोवरीयः सामोपासीत''इत्यत्र परोवरीयःशब्दस्य विवक्षितमर्थं प्रमाणेनाऽह – **परस्मादिति ।।** परस्मादुत्तमं परो इति प्रोक्तम् । उकारस्योत्तमार्थत्वात् ततः परं परोवरमिति प्रोक्तम् । वरशब्दस्यापि तथात्वात् । तस्मात् परं परोवरीयकमिति प्रोक्तम् । अनयोर्मध्ये इदमतिशयेन परोवरं परोवरीयः । परोवरीय एव पारोवरीयकमित्यर्थः । यद्यप्यधिकं वरीयान् परोवरीयानिति पूर्वं व्याख्यातम् । तथाऽपि तत्र सम्मुग्धतया स्वेनैव व्याख्यातमत्र तु वर्णार्थकथनपुरःसरं प्रमाणेन व्याख्यातमिति भेदः । भिन्नभिन्नाधिष्ठानेषु स्थितानां प्रद्युम्नादिरूपाणां नीचोच्चभावो न मन्तव्य इति भावेन प्रवृत्तं ''परोवरीयांसि वा एतानि'' इति वाक्यं हिङ्कारादिसामभक्तीनां परोवरीयस्त्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे – **परोवरीयांसीति ।।** ''एतानि'' इत्यनेन न प्राणस्थपञ्चरूपाणामेव परामर्शः । किन्तु लोकादिस्थानामपीति भावेन ''सर्वशः'' इत्युक्तम् । श्रुतौ वैशब्दश्रवणात् परोवरीयांसीति सावधारणम् । अत एव तद्व्यावर्त्यमाह– **तेषामिति ।।**

तत्र हेतुमाह – **सदेति** ॥ सदेत्यस्य पूर्वत्रापि सम्बन्धः । ननु समत्वे परोवरीयस्त्वं कथमित्यतस्तेषां परस्परं समत्वेऽप्यन्यस्मात् परोवरीयस्त्वमुपपद्यत इत्याह – **अत्युत्तमेति** ॥ हिङ्कारादिनामकप्रद्युम्नादेः प्राणाद्यभेदः कथ्यत इति प्रतीतिनिरासाय भगवति प्राणादिशब्दप्रवृत्तिं प्रमाणेन दर्शयति – **प्राण इति** ॥ अस्य प्रमाणप्रमितस्य सर्वस्य मन्तृत्वतः नेतृत्वत इत्यादावप्यस्य सम्बन्धः ।

ननु "परोवरीयो हास्य भवति" इति फलवाक्ये परोवरीयःशब्दो मोक्षादिफलपरोऽङ्गीकार्यः । तत्कथं पूर्वं भगवत्परत्वमङ्गीक्रियते? नह्येकस्मिन्नेव प्रकरणे श्रुतस्यैकस्यैव शब्दस्यार्थद्वयकल्पनं युक्तमित्यत आह – **परोवरीय इति** ॥ ननु परोक्तरीत्या परोवरीयो हास्य जीवनं भवतीति कुतो न व्याख्यातम् । श्रुतावपि पूर्वं तथोक्तत्वादिति चेत् । न । अस्मिन् प्रकरणे "अप्सुमान् भवति" "ऋतुमान् भवति" "पशुमान् भवति"इति भगवद्वत्त्वस्यैव फलत्वेनोक्तत्वात् । जीवनशब्दाध्याहारप्रसङ्गाच्च । ब्रह्मवत्त्वमतिप्रसक्तं कथं फलमित्यत आह – **सर्वेति** ॥ स उपासकः परोवरीयसोऽधिकं वरीयसो लोकान् वैकुण्ठानन्तासनश्वेतद्वीपाख्यान् जयति प्राप्नोति । उपसंहरति – **इति त्विति** ॥ इत्येवं प्रकारेण पञ्चविधस्य पञ्चरूपस्य भगवत उपास्तिरुक्तेति शेषः ॥

**॥ इति सप्तमः खण्डः ॥**

## उपनिषत् (खण्डः ८ )

*वाक्येषु सप्तविधसामप्रतिपाद्यभगवदुपासना*

**अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत यत्किञ्च वाचो हुमिति स हिङ्कारो यत् प्रेति स प्रस्तावो यदेति स आदिर्यदुदिति स**

उद्गीथो यत् प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनं दुग्धेऽस्मै वाग् दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान् वाचि सप्तविधꣳ सामोपास्ते ॥ १ ॥ ख० ८ ॥

भाष्यम्

'आदिः कल्पादिहेतुत्वात् क्रोडात्मा केशवः स्वयम् ।
दुष्टोपद्रवकर्तृत्वान्नरसिंह उपद्रवः ॥' इति च ।
'हुङ्कारसहिते वाक्ये प्रद्युम्नस्तु सदा स्थितः ।
आकारयुक्ते वाराहो वासुदेवः प्रसंयुते ॥
नारायणस्तथोद्युक्ते प्रतियुक्तेऽनिरुद्धकः ।
उपयुक्ते नृसिंहश्च [१]नीतिसङ्कर्षणस्तथा ॥
अभावे यावदेते स्युस्तावत् तद्दैवतं स्मृतम् ।
एवं सप्तविधं विष्णुं य उपास्ते परं विभुम्[२] ।
वाङ्नामा भगवांस्तस्य भवेत् सर्वार्थदोहकृत् ॥' इति च ॥ ८ ॥

## पदार्थकौमुदी

### भाष्यार्थः

एवं पञ्चविधभगवदुपास्तिमुक्त्वा सप्तविधभगवदुपास्तिमाह – **अथेत्यादिखण्डत्रयेण** ॥ हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधननामकभगवन्मूर्तिविशेषस्य निरूपितत्वाद् अत्राऽधिक्येनोक्ते आद्युपद्रवनामके मूर्ती प्रमाणेनाऽह – **आदिरिति** ॥ हिङ्कारादिनामकप्रद्युम्नादीनां हुङ्काराद्यभेद उच्यत इति प्रतीतिनिरासाय ''यत्किञ्च वाचो हुमिति स हिङ्कारः''

---

(१) 'नीतिः सङ्कर्षणः' ह. (२) 'सदा विभुम्' ग.

इत्यादिवाक्यं व्याचष्टे – **हुङ्कारेति** ॥ एतेन हुंप्रेत्यादिशब्दा हुङ्कारादि-मात्रपरा इत्यपि परास्तम् । तथा सति "वाचि सप्तविधं सामोपासीत" इति प्रतिज्ञार्थासिद्धेः । "यदेति स आदिः" इति वाक्यं व्याचष्टे – **आकारेति** ॥ वाक्ये स्थित इत्यनुवर्तते । "यत् प्रेति स प्रस्तावः" इत्येतद् व्याचष्टे – **वासुदेव इति** ॥ "यदुदिति स उद्गीथः" इत्येतद् व्याचष्टे– **नारायण इति** ॥ उदित्यनेन युक्ते वाक्ये । "यत्प्रतीति स प्रतिहारः" इति वाक्यं व्याचष्टे – **प्रतियुक्त इति** ॥ "यदुपेति स उपद्रवः" इत्येतद् व्याचष्टे – **उपयुक्त इति** ॥ "यन्नीति तन्निधनम्" इत्यस्यार्थमाह – **नीतीति** ॥ नीतियुक्ते । ननु यस्मिन् वाक्ये हुङ्कारादयो न सन्ति तद्वाक्यं किंदैवतमित्यत आह – **अभाव इति** ॥ हुङ्कारादिष्वेकमुपक्रम्य मध्ये हुङ्कारादिष्वेकोक्त्यभावे यावदेते हुङ्कारादयः स्युस्तावद्वाक्यं तद्दैवतमुपक्रान्तदैवतं स्मृतमित्यर्थः । "दुग्धेऽस्मै वाग्दोहम्"इति फलवाक्यं केवला वागेव कामदोग्ध्रीति प्रतीतिनिरासाय व्याचष्टे – **एवमिति** ॥

**॥ इति अष्टमः खण्डः ॥**

## ततश्चायं खण्डार्थः

अथ पञ्चविधभगवदुपास्तिकथनानन्तरं सप्तविधस्य भगवत उपास्तिः कथ्यत इति शेषः । तत्राऽदौ शब्दसमूहे सप्तविधभगवदुपास्तिमाह – **वाचीति** ॥ वाचि शब्दसमूहे सप्तविधं साम सामनामकं ब्रह्मोपासीत । कथम् ? हिङ्कारः प्रद्युम्नः । स कः ? यत्किञ्च वाचो हुम् इति । हुङ्कारसहितं यद्वाक्यं तत्र स्थित इत्यर्थः । प्रस्तावो वासुदेवः । स कः ? – **यत्प्रेति** ॥ प्रशब्दोपेतं यद्वाक्यं तत्र स्थित इत्यर्थः । आदिः कल्पादिहेतुत्वादादि-नामाऽऽदीति सामभक्तिप्रतिपाद्यो वराहः । स कः ? **यदेति** ॥ आकार-

युक्तं यद्वाक्यं तत्र स्थित इत्यर्थः ।

उद्गीथो नारायणः । स कः ? **यदुदिति** ॥ उच्छब्दयुक्तं यद्वाक्यं तत्र स्थित इत्यर्थः । प्रतिहारोऽनिरुद्धः । स कः ? **यत्प्रतीति** ॥ प्रतिशब्दयुक्तं यद्वाक्यं तत्र स्थित इत्यर्थः । उपद्रवो दुष्टोपद्रवकर्तृत्वाद् उपद्रवनामोपद्रवाख्यसामभक्तिप्रतिपाद्यो नृसिंहः । स कः ? **यदुपेति** ॥ उपशब्दयुक्तं यद्वाक्यं तत्र स्थित इत्यर्थः । निधनं सङ्कर्षणाख्यं रूपम् । तत् किं ? **यन्नीति** ॥ निशब्दयुक्तं यद्वाक्यं तत्र स्थित इत्यर्थः ।

एवमुपासकस्य फलमाह – **दुग्ध इति** ॥ योऽधिकारी एतद् सप्तविधं ब्रह्मैवं वाचि स्थितत्वेन विद्वान् वाचि सप्तविधं सामोपास्तेऽस्मै अस्योपासकस्य वाक् वाङ्नामा भगवान् । यो वाचो दोहः फलरूपो मोक्षादिस्तं दोहं दुग्धे स उपासको अन्नवान् भवति । न केवलमन्नवानेव । किन्त्वन्नादश्च भवति ॥ १ ॥

॥ इति अष्टमः खण्डः ॥

## उपनिषत् (खण्डः-९)

*आदित्ये सप्तरूपिभगवदुपासना*

**अथ खल्वमुमादित्यँ सप्तविधं सामोपासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥**

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात् तस्य यत् पुरोदयात् स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात् ते हिङ्कुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नः ॥ २ ॥**

**अथ यत् प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात् ते प्रस्तुतिकामाः प्रशँसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥**

अथ यत्सङ्गववेलायाꣳ स आदिस्तदस्य वयाꣳस्यन्वायत्तानि तस्मात् तान्यन्तरिक्षेऽनारम्बणान्यादायाऽत्मानं परिपतन्त्यादिभाजिनो ह्येतस्य साम्नः ॥ ४ ॥

अथ यत् सम्प्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात् ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥

अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात् स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात् ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ६ ॥

अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवस्तदस्याऽरण्या अन्वायत्तास्तस्मात् ते पुरुषं दृष्ट्वा कक्षꣳ श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥

अथ यत् प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात् तान् निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ॥ ८ ॥ खण्डः९॥

भाष्यम्

'आदित्यस्थं परं विष्णुं ध्यायेदादित्यनामकम् ।
सप्तरूपं साम चासौ सर्वदा समरूपतः ॥
सर्वेषां मां प्रतीत्येव दृष्टिसाम्याच्च साम सः ।
दृष्टिसाम्यं मण्डलस्य विष्णुस्तस्य च कारणम् ॥
तस्मिन्निमानि भूतानि सर्वाण्येवाऽश्रितानि हि ।

उदयात् पूर्वमेवासौ भवेत् प्रद्युम्ननामकः ॥
पश्चाधारस्तदात्माऽसौ वासुदेवस्तथोदये ।
आश्रयश्च नृणां तत्र वराहः सङ्गवे तु सः ॥
तत्र पक्ष्याश्रयो विष्णुस्तथा नारायणाभिधः ।
मध्यन्दिने स आधारो देवानां च ततः परम् ॥
अनिरुद्धः स आधारो गर्भस्थानां सदैव हि ।
ततः परं नृसिंहाख्यः स आरण्याश्रयो मतः ॥
अथास्तमितवेलायां स सङ्कर्षण ईरितः[१] ।
आश्रयः स पितॄणां च सप्तात्मकमुपास्य तम् [२]।
प्राप्नोति परमं स्थानं मुक्तः संसारसागरात् ॥' इति च ।

हिङ्कारनामानमाश्रितत्वाद्धिङ्कुर्वन्ति । [३]प्रस्तावाश्रयात् प्रस्तुतिकामाः प्रारम्भकामाः प्रशंसाकामाश्च । प्रारम्भावतारत्वात् प्रशंसादेवतात्वाच्च तस्य । सर्वाधारत्वाद् वराहस्य तदाधाराणां पक्षिणामनाधारेणैव गमनम् । नारायणनामार्थत्वेन सर्वगुणपूर्त्योपासनात्[४] सर्वोत्तमा देवाः । इतरमूर्तीनामपि सर्वगुणपूर्त्योपासने[५] नारायणोपासनमेव भवति । सर्वगुणपूर्त्यर्थत्वान्नारायणशब्दस्य । अनिरुद्धाश्रयत्वाद् गर्भाणां पितुः शरीरादन्यत्र प्रतिहृता अपि न विनश्यन्ति । वर्धन्ते च तत्रैव । अन्यद्धि भुक्तं जीर्यत एव । 'धाता गर्भं दधातु ते' इति

---

१ 'सङ्कर्षण इतीरितः' ग. २. 'सप्तात्मकमुदाहृतम्' ग.
३. 'प्रस्तावाश्रयत्वात्' प्र. ४. 'सर्वगुणपूर्त्योपासनादेव' प्र.
५. 'सर्वगुणपूर्त्योपासनेन' ग.

च श्रुतिः । धाता हि भगवाननिरुद्धः । विष्णुस्त्वष्टा प्रजापतिर्धाता इति च चतुर्मूर्तयो[१] ह्युच्यन्ते ।

'योनिक्लृप्तिर्वासुदेवाद् रूपं सङ्कर्षणाद् भवेत् ।
आसेककर्म प्रद्युम्नादनिरुद्धाच्च धारणम् ॥' इति च ।

'व्याप्तेर्विष्णुर्वासुदेवस्त्वष्टा त्वेषाद् द्वितीयकः ।
प्रजापतिः प्रजापातान्निषेकः पातनं ततः ॥
प्रजापतिस्तु प्रद्युम्नो धाता धारणकर्मतः ।
अनिरुद्ध इति प्रोक्तः कृष्णरामौ तथाऽश्विनौ ॥' इति च ।

'कक्षश्वभ्रे नृसिंहस्य सदाऽवस्थितिकारणात् ।
द्रवन्ति कक्षश्वभ्राभ्यां तदज्ञानेऽपि रक्षणात् ॥
मृगा भीता यतस्तेषां नृसिंहस्त्वाश्रयः[२] सदा ।
पितॄणामाश्रयो यस्मात् सङ्कर्षण उदाहृतः ॥
अतस्तान् प्रति पिण्डादीन् निदधत्यज्ञका अपि ।
अन्यथा तन्मृतानां तु कुत एवोपतिष्ठति ॥' इति च ।

'न रूपाणां विशेषोऽस्ति गुणतो नामतोऽपि वा ।
तथाऽपि तत् प्रियं नाम नारायण इति स्म ह ॥
विशेषतः समस्तानां नाम्नां तस्यार्थ एव तु ।
विज्ञायते गुणैः पूर्तिर्नामसाम्यं तदा तथा ॥' इति च ।

'नाम्नो नारायणाख्यस्य गुणैः पूर्तिं हि देवताः ।
विज्ञायार्थमुपास्यैव सर्वाधिक्यमथाऽपिरे [३]' इति च ॥ ९ ॥

---

१. 'इति चतुर्मूर्तयः' प्र. २. 'नृसिंहः स्वाश्रयः' ह. ३. 'अवापिरे' प्र.

## पदार्थकौमुदी

### भाष्यार्थः

आदित्ये सप्तविधसामनामकभगवदुपास्तिमाह – **अथ खल्वित्यादिना** ॥ अत्र प्रसिद्धादित्यस्यैव सप्तविधत्वेनोपास्तिरुच्यत इत्यसत् । तस्य सर्वदा समत्वसर्वभूताश्रयत्वाद्यनुपपत्तेरिति भावेन खण्डं प्रमाणेन भगवत्परतया व्याचष्टे – **आदित्यस्थमिति** ॥ अनेन प्रथमवाक्यं व्याख्यातम् । सप्तरूपाणां वैचित्र्यशङ्कानिरासाय सामशब्दनिर्वचनपरं "सर्वदा समस्तेन साम" इति वाक्यं व्याचष्टे – **साम चेति** ॥ प्रकारान्तरेण सामशब्दनिर्वचनपरं "मां प्रति मां प्रतीति सर्वेण समस्तेन साम" इति वाक्यं व्याचष्टे – **सर्वेषामिति** ॥ अनेन सर्वेणेति तृतीया षष्ठ्यर्थेत्युक्तं भवति । दृष्टिप्रकारदौर्लभ्यव्यावर्तनायैवशब्दः । दृष्टिविषयत्वसाम्यादित्यर्थः ।

नन्वादित्यस्थविष्णोरप्रत्यक्षत्वात् कथं तत्र सर्वदृष्टिसाम्यमित्यत आह – **दृष्टीति** ॥ तर्हि मण्डल एव सामशब्दवृत्तिः स्यान्न विष्णावित्यत आह – **विष्णुरिति** ॥ दृष्टिसाम्यकारणत्वमेव विष्णौ सामशब्दप्रवृत्तिनिमित्तमिति भावः । यद्वा, दृष्टिसाम्यमेव सामशब्दप्रवृत्तिनिमित्तम् । तत्कारणे च तन्निमित्तकः शब्दो मुख्यः । राजनि जयिशब्दवदिति तात्पर्यम् । "तस्मिन्निमानि सर्वाणि" इति वाक्यं व्याचष्टे – **तस्मिन्निति** ॥ आश्रितान्येवेति सम्बन्धः ।

"तस्य यत् पुरोदयात् स हिङ्कारः" इति वाक्यं व्याचष्टे – **उदयादिति** ॥ असावादित्यस्थः प्रद्युम्ननामको विष्णुरुदयात् पूर्वमेव भवेत् । तत्र तिष्ठतीत्यर्थः । "तदस्य पशवोऽन्वायत्ताः" इत्येतद् व्याचष्टे– **पश्वाधार इति** ॥ असावात्मा प्रद्युम्ननामकस्तदोदयपूर्वकाले पश्वाधार इत्यर्थः । "अथ यत्प्रथमोदिते स प्रस्तावः" इत्येतद् व्याचष्टे – **वासुदेव इति** ॥

तथाशब्द उपमायाम् । उदये तिष्ठतीति शेषः । "तदस्य मनुष्या अन्वायत्ताः" इत्यस्यार्थमाह– **आश्रयश्चेति** ।। न केवलं तिष्ठति किन्त्वा-श्रयश्चेति चशब्दः । तत्र तदा । "अथ यत्सङ्गववेलायां स आदिः" इत्यस्यार्थमाह – **वराह इति** ।। तिष्ठतीति शेषः । सर्वरूपाणां सर्वत्र सत्त्वेन कथमेतदित्यतः सन्निधानविशेषाभिप्रायेणेति भावेन तुशब्दः । "तदस्य वयांस्यन्वायत्तानि" इति वाक्यं व्याचष्टे – **सः ।। तत्रेति** ।। स वराहात्मा विष्णुः । "अथ यत् सम्प्रति मध्यन्दिने स उद्गीथः" इत्यस्यार्थमाह –**तथेति** ।। मध्यन्दिने तिष्ठतीति शेषः । "तदस्य देवा अन्वायत्ताः" इत्यस्यार्थमाह – **स आधार इति** ।। "अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात् स प्रतिहारः" इति वाक्यं व्याचष्टे – **तत इति** ।। ततो मध्यन्दिनात् परमपराह्णपर्यन्तमित्यर्थः । अनिरुद्धस्तिष्ठति । "तदस्य गर्भा अन्वायत्ताः" इत्यस्यार्थमाह – **स इति** ।। "अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवः" इति वाक्यं व्याचष्टे – **तत इति** ।। ततोऽपराह्णात् परमस्तमयपर्यन्तमित्यर्थः । नृसिंहाख्यो विष्णुस्तिष्ठति । "तदस्याऽरण्या अन्वायत्ताः" इत्येतद् व्याचष्टे – **स इति** ।। "अथ यत्प्रथमास्तमिते तन्निधनम्" इत्येतद् व्याचष्टे – **अथेति** ।। "तदस्य पितरोऽन्वायत्ताः" इति वाक्यं व्याचष्टे – **आश्रय इति** ।। "एवं खल्वमुमादित्यं सप्तविधं सामोपास्ते" इत्युपासनामात्रोक्तेः स्वयं फलमाह – **सप्तात्मकमिति** ।।

"तस्मात् ते हिङ्कुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नः" इति वाक्यं हेतुहेतुमद्भावाप्रतीतेस्तं व्यञ्जयन् व्याचष्टे – **हिङ्कारेति** ।। अनेन हिङ्कार-भाजिन इत्यस्य हिङ्कारनामकरूपाश्रिता इत्यर्थः । हिशब्दो यस्मादित्यर्थः। तस्मादिति पूर्वेण सम्बन्ध इत्युक्तं भवति । "तस्मात् ते प्रस्तुतिकामाः

प्रशंसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः" इत्यत्रापि पूर्ववद्धेतुहेतुमद्भावाप्रतीतिं प्रस्तुतिकामाः प्रशंसाकामा इत्यनयोः पुनरुक्तिं चापाकुर्वंस्तद् व्याचष्टे – **प्रस्तावेति** ॥ प्रस्तुतिकामा इत्यनुवादेन प्रारम्भकामा इति व्याख्यानम् । ननु प्रस्तावनामकवासुदेवाश्रयत्वेऽपि मनुष्याणां प्रारम्भकामत्वं प्रशंसाकामत्वं च कुत इत्यत आह – **प्रारम्भेति** ॥ प्रारम्भावतारत्वात् प्रथमावतारत्वादित्यर्थः । तस्य प्रस्तावनामकवासुदेवस्य । "तस्मात् तान्यन्तरिक्षेऽनारम्बणान्यादायाऽत्मानं परिपतन्त्यादिभाजिनो ह्येतस्य साम्नः" इति वाक्यं हेतुहेतुमद्भावं स्फोरयन् व्याचष्टे – **सर्वाधारत्वादिति** ॥ सर्वपक्ष्याधारत्वादित्यर्थः । अनाधारेण भूम्याद्याधारं विनेत्यनेनानारम्बणानीत्यस्यानाधाराणीत्यर्थ उक्तो भवति । "तस्मात् ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः" इत्यत्रोद्गीथाख्यनारायणाश्रितत्वं देवानामुत्तमत्वे हेतुरुच्यते । तदयुक्तम् । हिङ्काराद्याश्रितपश्वादीनामप्युत्तमत्वापत्तेरित्यतस्तद्वाक्यं तात्पर्यतो व्याचष्टे– **नारायणेति** ॥ कोऽसौ नारायणनामार्थो यद्युक्तत्वेनोपासनमित्यत उक्तम् – **सर्वगुणपूर्त्येति** ॥ उपासनादुद्गीथाख्यनारायणस्य । अत्र भजनमुपासनमेव विवक्षितमिति भावेनैवं व्याख्यातम् । "ते सत्तमाः प्राजापत्यानाम्"इत्यस्यार्थः – **सर्वोत्तमा देवा इति** ॥ ननु मध्वादिविद्यासु वासुदेवादिमूर्तीनां सर्वगुणपूर्त्योपासनादपि देवानां स्वपदप्राप्त्यादिलक्षणसत्तमत्वश्रवणात् कथं नारायणस्योपासनात् सत्तमा इत्युक्तमित्यत आह – **इतरेति** ॥ सर्वगुणपूर्त्येतरमूर्त्युपासने कथं नारायणोपासनं तदित्यत आह – **सर्वेति** ॥ अरशब्दस्य दोषवाचकत्वान्नञश्च विरुद्धार्थत्वाद् अरविरुद्धा गुणा नारास्तेषामयनमाश्रयो नारायणः । विशेषानुक्त्या श्रुत्यन्तरबलाच्च सर्वगुणपूर्णत्वं नारायणशब्दार्थ इति भावः ।

ननु नञ्समासे "नलोपो नञः" इति नलोपे "तस्मान्नुडचि" इति नुडागमे अनरायण इति स्यादिति चेन्न । "नभ्राट्"इत्यादिष्वस्य वक्तव्यत्वात् । अत एव नगनाकादिशब्दप्रयोगः । यद्वा, नायं नञ्समासः येन नलोपः स्यात् । किन्तु "अमानोनाः प्रतिषेधे" इति गणपरिपठित-नसमासोऽयमित्यदोषः । "पूर्वपदात् सञ्ज्ञायामगः" इति णत्वम् । ल्युटष्टित्करणसामर्थ्यादयनशब्दोऽत्राधिकरणे त्रिलिङ्ग इति पुल्लिङ्गत्वेनो-पपत्तिः ।

"तस्मात् ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः" इति वाक्यं हेतुहेतुमद्भावं व्यञ्जयन् व्याचष्टे – **अनिरुद्धेति** ॥ कुतः कुत्र प्रतिहृता इत्यतस्तद्दर्शनायोक्तम्– **पितुरिति** ॥ अन्यत्र मातृशरीरे । प्रति-हृता अपीति शेषपूरणेन विनाशकाभावादेवाविनाशो नत्वनिरुद्धाश्रय-त्वादित्याशङ्का परास्ता । नावपद्यन्त इत्यस्यार्थः — **न विनश्यन्तीति** ॥ न केवलमेतावत् । किन्त्वित्यत उक्तम् – **वर्धन्ते चेति** ॥

ननु पितुः शरीरान्मातृशरीरे प्रतिहृता अपि गर्भा मातृशक्त्यैव न विनश्यन्ति वर्धन्ते च तत्रैवेति किं न स्यात्किमप्रामाणिकानिरुद्ध-गर्भाश्रयत्वकथनेनेति चेत् । न । तथा सति मातृशरीरप्रविष्टान्नादेरपि मातृशक्त्यैव परिरक्षणादिसम्भवे प्रत्यहं भोजनाद्युद्योगप्रयासानुभवा-योगात् । न चैवमस्तीत्याह – **अन्यदिति** ॥ अन्यदन्नादिकं भुक्तं मातृ-शरीरप्रविष्टम् । हिशब्देन सर्वानुभवं प्रमाणयति । नन्वथाप्यप्रामाणिकं गर्भाणामनिरुद्धाश्रयत्वं किमर्थमङ्गीकार्यमित्यतस्तत्र श्रुतिं पठति – **धातेति** ॥ श्रुतिश्चेति चशब्दान्वयः । तेन पूर्वोदाहृतप्रमाणसमुच्चयः । नन्वियं श्रुतिर्धातृशब्दोक्तचतुर्मुखस्यैव गर्भधारकत्वं ब्रवीति नानिरुद्ध-स्येत्यत आह – **धाता हीति** ॥ हि यस्मात् तस्मादुदाहृतश्रुतिरुक्तार्थे

प्रमाणम् । कामपुत्रानिरुद्धव्यावृत्त्यर्थं "भगवान्"इत्युक्तम् । तदेव कुत इत्यत आह – **विष्णुरिति** ॥ "विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते" इति श्रुतौ विष्णुस्त्वष्टा प्रजापतिर्धातेतिशब्दैः क्रमेण वासुदेवादिचतुर्मूर्तय उच्यन्ते हि यस्मात् तस्माद्धाता भगवाननिरुद्ध इत्यर्थः ।

नन्वस्यां श्रुतौ विष्ण्वादिशब्दैश्चतुर्मूर्तय उच्यन्त इति कुतः ? तत्तन्नामकाश्चत्वारो देवा एवेति किं न स्यादित्यतः श्रुत्यर्थनिश्चायकं प्रमाणमाह – **योनिक्लृप्तिरिति** ॥ योनेः क्लृप्तिः पुत्रोत्पत्तिसामर्थ्यमित्यर्थः । योनिशुद्धिरिति वा । रूपं गर्भस्थपुत्रस्याङ्गमित्यर्थः । आसेककर्म गर्भात् प्रजापातनाख्यं कर्म । धारणं गर्भाणाम् । ननु वासुदेवादिमूर्तीनां योनिक्लृप्त्यादिकारित्वेऽपि "विष्णुर्योनिं"इत्यत्र ता एवोच्यन्त इति कुतः ? वासुदेवादिमूर्तीनामिव विष्ण्वादिनामकदेवानामपि योनिक्लृप्त्यादिकारित्वोपपत्तेः । नहि विष्ण्वादिशब्दा एव वासुदेवादिमूर्तिवाचका इत्यत्र प्रमाणमस्तीत्यतस्तत्रापि प्रमाणमाह – **व्याप्तेरिति** ॥ "विष्लृ व्याप्तौ" इति धातुः । त्वेषाद् दीप्तत्वात् । द्वितीयकः सङ्कर्षणः । प्रजानां पातात् प्रजापतिरित्युच्यते । किं तत्पातनमित्यत आह – **निषेक इति** ॥ यद्वा, प्रजापतेः कथं प्रजापातनकर्तृत्वमुच्यते ? "आसिञ्चतु प्रजापतिः"इति निषेककर्तृत्वश्रवणादित्यत आह – **निषेक इति** ॥ ततो मातृदेहतो बहिःपातनमेव निषेक इत्युच्यते । श्रुतावित्यर्थः । उक्तनिमित्तेन प्रजापतिशब्दाभिधेयः क इत्यत आह – **प्रजापतिरिति** ॥ गर्भधारणाख्यकर्मतोऽनिरुद्धो धातेति प्रोक्त इत्यन्वयः । ननु "गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ" इत्युत्तरत्राश्विप्रभृतिदेवानां श्रूयमाणत्वात् कथं भगवत्परत्वमस्येत्यतोऽश्विनावित्यनेनापि भगवन्मूर्ती एव विवक्षिते इत्याह – **कृष्णरामाविति** ॥

"तस्मात् ते पुरुषं दृष्ट्वा कक्षं श्वभ्रमित्युपद्रवन्ति उपद्रवभाजिनो ह्येतस्य साम्नः" इति वाक्यं हेतुहेतुमद्भावं दर्शयन् व्याचष्टे – **कक्षश्वभ्र इति** ॥ यतस्तेषां मृगाणां नृसिंहः सदा स्वाश्रयोऽतो भीता मृगाः कक्षश्वभ्राभ्यां द्रवन्तीत्यन्वयः ॥ मृगाणां भीतत्वे श्रुत्युक्तं पुरुषदर्शनं कारणम् । ननु मृगाणां नृसिंहाश्रयत्वे नृसिंहं प्रत्येव द्रवणं स्यात् । नतु कक्षश्वभ्रोद्देशेनेत्यत उक्तम् – **कक्षश्वभ्र इति** ॥ कक्षमरण्यं श्वभ्रं विवरं द्वन्द्वैकवद्भावः । ननु कक्षश्वभ्रयोर्नृसिंहस्य सदावस्थितत्वेऽपि मृगाणां कक्षश्वभ्रे प्रति द्रवणं कथम् ? नहि स्वरक्षको नृसिंहः कक्षश्वभ्रयोरस्तीति ते जानन्तीत्यत उक्तम्– **तदज्ञानेऽपीति** ॥ यद्यपि कक्ष्यश्वभ्रे एव रक्षके इति ते जानन्ति । नतु तत्स्थो नृसिंह इति । तथाऽपि कक्षश्वभ्रयोरचेतनत्वेन रक्षकत्वायोगान्नृसिंह एव रक्षक इति भावः ।

"तस्मात् तान् निदधति निधनभाजिनो ह्येतस्य साम्नः" इत्येतद् व्याचष्टे – **पितृणामिति** ॥ अत इति सावधारणम् । "पिण्डादीन्"इति श्रुतौ शेषोक्तिः । ननु पितॄन् प्रति पिण्डादिदानं तेषां सङ्कर्षणाश्रयत्वे कथं ज्ञापकमित्यत आह– **अन्यथेति** ॥ तत् पिण्डादिकम् । इतरमूर्तीनामित्यत्र भगवद्रूपाणामन्येषामपि सर्वगुणपूर्त्याद्यस्तीत्युक्तं तत् प्रमाणेन द्रढयति – **न रूपाणामिति** ॥ अपिवेतिशब्दौ परस्परसमुच्चये । गुणनामभ्यां रूपाणां विशेषाभावः किं नेत्याह – **तथाऽपीति** ॥ नारायण इति नाम विशेषतस्तत्प्रियमित्यन्वयः । नन्वितरनामस्वेकैकनाम्नो नारायणनामसाम्याभावेऽपि समस्तानां नाम्नां तत्साम्यं स्यादित्यतः पक्षान्तरमाह – **समस्तानामिति** ॥ अथवा स्यादेव समस्तानां नाम्नां नारायणनामसाम्यं यदा तस्य नारायणनाम्नोऽर्थभूता गुणैः पूर्तिरिव समस्तनाम्नामर्थ इति विज्ञायेतेत्यर्थः । नारायणनामार्थत्वेन सर्वगुणपूर्त्योपासनात् सर्वोत्तमा देवा इत्युक्तमर्थं प्रमाणेन द्रढयति – **नाम्न इति** ॥

**ततश्चायं खण्डार्थः**

अथ खल्वमुमादित्यनामकमादित्यस्थं सप्तविधं सप्तरूपं साम सामनामकं विष्णुमुपासीत । सामशब्दं विष्णौ निर्वक्ति – **सर्वदेति** ॥ यस्मादसावादित्यस्थो विष्णुः सर्वदा समस्तेन सामेत्युच्यते । प्रकारान्तरेण सामशब्दं निर्वक्ति – **मां प्रतीति** ॥ यस्मादादित्यस्थो विष्णुः सर्वेण सर्वस्य मां प्रति मां प्रतीति समस्तेन कारणेन सामेत्युच्यते ॥ १ ॥

तदुपास्तिप्रकारमाह – **तस्मिन्निति** ॥ तस्मिन्नादित्यस्थे सप्तरूपे विष्णाविमानि सर्वाणि भूतानि पशुमनुष्यादीन्यन्वायत्तानि आश्रितानीति विद्याद् उपासीत । कथमादित्यस्थस्य साप्तविध्यम् ? कथं वा तस्य सर्वभूताश्रयत्वमित्यतस्तद्विशदमाह – **तस्येति** ॥ हिङ्कारः प्रद्युम्नः । सः यत्तस्याऽदित्यस्योदयात् पुरा य आदित्योदयात् पूर्वकालस्तत्र स्थित इत्यर्थः । कानि तत्राऽश्रितानीत्यत आह – **तदस्येति** ॥ अस्य सूर्यस्थस्य सामनामकभगवतस्तदुदयात् पूर्वकालस्थितं हिङ्कारनामकं प्रद्युम्नाख्यं रूपं पशवोऽन्वायत्ता आश्रिताः । पशूनां तदाश्रितत्वे ज्ञापकमाह – **तस्मादिति** ॥ हि यस्मात् ते पशव एतस्याऽदित्यस्थस्य साम्नः सामनामकस्य भगवतो यो हिङ्काराख्योऽवतारस्तद्भाजिनस्तदाश्रिताः तस्माद्धिङ्कारनामानमाश्रितत्वादेव ते पशवो हिङ्कुर्वन्ति । अन्यथा तन्न स्यादित्यर्थः ॥ २ ॥

अथशब्दो विच्छेदज्ञापनार्थः । प्रस्तावो वासुदेवः । सः यत् प्रथमोदिते तिष्ठति य आदित्योदयप्रथमकाले स्थित इत्यर्थः । तदाश्रितान्याह – **तदस्येति** ॥ अस्य सूर्यस्थभगवतस्तत्प्रस्तावनामकं वासुदेवरूपं मनुष्या अन्वायत्ताः । तेषां तदाश्रितत्वे ज्ञापकमाह – **तस्मादिति** ॥ हि यस्मात् ते मनुष्या एतस्य सूर्यस्थस्य साम्नः सामनामकस्य भगवतः यः प्रस्तावाख्योऽवतारः तद्भाजिनस्तदाश्रिताः तस्मात् प्रस्तावाश्रितत्वादेव ते मनुष्याः प्रस्तुतिकामाः प्रारम्भकामाः प्रशंसाकामाश्च । अन्यथा तन्न

स्यादित्यर्थः ॥ ३ ॥

अथाऽदिरादिनामा वराहः सः यत्सङ्गववेलायां तिष्ठति तदाश्रिता-न्याह – **तदस्येति** ॥ अस्य तद्रूपं वयांसि पक्षिणोऽन्वायत्तानि । तत्र ज्ञापकमाह – **तस्मादिति** ॥ हि यस्मात् तानि वयांस्येतस्य साम्नः सामनामकस्य भगवतो य आदिस्तद्भाजीनि तदाश्रितानि तस्मादेव वराहस्य सर्वपक्ष्याधारत्वादेव । तानि तदाश्रितानि वयांसि अन्तरिक्षेऽना-रम्बणान्यनाधाराण्यात्मानं स्वात्मानमादाय परिपतन्ति ॥ अन्यथा तन्न स्यादित्यर्थः ॥ ४ ॥

अथोद्गीथो नारायणः सः यत्सम्प्रति मध्यन्दिने तिष्ठति तदाश्रिता-न्याह – **तदस्येति** ॥ अस्य भगवतस्तद्रूपं देवा अन्वायत्ताः । तत्र ज्ञापकमाह – **तस्मादिति** ॥ हि यस्मात् ते देवा एतस्य साम्नः साम-नामकस्य भगवतो य उद्गीथो नारायणाख्यावतारस्तद्भाजिनस्तदा-श्रितास्तदुपासका इति यावत् । तस्मादेव नारायणशब्दार्थत्वेन सर्वगुण-पूर्त्योपासनादेव ते देवाः प्राजापत्यानां मध्ये सत्तमाः सर्वोत्तमाः । अन्यथा तन्न स्यादित्यर्थः ॥ ५ ॥

अथ प्रतिहारोऽनिरुद्धः । सः यन्मध्यन्दिनादूर्ध्वम् अपराह्णात् प्राक् तत्कालस्थितं यदित्यर्थः । तदाश्रितान्याह – **तदस्येति** ॥ अस्य भगवत-स्तदनिरुद्धाख्यं रूपं गर्भा गर्भस्थाः प्राणिनोऽन्वायत्ताः । तत्र ज्ञापकमाह– **तस्मादिति** ॥ हि यस्मादेते गर्भा एतस्य साम्नो भगवतः यः प्रतिहारा-ख्योऽवतारस्तद्भाजिनस्तदाश्रितास्तस्माद् गर्भाणामनिरुद्धाश्रयत्वादेव ते गर्भाः परि(प्रति)हृताः पितुः शरीरादन्यमातृशरीरे प्रति(परि)हृता अपि नावपद्यन्ते न विनश्यन्ति । न केवलमेतावत् वर्धन्ते च तत्रैव । अन्यथा तन्न स्यादित्यर्थः ॥ ६ ॥

अथोपद्रवो नृसिंहः । सः यदपराह्णादूर्ध्वमस्तमयात् प्राक् तत्कालस्थितं यदित्यर्थः । तदाश्रितान्याह – **तदस्येति** ॥ अस्य भगवतस्तन्नृसिंहाख्यं

रूपम् आरण्या अरण्ये स्थितमृगा अन्वायत्ताः । तत्र ज्ञापकमाह– **तस्मादिति** ॥ हि यस्मात् ते आरण्या एतस्य साम्नः सामनामकस्य भगवतो य उपद्रवाख्योऽवतारः कक्षश्वभ्रयोर्मृगरक्षणार्थं सदा स्थितस्तद्भाजिनस्तदाश्रितास्तस्मादेव स्वाज्ञानेऽपि रक्षकस्य नृसिंहस्य कक्षश्वभ्रयोः स्थितत्वादेव ते आरण्याः पुरुषं दृष्ट्वा भीताः सन्तः कक्षमरण्यं श्वभ्रं विवरं स्वरक्षकमिति भावेन कक्षश्वभ्राभ्यामुपद्रवन्ति । अन्यथा तन्न स्यादित्यर्थः ॥ ७ ॥

अथ निधनं सङ्कर्षणाख्यं रूपं तत् । यत्प्रथमास्तमिते तिष्ठति । तदाश्रित्यान्याह– **तदस्येति** ॥ अस्य भगवतस्तत्सङ्कर्षणाख्यं रूपं पितरोऽन्वायत्ताः । तत्र ज्ञापकमाह– **तस्मादिति** ॥ हि यस्मात् ते पितर एतस्य साम्नो भगवतो यन्निधनं निधननामकं सङ्कर्षणाख्यं रूपं तद्भाजिनस्तदाश्रितास्तस्मादेव पितॄणां सङ्कर्षणाश्रयत्वादेव तान्पितॄन् प्रति निदधति । "पिण्डादीनज्ञका अपि"इति शेषः । उपासकस्य फलमाह– **एवमिति** ॥ योऽधिकारी अमुमादित्यस्थमादित्यनामकं सप्तविधं सामनामकं भगवन्तमेव पश्चाद्याश्रयत्वेनोपास्ते स संसारसागरान्मुक्तः सन् परमं स्थानं प्राप्नोतीति वाक्यशेषः ॥ ८ ॥

॥ इति नवमः खण्डः ॥

## उपनिषत् (खण्डः- १०)

*सप्तविधसामप्रतिपाद्यभगवतो रूपाणि समानि*

**अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ॥ १ ॥**

**आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम् ॥२॥**

**उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः सम भवत्यक्षरमतिशिष्यते[१] त्र्यक्षरं तत्समम् ॥ ३ ॥**

१. 'अवशिष्यते' ग.

निधनमिति त्र्यक्षरं तत्सममेव भवति तानि हवा एतानि द्वाविꣳशतिरक्षराणि ॥ ४ ॥

भाष्यम्

'यस्यान्यः सदृशो नास्ति स्वरूपाणि समानि च ।
स आत्मसम्मितो विष्णुरतिमृत्युरमृत्युतः ॥
प्रद्युम्नादिस्वरूपेण स विष्णुः सप्तधा स्थितः ।
समानि तानि सर्वाणि ज्ञानानन्दबलैस्तथा ॥
ज्ञानादित्रयवाचीनि त्र्यक्षराण्यपि सर्वशः ।
हिङ्कारादीनि नामानि सर्वेषामपि सर्वशः ॥
आदिनाम्नः प्रकारस्तु योज्यः स्यात् प्रतिहारतः ।
तेन त्र्यक्षरमेव स्यान्नामद्वयमपि प्रभोः ॥
उपद्रवे तु वःकारो यद्यपि व्यतिरिच्यते ।
नाम नारायणस्यैव सोऽपि क्षीराब्धिशायिनः ॥
व्यञ्जनस्वरसर्गैस्तु सोऽपि ज्ञानादिवाचकः ।
त्रिवर्णत्वात् समः सोऽपि ज्ञानाद्यैः पुरुषोत्तमः ॥

पदार्थकौमुदी

भाष्यार्थः

सप्तविधस्य सामनाम्नो भगवतो ज्ञानानन्दबलैर्ब्रह्माद्यसमत्वादात्मरूपसमत्वनिष्ठामुपास्तिमाह – **अथ खल्वित्यादिना** ॥ अयं खण्डः प्रसिद्धसामपर इत्यसत् । शब्दरूपस्य तस्य परमात्मसम्मितत्वातिमृत्युत्वयोरसम्भवात् । ''तन्नाकं तद्विशोकम्''इत्यस्यासम्भवाच्च । ननु भगवत्परत्वेऽपि कथमात्मसम्मितत्वं तस्य ? सादृश्यस्य भेदव्याप्तत्वात् ।

नहि गौर्गोसदृशीत्यत आत्मसम्मितत्वं द्वेधा घटयन् खण्डं प्रमाणेन व्याचष्टे – **यस्येति** ॥ यथा ''गगनं गगनाकारम्'' इत्यादौ एतत्सदृश-मन्यन्नास्तीत्यर्थ एवमत्रापीति भावः । यस्य स्वरूपाणीत्यपि सम्बन्धः । स्वरूपाणां परस्परं समत्वं नाम परस्परनिष्ठबहुधर्मयोगित्वमेव । नतु तद्भिन्नत्वविशेषितम् । तच्च परस्परमभेदेऽपि सम्भवतीति भावः । अतिमृत्युपदं व्याचष्टे – **अतिमृत्युरिति** ॥ अमृत्युत्वतः । सप्तविधमित्य-स्यार्थमाह – **प्रद्युम्नादीति** ॥ प्रद्युम्नवासुदेववराहनारायणानिरुद्ध-नृसिंहसङ्कर्षणस्वरूपेणेत्यर्थः । ''हिङ्कार इति त्र्यक्षरम् । प्रस्ताव इति त्र्यक्षरम् । तत्समम्'' इत्यादौ हिङ्कारादिसामनाम्नामेव त्र्यक्षरत्वसाम्य-मुच्यत इति भ्रान्तिवारणाय ''तत्समम्''इति वाक्यपञ्चकं व्याचष्टे – **समानीति** ॥ तत्र हेतुपरं ''हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरम्'' इत्यादिवाक्यं व्याचष्टे – **ज्ञानादीति** ॥ सर्वशोऽपि त्र्यक्षराणि हिङ्कारा-दीनि नामानि सर्वशः वर्णशः सर्वेषामपि रूपाणां ज्ञानादित्रयवाचीनि हि यस्मात् तस्मात् तानि ज्ञानानन्दबलैः समानीत्यर्थः । हिङ्कारादिनाम्नां वर्णशो ज्ञानादित्रयवाचकत्वप्रकारस्तु प्रमाणान्तरादवगन्तव्यः ।

''आदिरिति द्व्यक्षरम् । प्रतिहार इति चतुरक्षरम् । तत इहैकं तत्समम्'' इत्यत्र प्रतिहारनाम्नः को वर्ण आदिनाम्नि योज्य इत्यतस्तं दर्शयन् व्याचष्टे – **आदिनाम्न इति** ॥ प्रतिहारनाम्नः प्रशब्दः आदिनाम्ना योज्यः स्यात् । तेन प्र आदिरिति आदिप्र इति वैकं नाम तिहार इत्यन्यदिति प्रभोर्नामद्वयमपि त्र्यक्षरमेव स्यादित्यर्थः । ''अक्षरमति-शिष्यते'' इत्युपद्रवनाम्न्येकमक्षरमतिरिच्यत इत्युक्तम्– किं तदक्षरं किं वा तद्वाच्यमित्यत आह – **उपद्रवे त्विति** ॥ तथाऽपि स वःकारो नारायण-स्यैव नाम । उक्तव्यूहान्तर्गतोद्गीथाख्यनारायणव्यावृत्त्यर्थं ''क्षीराब्धि-

शायिनः'' इत्युक्तम् । नन्वेवं वःकारस्य त्र्यक्षरत्वाभावात् तद्वाच्यस्य नारायणस्य ज्ञानादिगुणैः साम्याभावे प्रागुक्तविरोध इत्याशङ्का-निवर्तकतया ''त्र्यक्षरं तत्समं भवति''इति वाक्यं व्याचष्टे – **व्यञ्जनेति** ।। व्यञ्जनस्वरसर्गैस्त्रिवर्णत्वादित्यन्वयः । सोऽपि वःकारोऽपि । अपिशब्देन हिङ्कारादिसमुच्चयः । यतस्ततः सोऽपि नारायणोऽपि । प्रद्युम्नादि-समुच्चयार्थमपिशब्दः ।

## उपनिषत्

**एकविꣳशत्याऽऽदित्यमाप्नोत्येकविंशो वा इतोऽसावादित्यो द्वाविꣳशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ।। ५ ।।**

## भाष्यम्

वःकारार्थपरिज्ञानात् प्राप्योऽब्धिशयनः प्रभुः ।
एकविंशार्णविज्ञानात् प्राप्योऽसौ सूर्यमण्डले ।।

*हिङ्काराद्यक्षरप्रतिपाद्यानि भगवतो द्वाविंशद्रूपाणि*

स एव भगवान् विष्णुर्द्वाविंशद्रूपवान् यतः ।
तान्येव सप्तरूपाणि विभिद्यन्ते त्रिधा त्रिधा ।।
एकः पयोऽब्धिशयन इति द्वाविंशतिः प्रभोः ।
प्रद्युम्नाद्यास्तु चत्वारो द्विषण्मासेषु संस्थिताः ।।
त्रिशस्त्रिशः केशवाद्या वसन्तादिषु पञ्चमः ।
रूपद्वयं च[१] षष्ठस्य स्थितं मत्स्यादिपञ्चकम् ।।

---

१. 'रूपद्वयं तु' ग.

**तृतीयं पृथिवीसंस्थं जामदग्न्याख्यमेव तत् ।**
**अन्तरिक्षद्युसूर्येषु सप्तमस्य[१] त्रिधा तनुः[२] ॥**
**रामः कृष्णः कल्किरिति तज्ज्ञानात् तान्यवाप्य च ।**
**द्वाविंशेन पयोब्धिस्थं प्राप्यते रूपमक्षरम् ॥**
**एतद् द्वाविंशकं रूपं नाकं चासुखवर्जनात् ।**
**पूर्णानन्दस्वरूपत्वाद् विशोकं शोकनाशनात् ॥' इति साम-संहितायाम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

''द्वाविंशेन परमादित्याज्जयति''इति फलवाक्यं व्याचष्टे– **वःकारेति** ॥ ''एकविंशत्याऽऽदित्यमाप्नोति'' इति वाक्यं व्याचष्टे – **एकविंशेति** ॥ एकविंशार्णवाच्यरूपज्ञानादित्यर्थः । सूर्यमण्डले स्थित इति शेषः ।

''तानि हवा एतानि द्वाविंशतिरक्षराणि'' इति वाक्यं प्रसिद्धार्थप्रतीतिनिरासाय व्याचष्टे– **स एवेति** ॥ ननु ''प्रद्युम्नादिस्वरूपेण स विष्णुः सप्तधा स्थितः'' इत्युक्तत्वेन कथं ''द्वाविंशद्रूपवान्'' इत्युक्तमित्यत आह – **यतः** ॥ **तान्येवेति** ॥ इति तस्माद् द्वाविंशतिः रूपाणीति शेषः । नन्वेतानि द्वाविंशतिरूपाणि किंनामकानि ? कुत्र तिष्ठन्तीत्यतस्तावत् ''द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः'' इति श्रुत्यन्तरानुसारेणैकविंशतिमूर्तीराह – **प्रद्युम्नाद्या इत्यादिना** ॥ प्रद्युम्नवासुदेववराहनारायणाश्चत्वारः प्रत्येकं त्रिशस्त्रिशो

---

२. 'सत्यमस्य' ग. ३. 'त्रिधात्मनः' ह.

भूत्वा केशवाद्याः केशवादिनामानः सन्तो द्विषण्मासेषु संस्थिता इति सम्बन्धः। पञ्चमोऽनिरुद्धस्तस्य रूपत्रयमिति यावत्। षष्ठस्य नृसिंहस्य रूपद्वयमिति रूपपञ्चकं मत्स्यादिपञ्चकं सद् वसन्तादिषु संस्थितमित्यर्थः। अत्रापि हेमन्तशिशिरयोरैक्येन पञ्चत्वोक्तिः। षष्ठस्य तृतीयं रूपं पृथिवीसंस्थम्। सप्तमस्य सङ्कर्षणस्य तनू रामः कृष्णः कल्किरिति त्रिधा सत्यन्तरिक्षद्युसूर्येषु स्थितेति सम्बन्धः। ''एकविंशत्याऽऽदिमाप्नोति द्वाविंशेन परमादित्याज्जयति'' इत्यत्रैकविंशद्वाविंशरूपज्ञानयोरेव फलमुक्तम्। न त्वितररूपज्ञानस्य। अत एतदुपलक्षणम्। ततश्च तत्तज्ज्ञानात् तत्तत्प्राप्तिर्भवति। अनन्तरं द्वाविंशाक्षरप्रतिपाद्यरूपप्राप्तिः सर्वेषामित्यभिप्रेत्याऽह– **तज्ज्ञानादिति**॥ द्वाविंशेन द्वाविंशरूपज्ञानेन। ''यावच्छ्वेतं न गच्छति। योगी तावन्न मुक्तः स्यात्'' इत्यादेरिति भावः। ''तन्नाकं तद्विशोकम्''इत्येतद्व्याचष्टे– **एतदिति**॥ कं सुखमकमसुखं दुःखमिति यावत्। तद्रहितं नाकमित्युच्यत इति भावेन ''असुखवर्जनात्'' इत्युक्तम्। दुःखवर्जनादित्यर्थः। ''द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः'' इति न्यायेनार्थान्तरमाह – **पूर्णेति**॥ ननु नाकपदस्य प्राचीनार्थत्वे विशोकपदं पुनरुक्तमित्यतस्तस्यार्थान्तरमाह – **विशोकमिति**॥ भक्तानामिति शेषः।

## उपनिषत्

**आप्नोतीहाऽऽदित्यस्य जयं परो हास्याऽऽदित्यजयाज्जयो भवति य[१] एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपास्ते सामोपास्ते॥ ६॥ १०॥**

---

१ 'स य' ह.

## भाष्यम्

[१]प्राप्नोतीहाऽऽदित्यस्य जयम् । इह पृथिव्यादिषु स्थितभगवत्प्राप्तावप्यादित्यस्थ एव प्राप्यते । ऐक्यात् । परो हास्याऽऽदित्यजयाज्जयो[२]भवति । आदित्यस्थस्याऽऽदित्यनाम्नो भगवतः प्राप्त्या परो जयः रूपान्तरप्राप्तिरपि भवति ।

'स्वरूपमेकं प्राप्तस्तु विष्णोः स्यात् सर्वरूपगः ।
ऐक्यात् तथाऽपि सम्प्राप्तिर्बहूपास्त्या सुखाधिका[३] ॥' इति च ।

जयो नाम प्राप्तिरेव । 'धनजिते स्वर्जिते सत्राजिते'[४] इत्यादिवत् । केशवादिरूपेण ललाटादिषु स्थितेरित एकविंश इत्युच्यते ।

'चित्रादियोगदातृत्वान्मासनामा स्वयं हरिः ।
लोकः प्रकाशरूपत्वाद् आदित्यश्चादनादपाम् ॥' इति च ॥१०॥

## पदार्थकौमुदी

### भाष्यार्थः

यत्पूर्वमभिप्रेतमुपासिततत्तद्रूपं स्वस्वप्रापकमिति तदयुक्तम् । तथा सति पृथिव्यादिस्थितरूपस्याऽऽदित्यस्थरूपाप्रापकत्वप्राप्त्याऽऽदित्यस्थरूपस्य चेतररूपाप्रापकत्वप्राप्त्या "आत्मसम्मितम्" इत्युक्तं सर्वरूपसाम्यमनुपपन्नं स्यादित्याशङ्कामात्मसम्मितत्वादिना सप्तविधसामोपासकस्य फलकथनव्याजेन परिहर्तुं प्राप्तं "आप्नोतीहाऽऽदित्यस्य जयम्" "परो हास्याऽऽदित्यजयाज्जयो भवति" इति वाक्यद्वयं क्रमेणानूद्य व्याचष्टे —**आप्नोतीहेत्यादिना** ॥ ऐक्यादित्युत्तरत्रापि सम्बध्यते । अनेनैक-

---

१. 'आप्नोतीह' ग. २. 'आदित्यस्य जयात्' ग. ३. 'सुखाधिकी' ग.
४. 'धनजिते स्वर्जिते इत्यादिवत्' ह.

रूपप्राप्त्याऽपीतररूपप्रापकत्वसामर्थ्येन सर्वत्र साम्योपेतभगवत्प्राप्तिरेवाऽत्मसम्मितत्वादिना सप्तविधसामोपासकस्य फलं, उपासनानुसारित्वात् फलस्येत्युक्तं भवति । इह पृथिव्यादिषु स्थितेत्युक्तार्थे प्रमाणमाह – **स्वरूपमिति** ॥ तर्हि रूपान्तरोपास्तिर्व्यर्था स्यादित्यत आह – **तथाऽपीति** ॥ रूपान्तरसम्प्राप्तिरित्यर्थः । ''भगवतः प्राप्त्या'' इत्यादिना जयशब्दः प्राप्त्यर्थो व्याख्यातः । तदुपपादयितुं प्रतिजानीते – **जय इति** ॥ अत्रेति शेषः । जयाभिभवयोरेव जिधात्वर्थत्वात् कथमेतदित्यतः ''प्रयोगतोऽनुगन्तव्याः'' इति न्यायमनुसृत्य जयशब्दस्य प्राप्तिवाचकत्वे प्रयोगमाह – **धनजित इति** ॥ धनप्राप्तिमते । स्वर्जिते स्वर्गप्राप्तिमते । सत्राजिते सत्रप्राप्तिमते । विश्वजित इत्यस्याऽदित्वेऽपि तस्य जयार्थत्वेऽपि सम्भवात् तदनुदाहरणम् ॥ ''इन्द्राय सोमं भर'' इत्युत्तरेणान्वयः । ''इत्यादिवत्'' इत्यादौ यथा जिच्छब्दः प्राप्त्यर्थस्तथाऽत्रापीत्यर्थः । ननु ''एकविंशो वा इतोऽसावादित्यः'' इत्यत्राऽदित्यस्थस्य भगवत इत एकविंशत्वमुच्यते । तत्रेत इत्यनेन परामृश्यं न प्रतीयते । नच पृथिवीस्थं रूपमित इत्यनेन ग्राह्यम् । पृथिवीस्थजामदग्न्याख्यरूपापेक्षयाऽऽदित्यस्थस्यैकविंशत्वाभावात् । केशवापेक्षया ह्यादित्यस्थस्य कल्केरेकविंशत्वम् । नच तस्य मासगतस्येत इति निर्देशो युज्यत इत्यत आह – **केशवादीति** ॥ यो मासगतः केशवादिद्वादशविधो भगवान् स एवाध्यात्मं ललाटादिषु संस्थितः । ''ललाटे केशवं विद्यान्नारायणमथोदरे'' इत्यादिस्मृतेः । एवं च केशवस्याध्यात्मं ललाटेऽपि सत्त्वादित इत्यनेनावधितया परामर्शः सम्भवतीति भावः ।

ननु ''द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः'' इति श्रुतौ मासादीनामेव श्रवणात् कथं मासादिस्थभगवद्रूपाणि

गृहीतानीत्यतस्तत्रापि मासलोकादित्यनामभिर्भगवानेव ग्राह्य इति भावेन तत्र प्रमाणमाह – **चित्रादीति** ॥ पूर्णचन्द्रस्य चित्रादियोगदातृत्वाद्धरिः स्वयं मुख्यतश्चैत्रादिमासनामा । अत्र चित्राशब्देन पूर्वोत्तरतारके अपि ग्राह्ये । आदिशब्देन विशाखादिग्रहणम् । उक्तं च –

''चित्रादितारकाद्वन्द्वं यदा पूर्णेन्दुसंयुतम् ।

चैत्रादिमासा विज्ञेयाः ... ॥'' इति । अपामदनाद् भक्षणाद रश्मिभिः स्वीकारादिति यावत् । प्रागेव व्याख्यातत्वाद् ऋतुशब्दो न व्याख्यातः ॥ **दशमः खण्डः** ॥

## ततश्चायं खण्डार्थः

अथ खलु आत्मसम्मितं स्वस्य स्वयमेव सम्मितं नत्वन्यद् यस्य तदात्मसम्मितं स्वसमं वा । मृत्युमतिक्रान्तम् अतिमृत्युं मृत्युरहितं सप्तविधं प्रद्युम्नादिरूपेण सप्तधा स्थितं साम सामनामकं परं ब्रह्मोपासीत । अत्राऽत्मसम्मितं सामेत्युक्त्या आत्मसम्मितत्वं सामशब्दप्रवृत्तिनिमित्तमित्युक्तं भवति । ननु सामनामकानां तेषां सप्तानामपि रूपाणां कथमात्मसम्मित्वमित्यतो यतस्तानि सर्वाणि रूपाणि ज्ञानानन्दबलैः समानीति वक्तुं कुतस्तेषां ज्ञानादिभिः समत्वमित्यतो ज्ञानादित्रयवाचकाक्षरत्रयोपेतनामवत्त्वात् सर्वेषामपि रूपाणामिति भावेन प्रद्युम्नादिवाचकहिङ्कारादिनाम्नां त्र्यक्षरत्वप्रकारं दर्शयन्नाह – **हिङ्कार इतीति** ॥ हिङ्कार इति त्र्यक्षरम् । प्रस्ताव इति त्र्यक्षरम् । अतस्तन्नामद्वयं समम् । उभयोरपि त्र्यक्षरत्वात् । यत एवं नामद्वयं ज्ञानादित्रयवाचकत्र्यक्षरत्वेन समं तत् तस्मात् तत्प्रद्युम्नवासुदेवाख्यरूपद्वयमपि तत्प्रतिपाद्यज्ञानादित्रयवत्त्वेन सममिति योज्यम् ॥ १ ॥

आदिरिति द्व्यक्षरम् । प्रतिहार इति चतुरक्षरम् । कथं तर्हि वराहानिरुद्धनाम्नस्त्र्यक्षरत्वमित्यत आह – **तत इति** ॥ ततः प्रतिहारनामत

एकं प्र इत्येकमक्षरमिहाऽदिनाम्नि योज्यं स्यात् । किं तत इत्यत आह – **तत्सममिति** ।। तत् तस्मात् तन्नामद्वयमपि समं त्र्यक्षरमेव स्यादित्यर्थः । यत एवं तन्नामद्वयं गुणत्रयवाचकत्र्यक्षरत्वेन समं तत् तस्माद् वराहानिरुद्धाख्यरूपद्वयमपि तदर्थज्ञानादित्रयवत्त्वेन समं भवतीत्यपि योज्यम् ।। २ ।।

उद्गीथ इति त्र्यक्षरं उदित्यस्यैकत्वेन परिसङ्ख्यानात् । उपद्रव इति चतुरक्षरम् । कथं तर्हि नृसिंहनाम्नस्त्र्यक्षरत्वमित्यतश्चतुरक्षरत्वेऽपि न त्र्यक्षरत्वहानिरिति भावेनाऽह – **त्रिभिरिति** ।। तन्नामद्वयं त्रिभिः त्रिभिरक्षरैः समं भवति यत एवं तस्मात् तत् नारायणनृसिंहाख्यरूपद्वयमपि तद्वाच्यैस्त्रिभिस्त्रिभिर्ज्ञानानन्दबलरूपैर्गुणैः समं भवतीत्यर्थः । यद्यप्युपद्रवे वःकाररूपमक्षरमतिशिष्यतेऽतिरिच्यते तथाऽपि स वःकारः क्षीराब्धि-शायिनो नारायणस्यैव नामेति ज्ञातव्यम् । ननु यदि वःकारस्य भगवद्रूपान्तरनामत्वमङ्गीक्रियते तर्हि तस्यापि ज्ञानादित्रयवाचकता-सिध्यर्थं त्र्यक्षरत्वं वक्तव्यम् । नच तत्सम्भवति । तस्यैकाक्षरत्वादित्यत आह – **त्र्यक्षरमिति** ।। व इत्येतदपि व्यञ्जनस्वरसर्गैस्त्र्यक्षरम् । अतस्त-त्समम् इतरनामसदृशं भवत्येवेत्यर्थः । यत एवं तस्मात् तत्क्षीराब्धि-शायिभगवद्रूपमपि समं तद्वाच्यज्ञानानन्दबलैः सममिति योज्यम् ।। ३ ।।

निधनमिति त्र्यक्षरम् । अतस्तन्नामेतरनामसमं भवत्येवेत्यर्थः । यत एवं तस्मात् तत्सङ्कर्षणाख्यं भगवद्रूपं समं रूपान्तरवत् तद्वाच्यज्ञानादिभिः समं भवत्येवेत्यर्थः । एवं हिङ्कारादिनामानि वर्णशो ज्ञानादित्रयवाचीनी-त्युक्तम् । इदानीमुपास्त्यर्थं प्रत्येकमेकैकमक्षरमेकैकभगवद्रूपवाचक-मित्याह – **तानि हवा इति** ।। तान्येतानि हिङ्कारादीनि निधनान्तानि द्वाविंशतिरक्षराणि व इत्यस्यैकाक्षरत्वात् । हवा इति प्रमाणप्रसिद्धिमाह । अतस्तान्येतानि द्वाविंशत्यक्षरप्रतिपाद्यान्यक्षराण्यनाशादक्षरनामकानि

भगवद्रूपाणि द्वाविंशतिः । कथम् ? तानि सप्तरूपाणि त्रिधा त्रिधा विभिद्यन्त इत्येकविंशतिः । एकः पयोब्धिशयन इति द्वाविंशतिः । तानि च एकविंशतिरूपाणि केशवादिद्वादश मत्स्यादिनव । तत्र केशवाद्याः द्वादशमासेषु मत्स्याद्याः पञ्चपञ्चर्तुषु । जामदग्न्याद्याश्चत्वारः पृथिव्यन्तरिक्षद्युसूर्येषु स्थिता इति ज्ञेयम् ॥ ४ ॥

तत्र निधनशब्दान्तर्गतनकारलक्षणैकविंशार्णवाच्यकल्किरूपैकविंशभगवद्रूपज्ञानिनः फलमुपलक्षणयाऽऽह – **एकविंशत्येति** ॥ एकविंशत्या एकविंशाक्षरवाच्यकल्किज्ञानेनाऽदित्यमादित्यान्तर्गतं भगवन्तं प्राप्नोति ॥ अनेनैकविंशाक्षरवाच्यकल्किरेवाऽदित्यस्थः, उपास्यस्यैव प्राप्यत्वादित्युक्तं भवति । नन्वादित्यस्थस्य कल्केः कुत एकविंशत्वमित्यत आह– **एकविंश इति** ॥ असावादित्यस्थः कल्किरितः शरीरस्थललाटगतकेशवाख्यभगवद्रूपापेक्षयैकविंशो वै प्रसिद्धमित्यर्थः । क्षीराब्धिशायिभगवदुपासकस्य फलमाह – **द्वाविंशेति** ॥ द्वाविंशेन वःकाररूपद्वाविंशार्णवाच्येन क्षीराब्धिशयनाख्यद्वाविंशेन रूपेण तदुपास्त्येति यावत् । आदित्यात् परमादित्यमण्डलात् परतो वर्तमानं क्षीराब्धिस्थश्वेतद्वीपगतं भगवन्तं जयति प्राप्नोति । तस्य भगवतो माहात्म्यमाह– **तन्नाकमिति** ॥ तद् द्वाविंशकं भगवद्रूपं नाकं न विद्यते अकं दुःखं सुखाभावो वा यस्मिंस्तन्नाकम् । तद् विशोकं भक्तशोकनाशकमित्यर्थः ॥ ५ ॥

यदभिप्रेतं मासादिस्थकेशवादिरूपोपासनया तत्तद्रूपप्राप्तिरिति तदयुक्तम् । तथा सति पृथिव्यादिस्थितरूपस्याऽदित्यस्थरूपाप्रापकत्वप्राप्त्याऽऽदित्यस्थरूपस्य चेतररूपाप्रापकत्वप्राप्त्या आत्मसम्मितमित्युक्तं सर्वरूपसाम्यमनुपपन्नं स्यादित्याशङ्कां परिहरन्नात्मसम्मितत्वादिप्रकारेण पूर्वोक्तसप्तविधभगवदुपास्तेः फलमाह – **आप्नोतीति** ॥ योऽधिकारी

एतत्सप्तविधभगवद्रूपमेवमुक्तरीत्या विद्वानात्मसम्मितमतिमृत्यु सप्तविधं सामोपास्ते । स उपासक इह पृथिव्यादिषु स्थितजामदग्न्यादिरूप-प्राप्तावप्यादित्यस्थस्य कल्क्याख्यभगवतो जयं प्राप्तिमाप्नोति । ऐक्यात् । तथाऽस्योपासकस्याऽदित्यजयादादित्यस्थभगवत्प्राप्त्या परोजयो रूपा-न्तरप्राप्तिरपि भवति । ऐक्यादेवेति भावः । तथा च स्वप्राप्तावपि स्वेतरप्रापकत्वादिना सर्वत्र साम्योपेतभगवत्प्राप्तिरेवैतदुपासनफलमित्युक्तं भवति । सप्तविधभगवदुपास्तिविद्योक्तार्थावधारणार्था द्विरुक्तिः ॥

॥ इति दशमः खण्डः ॥

## उपनिषत् (खण्डः - ११)

*गायत्रसामप्रतिपाद्यभगवदुपासना*

**मनो हिङ्कारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद् गायत्रं प्राणेषु प्रोत९ँ स य एवमेतद् गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या महामनाः स्यात् तद् व्रतम् ॥१॥११॥**

भाष्यम्

'प्राणसंस्थे हरौ[१] प्रोतं गायत्रं साम सर्वदा ।
तद्वाचकं नियम्यं चेत्यतः प्रोतमितीर्यते ॥
प्राणस्थविष्णोः सामीप्यात् तत्स्थमेतदितीर्यते ।
क्वचिन्निर्देशसामीप्याद् विष्णोरेतदितीर्यते ॥' इति च ।
' प्राणस्थविष्णुलाल्यत्वात्[२] प्राणीत्येवाभिधीयते ।
मोक्षस्तु सर्वमायुः स्यान्नित्यत्वाज्ज्योक् समस्तवित् ॥'
इति च ॥ ११ ॥

१. 'प्राणसंस्थहरौ'' ह. २. 'विष्णुलाळ्यत्वात्' ह.

## पदार्थकौमुदी

### भाष्यार्थः

पुनश्च हिङ्कारादिसामभक्तिप्रतिपाद्यस्य हिङ्कारादिनाम्नः प्रद्युम्नादि-पञ्चरूपस्य भगवत उपास्त्यर्थं प्राणाग्न्याद्यधिष्ठानोक्तिपूर्वकं गायत्र-रथन्तरादिसामवाच्यत्वतन्नियामकत्वरूपमाहात्म्यमेकादशखण्डैराह – **मन इत्यादिना** ॥ तत्र पूर्वोक्तेष्वेव प्राणादिषु प्रकारान्तरेण पञ्चविध-भगवदुपास्तिकथनपूर्वं तस्य गायत्रसामप्रोतत्वमाह – **मन इत्याद्य-खण्डेन** ॥ अत्र ''मनो हिङ्कारः'' इत्यादेः प्रागुक्तरीत्याऽर्थः स्पष्ट इति भावेन ''एतद्गायत्रं प्राणेषु प्रोतम्'' इत्येतद्व्याचष्टे – **प्राणेति** ॥ अनेन प्रसिद्धप्राणेषु गायत्रं प्रोतमित्यपास्तम् । प्रोतशब्दस्य तत्स्थत्वमात्रमर्थ इति प्रतीतिनिरासायार्थमाह – **तद्वाचकमिति** ॥

ननु पूर्वं गायत्रसाम्नोऽप्रकृतत्वात् कथमेतदिति परामर्श इत्यत आह – **प्राणस्थेति** ॥ प्राणस्थविष्णोः सामीप्यान्मनो हिङ्कार इत्यादिना समीपे प्रकृतत्वात् तत्स्थं गायत्रं सामापि प्रकृतम् । अतः तत्स्थं गायत्रं सामैतदित्यनेन परामृश्यत इत्यर्थः । अत एवैतच्छब्देन प्राणस्थविष्णु-संस्थत्वस्य लाभात् प्रोतमित्यस्यार्थान्तरमुक्तम् । ''एतद्रथन्तरमग्नौ प्रोतम्'' इत्यादिकमप्येवमेव व्याख्येयम् । नन्वेवं तर्हि ''य एतदेवं विद्वानात्मसम्मितम्'' इत्यादावप्येतच्छब्देन पूर्वं प्रकृतविष्णुस्थमेव किञ्चित् परामृश्यते न विष्णुरित्यत आह – **क्वचिदिति** ॥ क्वचिद् विष्णोर्निर्देशसामीप्यात् समीप एव निर्दिष्टत्वात् स एवैतदित्यादाव-प्येतच्छब्देन पूर्वप्रकृतविष्णुस्थेति परामृश्यत इत्यर्थः । ''प्राणी भवति'' इत्यादेरविकलकरणो भवति । शतवर्षाणि जीवति उज्वलन् जीवतीत्यर्थ-प्रतीतिनिरासाय प्रमाणेनार्थमाह – **प्राणस्थेति** ॥ एकादशः खण्डः ॥

## ततश्चायं खण्डार्थः

अत्र ''प्राणेषु पञ्चविधं सामोपासीत'' इत्यादौ वक्तव्यम् । हिङ्कारः प्रद्युम्नो मनोनामा मनःस्थश्चेत्यादि पूर्ववत् ॥ मनआदिस्थस्य हिङ्कारादिनाम्नो भगवतः गायत्रसामवाच्यत्वादिनोपास्तिः कर्तव्येति भावेन गायत्रसामवाच्यत्वं तन्नियामकत्वं चाऽऽह – **एतदिति** ॥ एतत् प्राणस्थविष्ण्वाश्रितं गायत्रं साम प्राणेषु इन्द्रियस्थविष्णुरूपेषु प्रोतं तद्वाचकं तन्नियम्यं चेत्यर्थः । एवमुपासकस्य फलमाह – **स इति** ॥ योऽधिकारी एतद् हिङ्कारादिनामकमेवं मनआदिस्थत्वेनैतद्गायत्रं प्राणेषु प्राणस्थविष्णुरूपेषु प्रोतं च वेद स प्राणी प्राणस्थविष्णुलाल्यो भवति । सर्वमायुर्मोक्षलक्षणमेति ज्योक् सर्वज्ञः सन् जीवति प्रजया पशुभिर्महान् भवति । प्रकृष्टत्वेन जननान् प्रजेति ज्ञानम् । पान्ति शंसाधनं चेति पशवो वेदाः तैर्महान् भवतीत्यर्थः । नचैवं ज्योगित्यनेन पुनरुक्तिः परोक्षापरोक्षज्ञानयोर्ग्रहणात् । लौकिकप्रजादिकमपि यथायोग्यं तदिच्छूनां भवति । कीर्त्या महान् भवति । एतत्फलहेतूक्तभगवदुपासनाङ्गतया किञ्चिद् व्रतमाह – **महामना इति** ॥ एवमुत्तरत्रापि व्याख्येयम् ॥ १ ॥

**॥ इति एकादशः खण्डः ॥**

## उपनिषत् (खण्डः - १२ )

*रथन्तरसामप्रतिपाद्यभगवदुपासना*

**अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ सꣳशाम्यति तन्निधनमेतद् रथन्तरमग्नौ प्रोतम् ॥ १ ॥**

**स य एवमेतद् रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान्**

**कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत् तद् व्रतम् ॥ २ ॥ १२ ॥**

**भाष्यम् :**

**'मन्थनादिस्थितं यस्तु[1] तन्नामानं हरिं परम् ।**
**तत्तत्क्रियैकहेतुत्वाद् योऽग्नौ ध्यायेज्जनार्दनम् ।**
**रथन्तराश्रयं पञ्चरूपं स च विमुच्यते ॥' इति च ॥ १२ ॥**

## पदार्थकौमुदी

**भाष्यार्थः**

"अभिमन्थति स हिङ्कारः" इति खण्डस्य भगवत्परत्वज्ञापनाय "स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्व्यन्नादो भवति" इत्यादि-फलवाक्यं प्रमाणेन व्याचष्टे – **मन्थनादीति** ॥ तत्तत्क्रियैकहेतुत्वात् मथनधूत्कारादिक्रियामुख्यहेतुत्वादित्यर्थः ॥ द्वादशः खण्डः ॥

**ततश्चायं खण्डार्थः**

एतदग्निस्थविष्ण्वाश्रितं रथन्तरं सामाग्नौ प्रोतमग्निस्थभगवद्रूपवाचकं तन्नियम्यं चेत्यर्थः । ब्रह्मवर्चस्वी ब्रह्मणो विष्णोर्वरणादेव चाऽयितमभिवृद्धं स्वरूपतेजो ब्रह्मवर्चः तद्वान् ब्रह्मवर्चस्वी मुक्त इति यावत् । संसृतावल्पतेजो जीवरूपं भगवान् मुक्तौ महत्तेजः करोतीति प्रमाणप्रमितम् । अन्नादो यथेष्टान्नभोक्ता भवति । अग्निं प्रत्यग् अग्न्यभिमुखो नाऽचामेत् । न भक्षयेत् । न निष्ठीवेत् श्लेष्मनिरसनं च न कुर्यात् तद् व्रतम् ॥ १-२॥

**॥ इति द्वादशः खण्डः ॥**

## उपनिषत् (खण्डः १३)

*वामदेव्यसामप्रतिपाद्यभगवदुपासना*

**उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स**

१. 'यत्तु' ग.

**उद्गीथः प्रतिस्त्री[१] सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद् वामदेव्यं मिथुने प्रोतम् ॥ १ ॥**

**स य एवमेतद् वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात् प्रजायते सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न काञ्चन परिहरेत् तद् व्रतम् ॥ २ ॥ १३ ॥**

## भाष्यम्

**'मिथुनस्थं पञ्चरूपं[२] ध्यात्वैव पुरुषोत्तमम् ।**
**अत्यागी च स्वभार्याणां मुच्यते नात्र संशयः ॥' इति च ।**
**मिथो नयतीति मिथुनं भगवान् ॥ १३ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''उपमन्त्रयते'' इति खण्डोऽपि भगवत्पर इति ज्ञापनाय '' स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति'' इत्यादिफलवाक्यं प्रमाणेन व्याचष्टे– **मिथुनस्थमिति** ॥ मिथुनीभवतीत्यस्यार्थः – **अत्यागी च स्वभार्याणामिति** ॥ अनेन ''न काञ्चन परिहरेत्''इत्यस्य स्वभार्याणां मध्ये न काञ्चन परित्यजेदित्यर्थः सूचितः । तेन काञ्चन काञ्चिदपि स्त्रियं स्वतल्पप्राप्तां समागमार्थिनीं न परिहरेदिति व्याख्यानं परस्त्रीरागपारवश्येन कृतमित्युपेक्ष्यमिति सूचितम् । प्रतिषेधशास्त्र-विरोधात् । नच वामदेव्योपासनाङ्गत्वेन विधानादेतस्मादन्यत्र प्रतिषेध-स्मृतयः । वचनप्रामाण्यादस्य च धर्मत्वावगतेरिति वाच्यम् । एतद्वचनस्यैव

१. 'प्रति स्त्रिया' हृ. २. 'मिथुनस्थपञ्चरूपं' हृ.

बहुस्मृतिविरोधेनोक्तरीत्याऽन्यार्थत्वात् । ''मिथुने प्रोतम्''इत्युक्तो मिथुनशब्दो मिथुनस्थभगवत्पर इत्युक्तम् । तत्र तं शब्दं निर्वक्ति – **मिथ इति** ।। ओकारस्योकारो निर्वचनत्वात् ।। खण्डः -१३ ।।

## ततश्चायं खण्डार्थः

उपमन्त्रयते रन्तुं सङ्केतं करोति । ज्ञपयते सुखमनुभवति । प्रति स्त्री सह शेते यत्स्त्रिया सह प्रतिशेते यत्स्त्रिया सहाऽभिमुख्येन शयनं करोतीत्यर्थः। कालं मैथुनसमयं गच्छति प्राप्नोति । तन्निधनम् । न केवलमेतावत् । पारं मैथुनपारं गच्छति प्राप्नोति । तन्निधनम् । मिथुनीभवति स्वभार्यात्यागी-भवतीत्यर्थः । मिथुनान्मिथुनात् प्रजायते । अमोघरेता भवतीति यावत् । न काञ्चन परिहरेत् । एकस्यैव यदि कर्मवशेनानेकभार्याः स्युस्तासु न काञ्चन परित्यजेदित्यर्थः ।। १-२ ।।

**।। इति त्रयोदशः खण्डः ।।**

## उपनिषत् (खण्डः १४-२१)

*बृहत्सामप्रतिपाद्यभगवदुपासना*

**उद्यन् हिङ्कार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद् बृहदादित्ये प्रोत ँ॒ स य एवमेतद् बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या तपन्तं न निन्देत् तद् व्रतम् ।। १४ ।।**

*वैरूपसामप्रतिपाद्यभगवदुपासनम्*

**अभ्राणि सम्प्लवन्ते स हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स**

उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद् वैरूपं पर्जन्ये प्रोतꣳ स य एवमेतद् वैरूपं पर्जन्ये प्रोतं वेद विरूपाꣳश्च सरूपाꣳश्च पशूनवरुन्धे सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या वर्षन्तं न निन्देत् तद् व्रतम् ॥ १५ ॥

*वैराजसामप्रतिपाद्यभगवदुपासनम्*

वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनमेतद् वैराजमृतुषु प्रोतꣳ स य एवमेतद् वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ऋतून्न निन्देत् तद् व्रतम् ॥ १६ ॥

*शक्वरीसामप्रतिपाद्यभगवदुपासनम्*

पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकीभवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या लोकान्न निन्देत् तद् व्रतम् ॥ १७ ॥

*रेवतीसामप्रतिपाद्यभगवदुपासनम्*

अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान् भवति सर्वमायुरेति ज्योग् जीवति महान् प्रजया

पशुभिर्भवति महान् कीर्त्या पशून्न निन्देत् तद् व्रतम् ॥ १८ ॥

*यज्ञायज्ञीयसामवेद्यभगवदुपासनम्*

लोम हिङ्कारस्त्वक् प्रस्तावो माꣳसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद् यज्ञायज्ञीयमङ्गेषु प्रोतꣳ स य एवमेतद् यज्ञायज्ञीय-मङ्गेषु प्रोतꣳ वेदाङ्गीभवति नाङ्गेन विमूर्च्छति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात् तद् व्रतं मज्ज्ञो नाश्नीयादिति वा ॥ १९ ॥

*राजनसामप्रतिपाद्यभगवदुपासनम्*

अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहार-श्चन्द्रमा निधनमेतद् राजनं देवतासु प्रोतꣳ स य एवमेतद् राजनं देवतासु प्रोतं वेदैतासामेव देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ब्राह्मणान्न निन्देत् तद् व्रतम् ॥२० ॥

*इतरसर्वसामप्रतिपाद्यभगवदुपासनम्*

त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाꣳसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत् साम सर्वस्मिन् प्रोतं स य एवमेतत् साम सर्वस्मिन् प्रोतꣳ वेद सर्वꣳ ह भवति ॥ १ ॥

तदेष श्लोको यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति । यस्तद् वेद स वेद सर्वꣳ सर्वा दिशो बलिमस्मै

हरन्ति । सर्वमस्मीत्युपासीत तद् व्रतं तद् व्रतम् ॥ २ ॥ २१ ॥

भाष्यम्

'आदित्यनाम्नि पश्चात्मन्यभिध्याते जनार्दने ।
पर्जन्यनाम्नि चर्त्वाख्ये लोकाख्ये पशुसञ्ज्ञके ॥
अङ्गाख्ये देवताख्ये च सर्वाख्ये च प्रतिष्ठितम् ।
बृहदाद्यं च यो वेद मुच्यते नात्र संशयः ॥

## पदार्थकौमुदी

भाष्यार्थः

''उद्यन् हिङ्कारः'' इत्यादिखण्डाष्टकस्य भगवत्परत्वज्ञापनाय ''स य एवमेतद् बृहदादित्ये प्रोतं वेद'' ''स य एवमेतद् वैरूपं पर्जन्ये प्रोतं वेद'' ''स य एवमेतद् वैराजमृतुषु प्रोतं वेद'' ''स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद'' ''स य एवमेता रेवत्यः पशुषु प्रोता वेद'' ''स य एवमेतद् यज्ञायज्ञीयमङ्गेषु प्रोतं वेद'' ''स य एवमेतद्राजनं देवतासु प्रोतं वेद'' ''स य एवमेतत् साम सर्वस्मिन् प्रोतं वेद'' इत्यष्टौ फलवाक्यानि प्रमाणेन व्याचष्टे – **आदित्येति** ॥ ''पश्चात्मन्यभिध्याते'' इत्यनेन ''उद्यन् हिङ्कारः'' इत्यादिकमुपासनार्थमेवोक्तमित्युक्तं भवति । ''बृहदाद्यम्'' इत्यादिपदेन वैरूपादिग्रहणम् ।

भाष्यम्

समुद्रेकात् समुद्रस्तु देशनाद् दिश उच्यते ।
लोपकत्वाल्लोम च स्यात् तवोरूपस्त्वगुच्यते ॥
मादनात् साररूपत्वान्मांसोऽस्थि त्वासनात् स्थिरम् ।
मदस्य जननान्मज्जा सोऽङ्गमन्तिगतत्वतः ॥

**वायुर्ज्ञानात् तथाऽऽयुष्ट्वान्नक्षत्रं च स्वतन्त्रतः ।**
**चन्द्रमाः परमानन्दात् त्रैविद्यो ज्ञानरूपतः ॥**
**वयांसि व्ययनाच्चैव वीत्याकाशस्तथोच्यते ।**
**तत्रायनाद् वयः प्रोक्तो मरीचिर्मितरुक्त्वतः ॥**
**सर्पः सर्पणहेतुत्वाद् गन्धर्वो गोधरत्वतः ।**
**पिता स सृष्टिहेतुत्वात् सर्वं पूर्णगुणत्वतः ।**
**एतैर्नामभिरुद्दिष्टो भगवान् पुरुषोत्तमः ॥' इति च ॥**

## पदार्थकौमुदी

### भाष्यार्थः

अत्र प्रकरणाष्टके प्रायः सर्वेषां शब्दानां भगवत्परतया व्याख्यातत्वादव्याख्यातान् कांश्चिच्छब्दान् व्याचक्षाणस्तावत् ''समुद्रो निधनम्'' इत्युक्तं समुद्रशब्दं भगवति निर्वक्ति – **समुद्रेकादिति** ॥ सम्यगुद्रेकादित्यर्थः । ''दिशः प्रतिहारः'' इत्युक्तदिक्शब्दं निर्वक्ति – **देशनादिति** ॥ ''लोम हिङ्कारः''इत्युक्तलोमशब्दं निर्वक्ति – **लोपकत्वादिति**॥ ''त्वक् प्रस्तारः'' इत्युक्तं त्वक्शब्दं निर्वक्ति – **तवोरूप इति** ॥ प्रकाशरूप इत्यर्थः । ''मांसमुद्गीथः'' इत्युक्तमांसशब्दं निर्वक्ति– **मादनादिति** ॥ आह्लादनादित्यर्थः । अनुस्वारश्चाऽधिक्यार्थक इति ज्ञेयम् । ''अस्थि प्रतिहारः'' इत्युक्तास्थिशब्दं निर्वक्ति – **अस्थि त्विति** ॥ स्थिरमासनादस्थीत्युच्यत इत्यर्थः । तुशब्दोऽवधारणार्थः । ''मज्जा निधनम्''इत्युक्तमज्जाशब्दार्थमाह – **मदस्येति** ॥ ''एतद्यज्ञायज्ञीयमङ्गेषु प्रोतम्'' इत्युक्ताङ्गशब्दं निर्वक्ति – **सोऽङ्गमिति** ॥ अन्तिकगतत्वत इत्यर्थः । ''वायुः प्रस्तावः'' इत्युक्तवायुशब्दार्थमाह–

**वायुरिति ॥** ज्ञानादिति वशब्दार्थः । आयुष्ट्वादित्यायुःशब्दार्थः । आयुःप्रदत्वादित्यर्थः । ''नक्षत्राणि प्रतिहारः'' इत्युक्तनक्षत्रशब्दार्थ -माह – **नक्षत्रं चेति ॥** न विद्यते क्षत्रं क्षत्रजात्यवच्छिन्नं नियामकं यस्य तन्नक्षत्रमिति शब्दार्थमभिप्रेत्य स्वतन्त्रत इत्युक्तम् । ''चन्द्रमा निधनम्'' इत्युक्तचन्द्रमश्शब्दार्थमाह–**चन्द्रमा इति ॥** चदि आह्लादन इति धातोः । ''त्रयी विद्या हिङ्कारः'' इत्युक्तत्रयीविद्याशब्दार्थमाह – **त्रैविद्य इति ॥** ज्ञानरूपतो ज्ञानविषयत्वत इत्यर्थः । तेन त्रय्या वेद्यत इति त्रैविद्येत्यर्थ इत्युक्तं भवति । ''नक्षत्राणि वयांसि मरीचयः प्रतिहारः'' इत्यनेन नक्षत्र-शब्दस्य व्याख्यातत्वात् ''वयांसि मरीचयः'' इत्येतद्व्याचष्टे – **वयांसीति ॥** वयांसि चेति चशब्दान्वयः । एवशब्देन प्रसिद्धार्थं परोक्त-मपाकरोति । अप्रतीतेर्व्ययनादित्युक्तं विवृणोति – **वीत्याकाश इति ॥** तथाशब्दश्चशब्दार्थः । वीति चाऽकाश उच्यते । तत्राऽकाशेऽयनाद् गमनादित्यर्थः । मितरुक्त्वतः प्रमितप्रकाशत्वत इत्यर्थः । ''सर्पा गन्धर्वाः पितरस्तन्निधनम्''इत्युक्तसर्पादिशब्दान् व्याचष्टे – **सर्प इति ॥** सर्पण-हेतुत्वाद् गमनहेतुत्वात् सृप्लृ गतौ । गौर्भूर्विद्या वा । ''एतत्साम सर्वस्मिन् प्रोतम्'' इत्युक्तसर्वशब्दं व्याचष्टे – **सर्वमिति ॥** उक्तनिमित्तेन समुद्रादिशब्दाभिधेयः क इत्यत आह – **एतैरिति ॥**

## भाष्यम्

*'सर्वं ह भवति' इति वाक्यस्यैक्यप्रतिपादकत्वाभावकथनम्*

'यादृश्येवोन्नतिर्योग्या तस्याः सर्वात्मनाऽऽयतिः ।
सर्वभावस्तु विज्ञेयो न तु सर्वस्वरूपता ॥' इति च ।

**न च सर्वस्वरूपता पुरुषार्थः । नारकित्वादेरपि[1] प्राप्तेः । न चार्थान्तरकल्पना युक्ता । प्रमाणाभावात् ।**

**'असनान्मितिरूपत्वादस्मीत्युक्तः परो हरिः ।**
**तं सर्व इत्युपासीत पूर्णता सर्वता स्मृता ॥' इति च ।**

**सर्वमस्मीत्युत्तमपुरुषत्वे ''तेभ्यो न ज्यायः परमन्यदस्ति''इति ज्यायःपरशब्दौ व्यर्थौ । अन्यस्यैवाभावात् ।**

**अतस्ततोऽन्यदस्तीति सिद्धम् । अतस्ततोऽन्यत् परमज्याय एव नास्ति । ज्यायो लक्ष्मीर्विद्यते । परमज्यायस्तु भगवानेव ।**

## पदार्थकौमुदी

### भाष्यार्थः

''सर्वं ह भवति'' इत्यस्योपासकः सर्वस्वरूपो भवतीत्यर्थ इति व्याख्याननिरासाय प्रमाणेनैव तद् व्याचष्टे – **यादृशीति** ॥ आयतिः प्राप्तिः । एतेन सर्वं भवतीत्यस्य सर्वेश्वरो भवति । निरुपचरितसर्वोत्तमत्वे हि दिग्भ्यो बलिप्राप्त्युपपत्तिरिति व्याख्यानं चापास्तम् । उपासके निरुपचरितसर्वेश्वरत्वस्य बाधितत्वात् । ननु सर्वभावः सर्वस्वरूपत्वमेव किं न स्यादिति चेत् । न । प्रमाणेनैवान्यथाव्याख्यातत्वात् । किञ्च, सर्वभावो ह्युपासनाफलत्वेनोच्यते । नच सर्वस्वरूपत्वं पुरुषार्थः, येनात्र सर्वभावशब्दार्थः स्यादित्याह – **नचेति** ॥ कुतो नेत्यत आह – **नारकित्वादेरिति** ॥ ननु सर्वं भवतीत्यस्याविद्याकृतासर्वत्वव्यावृत्तिरर्थो न प्रतीत एव । एवं च नारकित्वादेराविद्यकत्वान्नोक्तदोष इत्यत आह – **न चेति** ॥ कुतो

---

१. 'नरकित्वादेरपि' ह.

नेति चेत्। असर्वत्वस्याविद्याकृतत्वे तद् व्यावृत्तेश्च सर्वभावशब्दार्थत्वे च प्रमाणाभावादित्यत आह – **प्रमाणाभावादिति ॥**

ननु ''सर्वमस्मीत्युपासीत'' इत्युत्तरवाक्ये सर्वात्मकत्वेनो-पासना विधीयते। अतः ''सर्वं ह भवति'' इति फलवाक्यमपि तथैव व्याख्येयम्। उपासनानुसारित्वात् फलस्येत्यतस्तदपि वाक्यं प्रमाणेनैव यथावद् व्याचष्टे– **असनादिति ॥** निरसनात्। मितिरूपत्वाज्ज्ञानरूपत्वादि-त्यर्थः। तस्य सर्वरूपत्वं बाधितमित्यत उक्तम् – **पूर्णेति ॥** अनेनास्मि अस्मिनामकं ब्रह्म सर्वं पूर्णमित्युपासीत इति वाक्यं योजितं भवति।

नन्वस्मीत्यस्य किं योगवृत्त्या भगवत्परत्वाङ्गीकारेणोत्तमपुरुषत्वमेव किं न स्यात्। नच सर्वभाव उपासकस्य बाधित इति वाच्यम्। यतोऽत्र न स्वस्यानात्मप्रपञ्चात्मकत्वेनोपासनमुच्यते। येन श्रुत्यर्थो बाधितः स्यात्। किन्त्वनात्मप्रपञ्चस्य मिथ्यात्वात् यत्सर्वं सर्वत्रानुगतमारोपाधिष्ठानचैतन्यं ''तदस्मीत्युपासीत'' इति सर्वचेतनात्मकत्वेनेत्यतस्तावत् सर्वस्य मिथ्यात्वाङ्गीकारे बाधकमाह – **सर्वमिति ॥** उत्तमपुरुषत्वेन सर्वस्य मिथ्यात्वमभिप्रेतं स्यात् तदाऽन्यस्यैवाभावेन पूर्वमुदाहृतश्लोके तेभ्योऽन्यन्नास्तीत्येव वक्तव्यतयोत्तमत्वार्थकज्यायःपरशब्दौ व्यर्थौ स्यातामित्यर्थः। तेभ्य इत्यस्य च भगवत्परत्वमाचार्य एवोत्तरत्र वक्ष्यति। यत एवं सर्वस्य मिथ्यात्वाङ्गीकारे ज्यायःपरशब्दौ व्यर्थावतस्तेभ्योऽन्य-दङ्गीकृत्य ज्यायःपरनिषेध एवाङ्गीकर्तव्यः। एवं च न सर्वस्य मिथ्यात्वं वक्तुं युक्तमित्याह – **अत इति ॥** तेभ्य इत्यस्य तत इत्यनुवादः।

ननु भवत्पक्षेऽपि ज्यायःपरशब्दयोरन्यतरस्य वैयर्थ्यम्। तेभ्योऽन्यत् परं ज्यायो वा नेत्येतावता पूर्तेः। उभयोपादानं त्वयुक्तम्। तेभ्योऽन्यत् परं ज्यायो नास्तीत्युक्ते भगवत्परसद्भावप्राप्त्या ''न तत्समश्चाभ्यधिकश्च

दृश्यते'' इति श्रुतिविरोधादिति चेन्न । यतोऽत्र तेभ्य इति पञ्चम्यन्तमन्यदित्यस्य प्रतियोगिमात्रबोधकं, नतु परं ज्याय इत्यत्रावधिबोधकम् । येनोक्तदोषप्रसङ्ग इति भावेन तद्वाक्यं व्याचष्टे – **अत इति** ॥ परपक्षे ज्यायःपरशब्दयोर्वैयर्थ्यप्रसङ्गादित्यर्थः । ब्रह्माद्यपेक्षयेति शेषः । ज्यायोमात्रनिषेधनिरासाय ''सर्वं वाक्यं सावधारणम्'' इति न्यायेनैवेत्युक्तम् । ननु यदि ततोऽन्यज्ज्यायो विद्येत तदा ''परमज्याय एव नास्ति''इति निषेधो युक्तः स्यात् । नच तदस्तीत्यत आह – **ज्याय इति** ॥ ननु यथा ज्यायो लक्ष्मीरस्ति तथा परमज्यायोऽपि यदि कश्चिद् भगवदन्यः स्यात् तदा तन्निषेधोऽनुपपन्न एवेत्यत आह – **परमेति** ॥ नतु ततोऽन्यः । एवं च भगवत्सदृशनिषेधोऽर्थोऽस्य वाक्यस्येति भावः ।

## भाष्यम्

*'सर्वमस्मि' इति वाक्यस्यापि ऐक्यपरतानिरासः*

**जीवैक्याङ्गीकारे यस्तद् वेदेति तच्छब्दोऽप्ययुक्तः । तदा स्वात्मानं वेदेत्येव स्यात् । न च प्रसिद्धभेदानुवादः[१] । श्रुतिं विना तत्स्वरूपस्यैवासिद्धेस्तद्भेदस्यातिशयेनासिद्धिः । ऐक्य ईश्वरस्य स्वज्ञानमस्तीति न तद्रूपस्य जीवस्याज्ञानादिकं युज्यते । औपाधिकभेदाङ्गीकारेऽप्युपाधिरुभयोरैक्यादुभयोरप्यज्ञत्वं कुर्यात् । उपाधिनिमित्तदोषाश्चोभयोरपि स्युः । उपाधिसम्बन्धस्य समत्वात् । उपाधिसम्बन्धस्यास्मिन्नन्यथा तस्मिन्नन्यथेति विशेषार्थमयमसाविति भेदस्योपाधिं विना स्वत एवापेक्षितत्वात् । अतः स्वतो भिन्नस्यैवोपाधिना विशेषो भवति ।**

१. 'प्रसिद्धभेदस्यानुवादः' ह.

## पदार्थकौमुदी

### भाष्यार्थः

एवमनात्मप्रपञ्चस्य मिथ्यात्वं दूषयित्वेदानीं यदुक्तं सर्वं सर्वत्रानुगतं यच्चैतन्यं तदस्मीत्युपासतेति । तद्दूषयति– **जीवेति** ॥ सर्वमस्मीत्यस्यार्थत्वेनेति शेषः । जीवस्योपासकस्य सर्वचैतन्यैक्याङ्गीकार इत्यर्थः । अपिशब्देन तेभ्यो न ज्यायः परमन्यदस्तीत्यस्य समुच्चयः । उक्तरीत्या तद्वाक्येन भगवदतिरिक्तचेतनसद्भावप्रतीतेः तच्छब्दोऽप्ययुक्तः स्यात् । तेन हि यच्छब्दनिर्दिष्टादुपासकाद् भिन्नमेव किञ्चिदुपास्यं प्रतीयत इत्यर्थः । ऐक्यपक्षे प्रयोगप्रकारप्रदर्शनेन तदेवोपपादयति– **तदेति** ॥ यदुक्तं ''सर्वमस्मि'' इत्यस्य जीवैक्यमर्थ इत्यङ्गीकारे ''यस्तद्वेद'' इत्यादिविरोधः स्यादिति, तन्न । जीवेश्वरभेदस्य प्रत्यक्षानुमानसिद्धत्वेन ''यस्तद्वेद'' इत्यादेः प्रसिद्धभेदानुवादितया दुर्बलत्वाद् अभेदस्य प्रमाणान्तरासिद्धत्वेन सर्वमस्मीत्यादेरनुवादकतया प्रबलत्वात् । नच प्रबलं दुर्बलेन बाध्यत इत्यत आह– **नचेति** ॥ कुतो नेत्यत आह– **श्रुतिमिति** ॥ तत्स्वरूपस्येश्वरस्वरूपस्य ।

इदमुक्तं भवति । भेदस्तावद्धर्मिप्रतियोगिप्रतीतिसापेक्षप्रतीतिकः । तत्रेश्वरधर्मिको जीवप्रतियोगिको वा जीवधर्मिक ईश्वरप्रतियोगिको वा भेदः प्रमाणान्तरसिद्ध इति वक्तव्यम् । तत्र यद्यपि जीवः साक्षिवेद्यः । तथाऽपीश्वरसिद्धिर्न तावच्छ्रुतिव्यतिरिक्तप्रमाणेन । स्वभावविप्रकृष्टतया प्रत्यक्षतोऽसिद्धत्वात् । विपर्ययेणाप्यनुमातुं शक्यत्वेन केवलानुमानासिद्धत्वाच्च । ततश्च श्रुतिं विनेश्वरस्वरूपस्यैवासिद्धेर्धर्मिप्रतियोगिप्रतीत्यभावे तद्भेदस्य सुतरामसिद्धिरिति कथं तद्वाक्यानामनुवादकत्वं दौर्बल्यं वा भवेदिति श्रुत्यैवेश्वरस्तद्भेदो वा सिद्ध इति ''यस्तद्वेद''

इत्यादिस्तदनुवाद इत्यङ्गीकारे तेनैव वाक्येनाभेदवाक्यस्य बाधः स्यादिति हृदयम् । जीवब्रह्मैक्याङ्गीकारे बाधकान्तरमाह– **ऐक्य इति** ॥ अत्रेश्वर-शब्देन ब्रह्मोच्यते । तस्यैव स्वाधीनमायाबलस्येश्वरत्वेन परैरङ्गीकारात् । ऐश्वर्यादिविशिष्टेन जीवस्याभेदानुपपत्तेः ।

इदमुक्तं भवति । जीवब्रह्मणोरभेदपक्षे यच्छुद्धं ब्रह्मचैतन्यं तत् स्वस्वरूपं वेत्ति ? नवा । द्वितीयेऽधिष्ठानज्ञानाभावेन शुद्धस्यापि संसारोपलम्भप्रसङ्गः । "तदात्मानमेवावेत्" इत्यादिश्रुतिविरोधश्च । आद्ये तत्स्वरूपस्य जीवस्यापि श्रवणाद्यभावेऽपि ब्रह्मज्ञानमस्तीति तस्य ब्रह्माज्ञानं न स्यात् । ज्ञानाज्ञानयोर्विरोधात् । तथा चाज्ञानकृतसंसारोपलम्भोऽपि न स्यादिति । आदिपदेन संसारग्रहणम् । ननु ब्रह्मणः स्वज्ञानसद्भावेऽपि तद्रूपस्य जीवस्याज्ञानादिकं युज्यत एव । स्वभावस्तद्रूपत्वेऽप्यौपाधिकभेदस्य सत्त्वेनोपाधिना जीवस्याज्ञत्वाद्युपपत्तेरित्यत आह– **औपाधिकेति** ॥ यद्यौपाधिकभेदसत्वेनोपाधिर्जीवस्याज्ञत्वं कुर्यात् तर्हि ब्रह्मणोऽप्यज्ञत्वं कुर्यात् । जीवब्रह्मणोरैक्यादित्यर्थः । न केवलमेतावत् किं तर्हीत्यत आह– **उपाधीति** ॥ दोषा दुःखादयः । एतेन ब्रह्मणोऽज्ञत्वं मयाऽङ्गीक्रियत एव । अज्ञानस्य शुद्धब्रह्माश्रयत्वाङ्गीकारादित्येतदपि परास्तम् । ननु जीवब्रह्मणोरैक्येऽप्युपाधिर्जीवस्यैवाज्ञत्वं कुर्यात् । उपाधिनिमित्तदुःखादिदोषाश्च तस्यैव स्युः । उपाधेर्जीव एव सम्बद्धत्वात् । तस्य च स्वसम्बद्ध एव कार्यकारित्वादित्यत आह– **उपाधीति** ॥ उभयोरपीत्यनुवर्तते । नहि दर्पणं मुखसम्बन्धीति शक्यते वक्तुमिति भावः ।

ननूपाधिसम्बन्धस्योभयत्र समत्वेऽप्युपाधिर्जीवभाग एव स्वकार्यं करोति । न ब्रह्मभाग इति विशेषो युज्यते । उपाधेः प्रतिबिम्बपक्षपातित्व-

नियमात् । यथा खलु दर्पणादिकं मुखसम्बन्ध्यपि प्रतिमुख एव मालिन्यादिकं करोति न मुख इति विशेष इत्यत आह– **उपाधिसम्बन्धस्येति** ॥ अस्मिञ्जीवभागे । अन्यथा ब्रह्मभागापेक्षया स्वकार्यकारित्वमिति यावत् । तस्मिन् ब्रह्मभागे अन्यथा जीवभागापेक्षया स्वकार्यकारित्वमिति यावत् । उपाधिसम्बन्धस्योभयत्र समत्वेऽप्युपाधिर्जीवभाग एव स्वकार्यं करोति न ब्रह्मभाग इति वदन् प्रष्टव्यः । जीवब्रह्मणोरैक्यमुत भेद इति । नाऽद्यः । उक्तविशेषार्थमयमसाविति निर्देशविषयत्वेन भेदस्यैवापेक्षितत्वात् । द्वितीये स किमौपाधिकः स्वाभाविको वा । नाऽद्यः । आत्माश्रयाद्यापातेन भेदस्योपाधिं विना स्वत एवापेक्षितत्वात् । न द्वितीयः । विवादपर्यवसानापत्तेः । उपाधिसङ्कीर्तनवैफल्याच्चेति भावः । मुखप्रतिमुखयोरपि स्वाभाविकभेदस्य सत्त्वान्न दृष्टान्तः सम्प्रतिपन्न इति हृदयम् ।

ननु यदि जीवब्रह्मणोर्मुखप्रतिमुखयोर्वा स्वाभाविकभेदः स्यात् तर्ह्युपाधिर्व्यर्थः स्यात् । तस्याविद्यमानभेदकरणव्यतिरेकेण कार्यान्तराभावात् । दृष्टं चोपाधेरविद्यमानभेदकारकत्वम् । घटमठाद्युपाधेः स्वतोऽभिन्नाकाशभेदकत्वदर्शनादित्यत आह– **अत इति** ॥ यत एवमुपाधिं विना स्वत एव भेदस्यापेक्षितत्वमत इत्यर्थः । विशेषो विद्यमानभेदज्ञापनरूपः ।

अयमाशयः । नाऽकाशादावपि घटादेरविद्यमानभेदकारकत्वं वक्तुं युक्तम् । असम्बद्धस्योपाधेर्भेदकत्वेऽतिप्रसङ्गात् । उपाधिसम्बन्धस्य सर्वदेशवृत्तित्वे त्वभेदकत्वप्रसङ्गात् । प्रदेशवृत्तित्वेऽपि तस्य प्रदेशस्योपाधिकृतत्वेऽनवस्थादिप्रसङ्गात् स्वाभाविकमेवेष्टव्यम् । तथा च प्राक् सिद्धस्याऽकाशभेदस्योपाधिना कर्तुमशक्यत्वात् स्वतो भिन्नस्यैवाऽकाशादेरुपाधिना विशेषो विद्यमानभेदज्ञापनरूपो भवतीत्यङ्गीकर्तव्यमिति ।

भाष्यम्

**'यस्तु भिन्नः स्वतः खादिस्तस्य भेदो ह्यबुद्धिनाम् ।**
**उपाधिभिर्ज्ञाप्य एव न तु भेदं स्वयं सृजेत् ॥**
**उपाधिरप्यभिन्नस्य भेदं साधयितुं क्वचित् ।**
**न क्षमः सिद्धभेदस्य ज्ञापकः स्यादबुद्धिनाम् ।**
**आकाशा अप्यतस्त्वेते ह्यनन्ता अप्कणादिवत् ॥' इति ब्रह्मतर्के ।**
**अतो न जीवेशाभेदः ।**
**'न तु देवः स्वयं भूत्वा देवदेवं समर्चयेत् ।**
**समानव्यवहारे हि न पूज्यः पूजको भवेत् ॥' इति च परम संहितायाम्[१] ।**

पदार्थकौमुदी

भाष्यार्थः

आकाशादौ घटमठाद्युपाधिना प्राग् विद्यमानो भेदो ज्ञाप्यत एव । नत्वविद्यमानो भेदः क्रियत इत्यत्र तर्कशास्त्रवाक्यं प्रमाणयति – **यस्त्विति** ॥ अभिन्नाव्याकृताकाशापेक्षया विशेषद्योतनाय तुशब्दः । अत्र खशब्देन भूताकाशं विवक्षितम् । तस्य घटाद्यवच्छिन्नस्य बहिष्ठ-भूताकाशापेक्षया स्वत एव भिन्नत्वात् । उक्तं च प्रथमतात्पर्ये–

''स्वरूपं जायमानं चाऽकाशं तु घटे द्विधा ।
स्वरूपं जायमाने तु घटे निर्भेदमेव तु ।
भिन्नवद् व्यवहारस्य समर्थं तल्लये नतु ॥'' इति । यस्त्वभिन्नः स्वतः

---

१. 'इति परमसंहितायाम्' ग.

खादिस्तस्य भेदः प्रदेशविशेष उपाधिभिर्ज्ञाप्य इत्यपि योज्यम् । एतदभिप्रायेणैवोपाधिखण्डनटीकायां ''खेऽपि देशान्तरस्य सः । विद्यमानस्य भेदस्य ज्ञापकः'' इत्येतद्वाक्यं ''यदाऽऽकाशभेदो नास्तीति सिद्धान्तस्तदाऽन्तरशब्दो विशेषवचनः । यदा घटमठाद्याकाशभेदाभ्युपगमः'' इत्यादिना पक्षद्वयेऽपि योजितम् ।

ननु भेदो वस्तुस्वरूपमेव स तद्दर्शनेनैव दृश्यः । नचोपाधेः स्वरूपदर्शने उपयोगोऽस्ति । तत्कथमुच्यते उपाधिभिर्भेदो ज्ञाप्यत इतीत्यत उक्तम्– **अबुद्धिनामिति** ॥ भेदस्य वस्तुस्वरूपत्वे सति विशेषत्व पतिपादितमन्यत्र । तता वस्तपतोतावपि भदापतोतिश्च यज्यत । तदा भेदज्ञापनेऽस्त्येवोपाधेरुपयोग इति भावः । एवकारव्यावर्त्यमाह– **नत्विति**॥ उपाधिः कुतो भेदं न सृजेदिति चेत् । किमुपाधिरपि भिन्ने भेदं कयादताभिन्न । नाऽद्यः । पाग विद्यमानस्य भदस्यापाधिजन्यत्वायागात् । नहि प्राग् विद्यमानो घटो दण्डादिना जायते । द्वितीयं निराह– **उपाधिरपीति** ॥ जनकत्वेनोच्यमानाऽपीत्यपिशब्दार्थः । साधयितुमुत्पादयित न क्षमः विराधात् । उपाधिसम्बन्धाथमव स्वाभाविकभदस्यापेक्षितत्वाच्चेति भावः । निगमयति– **सिद्धेति** ॥ विद्यमानभेदस्येत्यर्थः । तस्मादित्यादौ योज्यम् । उपाधिरिति वर्तते । ननु यदि भूताकाशेऽव्याकताकाश वा स्वता विद्यमान एव भदः पदशा वापाधिभिज्ञाप्यस्तहि उपाधीनामनन्तत्वात् तज्ज्ञाप्यास्तेऽप्यनन्ताः स्युरित्यत इष्टापत्तिमुत्तरमाह– **आकाशा अपीति** ॥ भूताकाशपक्षे यथाश्रुतम् । अव्याकृताकाशपक्षे त्वाकाशा आकाशप्रदेशा इत्यर्थः । ''जीवैक्याङ्गीकारे'' इत्यादिनोक्तमुपसंहरति– **अत इति** ॥ ''सर्वमस्मि'' इत्यादेरर्थ इति शेषः ।

किञ्च यदि ''सर्वमस्मि'' इत्यादौ जीवेशयोरभेदो विवक्षितः स्यात् तदा ''उपासीत'' इत्यनेनैव विरोधः स्यात्। उपास्योपासकभावस्य भेदं विनाऽयोगादिति भावेन प्रमाणमाह – **न त्विति** ॥ देवः ईश्वरः देवदेवम् ईश्वरं समर्चयेत्। उपासीत। कुत इत्यत आह – **समानेति** ॥ समत्वज्ञान इत्यर्थः। पूज्य उपास्यः। पूजक उपासकः। ऐक्यज्ञाने सुतरामुपास्यो-पासकभावानुपपत्तिरिति भावः।

## भाष्यम्

*जीवब्रह्मैक्यस्य प्रमाणविरुद्धतोपपादनम्*

**'अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात्, प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ।'**

**'अन्यदेव तद् विदितादथो अविदितादधि।'**

**'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्।**
**अन्यत्र भूताच्च भव्याच्च यत् तत् पश्यसि तद् वद॥'**

**'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्॥'**

**'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति।'**

**'इदं ज्ञानमुपाश्रित्य[1] मम साधर्म्यमागताः।'**

**'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता।'**

**आधिपत्यमृते चैव भोगेन विषयेण च।**
**आनन्दादीनृते मुक्ताः सर्वे ते ब्रह्मणः समाः॥' इत्यादेश्च।**

---

१. 'अपाश्रित्य' ह

## पदार्थकौमुदी

### भाष्यार्थः

प्रमाणविरोधाच्च न जीवेशाभेदपरत्वं सर्वमस्मीत्यस्येति भावेन तयोर्भेदप्रमाणान्याह – **अनन्येति** ॥ पूर्वं ''आश्चर्योऽस्य वक्ता'' इत्युक्तम्। अद्वैतवादी भविष्यत्यस्य वक्तेत्यपेक्षायामुच्यते– **अनन्येति** ॥ अन्यो भगवानन्योऽहमित्यजानन् स एवाहमिति जानंश्चानन्यः तेन प्रोक्तेऽत्र ब्रह्मणि गतिर्ज्ञानं सम्यग्ज्ञानं न जायते । कुतः ? तस्य मिथ्याज्ञानित्वादिति भावेन जीवेशयोर्भेदकमाह – **अणुप्रमाणादपि जीवादणीयान् हीति** ॥ यद्वा व्याख्यात्रभावेनाऽगमेन तज्ज्ञाना-सम्भवेऽपि प्रत्यक्षेण स्यादित्यत उक्तम् – **अणीयानिति** ॥ अनुमाने-नापि न तन्निश्चय इत्याह – **अतर्क्यमिति** ॥ अतर्क्यविवरणपरं ''नैषा तर्केण मतिरापनेया'' इति मध्यमवाक्यमत्र नोदाहृतम्। प्रयोजनाभावात्। तर्हि भगवज्ज्ञानोपायाभावेन मोक्षाभाव इत्यत आह – **प्रोक्तेति** ॥ अन्येनैव जीवेश्वरभेदज्ञानिनैव प्रोक्ता वेदप्रवचनोत्पादिता मतिः सुज्ञानाय साक्षात्काराय भवति । ''प्रेष्ठ''इति नचिकेतसं प्रति यमस्य सम्बुद्धिः । यथा चेदमभेदेऽपि न सावकाशं तथोक्तमन्यत्र । तद्ब्रह्म विदिताद् व्यक्तादन्यदेव । अविदितादव्यक्ताच्चान्यदेवेति सम्बन्धः । न केवलमे-तावत् । किन्तु विदितादविदिताच्चाधि अधिकमित्यर्थः । अव्ययानाम-नेकार्थत्वाद् अन्यत्रेत्यस्यान्यदित्यर्थः । धर्मात् पुण्यात्मनो जीवादन्यत्। अधर्मादधर्मात्मनो जीवादन्यत्। न केवलं चेतनादेव किन्तु कृताकृताद-चेतनादप्यन्यत्। न केवलं वर्तमानादेव। किन्तु भूताद् भव्याच्चान्यत् ''तद् ब्रह्म यद् यथा पश्यसि तत् तथा वद'' इति यमं प्रति नचिकेतसः प्रार्थनम्। ''नित्यो नित्यानाम्''इति स्पष्टार्थम्।

ननूदाहृतं श्रुत्यादिकं व्यावहारिकभेदपरं किं न स्यादित्यतो मोक्षेऽपि भेदं श्रुत्यादिभिः समर्थयते – **यथेति** ॥ ''एवं मुनेर्विजानत आत्मा भवति गोतम'' इति वाक्यशेषः । विजानतां मुनीनामात्मा स्वामी चतुर्मुखोऽपि मुक्तः सन् तादृगेव भवति । नतु स एव, किम्वन्य इत्यर्थः । साधर्म्यं भेद-व्याप्तम् । ''ब्रह्मणा सह''इति भेदोक्तिः । साहित्यस्य भेदसापेक्षत्वात् । ऐश्वर्यमर्यादोक्त्या च न मुक्ता ब्रह्माभिन्ना इत्याह – **आधिपत्यमिति** ॥ ''परमसाम्यमुपैति'' इत्युक्तसाम्यवचनव्याख्यानमेतत् । आधिपत्यं जगद् व्यापारम् । विषयेण लक्ष्म्यादिविषयनिमित्तकेन भोगेन । ऋत इत्यत्रापि सम्बध्यते । अपरिच्छिन्नानन्दादीन् । समाः दुःखराहित्येन । यद्वा, आधिपत्यं चर्ते आनन्दादींश्चर्ते विषयेण विषयनिमित्तकभोगेन समा इति योज्यम् ।

## भाष्यम्

*सत्यपि अधिष्ठानभेदे भगवद्रूपाणां भेदाभावनिरूपणम्*

**'प्रद्युम्नादीनि रूपाणि त्रीणि त्रीण्येव पञ्च च ।**

**ऋगादिस्थानभेदेन नित्याभिन्नानि चेशनात् ॥' इति साम-संहितायाम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

ननु यदुक्तमनात्मप्रपञ्चस्य मिथ्यात्वाङ्गीकारे ''तेभ्यो न ज्यायः परमन्यदस्ति''इति वाक्यविरोधः स्यादिति । तन्न । तेभ्य इत्यस्य भगव-त्परत्वे हि ततोऽन्यप्रपञ्चसिद्ध्याऽस्माकं तद्विरोधः स्यात् । नचैवम् । किं नाम ? यानि पञ्चधा हिङ्कारादिविभागैः प्रोक्तानि त्रीणि विद्यादीनि तेभ्यः

पञ्चत्रिकेभ्यो ज्यायो महत्तरं परं व्यतिरिक्तमन्यद् वस्त्वन्तरं नास्ति । तत्रैव हि सर्वस्यान्तर्भाव इत्यर्थाङ्गीकारादिति चेन्न । एवमपि ज्यायःशब्दवैयर्थ्यानिरासात् । परान्यशब्दयोः पौनरुक्त्यापाताच्चेति भावेन तद्वाक्यस्य भगवत्परत्वं प्रमाणेनाऽह – **प्रद्युम्नादीनीति** ॥ प्रद्युम्नादीनि पञ्चापि रूपाणि ऋगादिस्थानभेदेन त्रीणि त्रीणि जातानि । नच स्थानभेदेन भेदः शङ्कनीयः । **नित्याभिन्नान्येव,** विरुद्धमपीदमैश्वर्याद् युज्यत इत्युक्तम् – **ईशनादिति** ॥

## भाष्यम्

*भेदस्य मिथ्यात्वनिरासः*

**दृष्टवस्तुनो मिथ्यात्वाङ्गीकारे च युक्त्यपेक्षा । न तु सत्यत्वे ।**
**'दृष्टस्य सत्यतायां तु युक्तिर्वाऽयुक्तिरेव वा ।**
**भूषणं तस्य मिथ्यात्वे युक्त्यभावोऽतिदूषणम् ।**
**युक्तिश्च दोष एव स्याद् बलवन्मानवर्जिता ॥' इति ब्रह्मतर्के ।**
**न च शून्यत्वमिथ्यात्वयोः कश्चिद् विशेषः। तत्प्रमाणाभावात् ।**
**अतः सत्य एव भेदः ।**

## पदार्थकौमुदी

### भाष्यार्थः

ननु यदुक्तं ''अनन्यप्रोक्ते'' इत्यादिना जीवेशयोर्भेदसिद्धिरिति । तदयुक्तम् । उदाहृतवचनानां मिथ्याभेदविषयत्वात् । मुक्तौ भेदवचनान्यपि गौणमुक्तिपराणि । स्पष्टं जीवेशभेदसत्यत्वप्रतिपादकं च प्रमाणं नास्ति । नच तान्येव तत्सत्यत्वे प्रमाणानीत्यत्र युक्तिरस्ति । भेदस्वरूपमात्रग्राहकत्वेनापि सावकाशत्वादित्यत आह– **दृष्टेति** ॥ प्रमाणसिद्ध-

वस्तुन इत्यर्थः । चशब्द एवार्थे । अत एव तद्व्यावर्त्यमाह– **न त्विति** ॥ ज्ञानानां ह्यप्रामाण्यं परतः, प्रामाण्यं स्वत इति वादिप्रतिवादिनोः सम्मतत्वादिति भावः । किञ्च प्रत्यक्षबाधितं भेदप्रपञ्चमिथ्यात्वम् । स्यादेतत् । यदि प्रत्यक्षदृष्ट्या जगत्सत्यत्वं चेत् सिद्ध्येत् । नचैतदस्ति । प्रत्यक्षस्य स्वरूपमात्रगोचरत्वे तत्सत्यत्वगोचरत्वे युक्त्यभावादित्यतो वाऽऽह– **दृष्टेति** ॥

अयमर्थः । प्रत्यक्षदृष्टिर्हि घटादिकं घटादित्वेन गोचरयति । घटादयश्चार्थक्रियासामर्थ्यवत् सप्रभेदा इति घटादिसत्तागोचरैव । ज्ञानानां चाप्रामाण्यं परतः, प्रामाण्यं स्वत इति वादिप्रतिवादिनोः सम्मतम् । अतः प्रत्यक्षसिद्धस्य वस्तुनो मिथ्यत्वाङ्गीकार एव बलवत्प्रमाणापेक्षा । नतु सत्यत्वे । अपवादाभावे दृष्ट्यैव तत्सिद्धेः । अत एवान्नादिके भोग्ये क्षुधितेन दृष्टे नेदमन्नमिति केनचिदुक्ते कथमिदमन्नत्वेन दृश्यमानमन्नं न भवतीति तन्मिथ्यात्व एव बलवत्प्रमाणमपेक्षते नतु तत्सत्यत्व इति ।

अथवा ननु माऽस्त्वनात्मप्रपञ्चस्य मिथ्यात्वं, तत्सत्यत्वं कुतः सिद्ध्यति ? नच प्रत्यक्षदृष्ट्यैवेति युक्तम् । तस्याः स्वरूपमात्रविषयत्वेन तत्सत्त्वगोचरत्वाभावात् । तद्गोचरत्वेऽपि वा शुक्तिरजतादौ तदसाधकत्वात् । तथा च जगतः सत्यत्वसाधकाभावात् सत्यत्वाभावे मिथ्यात्वमेव सेत्स्यतीत्यत आह– **दृष्टवस्तुन इति** ॥ अर्थः पूर्ववत् । तत्र प्रमाणमाह– **दृष्टस्येति** ॥ दृष्टस्य सत्यतायां युक्तिः प्रमाणसद्भावश्च भूषणमेव । प्रत्यक्षसिद्धे प्रमाणान्तरसंवादे दार्ढ्यसिद्धेः अयुक्तिः प्रमाणाभावश्चेदपि भूषणमेव । नतु दूषणम् । अपवादाभावे दृष्टेरेव सत्यतायां मानत्वादिति भावः । तस्य दृष्टस्य मिथ्यात्वे युक्त्यभावः प्रमाणाभावोऽतिदूषणं प्रमाणविरोधैकगम्यत्वात् तन्मिथ्यात्वस्येति भावः । ननु दृष्टस्यापि

प्रपञ्चस्य मिथ्यात्वे दृश्यत्वादियुक्तिरस्त्येवेत्यत आह– **युक्तिश्चेति** ॥ दृष्टस्य मिथ्यात्वं ह्यदुष्टयुक्त्यैव निश्चेयम् । यथाऽभिसर्पणाद्यभावयुक्त्या सर्पमिथ्यात्वम् । प्रकृतयुक्तिश्च दोषवतीत्यर्थः । कुत इत्यत आह– **बलवदिति** ॥ "तत्त्वमसि" इत्यादिकं त्वन्यथैव व्याख्यास्यते । बलवान्मानविरुद्धा चेत्यपि ग्राह्यम् । धर्मिसाध्यलिङ्गव्याप्त्यादिग्राहकं हि प्रमाणमनुमानस्योपजीव्यत्वे बलवत् । तच्च धर्म्यादिकं सत्यत्वेनैव गृह्णातीति जगन्मिथ्यात्वसाधकानुमानस्योपजीव्यविरोध इति । यद्वा, बलवन्मानवर्जिता तद्विरुद्धा युक्तिर्दोष एव वक्तुर्दूषणमेवेत्यर्थः ।

किञ्च वचनानां मिथ्याभेदविषयत्वेऽत्यन्तासद्भेदविषयत्वापत्त्याऽत्यन्ताप्रामाण्यं स्यात् । असत्त्वमिथ्यात्वयोर्मात्रयाऽपि विशेषाभावादित्याह– **नचेति** ॥ शून्यत्वमत्यन्तासत्त्वम् । तथाहि । मिथ्यात्वं नाम प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् । स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं, सद्विविक्तत्वं वा । पक्षत्रयेऽप्यसत्त्वमिथ्यात्वयोर्न विशेषः । शशविषाणादावपीतोऽतिरिक्तस्यासत्त्वस्याभावात् । नच तत्र निरुपाख्यत्वमेवासत्त्वम् । निरुपाख्यपदेनैव ख्यायमानत्वात् । असतोऽप्रतीतावसद्वैलक्षण्यज्ञानानुपपत्तेश्च । नाप्यपरोक्षतो प्रतीयमानत्वमसत्त्वम् । नित्यातीन्द्रियस्याप्यसत्त्वापातात् । नापि कचिदपि सत्त्वेनाप्रतीयमानत्वमसत्त्वम् । "तद्धैक आहुरसदेवेदमग्र आसीत्" इति श्रुत्याऽसतः सत्त्वप्रतीतेः । नापि सदनिर्वचनीयाभ्यामन्यत्वम् । अनिर्वाच्यत्वस्यासत्त्वनिरूप्यत्वेनान्योन्याश्रयात् । लाघवेन सदन्यत्वस्यैव तत्त्वाच्च । नाप्यर्थक्रियासामर्थ्याभावादिकं तत् । शुक्तिरूप्यस्य शुद्धब्रह्मणश्चात्यन्तासत्त्वापातात् । तस्मात् सार्वत्रिकत्रैकालिकनिषेधप्रतियोगित्वं वा स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं वा सद्रूपत्वाभावो

वाऽसत्त्वमिति वाच्यम् । तदेव च तव मिथ्यात्वमिति न तयोर्विशेष इति भावः । ननु मिथ्यात्वं नामानिर्वचनीयत्वम् । तच्च सदसत्त्वानधिकरणत्वम्। असत्त्वं च निरुक्तमन्यदेवेति चेन्न । स्यादेवं यद्युक्तरूपमनिर्वचनीयं किञ्चित् स्यात् । नच तदस्ति प्रमाणाभावादित्याह– **तदिति** ।। तत्तत्रानिर्वचनीये इति मिथ्याशब्दार्थत्वेन बुद्धिस्थत्वात् । तथा हि । न तावदनिर्वचनीयमिदमिति प्रत्यक्षं प्रमाणमस्ति । नच भ्रान्त्युत्थितस्य ''मिथ्यैव रजतं प्रत्यभात्'' इत्यनुवादोऽस्तीति वाच्यम् । मिथ्याशब्दस्या-सत्त्वार्थत्वेनानिर्वचनीयपरत्वाभावात् । नापि विमतमनिर्वचनीयं बाध्य-त्वादित्यनुमानम् । अप्रसिद्धविशेषणत्वात् । नच सदसद्विलक्षणं कचिदागमो वक्ति । नच ख्यातिबाधान्यथानुपपत्तिः । असतोऽपि ख्यात्युपपत्तेरिति । एवं भेदमिथ्यात्वं निराकृत्योपसंहरति – **अत इति** ।।

## भाष्यम्

*भेदसत्यतायाः प्रामाणिकत्वनिरूपणम्*

**न च कदाचित्कस्यापि[१] नासीदस्ति भविष्यतीति बुद्ध्यभावे व्यावहारिकसत्यमित्यत्रास्माकं विरोधः । तद्भावे च न शून्याद् विशेषः । 'सत्यमेनमनुविश्वे मदन्ति' इत्यादिश्रुतेश्च सत्यो भेदः ।**

**'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥**
**विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।**
**उपदेशादयं वादोऽज्ञाते द्वैतं न विद्यते ॥' इत्यादिश्रुतेश्च ।**

---

१. 'कदाचिज्ज्ञस्य' ह. ।

**प्रपञ्चो भेदः यदि विद्येत भवेत उत्पद्येत तर्हि निवर्तेत । अतो न जीवेश्वरादिभेद उत्पद्यते । किन्तु नित्य एव । अतो मायया भगवत्प्रज्ञानेन[1] मातं रतं च मात्रम् । भगवान् जानाति रमते चास्मिन् भेद इति । तच्च भगवद्रूपमद्वैतम् । परमार्थो भगवान् तद्रूपेणाद्वैतम् । यदद्वैतं नामोच्यते तत् परमार्थभगवदपेक्षयेत्यर्थः । स्वगतभेदो भगवति नास्तीत्युक्तम् । न च कल्पनामात्रो भेदः । यदि केनचित् कल्पितो विकल्पस्तथाऽपि निवर्तेत[2] । तस्मादुपदेशादयमेव वादः । केनापि तत्प्रसादं[3] विनाऽविज्ञातत्वादज्ञातो भगवान् तद्गतो भेदो न विद्यत इति ।**

## पदार्थकौमुदी

### भाष्यार्थः

अस्तु भेदः सत्यः, किन्तु व्यावहारिक एव । पारमार्थिकं सत्यत्वमेव मिथ्यात्वविरोधीति चेत्, न । भेदपञ्चकस्य व्यावहारिकत्वं वदतो मते किं कदाचित् कस्यचिदयं नास्ति नाऽसीन्न भविष्यतीति बुद्धिरस्ति नवा । द्वितीयं दूषयति– **नचेति** ।। आद्यं दूषयति– **तद्भावे चेति** ।। उक्तबुद्धि-सद्भावे शून्यादसतः न विशेषो व्यावहारिकसत्यस्य । उपपादितं चैतत् । भेदस्य सत्यत्वे स्पष्टां श्रुतिं च पठति– **सत्यमिति** ।। ''एनमनु विश्वे मदन्ति'' इत्येतत्सत्यमित्यनेन जीवेश्वरयोरुपजीव्योपजीवकभावः सत्य इत्युच्यते । तच्च भेदमिथ्यात्वे न युक्तमित्यर्थः । भेदकधर्मसत्यत्वोक्त्य-न्यथानुपपत्त्या भेदस्य सत्यत्वं वक्तव्यमित्युक्तम् । इदानीं भेदस्यैव

---

१. 'भगवज्ज्ञानेन' ह. २. 'विनिवर्तेत' ह. ३. 'तत्प्रसादेन' ग.

सत्यत्वे स्पष्टां श्रुतिमुदाहरति – **प्रपञ्च इति** ॥ श्रुतेश्च सत्यो भेद इत्यनुवर्तते । नन्विदं शान्तिके कर्मणि वेतालोत्थानमिव यावता भेदसत्यत्वायोदाहृतवाक्ये प्रपञ्चमिथ्यात्वं प्रतीयत इत्यतस्तद्वाक्यद्वयं सम्यग् व्याचक्षाणस्तावत् प्रथमार्धं व्याचष्टे – **प्रपञ्च इति** ॥

ननु प्रपञ्चो घटादिरुत्पद्यमानो विनाशवांश्च प्रमाणसिद्धः । अतो नेदमनिष्टापादनम् । नापि विपर्यये पर्यवसानमित्यतः प्रपञ्चशब्दार्थ उक्तः – **भेद इति** ॥ उपपपादनं प्रमाणेन करिष्यति । विदेः सत्तार्थत्वमङ्गीकृत्य भवेतेति व्याख्यातम् । ''व्यत्ययो बहुलम्'' इत्यात्मनेपदम् । सत्ता च कादाचित्की विवक्षितेत्याह – **उत्पद्येतेति** ॥ अथवा भवेतेति भू प्राप्तावात्मनेपदी वेत्यस्य विकल्पितण्यन्तस्येदं रूपम् । सत्तां प्राप्नुयादित्यर्थः । तस्य तात्पर्यम् – **उत्पद्येतेति** ॥ यदीत्यस्य तर्हीत्यनेन नित्ययोगात् तर्हीति पूरितम् । ततश्च यदि जीवजडभेदो नश्येत् तदा जीवस्य जडत्वापत्त्या मोक्षशास्त्रवैयर्थ्यापत्तिरित्यादिरूपेण निवर्तेतेत्यस्यानिष्टत्वं द्रष्टव्यम् । प्रसङ्गस्य विपर्ययपर्यवसानमाह – **अत इति** ॥ नञ निवर्तत इत्यादौ ग्राह्यम् । उत्पत्तिर्नचेत् किं शशशृङ्गादिवन्मिथ्येति पृच्छति – **किन्त्विति** ॥ उत्तरमाह – **नित्य एवेति** ॥ सार्वकालिक एवेत्यर्थः । वस्तुभूतस्य कादाचित्कस्वरूपलाभलक्षणोत्पत्त्यभावे सार्वकालिकत्वस्यैव प्राप्तेः । जीवेश्वरे प्रकृत्यादिनित्यस्वरूपभूत एव भेदोऽनादिनित्य इत्यवगन्तव्यम् । अत एव प्राग् भेद इति सामान्यतः प्रकृतत्वेऽपि जीवेश्वरादिभेद इत्युक्तम् । अत एव च सुधायामपीत्थमेवोक्तम् । सन्न्यायरत्नावलीकारस्तु भेदो नामान्योन्याभावः । स चान्योन्यतादात्म्यापत्त्यैव निवर्तनीयः । प्रतियोग्यापत्तेरेवाभावविपत्तित्वस्य प्रागभावे दृष्टत्वात् । नच कदाऽपि पदार्थानामन्योन्यतादात्म्यमस्तीत्यनित्यानामपि भेदो नित्य

एवेति मन्यन्ते। यथा च न विरोधस्तथोपपादितमन्यत्रास्माभिः।

ननु भेदपञ्चकस्यानादिनित्यत्वाद्युपपादनं प्रकृतासङ्गतम्। नहि पूर्वं भेदस्तत्पञ्चत्वं वा तस्यानादिनित्यत्वं वा प्रसक्तम्। येन तदुपपादनमत्रेति स्यादिति चेत्। उच्यते।

''अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।

अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा॥'' इति। पूर्वश्लोकेऽनादिमायया परमेश्वरेच्छया प्रकृत्यादिना च जीवजातस्य ज्ञानावरणलक्षणं सुप्तत्वं तयैव परमेश्वरादितत्वज्ञानलक्षणप्रबोधश्चोक्तः। तेन जीवेश्वरयोर्जीवजडयोश्च भेदाः सन्तीति लब्धम्। प्रभोरिच्छया निगडादिना पुरुषे बद्धे मुक्ते भेदत्रयदर्शनात्। प्राक् ''प्रभवः सर्वभावानाम्'' इति भावशब्दोक्तानां जीवानां मिथो भेदोऽपि लब्धः। तत एवाऽवरणानां जडानामपि मिथो भेदोऽर्थाल्लभ्यते। तेषां च पञ्चानामपि भेदानामनादिमाययाऽजमनिद्रमित्यादिविशेषणसामर्थ्यादनादित्वमपि लब्धम्। तदिदं पञ्चानामपि भेदानामनादित्वं सत्यत्वं चोपपादयितुमिदं श्लोकद्वयमिति नासङ्गतिरिति।

एवं भेदपञ्चकस्यानादिनित्यत्वं विपक्षे बाधकप्रसङ्गेनोपपाद्य तत्सत्यत्वे प्रमाणं वक्तुं श्रुतौ ''मायामात्रमिदं द्वैतम्''इत्युक्तम्। तत्र द्वैतप्रपञ्चस्य मिथ्यात्वमुच्यत इति प्रतीतिनिरासाय मायामात्रपदं व्याचष्टे– **अत इति**॥ यतो भेदो नित्य एवातो ब्रह्मवन्मिथ्यत्वायोगेन मायामात्रपदस्यायमेवार्थ इत्यर्थः। मात्रमित्यस्य ''माङ् माने'' ''रमु क्रीडायां''इति धातुद्वयजत्वमभिप्रेत्य ''मातं रतं च''इत्युक्तम्। मातं विषयीकृतमित्यर्थः। एवं पदार्थमुक्त्वा तात्पर्यार्थमाह– **भगवानिति**॥ जानाति भेदमिति शेषः। रमते चास्मिन् भेदे भेदमङ्गीकरोतीत्यर्थः।

यद्वाऽस्मिन् भेदे सति ब्रह्मादिभिः क्रीडत इत्यर्थः । ''अस्मिन् भेदे'' इत्यनेनेदं द्वैतमिति प्राक् प्रपञ्चशब्दोक्तार्थस्य परामर्श इति सूचयति । इतिशब्दो हेतौ । न द्वैतं भ्रान्तिकल्पितमिति शेषः । नह्यविद्यमान-मीश्वरप्रज्ञाविषयो भवति । भ्रान्तत्वप्रसङ्गात् । नाप्यविद्यमाने भेदे ब्रह्मादिभिः क्रीडनं युक्तमिति भावः ।

ननु ''मायामात्रमिदं द्वैतम्'' इत्यनेन द्वैतमिथ्यात्वमुच्यत इत्येव व्याख्येयं उत्तरवाक्ये ''अद्वैतं परमार्थतः'' इत्यद्वैतस्यैव पारमार्थिक-त्वोक्तेरित्यतस्तत्तात्पर्यमाह – **तच्चेति** ।। यत् प्रज्ञानेन मातं रतं च तच्चेत्यर्थः । अद्वैतं भेदशून्यमित्यर्थः । ननु कथमेतत् ? भगवद्रूपस्यापि जीवादिभ्यो भिन्नत्वात् । कथं वाऽनेनायमर्थो लब्ध इत्यतस्तद्वाक्यं व्याचष्टे – **परमार्थ इति** ।। तसेः सार्वविभक्तिकत्वात् परमार्थ इत्युक्तम् । स्वतन्त्र इत्यर्थः । ''स्वतन्त्रं परमार्थाख्यम्'' इति स्मृतेः । परमार्थत इत्यस्यैव तृतीयान्तत्वमङ्गीकृत्यार्थान्तरमुक्तम् – **तद्रूपेणेति** ।। स्वतन्त्र-रूपेण मत्स्यादिना । द्वयोर्भावो द्विता भेद इति यावत् । तस्या इदं धर्मि द्वैतं भिन्नमित्यर्थः । न द्वैतमद्वैतम् । नन्वेतदयुक्तम् । ''मायामात्रमिदं द्वैतम्'' इत्यनेन भेदस्य सत्यत्वेऽभिहिते भगवतस्तद्रूपेण भेदराहित्य-कथनस्यासङ्गतत्वादित्यतोऽसङ्गतिपरिहारकतयाऽपि तस्यैवापेक्षितपूरणे-नार्थमाह – **यदद्वैतमिति** ।। ''मायामात्रमिदं द्वैतम्'' इत्यनेन भेदस्य सत्यत्वोक्तौ तर्हि ''अद्वैतं बुध्यते तदा''इति व्यपदेशः कथमित्या-काङ्क्षायां तद्गतिप्रदर्शनार्थमिदं वाक्यं प्रवृत्तमित्यर्थः । अनेन परमार्थत इति ल्यब्लोपनिमित्ता पञ्चमीत्युक्तं भवति । यदद्वैतं नामाद्वैतं बुध्यत इत्यनेनोच्यते तत्परमार्थं भगवन्तमपेक्ष्येत्यर्थः । नन्वनेनाद्वैतमिति व्यपदेशस्य कोऽर्थ उक्त इत्यत आह – **स्वगतेति** ।। नास्तीत्यद्वैतमिति

व्यपदेशस्यार्थ इत्युक्तं भवत्यनेनेत्यर्थः।

एवं ''मायामात्रम्''इति द्वितीयार्धेन भेदस्य सत्यत्वे प्रमाणमभिधाय तत्र बाधकं च परिहृतम्। इदानीं तस्य मिथ्यात्वे बाधकप्रदर्शनार्थं ''विकल्पो विनिवर्तेत'' इति वाक्यं प्रवृत्तमिति भावेन तदवतारयति – **नचेति**॥ केवलं कल्पनैव नतु वस्तुसत्वम्, मिथ्यैवेति यावत्। कुतो नेत्यतस्तत्र बाधकप्रदर्शनपरतया वाक्यं व्याचष्टे– **यदीति**॥ विकल्पो भेदो यदि केनचिदज्ञानादिना कल्पितः स्यात् तथाऽपि तदाऽपि विनिवर्तेत बाध्येत। न केवलं भेदस्योत्पत्त्यङ्गीकारे निवृत्तिरापाद्यते। किन्तु कल्पितत्वाङ्गीकारेऽपीति ज्ञापनायापिशब्दः। यद्यपि पूर्वं निवृत्तिर्विनाशः। अत्र तु बाधः। तथाऽपि निवर्तेतेति शब्दसाम्यमात्रेणा-पिशब्दः। अवधारणार्थो वाऽयं निवर्तेतेत्यनेन सम्बध्यते। तेनाऽरोपि-तत्वस्य बाध्यत्वाव्यभिचारं सूचयति। ''नच निवर्तते तस्मान्न कल्पितः किन्तु सत्य एव'' इति वाक्यशेषः।

नन्वेतदयुक्तम्। ''अद्वैतं बुध्यते'' इत्याद्युपदेशविरोधात्। ''ज्ञाते द्वैतं न विद्यते'' इति भेदस्य ब्रह्मज्ञाननिवर्त्यत्वोक्तेश्चेत्यत उपदेशादित्यर्धं व्याचष्टे– **तस्मादिति**॥ उपदेशादद्वैतं बुध्यत इत्याद्युपदेशादित्यर्थः। कुत इत्यतस्तं वक्तुं तावदज्ञात इति पदच्छेदमभ्युपेत्य तदर्थमाह– **केना-पीति**॥ ब्रह्मादिभिर्ज्ञातत्वात् तत्प्रसादं विनेत्युक्तम्। तं वादं दर्शयितुम-ज्ञाते द्वैतं न विद्यत इति वाक्यं व्याचष्टे– **तद्वत इति**॥ इत्ययमेव वाद इत्यन्वयः। नचैवम् ''अद्वैतं परमार्थतः'' इत्यनेनेदं गतार्थम् उपसंहार-रूपत्वात्। अत एवोक्तम्– **तस्मादिति**। तत्रैव प्रमाणकथनाच्च न वैयर्थ्यमिति भावेन ''उपदेशात्'' इत्युक्तम्। ''यदेवेह तदमुत्र यदमुत्र तदन्विह'' इत्यादेरित्यर्थः।

भाष्यम्

'जीवेश्वरगतो जीवेष्वथ जीवजडात्मनोः ।
जडेशयोर्जडेष्वेवं पञ्चभेदः प्रपञ्चकः ॥
प्रकृष्टमोक्षहेतुत्वात् तज्ज्ञानं(१) प्रेति कथ्यते ।
प्रकृष्टपञ्चकत्वाद्वा प्रपञ्चोऽयं प्रकीर्तितः ॥
यद्ययं सादिरेव स्यान्निवर्तेत कदाचन ।
न निवर्तते यतस्तेन नायं सादिर्भवेत् क्वचित् ॥
मायेति विष्णुविज्ञानं तन्मितत्वाच्च न क्वचित् ।
भ्रान्तत्वमस्य यद्विष्णोर्नैव भ्रान्तिः कदाचन(२) ॥
रमते चात्र यद्विष्णुर्न हि भ्रान्तौ रमेद्धरिः ।
परमार्थे हरौ नैव भेदोऽस्ति जडजीववत् ॥
यद्ययं कल्पितो भेदः कस्मान्नैव निवर्तते ।
तस्माद् भूतभविष्याख्यभवदाख्यपराभिधाः ॥
तदन्ये चैक एवास्मिन्नोङ्काराख्ये जनार्दने ।
अज्ञातनामके तस्मिन्न भेदोऽस्ति कथञ्चन ॥' इति ब्रह्मतर्के ।

पदार्थकौमुदी

भाष्यार्थः

एवं स्वयं श्रुतिं व्याख्याय तद्दार्ढ्याय प्रमाणमुदाहरति – जीवेति ॥ गत इत्यस्य बुद्ध्या विविक्तस्योत्तरत्रापि सम्बन्धः । इत्येवं पञ्चभेदः प्रपञ्चक इत्युच्यत इत्यनेन श्रौतप्रपञ्चशब्दो न जगद्विस्तारवाची किन्तु

१. 'तज्ज्ञाने' ह्. २. 'कथञ्चन' प्र. पाठान्तरम् ।

जातीयरोऽर्थे पञ्चन्‌शब्दाड्डप्रत्ययः । एवं च पञ्चविधः । स च प्रकृष्टत्वात् प्रपञ्चः । स च प्रकरणप्राप्तो भेद एवेति भावः । कथं तस्य प्रकृष्टत्वमित्यत आह – **प्रकृष्टेति** ॥ तथा च मोक्षहेतुज्ञानविषयत्वेन भेदस्यापि प्रकृष्टत्वात् पञ्चभेदः प्रेति कथ्यत इति भावः । प्रकारान्तरेण प्रपञ्चशब्दार्थमाह – **प्रकृष्टेति** ॥ अयं पञ्चभेदः । अनेन पञ्चानां वर्गः पञ्चः । ''पञ्चद्दशतौ वर्गे वा'' इति शब्देन पञ्चशब्दस्य निपातनाङ्गीकारात् । प्रकृष्टः पञ्चः प्रपञ्चः । प्रकृष्टता च मोक्षाङ्गज्ञानतया भवतीत्युक्तमेव । सा च भेदसम्बन्धिन एव पञ्चकस्योपपन्ना । ''वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा'' इत्यादेः । अतः ''प्रपञ्चो भेदपञ्चकः'' इत्युक्तं भवति । एवं प्रपञ्चशब्दार्थमुक्त्वा वाक्यार्थमाह– **यदीति** ॥ उत्पत्तिमतो भावस्य विनाशनियमादिति भावः । विपर्यये पर्यवसानमाह – **नेति** ॥ मोक्षेऽपि भेदश्रुतेरिति भावः। ''मायामात्रमिदं द्वैतम्'' इत्येतद् भेदसत्यत्वप्रतिपादनपरमिति भावेन व्याचष्टे – **मायेति** ॥ तन्मितत्वात् तेन विषयीकृतत्वात् । अस्य भेदपञ्चकस्य । भ्रान्तत्वं भ्रान्तिकल्पितत्वम् । अनेन विप्रतिपन्नो भेदो न भ्रान्तिकल्पितः । विष्णुविज्ञानविषयत्वादित्यनुमानमुक्तं भवति ।

ननु विष्णुविज्ञानविषयोऽपि भेदो भ्रान्तिकल्पितः किं न स्यात् । नह्यस्मदादिज्ञानविषयोऽपि चन्द्रभेदो न भ्रान्तिकल्पित इत्यत आह – **यदिति** ॥ न क्वचिद् भ्रान्तत्वमस्येत्यत्र हेत्वन्तरमाह – **रमते चेति** ॥ अत्र भेदे । अनेन विमतो भेदो न भ्रान्तिकल्पितः । विष्णुरमणविषयत्वादित्यनुमानमुक्तं भवति । ननु चैत्ररमणविषयोऽपि स्वाप्नादिपदार्थश्चैत्रभ्रान्तिकल्पितो भवत्येव । एवमत्रापि किं न स्यादित्यत आह – **नहीति** ॥ तस्य प्रेक्षावत्त्वादिति भावः । अत एव हेतौ विष्णुग्रहणम् । नन्वेवं यदि भेदस्य सत्यत्वं स्यात् तर्हि ''अद्वैतं बुध्यते तदा'' इत्यादिप्रयोगः कथ-

मित्यतः प्राप्तम् "अद्वैतं परमार्थतः" इति वाक्यं व्याचष्टे– **परमार्थ इति ॥** स्वदेहादिनेति शेषः । नन्वप्रसक्तप्रतिषेधोऽयमित्यत आह– **जडजीवेति ॥** जडेन देहेन जीवे यथा भेदोऽस्ति तथाऽत्र नेत्यर्थः । यद्वा, जडे घटादौ यथा स्वावयवेन जीवे च संसारिणि यथा चिन्तनादिधर्मैश्च भेदोऽस्ति । खण्डितत्वेन भेदाभेदाङ्गीकारात् । तथा परमार्थे स्वावयवैः स्वधर्मैश्च भेदो नैवास्ति । तथा च स्वगतभेदराहित्यविवक्षयाऽद्वैतमित्युक्तिरिति भावः । भेदपञ्चकस्य मिथ्यात्वे बाधकोक्तिपरं "विकल्पः" इति वाक्यं व्याचष्टे – **यद्ययमिति ॥** निवर्तते बाध्यते । ननु "प्रपञ्चो यदि" इति वाक्येन भेदसत्यत्वमुच्यत इत्यसत् । तथा सति "भूतं भवद्भविष्यदिति सर्वमोङ्कार एव यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव सर्वं ह्येतद् ब्रह्म" इति सर्वाभेदपरोपक्रमविरोधादित्यतः प्रबलोपसंहारानुसारेणैवोपक्रमो योज्यत इति भावेनाऽऽह – **तस्मादिति ॥** उपसंहारवाक्ये भेदसत्यत्वस्य निर्णयात् सर्वाभेदप्रतिपादकतया प्रतीयमानस्योपक्रमवाक्यस्य भूतभविष्याख्यभवदाख्यवस्तुपराः भूतं भवद्भविष्यदित्यभिधास्तदन्ये च त्रिकालातीतादिशब्दा एक एवैकस्मिन्नेवास्मिन्नोङ्काराख्ये जनार्दने वर्तन्त इत्येवमभिप्राय इत्यर्थः । "अज्ञाते द्वैतं न विद्यत" इति वाक्यं व्याचष्टे – **अज्ञातनामक इति ॥**

## भाष्यम्

**विदिः**[१] **कादाचित्कस्वरूपलाभ इति च धातुः । भिद्येतेतिवद् विद्येतेतिशब्दः । परमार्थत इति विश्वतश्चक्षुरितिवत् सप्तम्यर्थे । परमार्थे**

१. 'विदि' ह.

**द्वैताभाव एवेत्यर्थः । परमार्थः परमात्माऽद्वैत इति प्रथमार्थो वा । न हि विद्यमानं निवर्तेत इति नियमः । उत्पद्यमानं हि प्रायो निवर्तते । जीवेश्वरप्रकृत्यादिकं बहुलं हि विद्यमानं न निवर्तते । न च कल्पितो विकल्प इति पक्षे 'कल्पितो यदि' इति यदिशब्दो युज्यते । नच 'निवर्तेत न संशयः', 'विकल्पो विनिवर्तेत कल्पितो यदि' इत्यादिनाऽनिष्टापादनरूपः शब्दो युज्यते । कल्पितत्वं चच्छ्रुतेरभिप्रायः । अविद्यमानोऽयं प्रपञ्चो निवर्तते[१] कल्पितो विकल्पो निवर्तत इत्येव शब्दः स्यात् । न तु निवर्तेतेति । अतः सत्यताविषयमिदं वाक्यम् ।**

**'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्'**

**'एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥' इति निन्दनाच्च ।**

**'विद्याऽत्मनि भिदाबोधः',**

**'जुष्टं यदा पश्यत्यन्यमीशमस्य' इत्यादिभेदज्ञानस्य प्रशंसनाच्च । अतोऽसनान्मितत्वाच्चास्मीति भगवन्नामैवैतत् ॥ २१ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

पूर्वं विद्येतेत्यस्य भवेत्येत्यर्थ उत्पत्तिश्चार्थलभ्येति व्याख्यानं कृतम् । इदानीं विद्यतिरेवोत्पत्तिवाचीति भावेन धातुं पठति – **विदिरिति** ॥ धातुः धातुव्याख्यानम् । ननु प्रसिद्धव्याकरणे विद्यतिः सत्तार्थक एव प्रसिद्धो नतु कादाचित्कस्वरूपलाभार्थ इति चेन्न । तथा सति प्रसिद्धव्याकरणे

१. 'विनिवर्तते' ग.

भिदिर्विदारणार्थ एव व्याख्यात इत्यन्योन्याभावार्थको न स्यात्। नच–

"क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदृश्यते।

प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः ॥" इति वचनेन भिदेर्विभागोऽन्यत्वं चार्थः। अन्यथाऽसंयुक्तयोरोष्ठयोर्भिन्नाविति व्यवहारो न स्यादिति वाच्यम्। एवं हि विदेरपि उत्पत्तिः सत्ता चार्थ इति भावेनाऽऽह – **भिद्येतेतिवदिति** ॥ भिद्येतेत्यत्र भिदिर्धातुर्यथा प्रसिद्धव्याकरणाप्रसिद्धत्वेऽप्यन्योन्याभावार्थस्तथा विद्येतेति शब्दान्तर्गतविद्यतिरपि कादाचित्कस्वरूपलाभवाचीत्यर्थः।

"परमार्थे हरौ नैव भेदोऽस्ति"इत्यनेन "अद्वैतं परमार्थतः" इति वाक्यं व्याख्यातम्। तत्कथमयमर्थोऽनेन लब्ध इत्यतः परमार्थत इति तसेर्विवक्षितमर्थमाह – **परमार्थत इति** ॥ विश्वतः सर्वस्मिन्नङ्गे चक्षुर्यस्यासौ तथोक्तः। यथा विश्वत इति तसिः सप्तम्यर्थे तथा परमार्थत इति तसिरपि सप्तम्यर्थे वर्तत इत्यर्थः। एवं पदार्थमुक्त्वा वाक्यार्थमाह – **परमार्थ इति** ॥ नन्वेवं तर्हि "परमार्थो भगवान्" इति कथं प्राचीनं व्याख्यानमित्यतस्तद्व्याख्यानान्तरमिति भावेनाऽऽह – **परमार्थ इति** ॥ ननु विद्येतेत्यत्र विद्यतिः सत्तार्थक एव किं न स्यात्। प्रसिद्धत्वात्। किमप्रसिद्धोत्पत्त्यर्थाङ्गीकारेणेत्यत आह – **नहीति** ॥ प्रपञ्चो यदि विद्येत तर्हि निवर्तेतेति यदिशब्दादिबलात् प्रसङ्गोऽयमिति ज्ञायते। प्रसङ्गश्च व्याप्तिमूलः। तथा च विद्येतेत्यापादकतयोक्तार्थस्य निवर्तेतेत्यापाद्यतयोक्तनिवृत्त्या व्याप्तिरवश्यम्भाविनी। नहि विद्यमानं निवर्तते इति व्याप्तिरस्ति। नित्ये व्यभिचारात्। अतः प्रतीयमानान्वययोग्यताभावान्न विद्यमानत्वं विद्यतेरर्थ इत्यर्थः। नन्वेवं तर्ह्युत्पत्त्यर्थाङ्गीकारोऽप्यनुपपन्नः। उत्पद्यमानस्यापि प्रध्वंसस्यानिवृत्तेर्व्यभिचारादित्यत आह– **उत्पद्यमान-**

**मिति** ॥ प्रायः प्रचुरं बहुलमिति यावत् । प्राय इति प्रध्वंसव्यावृत्त्यर्थम् । अनेन भावत्वे सतीत्यापादकविशेषणं विवक्षितमित्युक्तं भवति । नन्वेवं सति विद्यतिः सत्तार्थक एवास्तु । विद्यमानं प्रायो निवर्तत इति व्याप्तिसम्भवात् किमप्रसिद्धोत्पत्त्यर्थाङ्गीकारेणेत्यत आह – **जीवे-श्वरेति** ॥

यदुक्तं "विकल्पो विनिवर्तेत" इति भेदमिथ्यात्वे बाधकमुच्यत इति तदसत् । तस्य विकल्पो भेदः केनचिदज्ञानादिना कल्पितो निवर्तते चेति वस्तुस्थितिकथनरूपत्वेन प्रसङ्गरूपत्वाभावादित्यत आह– **नचेति** ॥ प्रपञ्चो विद्यते निवर्तते चेत्यत्रापि बाधकं वदन् पूर्वत्र बाधकान्तरमाह– **नतु निवर्तेतेति** ॥ "प्रपञ्चो यदि विद्येत" इत्यादौ ग्राह्यम् । यद्यत्र निवृत्तिर्नाऽपाद्यते किं तर्हि स्वरूपकथनमेवैतदित्यङ्गीक्रियते तदा यदिशब्दद्वयं विद्येत निवर्तेत विनिवर्तेतेति श्रूयमाणं लिङ्प्रत्ययत्रयं चायुक्तं स्यात् । विरुद्धार्थकत्वात् । अनिष्टापादनरूपो ह्ययं शब्दः । यदि- शब्दसहितस्य लिङो "यदि पर्वतो निरग्निकः स्यात् तर्हि निर्धूमोऽपि स्यात्" इत्यादौ अनिष्टापादन एव दृष्टत्वात् । आपादनस्य च विपर्यये पर्यवसानमावश्यकमित्यनिवृत्त्यादिकमेव वाक्यसामर्थ्याल्लभ्यते इति भावः । एवमयुक्तत्वं यदिशब्दादेरुपपाद्य व्यर्थत्वं चोपपादयति– **कल्पितत्वमिति** ॥ निवर्तते निवर्तिष्यते नतु निवर्तेतेति यद्यादि-शब्दोपलक्षणमेतत् । यद्यत्र प्रपञ्चमिथ्यात्वमभिधित्सितं स्यात् तदा योऽयं प्रपञ्चो विद्यत इव दृश्यते वस्तुतस्त्वविद्यमानः स निवर्तिष्यते अज्ञानेन कल्पितो विकल्पो निवर्तिष्यत इत्येव वक्तव्यम् । नतु यद्यादिशब्दप्रयोगः, व्यर्थत्वादित्यर्थः ।

ननु ''प्रपञ्चो यदि'' इत्यत्र ''विकल्पो विनिवर्तेत'' इत्यत्र च वस्तुस्थितिकथनमिति भवद्भिरप्यभ्युपगतम्।

''अस्वातन्त्र्याच्च नास्त्येवेत्येवं वाच्यं जगत् सदा।
सदा वृत्तेर्विद्यमानमिति ब्रूयाद् यदि क्वचित्॥
तथाऽपि नाशवद्धीदं प्रवाहाद् यस्य नित्यता।
अतो निवर्त्यमित्याहुः प्रपञ्चं ह्यस्ति यद्यपि॥'' इत्यनेन प्रपञ्चो विद्यते निवर्तते च न संशय इति। ''यदि कल्पयतीदं स स एव विनिवर्तयेत्''इति वचनेन विकल्पः केनचिदलोकसिद्धेन परमात्मना कल्पितः स्थीयतामत्रेति कल्पितस्तेनैव विनिवर्तत इत्यन्यत्र व्याख्यातत्वादिति चेत्। उच्यते। अयमभिप्रायो भाष्यकारस्य। सर्वथाऽत्रोक्तरीत्याऽनिष्टापादनरूपत्वेन भेदपञ्चकस्यानादिसत्यतापरमेवेदं वाक्यं; नतु परोक्तरीत्या वस्तुस्थितिकथनरूपत्वेन प्रपञ्चमिथ्यात्वपरम्। तथा सति यदिशब्दादिवैयर्थ्यप्रसङ्गात्। वस्तुस्थितिकथनपरत्वश्रद्धायामपि तत्रोक्तरीत्याऽर्थोऽस्तु। नचात्रोक्तदोषः।

''यदिशब्दस्त्ववस्तुत्वे चास्वातन्त्र्ये च संशये।
अवस्तुशब्दश्चाशक्ते ह्यल्पशक्तौ च कीर्त्यते॥'' इति वचनेन यदिशब्दस्याशक्तत्वमल्पशक्तित्वमस्वातन्त्र्यं वाऽर्थः। विद्येत निवर्तेतेत्यत्राऽख्यातविपरिणामः। तथा च प्रपञ्चो जगदशक्तमल्पशक्तिः। अस्वतन्त्रं वा विद्यते। तथाऽपि निवर्तत इति न संशय इत्यर्थः। अत एव ''पुत्रा मे यदि विद्यन्ते मरिष्यन्त्येव ते ध्रुवम्''इति धृतराष्ट्रवचनम्। विकल्पः प्रपञ्चो यदि केनचित् परमात्मना स्थीयतामत्रेति कल्पितस्तदा तेनैव निवर्तत इत्यर्थः। ''यदि राज्यं करोत्येष नश्यत्येतदसंशयम्'' इतिवत्। एवं च नास्मत्पक्षे यदिशब्दवैयर्थ्यम्। आख्यातविपरिणामस्तु

परपक्षेऽपि सम इति । एवं परपक्षेऽनुपपत्तिकथनस्योपयोगं दर्शयन्नुप-संहरति– **अत इति** ॥ अर्थान्तरस्यायुक्तत्वात् । भेदासत्यत्ववादिनां निन्दनाच्च भेदसत्यत्वपरमिदं वाक्यद्वयमिति भावेनाऽह– **असत्यमिति** ॥ तत्रैव हेत्वन्तरमाह– **विद्येति** ॥ आत्मनि परमात्मनि जीवादिभ्यो भेदज्ञानमेव विद्येत्यर्थः । जीवादिभ्योऽन्यं जुष्टं सेव्यमीशं भगवन्तं "तदेतत् सत्यम्" इत्यादि प्रागुक्तप्रकारेणास्य महिमानं यदा पश्यति तदा वीतशोक एव भवतीत्यर्थः । एवं च प्रपञ्च इति श्लोकद्वयस्य भेदसत्यत्वपरत्वात् भेदसत्यत्वसमर्थनायैतच्छ्रुत्युदाहरणं नानुपपन्नमिति स्थितम् । एवं "सर्वमस्मि" इत्यस्योत्तमपुरुषत्वे बाधकमुक्त्वोपसंहरति– **अत इति** ॥ मितत्वात् । मितिरूपत्वात् । यद्वा, मितत्वात् प्रमितत्वादित्यर्थः ॥ खं० ॥ २१ ॥

**॥ ततश्च "उद्यन् हिङ्कारः" इत्याद्यष्टखण्डानामयमर्थः ॥**

"उद्यन् हिङ्कारः" इत्यादिवाक्यं स्पष्टम् । तपन्तमादित्यम् ॥

**॥ इति चतुर्दशः खण्डः ॥ १४ ॥**

सम्प्लवते सञ्चरति । मेघो जायते वर्षणोन्मुखो भवति । उद्गृह्णाति रजआदिकमिति शेषः ॥ विरूपांश्च सरूपांश्च पशून् अजाविरूपान् गवाश्वरूपांश्चावरुन्धे प्राप्नोतीत्यर्थः । वर्षन्तं पर्जन्यम् ॥

**॥ इति पञ्चदशः खण्डः ॥ १५ ॥**

वसन्त इत्यादिकं प्रागुक्तमेव वैराजसामप्रोतत्वं वक्तुमनूद्यते । "प्रजया पशुभिर्विराजति" इत्यत्र प्रजापशुशब्देनोक्तरीत्या ज्ञानवेदयोर्ग्रहणम् । "महान् प्रजया पशुभिः" इत्यत्र प्रसिद्धा एव प्रजापशव इति न पुनरुक्तिः ॥

**॥ इति षोडशः खण्डः॥ १६ ॥**

लोकीभवति उत्तमलोकवान् भवतीत्यर्थः ।।

**।। इति सप्तदशः खण्डः ।।**

"अजा हिङ्कारः" इत्याद्यपि पूर्वोक्तानुवाद एवाधिकविधानार्थम् ।।

**।। इति अष्टादशः खण्डः ।।**

अङ्गीभवति दृढाङ्गो भवति । अङ्गेन हस्तपादादिना न विहूर्च्छति। न कुटिलीभवति । पङ्ग्वादिर्न भवतीत्यर्थः । "नाङ्गेषु विहूर्च्छति" इति पाठेऽप्ययमेवार्थः । यः संवत्सरपर्यन्तं गुरुकुलवासी सः संवत्सरं संवत्सरपर्यन्तं मज्जो मत्तः सन्नाश्नीयात् । विहितभक्षणमपि न मत्तः सन् कुर्यादित्यर्थः । मज्जु मदकारि नाश्नीयात् सर्वदैवेति शेषः ।।

**।। इति एकोनविंशः खण्डः ।।**

एतासामग्न्यादिदेवतानामेव सलोकतां समानलोकतां गच्छति । ततोऽप्युत्तमश्चेत् सार्ष्टितां सामीप्यं गच्छति । ततोऽप्युत्तमश्चेत् सायुज्यमेकं देहत्वरूपं गच्छति । ब्राह्मणान्न निन्देत् । ब्राह्मणेषु देवतासन्निधानेन तन्निन्दनेन देवतानिन्दनस्यैव प्राप्तेरिति भावः ।।

**।। इति विंशः खण्डः ।।**

"त्रयी विद्या हिङ्कारः" इत्यादिना हिङ्कारादिनामकप्रद्युम्नादेः ऋग्वेदादित्रयादिगतत्वेनैकैकस्य रूपत्रयमुच्यते । एतत् त्रयीविद्यादिगत-भगवदाश्रितं साम नामविशेषानुक्तेरुक्तावशिष्टं सर्वमिति गम्यते । सर्वस्मिन् पूर्णत्वात् सर्वनामके त्रयीविद्यादिसर्वगतभगवद्रूपे प्रोतं तद्वाचकं तन्नियम्यं चेत्यर्थः । यः एतत् पञ्चविधभगवद्रूपम् । एवं त्रयीविद्यादि-गतत्वेनैवतत्साम । सर्वस्मिन् भगवति । प्रोतं च वेद सः सर्वं भवति यादृशी उन्नतिः स्वयोग्या तां सर्वात्मना प्राप्नोतीत्यर्थः ।। १ ।।

प्रद्युम्नादीनि पञ्चरूपाणि ऋगादिस्थानभेदेन त्रीणि त्रीणि तिष्ठन्तीत्युक्तम् । तत्र श्लोकं पठन् माहात्म्यं तज्ज्ञानिनः फलान्तरं

चाऽह – **तदिति** ।। तत् तत्र एष वक्ष्यमाणः श्लोको भवति । प्रमाणत्वेनेति शेषः । श्लोकं पठति – **यानीति** ।। यानि प्रद्युम्नादीनि पञ्चधा पञ्चरूपाणि त्रीणि वर्तन्ते तेभ्यो रूपेभ्योऽन्यद् वस्तु परं ज्यायः ब्रह्माद्यपेक्षयोत्तमोत्तमं नास्ति । योऽधिकारी एतद् भगवद्रूपाणामेव परमज्यायस्त्वं वेद स सर्वं वेद सर्वशास्त्रार्थज्ञो भवति । अस्यैव सर्वशास्त्रार्थत्वात् । अस्मै ज्ञानिने सर्वा दिशः सर्वदिग्वर्तिनो जनाः बलिं हरन्ति । इदं तु चतुर्मुखे मुख्यम् । ''सर्वेऽस्मै देवा बलिमावहन्ति'' इत्युक्तेः । अन्येषु यथासम्भवं बोध्यम् । अत्र व्रतमाह – **सर्वमिति** ।। अस्मि असनान्मितिरूपत्वाच्चास्मिनामकं परं ब्रह्म । सर्वं गुणपूर्णमित्युपासीत । द्विरुक्तिः पूर्ववत् ।।

**।। एकविंशः खण्डः ।। २१ ।।**

## उपनिषत् (खण्डः - २२ )

*सामगानस्य ध्वनिप्रभेदाः*

**विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान् सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत् ।। १ ।।**

### भाष्यम्

सर्वदा समत्वात् साम भगवान् । तस्योद्गानप्रकारो विनर्दि वृषभस्वरवन्मेघनर्दवद्वा । तदेव वृणे । सर्वोत्तमत्त्वात् ।

'विष्णोः स्वरो वृषभवन्मेघनादवदेव वा ।

स्त्रीपशुस्वरवद् वह्नेर्गम्भीरोऽनुपमो विभोः ।।

**ब्रह्मणस्त्वथ सोमस्य साक्षाद् घण्टानिनादवत् ।**
**मृदुमेघस्वरो वायोरिन्द्रस्य स्तनयित्नुवत् ॥**
**बृहस्पतेः क्रौञ्चवच्च वरुणस्य तु विस्वरः ।**
**एकस्य पादवर्षस्य स्वरो विष्णोरुदाहृतः ।**
**वायोर्विंशतिवर्षस्य ब्रह्मणस्तु तदन्तरा ॥' इति च ।**
**'गायेदेतैः स्वरैस्तस्माद् यथाशक्ति न विस्वरम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं सामनाम्नो भगवतो व्यस्तसमस्तोपास्तिरभिहिता । तत्र साम्न उद्गानप्रकारं सप्रभेदमाह– **विनर्दीत्यादिना** ॥ तत्र "विनर्दि साम्नो वृणे" इत्येतद्वाक्यं दुर्गमार्थं व्याख्यातुं सामशब्दस्य प्रसिद्धार्थप्रतीतिवारणायार्थं तावदाह– **सर्वदेति** ॥ "सर्वदा समस्तेन साम" इति श्रुत्यैव पूर्वं निरुक्तेरिति भावः । इदानीं तद्वाक्यं व्याचष्टे– **तस्येति** ॥ श्रुतौ "पशव्य-मित्यग्नेरुद्गीथः" इत्यत्रोद्गीथशब्दः सर्वत्र सम्बध्यत इति भावेन तस्यार्थ उक्तः– **उद्गानप्रकार इति** ॥ नन्वेवं[१] साम्न उद्गीथो विनर्दीत्येतावता वाक्यस्य पूर्णत्वाद् वृण इत्यनन्वितमित्यतो वाक्यभेदं कृत्वा योजयति – **तदेवेति** ॥ सामोद्गानप्रकारे विनर्दित्वस्य सिद्धत्वान्नैकवाक्यत्वं सम्भव-तीति भावः । श्रुतावन्यत्र वृण इत्यनुक्त्वाऽत्रैव तदुक्तेस्तदेवेत्येवकारः । तत्र हेतुमाह– **सर्वेति** ॥ उक्तार्थं द्रढयन् प्रमाणेनैव खण्डं व्याचष्टे– **विष्णोरिति** ॥ वृषभवत् वृषभनादवत् । अनेन विनर्दि साम्न उद्गीथ इत्येतद् व्याख्यातम् । "पशव्यमित्यग्नेरुद्गीथः" इत्यस्य व्याख्यानम् – **स्त्रीति** ॥

१. अत्र 'नचैवं' इति मुद्रित पुस्तकस्थः पाठोऽसङ्गतत्वाद् असाधुरेवेत्यवगन्तव्यम् ।

"अनिरुक्तः प्रजापतेः" इत्येतस्यार्थमाह – **गम्भीर इति** ॥ एतद्वदिति निर्वक्तुमशक्यत्वादनिरुक्त इति पदार्थमभिप्रेत्य "अनुपमः" इत्युक्तम् । सोपमत्वस्य वक्ष्यमाणत्वात् तत्तात्पर्यमाह – **गम्भीर इति** ॥ "निरुक्तः सोमस्य" इत्यस्यार्थमाह – **अथेति** ॥ "मृदु श्लक्ष्णं वायोः" इत्येतद् व्याचष्टे – **मृदुमेघेति** ॥ "श्लक्ष्णं बलवदिन्द्रस्य" इति वाक्यं व्याचष्टे– **इन्द्रस्येति** ॥ स्तनयित्नुस्तीव्रमेघगर्जनम् । "क्रौञ्चं बृहस्पतेः" इत्यस्यार्थमाह – **बृहस्पतेरिति** ॥ "अपध्वान्तं वरुणस्य"इत्यस्यार्थः – **वरुणस्येति** ॥

विष्णोः स्वरो वृषभस्वरवदित्युक्तम् । "मृदुमेघस्वरो वायोः" इत्युक्त्या वायुस्वरोऽपि वृषभस्वरवदित्युक्तम् । मेघस्वरवृषभस्वरयोः साम्यात् । अत एव

"विष्णोः स्वरो वृषभवन्मेघनादवदेव वा" इत्युक्तम् । "गम्भीरोऽनुपमो ब्रह्मणः" इत्यनेन ब्रह्मस्वरोऽपि वृषभस्वरवदित्युक्तम् । वृषभमेघनादयोरेव गाम्भीर्यदर्शनात् । एवं त्रयाणां स्वरस्यैकप्रकारत्वप्रतीतौ तत्र विशेषमाह– **एकस्येति** ॥ एकस्यैकवर्षस्य पादवर्षसहितस्य यून इति यावत् । वृषभस्य स्वरवदिति शेषः । तदन्तरा विंशतिवर्षादवाग्वर्षस्य । यद्वा, "मेघनादवत्" इति "गम्भीरोऽनुपमः" इति "मृदुमेघस्वरवत्" इति च विष्णुब्रह्मवायुगानां नादानां गम्भीरत्वमुक्तम् । तस्यैकप्रकारत्वप्रतीतिं निवारयन् विशेषमाह – **एकस्येति** ॥ "तान् सर्वानेवोपसेवेत" इत्यस्य सहेतुकमर्थमाह – **गायेदिति** ॥ तस्मादेतेषामेव स्वराणां प्रशस्तत्वादेतैरेव स्वरैर्गायेत् । देवोद्गानसदृशोद्गानविधानमशक्यत्वादयुक्तमित्यत उक्तम् – **यथाशक्तीति** ॥ "वारुणं त्वेव वर्जयेत्" इत्यस्यार्थः – **न विस्वरमिति** ॥ तस्माद् विस्वरस्यानर्थहेतुत्वादित्यत्रापि सम्बध्यते ।

उपनिषत्

अमृतत्वं देवेभ्य आगायानीत्यागायेत् स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥

भाष्यम्

अधिकारी सदौद्गात्रे मुख्यतः प्राण एव यत् ।
अतो मोक्षादिदाने स देवादीनां क्षमो भवेत् ॥
अन्येषां स ददातीह मद्धृदिस्थ इति स्मृतिः ।
कार्या हि नान्यथा कुर्यादवमन्ताऽन्यथा भवेत् ॥
देवानां मोक्षदानादौ न हि मानुष ईश्वरः ।
अतः प्राणो हृदिस्थो मे ददातीति स्मृतिर्भवेत् ॥
सङ्कल्पोक्त्यादिकर्ता च प्राण एव यतः सदा ।
आगायानीति युज्येत तस्मात् तस्मिन् हि मुख्यतः ॥
आत्मेति भगवान् विष्णुः प्राणस्थः पुरुषोत्तमः ।
[(१)]तस्मा अन्नं ह्यर्थतस्तु प्राणस्यान्नभुजिर्भवेत् ॥
प्राणस्याप्यमृतत्वं हि मुख्यमेव फलं यतः ।
देवान्तर्भावतो विष्णोर्नामृतत्वं क्व चाऽदिमत् ॥

पदार्थकौमुदी

भाष्यार्थः

"अमृतत्वं देवेभ्य आगायानीत्यागायेत्" इत्यादिना प्रसिद्धोद्गातु-

१. 'तस्मादन्नं' ग.

रेवंविधसङ्कल्पः कथ्यत इति प्रतीतिनिरासाय व्याचष्टे – **अधिकारीति** ॥ तथा च तेनैवंविधः सङ्कल्पः कार्य इति भावः । तर्ह्यन्येषां कथमित्यत आह – **अन्येषामिति** ॥ **कुर्यात्** विभक्तिविपरिणामेन ''स्मृतिम्'' इत्यनुवर्तते । अन्यथा स्मृतिकरणे बाधकमाह – **अवमन्तेति** ॥ तत्र हेतुमाह – **देवानामिति** ॥ देवादीनामित्यर्थः । निगमयति – **अत इति** ॥ ददाति ''देवादीनां मोक्षादिकम्'' इति शेषः । ननु यदि हृदिस्थो मुख्यप्राण एव देवादीनां मोक्षदिदाता तर्ह्यागायानीत्ययुक्तं स्यात् । प्रसिद्धोद्गातुरेव सङ्कल्पोक्त्यादिकर्तृत्वप्रतीतेः । नहि स्वस्य तादृशफलदानासामर्थ्ये तथा सङ्कल्पादिकर्तृत्वोक्तिः सम्भवतीत्यत आह – **सङ्कल्पेति** ॥ सङ्कल्पो मनसा ध्यानम् । उक्तिर्वचनम् । आदिपदेनोद्गानसङ्ग्रहः । तर्हि प्रतीतिः कथमित्यत आह – **हि मुख्यत इति** ॥ सङ्कल्पोक्त्यादिकर्तृत्वस्य तस्मिन्नेव मुख्यत्वादित्यर्थः । अमुख्यतस्तत्कर्तृत्वविषया प्रतीतिरिति भावः । आत्मने स्वस्मै अन्नमागायानीत्यन्यथाप्रतीतिं वारयन् तद्-व्याचष्टे – **आत्मेति** ॥ ''तस्मा अन्नमुद्दिश्याऽगायेत्''इति शेषः । स्वात्मन एवान्नमागायानीत्यर्थः कस्मान्न स्यादित्यत आह – **ह्यर्थत इति** ॥ हि यस्मात् प्राणस्थहरेर्भोजनेऽर्थतो नान्तरीयकतया प्राणस्य भुजिर्भवेत् । तस्मान्नासावर्थ इत्यर्थः । प्राणस्य देवान्तर्गतत्वाद् देवानां चामृतत्वमुद्दिश्य गानस्य कृतत्वेन स्वस्याप्यमृतत्वसिद्धेर्नासावर्थ इत्याह – **प्राणस्यापीति** ॥ तर्हि विष्णोरपि देवान्तर्गतत्वात् तस्याप्यमृतत्वं प्रति वायुरुद्गायति किमित्यतो नेत्याह – **विष्णोरिति** ॥ फलमिति वर्तते । विष्णोरमृतत्वं फलं नेति सम्बन्धः । कुत इत्यतस्तदमृतत्वस्यानादिनित्यत्वादित्याह – **क्वचेति** ॥ **चो हेतौ** ॥ विष्णोरमृतत्वमिति वर्तते । अन्तवत्त्वसमुच्चये वा चशब्दः । तथाच विष्णोरमृतत्वम् आदिमदन्तवच्च न क्वापीति यत इति भावः ।

## उपनिषत्

*सामगानकालीनानुसन्धानकथनम्*

सर्वे स्वरा इन्द्रस्याऽत्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥

अथ यद्येनमूष्मसूपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनꣳ स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात् ॥ ४ ॥

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृत्ता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ ५ ॥ २२ ॥

## भाष्यम्

इन्द्रे बलं ददानीति स्वरान् घोषबलात्मकान् ।
ब्रूयादग्रस्तानिरस्तानूष्मणः स्पर्शानपि ॥
समस्तान् बलदानार्थमिन्द्रे चैव प्रजापतेः ।
विष्णोः स्वात्मानमेवाहमर्पये मृत्युवर्जितान् ॥
मोक्षयोग्यान् करिष्यामीत्येवं स प्राण एव तु ।
कुर्यादन्यस्तु मत्स्थस्तु प्राण एवेदृशाक्षमः[१] ॥

---

१. 'ईदृशः क्षमः' ग.

करोतीति स्मरेन्नित्यं नान्यथा तु कथञ्चन ।
देवावमन्ता हि तमो यात्यसंशयतो यतः ॥
अत इन्द्रं प्रजापाख्यं विष्णुं मृत्युं च सर्वदा ।
शरणं गतोऽहमिति च[१] ध्यायेत् सर्वत्र सर्वदा ॥
ऐश्वर्यादिन्द्रनामा तु वायुः स्वरपतिः सदा ।
ऊष्माधिपस्तु भगवान् विष्णुरेव प्रजापतिः ॥
मृत्युनामा तु संहाराद् रुद्रः स्पर्शाधिपः स्मृतः ।
मानुषाणां तु शरणमितरेषां तु वायुतः ॥
वायोस्तु बलदानाद्यं मोक्षदानादिकं हरेः ।
यस्माद् वायुपदे योग्या बहवस्त्विन्द्रनामकाः ।
अत इन्द्रे ददानीति स्मृतिः प्राणस्य युज्यते ॥' इति सामसंहितायाम् ।

'सर्वोपद्रवकर्तॄणामसुराणां कुबुद्धिनाम् ।
उपालम्भे कृते युक्तं विष्णुस्त्वां प्रतिपेक्ष्यति ।
रुद्रस्त्वां धक्ष्यतीत्यादि नान्यथा तु कथञ्चन ॥' इति च ।
मृत्योः सकाशादात्मानं परिहराणीति ॥

'ब्रह्मा प्रजापतिश्चेति विष्णुरन्यं प्रबोधयन् ।
[२]तथेन्द्रनामा वायुश्च परेषां बोधको यदा ॥' इति च ।
बृंहयति प्रजाः पाति इदं रातीति व्युत्पत्तिभिः ॥ २२ ॥

---

१.'इतिवत्' ह. २. 'अथेन्द्रनामा' ह.पाठः ।

## पदार्थकौमुदी

### भाष्यार्थः

"सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः" "इन्द्रे बलं ददानि" इत्यादिवाक्यं व्याचष्टे – **इन्द्र इति** ॥ इन्द्रबलदानार्थमेव "इन्द्रे बलं ददानि" इति सङ्कल्प्य स्वरान् घोषबलात्मकान्, घोषो नाम ध्वनिविशेषः । बलमित्यतिप्रयत्न उच्यते । "घोषबलयुक्तान् ब्रूयात्" इत्यनेन "सर्वे स्वराः" इति वाक्यं व्याख्यातम् । "अहं विष्णोः स्वात्मानमर्पय एव" इति सङ्कल्प्याग्रस्तानन्तरेवाप्रवेशितानिरस्तान् बहिरेवानाक्षिप्तान् । यद्वा, अग्रस्तान् अदष्टान् अनतिद्रुतोच्चारितानिति यावत् । अनिरस्तान् अनतिदूरोच्चारितानित्यर्थः । उपलक्षणमेतत् । विवृतप्रयत्नयुक्तांश्चोष्मणः शषसहान् ब्रूयात् इत्यनेन "सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानि" इति वाक्यं व्याख्यातं भवति । "मोक्षयोग्यान् मृत्युवर्जितान् करिष्यामि" इति सङ्कल्प्य समस्तान् स्पर्शानपि कादिमावसानान् वर्णान् लेशतोऽप्यसंस्पृष्टान् ब्रूयादित्यनेन "सर्वे स्पर्शा लेशेनानभिहता वक्तव्याः मृत्योरात्मानं परिहराणि" इति वाक्यं व्याख्यातम् । अत्रापि स्वराद्युच्चारयितृपुरुषमात्रस्यैतदुच्यत इति प्रतीतिनिरासायाऽह – **अन्यस्त्विति** ॥ "नान्यथा तु कथञ्चन" इत्यतः परमवमन्ताऽन्यथा भवेदिति वक्तव्यम् । किं तत इत्यत आह – **देवावमन्तेति** ॥ यतोऽतोऽन्यथा न स्मरेदित्यन्वयः । "तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात्" इत्यादाववस्थाविशेष एवेन्द्रादिशरणागतिध्यानं कर्तव्यमिति प्रतीतिनिरासाय "इन्द्रं शरणं प्रपन्नोऽभूवम्" "प्रजापतिं शरणं प्रपन्नोऽभूवं" "मृत्युं शरणं प्रपन्नोऽभूवम्"इति वाक्यत्रयं व्याचष्टे – **इन्द्रमिति** ॥ न केवलं स्वरपतित्वादिकमिति चशब्दः । "सर्वे स्वरा

इन्द्रस्याऽत्मनः'' इति वाक्यमिन्द्रपदं प्रसिद्धेन्द्रपरमिति प्रतीतिं वारयन् व्याचष्टे– **ऐश्वर्यादिति** ॥ प्रसिद्धेन्द्रपरत्वेऽनुपपत्त्यभावेऽपि वस्तुस्थिति-कथनायैवं व्याख्यातम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

''सर्वे ऊष्माणः प्रजापतेरात्मानः'' इति वाक्यं प्रजापतिर्दक्ष इति प्रतीतिनिरासाय व्याचष्टे – **ऊष्माधिप इति** ॥ ''सर्वे स्पर्शा मृत्योरा-त्मानः'' इति वाक्यं मृत्युर्यम इति प्रतीतिनिरासाय व्याचष्टे – **मृत्यु-नामेति** ॥ ननु प्राणस्योद्गातृत्वे कथमिदं घटते ? इन्द्रमृत्य्वोर्वाय्व-नधिकत्वेन तस्य तच्छरणागतिध्यानासम्भवादिति चेन्न । इतरोद्गात्रपेक्षयैव तत्प्रवृत्तेः । वायुविवक्षायां तु इन्द्रमृत्युशब्दयोः तदन्तर्गतभगवत्परत्वादिति भावेनाऽह – **मानुषाणामिति** ॥ आद्यस्तुशब्दो मानुषाणां वाय्वाद्य-पेक्षयाऽपकर्षरूपविशेषद्योतकः । द्वितीयस्त्ववधारणार्थो वायुत एवेति सम्बध्यते । तृतीयस्तु वायोरितरोत्कर्षरूपविशेषमाह । इतरेषां मानुषाणां वायुतः वाय्वादितः शरणं भवेत् । हरेरिन्द्राद्यन्तर्गतस्य । नन्विन्द्रनामा वायुः स्वरपतिरित्युक्तम् । तथा सति वायोरुद्गातृत्वे ''इन्द्रे बलं ददानि'' इति स्मृत्यनुपपत्तेः। नहि स्वस्मिन् स्वयं बलद इत्यत आह – **यस्मा-दिति** ॥

सताऽसता वा येन केनाप्युपालम्भे कृते ''प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यति'' इति शापो देय इत्ययुक्तम् । सज्जनं प्रति एवं शापस्याऽदेयत्वादित्यत आह– **सर्वोपद्रवेति** ॥ **कर्तरि षष्ठी** ॥ ''मृत्यो-रात्मानं परिहराणि'' इत्यस्य मृत्युवर्जितान् करिष्यामीति व्याख्यानं कथम्? मृत्योः स्वरूपं परिहराणीति प्रतीतेरित्यतस्तदपेक्षिताध्याहारेण व्याचष्टे – **मृत्योरिति** ॥ इत्यर्थ इति शेषः । आत्मशब्दश्चात्र जात्यैकवचन इत्यपि द्रष्टव्यम् । प्रजपतीन्द्रशब्दौ विष्णुवायुपरावित्युक्तं प्रमाणान्तरेण द्रढयति – **ब्रह्मेति** ॥ ब्रह्मा प्रजापतिश्चेति शब्दाभ्यां विष्णुरुच्यते ।

यदाऽन्यं प्रबोधयन् वर्तते अन्यप्रबोधकोष्माक्षरगत इति यावत् । एवं "परेषां बोधको यदा" इत्यत्रापि परबोधकस्य स्वरगतो यदेत्यर्थः । ब्रह्मप्रजापतीन्द्रशब्दान् विष्णुवाय्वोर्निर्वक्ति– **बृंहयतीति** ॥ व्युत्पत्तिभिर्ब्रह्मप्रजापतीन्द्रशब्दैर्विष्णुवायू उच्येते इति शेषः । यद्यपि ब्रह्मशब्दनिर्वचनं न श्रुत्यनुसारि तथाऽपि प्रमाणे ब्रह्मशब्दस्य प्रसक्तत्वात् तस्य निर्वचनं कृतमिति मन्तव्यम् ॥ द्वाविंशः खण्डः ॥

## ततश्चायं खण्डार्थः

साम्नः समत्वात् सामनामकस्य भगवतः उद्गीथ इति वक्ष्यमाणमत्रापि सम्बध्यते । उद्गानप्रकारो विनर्दि सपादवर्षवृषभस्वरवन्मेघनर्दनवद्वा । तदेव वृणे । सर्वोत्तमत्वात् । अग्नेरुद्गीथः उद्गानप्रकारः पशव्यम् । इतिशब्दः उपमार्थः । स्त्रीपशुस्वरवत् । भगवत्स्वरस्य पुंपशुस्वरसादृश्यस्योक्तत्वात् । उद्गीथ इत्यस्य सर्वत्र सम्बन्धः । प्रजापतेर्ब्रह्मणः । उद्गीथ उद्गानप्रकारोऽनिरुक्तो निरुपमः । विंशतिवर्षावार्ग्वर्षस्य वृषभस्य स्वरवद् गम्भीरश्रुति ग्राह्यम् । सोमस्योद्गीथो निरुक्तः सोमपः । घण्टानिनादाख्योपमासहित इत्यर्थः । वायोरुद्गीथो मृदु मृदुमेघस्वरवत् श्लक्ष्णम् । विंशतिवर्षस्य वृषभस्य स्वरवद् गम्भीरमित्यर्थः । इन्द्रस्योद्गीथः श्लक्ष्णं गम्भीरं बलमस्यास्तीति बलवत् । स्तनयित्नुघोषवदित्यर्थः । बृहस्पतेरुद्गीथः क्रौञ्चं क्रौञ्चपक्षिस्वरवत् । वरुणस्योद्गीथः अपध्वान्तं भिन्नकांस्यरवसमम् । विस्वर इति यावत् । किं तत इत्यत आह– **तानिति** ॥ उद्गाता तान् भागवतादीन् बार्हस्पत्यन्तान् सर्वानेव स्वरान् उपसेवेत । यथाशक्ति तत्तदुद्गानस्वरसदृशस्वरैरेवोद्गायेदित्यर्थः । एवकारव्यावर्त्यमाह– **वारुणमिति** ॥ वारुणमेव स्वरम् । तु विशेषेण वर्जयेत् । विस्वरत्वादित्यर्थः ॥ १ ॥

एवमुद्गातुरुद्गाने स्वरमुक्त्वा इदानीं देवादिविषये आशास्यमाह–

**अमृतत्वमिति** ॥ उद्गाता अहं देवेभ्यः अमृतत्वं मोक्षमुद्दिश्याऽगायानि आगानं कुर्यामिति सङ्कल्प्याऽगायेत् । आगानं कुर्यात् । पितृभ्यः स्वधां मनुष्येभ्य आशामाशासनीयमिष्टमिति यावत् । पशुभ्यस्तृणोदकं यजमानाय स्वर्गं लोकम् आत्मने प्राणस्थपरमात्मने । अन्नमुद्दिश्य आगायानीति सङ्कल्प्याऽगायेत् । उद्गानं कुर्यादित्यर्थः । एवं सङ्कल्पः कार्य एव नैतद्विषये प्रमादः कार्य इत्याह– **एतानीति** ॥ एतानि पूर्वोक्तानि देवामृतत्वादीनि मनसा ध्यायन्नप्रमत्तः संस्तुवीत ॥ २ ॥

ततः किमिति चेत् । औद्गात्रे हि मुख्याधिकारी वायुरेवान्ये त्वमुख्याधिकारिणः । तत्रोद्गाता यदि मुख्यवायुस्तर्हि देवादीनां मोक्षादि-दाने क्षमो भवेत् । नान्यथा । यदि चान्यस्तर्हि मद्धृदिस्थो मुख्यप्राण एव देवादीनां मोक्षादिकं ददातीति स्मृतिः कार्या । अन्यथा मनुष्यमात्रस्य देवादिमोक्षदानादौ सामर्थ्याभावेन देवावमन्तृप्राप्त्याऽनर्थप्राप्तेः । नचान्य-स्याऽगायानीति सङ्कल्पानुपपत्तिः । मुख्यप्राणस्यैव तद्गतस्य सङ्कल्प-कर्तृत्वेन तथास्मृतिमात्रस्यानेन कर्तव्यत्वात् । एवमुद्गातुर्देवादिविषये आशास्यमुक्त्वेदानीमुद्गात्रा स्वरोष्मस्पर्शाक्षरेषु सम्यक्प्रयुक्तेष्वपि यदि कश्चिद्धूर्त उपालम्भं करोति तदा तं प्रति वक्तव्यप्रकारं वक्तुं तावत् स्वरोष्मस्पर्शदेवता आह – **सर्वे स्वरा इति** ॥ सर्वे स्वराः अकारादयः षोडश स्वराः इन्द्रस्य परमैश्वर्यादिदं रातीति व्युत्पत्त्या वा इन्द्रनाम्नो वायोरात्मानो देहाः प्रतिमा इति यावत् । सर्वे ऊष्माणः शषसहाः प्रजापतेः प्रजाः पातीति प्रजापतिनाम्नो विष्णोरात्मानः। प्रतिमाः, सर्वे स्पर्शाः, कादयो मावसाना वर्णाः, मृत्योर्मारणान्मृत्युनाम्नो रुद्रस्याऽत्मानः प्रतिमाः । किं तत इत्यत आह– **तमिति** ॥ तमुद्गातारं यदि स्वरेषु सम्यगुच्चारितेष्वप्युपालभेत स्वरस्त्वया दुष्टः प्रयुक्त इत्युपालम्भं कुर्यादसुरस्तदाऽहमिन्द्रं स्वराधिपतिं वायुं शरणं प्रपन्नोऽभूवं स्वराधिपतीन्द्रप्रसादात् सम्यगेव स्वरोच्चारणं कृतवानस्मीति यावत् । स

इन्द्रस्त्वा त्वां प्रतिवक्ष्यति ''शिक्षारूपं वचनम्''इति शेषः । इत्येनमुपालम्भकर्तारं प्रति ब्रूयात् ।। ३ ।।

अथ यद्येनमुद्गातारमूष्मसु सम्यक् प्रयुक्तेष्वपि उपालभेतोक्तरीत्योपालम्भं कुर्यादसुरस्तदाऽहं प्रजापतिमूष्माधिपतिं विष्णुं शरणं प्रपन्नोऽभूवं स त्वा त्वां प्रतिपेक्ष्यति सञ्चूर्णष्यितीत्येनं ब्रूयात् । अथ यद्येनं स्पर्शेषूपालभेतासुरस्तदा मृत्युं स्पर्शाधिपं रुद्रं शरणं प्रपन्नोऽभूवं सः त्वां प्रतिधक्ष्यति भस्मीकरिष्यतीत्येनं ब्रूयात् ।। ४ ।।

ननु कथं स्वरोष्मस्पर्शोच्चारणं कर्तव्यम् ? यत्रान्यैरुपालम्भे कृते एवं वक्तव्यमित्यतः स्वराद्युच्चारणप्रकारं दर्शयति – **सर्व इति** ।। इन्द्रे स्वराधिपतिवायौ बलं ददानीति सङ्कल्प्येन्द्रे बलदानार्थे सर्वे स्वरा घोषवन्तो ध्वनिविशेषवन्तो बलवन्तोऽतिप्रयत्नवन्तो वक्तव्याः । घोषपूर्वकमतिप्रयत्नेन स्वरोच्चारणं कर्तव्यमित्यर्थः । प्रजापतेरूष्माधिपतिविष्णोरात्मानं स्वात्मानमेव परिददानि समर्पय इति सङ्कल्प्य सर्वे ऊष्माणः अग्रस्ताः अन्तरेवाप्रवेशिताः अनिरस्ताः वहिरेवानाक्षिप्ताः विवृताः विवृतप्रयत्नयुक्ताः वक्तव्याः । मृत्योः स्पर्शाधिपतेः सकाशादात्मानं मोक्षयोग्यं परिहराणि । मोक्षयोग्यान् मृत्युवर्जितान् करिष्यामीति सङ्कल्प्य सर्वे स्पर्शा लेशेनानभिहता लेशतोऽसंस्पृष्टाः वक्तव्याः ।

ननु स्वराद्युच्चारकपुरुषमात्रस्य कथम् ''इन्द्रे बलं ददानि''इति ''मृत्योरात्मानं परिहराणि''इति च सङ्कल्पः । तत्रासमर्थत्वादिति चेत् । औद्गात्रे मुख्याधिकारिणो मुख्यप्राणस्यैव स्वराद्युच्चारणेऽपि मुख्याधिकारित्वात् । नचैवम् ''इन्द्रे बलं ददानि''इति सङ्कल्पानुपपत्तिः । अत्रेन्द्रशब्देन वायुपदयोग्यानाम् ऋजूनां ग्रहणात् । अन्यैस्तु मद्धृदिस्थो मुख्यप्राण एवैवं करोतीति स्मृतिमात्रस्य कर्तव्यत्वादिति ।। ५ ।।

**।। इति द्वाविंशः खण्डः ।।**

## उपनिषत् (खण्डः -२३)

*धर्मब्रह्मज्ञानयोः फलनिरूपणम्*

**त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ॥ १ ॥**

### भाष्यम्

**'सर्वधर्मैः पुण्यलोको ब्रह्मज्ञानाद् विमुच्यते ।**

### पदार्थकौमुदी

### भाष्यार्थः

पूर्वं व्यस्तसमस्तसामोपासकानां स्वर्गमोक्षौ फलत्वेनोक्तौ । तत्र केषां किमिति न ज्ञायते । अतस्तद्विवेकेनाऽह – **"त्रयो धर्मस्कन्धाः"** इत्यादिना ॥

### मायावादिमतनिरासः

अत्राऽहुर्मायावादिनः – यज्ञादिमान् प्रथमो गृहस्थस्तापसो द्वितीयो वनस्थस्तृतीयो ब्रह्मचारी नैष्ठिकः सर्व एते पुण्यलोका भवन्ति । शिष्टस्त्वनुक्तः परिव्राट् ब्रह्मसंस्थोऽमृतत्वं पुण्यलोकविलक्षणं मोक्षमेतीति । तन्मतनिरासाय प्रमाणेनैव तात्पर्यमाह – **सर्वेति** ॥ सर्वेषामाश्रमिणां धर्मैरित्यर्थः । यतिधर्मस्यापि पुण्यलोकसाधनत्वमस्ति । ब्रह्मज्ञानं चेत् सर्वेषामपि मोक्षो भवेत् । एवं च त्रयाणामेव पुण्यलोको यतेरेव तद्विलक्षणो मोक्ष इत्ययुक्तमिति भावः ।

### उपनिषत्

*दृष्टान्तपूर्वकं ॐकारस्य सर्ववेदसारत्वकथनम्*

प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत् तामभ्यतपत् तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति तान्यभ्यतपत् तेभ्योऽभितप्तेभ्य ॐकारः सम्प्रास्रवत् तद् यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येव-मेतेनोङ्कारेण सर्वा वाक् सन्तृण्णोङ्कार एवेदꣳ सर्वमोङ्कार एवेदꣳ सर्वम् ॥ २ ॥ २३ ॥

### भाष्यम्

ॐकारो ब्रह्मणो नाम सर्ववागात्मकश्च सः ।
तद्व्याख्यात्वात्[१] सर्ववाचां सर्ववागात्मता भवेत् ॥
इदं तु प्रस्तुतत्वात् स सर्वं चाप्यर्थपूर्णतः ।
सर्वशब्दान्वितत्वाच्च न लिङ्गव्यत्ययो भवेत् ।
आधिक्यं चैव सर्वत्वं प्रस्तुतं तद् यथेति तत् ॥' इति च ।
'अकाराद्याः क्रमेणैव भूरादेः साररूपिणः ।
अस्मादयं सार इति ज्ञानमेवाभितापनम् ॥
सम्प्रस्रावश्च तद्दृष्टिर्ब्रह्मणः परमस्य हि ।
नित्यज्ञानोऽपि भगवान् क्रीडयाऽचीक्लृपद् यदा ।
तदाऽभितापशब्दोऽयं वर्तते परमात्मनि ॥' इति च ।

---

१. 'व्याख्यानत्वात्' ह.

# पदार्थकौमुदी

## भाष्यार्थः

''तेभ्योऽभितप्तेभ्यः ॐकारः सम्प्रास्रवत्''इति ओङ्कारस्य वेदत्रय-सारव्याहृतिसारत्वेन ज्ञानमुक्तम् । तत्कुत इत्यतस्तत्र ''ओङ्कार एवेदं सर्वम्''इति श्रुत्यभिप्रेतं हेतुमाह – **ॐकार इति** ।। ब्रह्मणः गुणपूर्णस्य । अनेन गुणपूर्णत्ववाचकत्वं हेतुमभिप्रैति । ''तद्यथा''इति श्रुत्युक्तं हेत्वन्तरमाह – **सर्वेति** ।। ननु प्रत्यक्षबाधितमेतदित्यत आह – **तद्व्याख्यात्वादिति** ।। सर्ववागात्मतोङ्कारस्य । ननु ''ॐकार एवेदं सर्वम्''इत्यत्र ॐकारस्य सर्वजगदात्मकत्वमुच्यत इत्ययुक्तम् । बाधात् । इदं सर्वं शब्दजातमोङ्कार एवेति सर्वशब्दात्मकत्वमुच्यत इत्यप्यत एवायुक्तम् । उक्ताभिप्रायश्चेत् तद्यथेत्यनेन गतार्थमित्यतः इदंशब्दस्यो-ङ्कारविशेषणत्वमङ्गीकृत्य तद्वाक्यं व्याचष्टे – **इदं त्विति** ।। तु विशेषेणाव्यवधानेन प्रस्तुतत्वात् सः ओङ्कारः इदं इदमित्यनेन परामृश्यत इत्यर्थः । चोऽवधारणे । स इत्यनेन सम्बध्यते । अर्थपूर्णतः अर्थपूर्णत्वतः । पूर्णत्वार्थकत्वत इति यावत् । ततश्चेदमयमोङ्कार एव सर्वं पूर्णत्व-वाचीत्यर्थ इत्युक्तं भवति । नचोङ्कारमुद्दिश्य सर्वमिति नपुंसकप्रयोगानु-पपत्तिः । सर्वं पूर्णार्थकं यत्सः इदमोङ्कार एवेत्युद्देश्यविधेयभावस्य विवक्षितत्वात् । नचैवमपीदमोङ्कार इति सामानाधिकरण्यानुपपत्तिः । छान्दसत्वेन लिङ्गव्यत्ययोपपत्तेरिति भावः । अथवेदमित्यस्य सर्वशब्दा-न्वितत्वमेव । सर्वशब्दस्य च नपुंसकत्वं ''सामान्ये नपुंसकम्'' इति न्यायेनाऽश्रितमिति च न लिङ्गव्यत्ययदोष इत्यभिप्रेत्याऽह – **सर्व-शब्देति** ।। ततश्चेदं सर्वं सर्ववागर्थत्वेन प्रस्तुतं यत्पूर्णत्वं तद्वाची । ॐकार एवेत्यर्थ इत्युक्तं भवति । अत एव ''ओङ्कारो ब्रह्मणो नाम'' इति प्रागुक्तम् । एवमोङ्कारस्य सारार्थकत्वेन सर्ववाक्सारतोपपादकतयेदं वाक्यं

व्याख्यायेदानीं स्वरूपतः सर्ववागाधिक्योपपादकतयाऽपि व्याचष्टे – **आधिक्यमिति** ॥ ॐकारस्य सर्वत्वं चाऽधिक्यमेवेति सम्बन्धः । नन्वत्रेदमित्यस्य न सर्वशब्दविशेषणत्वम् । स्वरूपाधिकस्य पूर्वमप्रस्तुतत्वेन परामर्शासम्भवादित्यत आह – **प्रस्तुतमिति** ॥ तदाधिक्यं ''तद् यथा शङ्कुना'' इति पूर्ववाक्येन प्रस्तुतमित्यर्थः । ततश्चेदं प्रस्तुतं यत्सर्वं स्वरूपतोऽधिकं सः ॐकार एवेति योजनोक्ता भवति ।

ननु[१] ''तेभ्योऽभितप्तेभ्य ॐकारः सम्प्रास्रवत्''इति ॐकारो व्याहृतिसार इत्युक्तम् । तत्कथम् ? व्याहृतीनां त्रित्वात् । ॐकारस्यैकत्वात् । व्याहृतित्रयस्य वेदत्रयसारत्ववदत्रापि वक्तव्यत्वादित्यत आह– **अकाराद्या इति** ॥ ''प्रजापतिर्लोकानभ्यतपत्'' इत्यादौ ''त्रयी विद्या सम्प्रास्रवत्'' इत्यादौ चोक्ताभितापनसम्प्रास्रवणे तपःप्रस्रवणे एवेत्यन्यथाप्रतीतिनिरासाय तयोर्विवक्षितमर्थं प्रमाणेनाऽह – **अस्मादयमिति** ॥ तद्दृष्टिः सारत्वदृष्टिः । सारत्वज्ञानमेव सम्प्रस्रावशब्दस्याप्यर्थ इति भावः । ''ब्रह्मणः परमस्य'' इत्युक्त्या श्रौतप्रजापतिशब्दो व्याख्यातः । तेन प्रजापतिर्विराट् कश्यपो वेति व्याख्यानं निरस्तम् ।

ननु यद्यत्र श्रुतौ प्रजापतिशब्देन परब्रह्मग्रहणं तर्हि तस्य नित्यज्ञानत्वेनाभ्यतपदिति कादाचित्कव्यवहारः कथमित्यत आह– **नित्येति** ॥ अचीक्लृपत् ज्ञानव्यक्तिमकरोत् ।

## भाष्यम्

**तपःशब्देनैव यतिधर्मश्चोक्तः ।**

**'सर्वेषामाश्रमस्थानामज्ञानां पुण्यलोकता ।**

१. अत्र 'नतु' इति मुद्रितपुस्तकस्थः पाठः प्रामादिक इत्यवगन्तव्यम् ।

अपरोक्षदृशां विष्णोरमृतत्वं न चान्यथा ॥' इति च ।

'यज्ञाध्ययनदानैस्तु गृही स्यात् सोमलोकगः ।
यतयस्तपसा सूर्यं चत्वारोऽपि विशेषतः ।
गच्छन्ति तपसैवर्षीन् वनस्था ब्रह्मचारिणः ॥
नैष्ठिका वालखिल्यांश्च गुरुशुश्रूषयैव तु ।
यदि पश्यन्त्येत एव साक्षाद् देवं जनार्दनम् ।
अमृतत्वं तदा यान्ति नान्यथा तु कथञ्चन ॥' इति च ।

## पदार्थकौमुदी

### भाष्यार्थः

ननु परोक्तरीत्या त्रयोऽप्याश्रमिणः पुण्यलोका भवन्ति । ब्रह्मसंस्थो यतिरेवामृतत्वमेतीत्येव युक्तम् । नतूक्तरीत्या चत्वारोऽप्याश्रमिणः पुण्यलोका भवन्ति । त एव ब्रह्मज्ञानिनश्चेदमृतत्वं यान्तीति । तथा सति गृहस्थादिधर्मयज्ञादिवद् यतिधर्मस्याप्यत्रोक्तिप्रसङ्गादित्यत आह – **तपःशब्देनैवेति** ॥ सर्वेन्द्रियनिग्रहरूपत्वादालोचनात्मकत्वाच्च यतिधर्मस्येति भावः । सर्वेषामप्याश्रमिणां ज्ञानाभावे स्वस्वधर्मैः पुण्यलोकः, सति ज्ञाने मुक्तिरित्यत्र प्रमाणान्तरमाह – **सर्वेषामिति** ॥ ''सर्व एते पुण्यलोका भवन्ति'' इति सामान्येनोक्तम् । तत्र कस्य कः पुण्यलोक इत्यतः प्रमाणेनैव तद्विवेचयन् उक्तमर्थं प्रमाणान्तरेण द्रढयति – **यज्ञेति** ॥ ''यतयस्तपसा सूर्यम्''इत्यनेन तपःशब्देनैव यतिधर्मश्चोक्त इत्येतदपि प्रमापितम् । चत्वारोऽपि परमहंसहंसकुटीचकबहूदकाः । विशेषतः असाधारण्येन । तेन सूर्यस्यार्चिरादिमार्गत्वेनोत्क्रान्तगम्यत्वात् कथमेतदित्याशङ्का परिहृता । वनस्थाः तपसैवर्षीन् ऋषिलोकान् गच्छन्ति । नैष्ठिकब्रह्मचारिणो गुरुशुश्रूषया वालखिल्यान् गच्छन्तीत्यन्वयः ।

## भाष्यम्

न च संन्यासमात्रेणामृतत्वम् ।

'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते ' इति श्रुतेः ।

'विद्यैव तु निर्धारणात्' इति च भगवद्वचनम्[१]।

'न रोधयति मां धर्मो न साङ्ख्यं योग उद्धव ।

न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥' इत्यादि च[२] ।

'न च संन्यसनादेव सिद्धिं समधिगच्छति' इति च ।

'तस्य पुत्रा दायमुपयन्ति '

इत्यादेर्गृहस्थादीनामपि ज्ञानिनां मोक्षः प्रतीयते ।

'सर्ववर्णाश्रमाणां च ज्ञानान्मोक्षो विनिश्चितः ।

अन्त्यानां स्थावरणां वा तथाऽपि यतिरुत्तमः ।

ज्ञानद्वारो यतो न्यासो विशेषेण भविष्यति ॥' इति च ।

'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः ' इति च ॥२३ ॥

## पदार्थकौमुदी

### भाष्यार्थः

''ब्रह्मसंस्थो यतिरेवामृतत्वमेति'' इत्यत्र संन्यासमात्रेणामृतत्व-प्राप्तिरित्यभिप्रेतम् उत तस्यैव ब्रह्मज्ञानं मोक्षश्चेति । तत्राऽद्यं दूषयति– **नचेति** ॥ कुत इत्यतः ज्ञानेनैवामृतत्वप्राप्तिश्रुतेरित्याह– **तमेवमिति** ॥

---

१. 'इति भगवद्वचनम्' ह. २. 'इति च' ग.

तत्रैव सूत्रमपि पठति – **विद्यैवेति** ॥ संन्यासमात्रेण मोक्षप्राप्तिर्नास्तीत्यत्र भगवद्वाक्यमपि पठति – **नेति** ॥ न रोधयति न निर्बन्धयति । मोक्षदानायेति शेषः । एतैरहं न मोक्षद इति भावः । साङ्ख्यं तत्वानां विवेचनम् । योगोऽष्टाङ्गयोगः । त्यागः संन्यासः । गीतावाक्यमप्युक्तार्थे संवादयति – **नचेति** ॥ द्वितीयं दूषयति – **तस्येति** ॥ चशब्देन पूर्वोक्तप्रमाणसमुच्चयः । तस्य मुक्तस्य पुत्राः पूर्वपुत्रा दायं धनक्षेत्रादिकम् उपयन्तीति श्रुत्यर्थः ।

ननु यदि सर्वाश्रमिणां ज्ञानेन मोक्षस्तर्हि ब्राह्मणस्यैव मोक्ष इत्युक्तं स्यात् । तथा च प्रमाणान्तरविरोध इत्यतः । सर्वेषामप्युपलक्षणया प्रज्ञानेन मोक्षो विवक्षित इति प्रमाणेनैवाऽह – **सर्वेति** ॥ वाशब्दः चशब्दार्थः । ननु सर्वेषां मोक्षसद्भावेऽतिप्रयाससाध्ये यत्याश्रमे प्रेक्षावत्प्रवृत्तिर्न स्यादित्यत आह – **तथाऽपीति** ॥ यद्यपि सर्वेषां मोक्षस्तथाऽपि कुत इत्यत आह – **ज्ञानेति** ॥ ज्ञानमेव द्वारं मोक्षसाधने यस्य स ज्ञानद्वारः । ननु गार्हस्थ्यादिकमपि ज्ञानद्वारमेव तत्कथमेतदित्यत उक्तम्– **विशेषेणेति** ॥ संन्यासस्य विशेषेण ज्ञानद्वारत्वे श्रुतिमप्याह – **वेदान्तेति** ॥ शुद्धसत्वाः यतयः । संन्यासयोगाद् वेदान्तविज्ञानेन सुनिश्चितभगवद्रूपार्थास्त इत्युत्तरेणान्वयः ॥ **त्रयोविंशः खण्डः** ॥

## ॥ ततश्चायं खण्डार्थः ॥

धर्मस्कन्धा धर्माख्यवृक्षस्य शाखाभूतास्त्रयः । के ते ? इत्यत आह– **यज्ञ इत्यादिना** ॥ यज्ञोऽध्ययनं दानमित्येतैरुपलक्षितो गृही प्रथम एकस्कन्धः । तप एकः, तपःशब्देन कायक्लेशात्मकमालोचनात्मकं च तपो गृह्यते । तेन तद्वानुपलक्षणीयः । तापसो वनस्थो यतिश्च द्वितीयस्कन्धः । आचार्यकुलवासी ब्रह्मचारी । आत्मानं स्वात्मानम् आचार्यकुलेऽत्यन्तमवसादयंश्च तृतीयस्कन्धः । अत्यन्तेति विशेषणान्नैष्ठिक इति लभ्यते । त एते गृहस्थो

वनस्थो यतिर्ब्रह्मचारी नैष्ठिकश्चेत्येते सर्वे यदि न ब्रह्मापरोक्षज्ञानिनस्तर्हि पुण्यलोकाः पुण्यसाध्यो लोको येषां ते तथोक्ता भवन्ति। तत्रायं विवेकः। गृहिणो यज्ञाध्ययनदानैः सोमलोकं गच्छन्ति । परमहंसादिप्रभिन्नाश्चत्वारोऽपि यतयस्तपसा सूर्यलोकं गच्छन्ति । वनस्थास्तु तपस ऋषिसेव्यप्रदेशान् गच्छन्ति । ब्रह्मचारिणो नैष्ठिकाश्च गुरुशुश्रूषयैव वालखिल्यान् गच्छन्तीति। ननु यज्ञादिसाधनैर्मोक्ष एव किं न स्यादित्यत आह – **ब्रह्मसंस्थ इति** ।। यतो ब्रह्मणि परब्रह्मणि संस्थितः तदपरोक्षज्ञान्येव अमृतत्वं मोक्षमेति ।। १ ।।

प्रायो मुमुक्षुजप्यो मन्त्रो वेदाद्यर्थकत्वादिना सर्वसारत्वादोङ्कार एवेति आख्यायिकयाऽऽह – **प्रजापतिरित्यादिना** ।। प्रजापतिर्विष्णुलोकान् लोक्यते परमपरं च वस्त्वेभिरिति लोकाः शब्दराशयस्तानभ्यतपत्। किमत्र सारभूतमित्यपश्यत्। अभितप्तेभ्यो दृष्टेभ्यस्तेभ्यः शब्दात्मकलोकेभ्यः त्रयी विद्या ऋगादिवेदविद्या सम्प्रास्रवत् । सारत्वेन व्यजायत । तां त्रयीविद्यामभ्यतपत् किमत्र सारभूतमित्यपश्यत् । तस्यास्त्रयीविद्याया अभितप्ताया दृष्टायाः एतानि वक्ष्यमाणानि अक्षराणि सम्प्रास्रवन्त व्यक्तान्यभवन्। त्रयीविद्यासारत्वेन प्रजापतिना ज्ञातानीति यावत्। कानि तान्यक्षराणीत्यत आह – **भूर्भुवःस्वरिति** ।। तानि त्रीण्यक्षराण्यभ्यतपत्। किमत्र सारभूतमित्यपश्यत् । तेभ्योऽभितप्तेभ्य ओङ्कारः अकारोकारमकारात्मकः सम्प्रास्रवत्। व्यक्तोऽभवत्। अकारो भूसारत्वेनोकारो भुवः सारत्वेन मकारः स्वःसारत्वेन परब्रह्मणा ज्ञात इति यावत् । एवमोङ्कारस्योक्तं सर्वसारत्वं कुत इत्यतस्तदुपपादयति – **तद्यथेति** ।। तत् निदर्शनं यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णानि प्रोतानि एवमोङ्कारेण प्रणवेन सर्वा वाक् सन्तृण्णा प्रोता प्रणवव्याख्यानरूपाः सर्वा वाच इति यावत्। तथा च सर्ववाग्व्याख्येयत्वात् सारत्वमिति भावः। सारार्थकत्वाच्च सारत्वमिति भावेनोङ्कारार्थमाह – **ॐकार एवेति** ।। यत्सर्वं पूर्णं

पूर्णत्ववाचीति यावत् । स इदं पूर्वप्रस्तुतमोङ्कार एव । अथवेदमित्यस्य सर्वशब्देनान्वयः । तदर्थस्यापि सर्ववागर्थत्वेन प्रस्तुतत्वात् । अतो न लिङ्गव्यत्ययदोषः । यद्वा, स्वरूपतोऽधिकत्वाच्चोङ्कारस्य सारत्वमित्याह– **ओङ्कार एवेति** ॥ इदं तद्यथेति प्रस्तुतं यत्सर्वं स्वरूपतोऽधिकं स ॐकार एवेत्यर्थः । द्विरुक्तिरुक्तावधारणार्था ॥ २ ॥

**॥ इति त्रयोविंशः खण्डः ॥**

## उपनिषत् (खण्डः - २४)

*स्वर्गमोक्षमार्गे प्राप्तविघ्नपरिहारोपायनिरूपणम्*

**ब्रह्मवादिनो वदन्ति यद् वसूनां प्रातःसवनꣳ रुद्राणां माध्यन्दिनꣳ सवनमादित्यानां विश्वेषां देवानां च तृतीयसवनं[१] क्व तर्हि यजमानस्य लोक इति स यस्तं न विद्यात् कथं कुर्यादथ विद्वान् कुर्यात् ॥ १ ॥**

*वसुस्थभगवद्रूपप्रार्थना*

**पुरा प्रातरनुवाकस्योपकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣳ सामाभिगायति लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयꣳरा३३३३३ हु३म् आ३३ ज्या३ यो३ आ३२१११इत्यथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनꣳ सम्प्रयच्छन्ति ॥ २ ॥**

---

१. 'तृतीयं सवनम्' ह.

*रुद्रस्थभगवद्रूपप्रार्थना*

पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योदङ्-मुख उपविश्य स रौद्रꣳ सामाभिगायति लो३कद्वारमपावा३-र्णू३३पश्येम त्वा वयं विरा ३३३३३ हु३म् आ३३ ज्या३ यो३ आ३२१११ इत्यथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यन्दिनꣳ सवनꣳ सम्प्रयच्छन्ति ॥ ३ ॥

*आदित्यविश्वेदेवस्थभगवद्रूपप्रार्थना*

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाऽहवनीयस्योदङ्मुख उप-विश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति लो३कद्वार-मपावा३र्णू३३पश्येम त्वा वयꣳ स्वारा३३३३३ हु३म् आ३३ ज्या३ यो३ आ३२१११ इत्यादित्यमथ वैश्वदेवं लो३कद्वारमपावा३ र्णू३३ पश्येम त्वा वयꣳ साम्रा३३३३३ हु३ म् आ३३ ज्या३ यो३ आ३२१११ इत्यथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दतैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनꣳ(१) सम्प्रयच्छन्त्येष हवै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ॥ ४ ॥ २४ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि द्वितीयोऽध्यायः ॥ २ ॥

भाष्यम्

'वसुरुद्रादितेयेषु विश्वेषु स्थितमीश्वरम् ।
तन्नामानं हरिं मन्त्रैर्लोकद्वारादिभिः प्रभुम् ॥
प्रार्थयित्वा दिवं त्वज्ञो ज्ञो मोक्षं प्राप्नुयात् तथा ।
यजमानो नान्यथा तु लोकोऽस्य प्राप्यते वरः ॥
राजनं पृथिवीलोके राज्यमित्युच्यते बुधैः ।
विराज्यमन्तरिक्षे तु स्वाराज्यं स्वर्गगं भवेत् ॥
एतेषु मोक्षोऽपि भवेन्मानुषाणां विशेषिणाम् ।
श्वेतद्वीपं तथा गत्वा दृष्ट्वा विष्णुं च ते ततः ।
अनुज्ञाताः प्रमोदन्ते निर्दुःखास्तु धरादिषु ॥' इति च[२] ।

पदार्थकौमुदी

भाष्यार्थः

पूर्वं स्वर्गमोक्षफलकसामनामकभगवदुपास्तिरुक्ता । साम्प्रतं विघ्नपरिहारद्वारा पृथिव्यादिप्राप्तिमोक्षहेतुभूतसामैकदेशप्रतिपाद्यवस्वादिनिष्ठभगवदुपास्तिं शिष्यगुर्वाक्षेपसमाधानरूपाख्यायिकयाऽऽह – **ब्रह्मवादिन इत्यादिना** ॥ अत्र प्रसिद्धवस्वादीनामेव अग्निवाय्वादिपरलोकद्वाराऽऽदिमन्त्रप्रतिपाद्यानां "प्रातः सवनं प्रयच्छन्ति ।" "माध्यन्दिनसवनं प्रयच्छति" "तृतीयसवनं प्रयच्छति" इत्यादिना प्रातःसवनादिकर्तव्यसम्पादकत्वमेवोच्यत इत्यन्यथाप्रतीतिपरिहाराय खण्डतात्पर्यं प्रमाणेनैवाऽऽह – **वसुरुद्रेत्यादिना** ॥ आदितेयेषु आदित्येषु विश्वेषु देवेषु भगवति वस्वादिशब्दनां प्रवृत्तिनिमित्तस्वातन्त्र्येण मुख्यत्वं वक्तुम्

१. 'तृतीयं सवनम्' ह्न. २. 'इति' ह्न.

''ईश्वरम्'' इत्युक्तम् । प्रसिद्धवस्वादौ च तच्छब्दवृत्तिरव्यक्ताधिकरणन्यायेनेति सूचयितुं, तेषु स्थितमित्युक्तम् । मन्त्राणां भगवत्परत्वमुपपादयितुं ''प्रभुम्'' इत्युक्तम् । हरिरेवैतैर्मन्त्रैः प्रार्थितो विघ्नपरिहारादीष्टदाने समर्थो नेतर इति भावः । दिवमन्तरिक्षं भुवं च । अनेन ''प्रातःसवनं सम्प्रयच्छन्ति'' इत्यादौ प्रातःसवनादिकर्तव्यसम्पादकत्वमेव नोच्यते । किन्तु वस्वादयः स्वस्वामिकं प्रातःसवनादिकं तत्काले कर्तव्यं निर्विघ्नं सम्पाद्य स्वस्वामिकपृथिव्यादिकमपि प्रयच्छन्तीति विवक्षितम् । ''राज्याय विराज्याय स्वाराज्याय''इति मन्त्रेषु पृथिव्यादिलोकप्राप्तेः प्रार्थितत्वात् । प्रार्थितादाने च तेषामप्रेक्षावत्त्वप्राप्तेरित्युक्तं भवति । नास्याब्रह्मविद्यायाः पृथिव्यादिलोकप्राप्तिरेव फलम्, अपि तु मोक्षोऽपीति पूर्ववद् व्यवस्थायाऽऽह – **त्वज्ञ इति** ॥ तुशब्दस्य पूर्वेणोत्तरेण च सम्बन्धः । ब्रह्मपरोक्षज्ञानी सन् यजमानो दिवं प्राप्नुयादपरोक्षज्ञानी सन् यजमानो मोक्षं तत्रत्यं सुखविशेषं प्राप्नुयादिति । तथा च वस्वादिस्थितहर्यनुसन्धानेन यजमानो यज्ञाधिकारी, अन्यथा यजमानस्य हर्यनुसन्धानाभावे, वरो लोको भूरादिर्मोक्षश्च ।

ननु ''राज्याय'' इत्यादौ पृथिव्यादिलोकप्राप्तिः प्रार्थितेत्ययुक्तम्। तद्वाचकपदाभावादित्यतो राज्यादिपदमेव तद्वाचकमिति प्रमाणेनाऽऽह– **राजनं पृथिवी लोक इति** ॥ नन्वेवं ज्ञो मोक्षमित्ययुक्तम् । मोक्षिलोकवाचकवैकुण्ठादिपदाभावादित्यतः पृथिव्यादीनामेव कतिपयमोक्षिलोकत्वमपीत्याह– **एतेष्विति** ॥ एतेषु पृथिव्यादिषु लोकेषु मोक्षो मुक्तानां सुखं भोगविशेषः ''प्रमोदन्ते'' इति वक्ष्यमाणत्वात् । विशेषिणामात्मत्वमात्रोपासनयोग्यानाम् ।

''आत्मन्येव परं देवमुपास्य हरिमव्ययम् ।
केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ।

अत्रैव च स्थितिस्तेषाम् ॥'' इत्यादेः ।

ननु ''यावच्छ्वेतं न गच्छति । योगी तावन्न मुक्तः स्यात्'' इत्युक्तेः कथमेतेषु मोक्ष इत्यत उक्तं विशदमाह – **श्वेतद्वीपमिति** ॥ तथेति प्रमाणे प्रकृतसमुच्चयः । ततस्तेन विष्णुना । तुना धरादिगतत्वेऽपि निर्दुःखत्वं नास्मदादिसाधारणमित्याह ।

## भाष्यम्

*वस्वादिनाम्नां भगवत्परत्ववर्णनम्*

**'यो देवानां नामधा एक एव' इति श्रुतेश्च भगवत एव वस्वादिनामानि ।**

**'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ' इति वचनाच्च भगवानेव प्रार्थ्यः । भगवत्स्वरूपस्य सम्यगपरिज्ञानाद् रागाच्च तेषामन्तवत्फलत्वम् ।**

'न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।',
'गतागतं कामकामा लभन्ते' इति वचनात् ।
'सर्वोत्तमत्वस्याज्ञानाद् विष्णोरन्धन्तमो भवेत् ॥
तद्वेषात् किमु वक्तव्यं ब्रह्मादिद्वेषतोऽपि वा ।
तारतम्यापरिज्ञानादनुत्थानं तमो भवेत् ॥
अपराधकृतस्तेषां निरयं त्वेव गच्छति ।
पूजाया अकृतेस्तेषां न वर्णेषु जनिर्भवेत् ॥
सम्यक्कर्माननुष्ठानात् स्वर्गं नैवोपगच्छति ।
अपरोक्षदृशेरौन्यान्मोक्षं नैवोपगच्छति ॥' इति च ।

## पदार्थकौमुदी

### भाष्यार्थः

भगवतो वस्वादिदेवतानामित्वे श्रुतिमप्याह– **यो देवानामिति** ॥ चशब्दः पूर्वोक्तप्रमाणसमुच्चायकः । भगवत एव मुख्यत इति शेषः । ननु मुमुक्षुभिर्भवतु भगवान् प्रार्थ्यो नतु स्वर्गार्थिभिर्वस्वादिप्रार्थनयाऽपि तत्सिद्धेरित्यतस्तत्र प्रमाणमाह– **त्रैविद्या इति** ॥ त्रैविद्या नाम ये प्रतिकर्म भगवदनुसन्धानरहिताः अवसाने स्वकृतमुत्तमबुद्ध्या भगवत्यर्पयन्ति ते । पूर्वप्रमाणसमुच्चयार्थश्चशब्दः । प्रार्थ्य एवेति सम्बन्धः । स्वर्गार्थिभिरपीति शेषः । ननु यदि स्वर्गार्थिभिरपि भगवान् प्रार्थ्यस्तर्हि तेषामन्तवत्फलं न स्यादित्यतस्तत्र कारणमाह– **भगवत्स्वरूपस्येति** ॥ सम्यक् भगवत्स्वरूपापरिज्ञानादन्तवत्फलं भवतीत्यत्र प्रमाणमाह– **नतु मामिति** ॥ ''रागादन्तवत्फलम्'' इत्यत्रापि प्रमाणमाह– **गतागतमिति** ॥

ननु ''सम्यगपरिज्ञानात्'' इत्युक्तं सम्यग्ज्ञानं कीदृशं यदभावादान्तवत्फलवत्त्वं त्रैविद्यानामित्याशङ्कायां विष्णुवैष्णवद्वेषाभावे तारतम्यज्ञानपुरःसरं विष्णुसर्वोत्तमत्वज्ञानमेव सम्यग्ज्ञानम् । इदं चावश्यं श्रेयोऽर्थिना सम्पाद्यमित्याशयेनान्यथाऽनर्थानाह – **सर्वोत्तमत्वस्येति** ॥ अज्ञानात् नास्तिताज्ञानात् । एवमुत्तरत्रापि । तम इत्यस्य विवरणम् – **अनुत्थानमिति** ॥ ननु ब्रह्मादिद्वेषे भवतु तमः तेषां कादाचित्कापराधे कृते तदपूजायां तानुद्दिश्य सम्यगग्निहोत्राद्यनुष्ठानेऽपि किं तम एव फलमित्याशङ्कायां प्रसङ्गात् तत्राप्यनर्थान्तरमाह – **अपराधकृतेरित्यादिना** ॥ निरयमेव गच्छति न तमः । तुशब्दो निरयेऽनित्यत्वं विशेषमाह । ननु विष्णुवैष्णवद्वेषशून्यं तारतम्यज्ञानपुरःसरं विष्णुसर्वोत्तमत्वज्ञानमेव सम्यग्ज्ञानं तदेव श्रेयः साधनं चेत् तर्हि परोक्षतादृशज्ञानवताम्

अस्मदादीनाम् इतरपुरुषार्थवत् कुतो न मोक्ष इत्याशङ्कायामेतावन्मात्रं न मोक्षसाधनमित्याह– **अपरोक्षदृशेरिति** ॥ अनेन ''पश्येम त्वा राज्याय'' इत्याद्युपपादितम् ।

### भाष्यम्

'पूर्वपूर्वगुणैर्दोषा न शक्ता उत्तरोत्तराः ।
स्थानद्वयोत्तरे शक्ता मोक्षो नानपरोक्षिणः ॥
विरुद्धरागिणां नैव ह्यपरोक्षदृशिर्भवेत् ।
यावद् रागविनाशः स्याद् विरक्तो भक्तिसंयुतः ॥
सर्वदैवाप्रमत्तश्च पश्येदेव[१] हरिं परम् ।
अविस्मृतिः सदा विष्णोरन्यथाज्ञानवर्जनम् ॥
शास्त्राभ्यासः सदोद्योगाच्छ्रवणाच्च विचारतः ।
निषिद्धकर्मणां त्यागः स्वधर्मस्य कृतिः सदा ॥
अप्रमाद इति प्रोक्तः शास्त्रं वेदास्तु पञ्च च ।
भारतं पञ्चरात्रं च मूलरामायणं तथा ।
पुराणं भागवतं चैव पञ्चमो वेद उच्यते ॥' इति च ।

### पदार्थकौमुदी

### भाष्यार्थः

ननु पूर्वं पूर्वोक्तदोषविरुद्धहरिसर्वोत्तमत्वज्ञानादिगुणवतां पश्चादुक्तद्वेषादयो दोषाः कादाचित्काश्चेत् किं स्वकार्यकरणे शक्ताः नेत्याह– **पूर्वपूर्वगुणैरिति** ॥ पूर्वपूर्वगुणैः पूर्वपूर्वोक्तदोषविरुद्धगुणैः हरिसर्वोत्तम-

१. 'पश्येद् देवं' ह.

त्वज्ञानादिभिः सहिताः उत्तरोत्तराः पश्चादुक्ताः द्वेषादयो दोषाः "कादाचित्काः" इति शेषः। स्वंकार्यसाधने न शक्ताः। नन्विदमयुक्तम्। हरिसर्वोत्तमत्वज्ञानतत्स्नेहब्रह्मादिस्नेहतारतम्यज्ञानरूपगुणवतामपि कादाचित्का ब्रह्माद्यपराधादयो दोषा नरकादिकार्यकरणे शक्ता एव प्रमिता इत्यत उक्तस्यापवादमाह – **स्थानद्वयेति**॥ हरिसर्वोत्तमत्वाज्ञानं तद्वेषश्चेत्येकं स्थानम्। ब्रह्मादिद्वेषस्तत्तारतम्यापरिज्ञानं चेत्यपरं स्थानम्। अथवा हरिसर्वोत्तमत्वाज्ञानं ब्रह्मादितारतम्याज्ञानं च मिथ्याज्ञानत्वेन क्रोडीकृतमेकं स्थानम्। तदुभयद्वेषश्च द्वेषत्वेनैकीकृतमपरं स्थानम्। तथा चैतत्स्थानद्वयोत्तरे तत्पश्चादुक्ताः कादाचित्कब्रह्माद्यपराधादयो दोषाः पूर्वोक्तगुणवतामपि स्वकार्यकरणे शक्ताः। अत्रोदाहरणमाह – **मोक्ष इति**॥ हरिसर्वोत्तमत्वज्ञानादिसम्यक्कर्मानुष्ठानान्तगुणवतामपि जिज्ञासूनामपरोक्षादृशेरौन्याख्यदोषः स्वकार्यमोक्षाभावसम्पादको यथेत्यर्थः।

ननूक्तज्ञानवतामपरोक्षज्ञानं कथं न भवतीत्यपेक्षायामाह– **विरुद्धरागिणामिति**॥ तर्हि कदा भवेदित्यत आह– **यावदिति**॥ रागविनाशः निषिद्धरागविनाशः। विरक्तः अनिषिद्धैहिकामुष्मिकविषयाभिलाषशून्यः। अनेन "रागादन्तवत्फलम्" इत्येतदुपपादितं भवति। "अप्रमत्तश्च" इत्युक्तमप्रमादमाह– **अविस्मृतिरित्यादिना**॥ द्वितीयं सदेति पदं सर्वत्र सम्बध्यते। उद्योगात् श्रवणाद् विचारतश्च शास्त्राभ्यास इति सम्बन्धः। शास्त्राभ्यासो सकृदावर्तनमित्यर्थः। ननु शास्त्रं नाम किम्? यस्याभ्यासः कार्य इत्यत आह – **शास्त्रमिति**॥ चोऽवधारणे। शास्त्रं तु पञ्चवेदा एवेति सम्बन्धः। तुशब्दो मोक्षोपयोगित्वं विशेषमाह। अवधारणेन पाशुपतादिव्यावृत्तिः। ननु ऋगादयश्चत्वारो वेदाः प्रसिद्धाः। पञ्चमो वेदो नाम कः? इत्यपेक्षयामाह – **भारतमिति**॥ शैवब्राह्मपुराणव्युदासाय "भागवतम्" इत्युक्तम्। भगवद्विषयमित्यर्थः। तथाच भागवतादि-

वैष्णवपुराणमेव पञ्चमवेदकोटिनिष्ठमिति भावः ।

## भाष्यम्

'त्रिलोकप्राप्तिपरिघास्त्रयः सन्ति सदातनाः[१] ।
तेषामग्न्यादिगो विष्णुरपहन्ता स्मृतो भवेत् ॥
मृतः सन् सुखभोगाय यत्र गच्छति तत्र ह ।
एकैकः परिघोऽग्रे स्याद् गते तस्मिंस्तु विष्णुना ।
यजमानः पृथिव्यादिलोकान् भोगाय याति हि ॥' इति च ।
'यस्त्राति यज्ञमातारं यज्ञमात्रा हरिस्तु सः ।
तमेवं वेत्ति यो भक्तो याति स्वर्मुक्तिमेव वा[२] इति च ॥२४ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छान्दोग्योपनिषद्भाष्ये द्वितीयोऽध्यायः ॥ २ ॥

## पदार्थकौमुदी

### भाष्यार्थः

''अपजहि परिघम्'' इति मन्त्रत्रयोक्ताः परिघाः पापविशेषा इति प्रतीतिं वारयन् तत्तात्पर्यमाह– **त्रिलोकेति** ॥ त्रिलोकप्राप्तिप्रतिबन्धकीभूताः प्रसिद्धार्गलतुल्या इत्यर्थः । नन्विदानीमस्मदादीनां पृथिवीं प्राप्तानां प्रतिबन्धकपरिघादर्शनात् कथं ''त्रयः सन्ति'' इत्युक्तम् ? नच मरणानन्तरमुपलभ्यन्त इति वाच्यम् । सर्वेषामपि भूतानामेवं प्रार्थनाभावेऽपि लोकत्रयान्यतमप्राप्तेः सिद्धत्वेन परिघाऽपनयनस्याप्रार्थ्यत्वादित्यत आह– **मृत इति** ॥ तथाच लोकप्राप्तेः सिद्धत्वेऽपि तद्गतसुखभोगाय परिघाऽपनयनं प्रार्थ्यमेवेति भावः ।

१. 'सनातनाः' ह. २. 'मुक्तिमेव च' ग.

''एष हवै यज्ञस्य मात्रां वेद य एवं वेद'' इत्यत्र यज्ञस्य मात्रां याथात्म्यं वेदेत्यन्यथाप्रतीतिनिरासाय तत्पदं प्रमाणेन व्याचष्टे– **यस्त्रातीति** ॥ तु-शब्दोऽवधारणे । हरिरेव यज्ञमात्रा न यज्ञयाथात्म्यमिति । अनेन यज्ञं माति निर्मातीति यज्ञमा यजमानस्तं त्रातीति यज्ञमात्रा हरिरित्युक्तं भवति । ''वेद य एवं वेद'' इत्यंशं व्याचष्टे – **तमेवमिति** ॥ यो भक्तो एवं पूर्वोक्तप्रकारेण वेत्ति स एव तं वेत्तीति सम्बन्धः । तज्ज्ञानं न मुख्यप्रयोजनमित्यतस्तत्साध्यं श्रुत्यभिप्रेतं प्रयोजनमाह – **यातीति** ॥ मुक्तिं चेति सम्बन्धः । एवशब्दः स इत्यनेनान्वेति । एवं च य एवमुक्तरीत्या वेद एष वै एष एव यज्ञस्य मात्रां भगवन्तं वेद । ततश्च तत्प्रसादादज्ञश्चेत् स्वर्गं, ज्ञश्चेन्मुक्तिं यातीत्येतद्वाक्यं व्याख्यातं भवति ॥ **चतुर्विंशति खण्डः ॥**

## ॥ ततश्चायं खण्डार्थः ॥

ब्रह्मवादिनः परब्रह्मवादिनः शिष्या वदन्ति । ''गुरून् प्रति'' इति शेषः। किम्? यद् यदि प्रातःसवनं वसूनां वसुस्वामिकम् अतो भूलोकोऽपि वसूनामेव । प्रातःसवनाधिपतीनामेव भूलोकाधिपतित्वात् । माध्यन्दिनं सवनं रुद्राणामतोऽन्तरिक्षलोकोऽपि रुद्राणामेव । माध्यन्दिनसवनाधि-पतीनामेवान्तरिक्षलोकाधिपतित्वात् । तृतीयसवनमादित्यानां विश्वेषां देवानां चातः स्वर्गलोकोऽपि तेषामेव । तृतीयसवनाधिपतीनामेव स्वर्गलोकपतित्वात् । तर्हि क्व यजमनास्य ज्ञस्याज्ञस्य वा लोकः? यदर्थमयं यजते । भूलोकादीनामन्याक्रान्तत्वात् । नचाज्ञस्य लोकान्तराभावेऽपि ज्ञानिनोऽन्य एव लोको भविष्यतीति वाच्यम् । सच्चिदादिचतुर्गुणोपासक-मनुष्योत्तमादीनामन्यलोकसम्भवेऽप्यात्मत्वमात्रोपासकानां मुक्तानामे-ष्वेव लोकेषु स्थित्यवश्यम्भावात् । नचैवं ''यावच्छ्वेतं न गच्छति'' इत्यादिविरोधः । सकृच्छ्वेतदीपगमनाभ्युपगमादिति भावः । इति

वदन्तीत्यन्वयः । तत्र गुरुभिरुक्तं समाधानप्रकारमाह– **स य इति ॥** यः पुरुषः तद् वक्ष्यमाणलोकप्राप्तिप्रकारं न विद्यात् स कथं कुर्यात् ? यज्ञादिकामिति शेषः । यतो वक्ष्यमाणलोकप्राप्तिप्रकाराज्ञाने यज्ञादि-कर्तृत्वमेवानुपपन्नमथ कस्माद् विद्वान् कुर्यात् ॥ १ ॥

किं कर्तव्यमित्यत आह – **पुरेति ॥** स यजमानः प्रातरनुवाकस्य शस्त्रस्योपाकरणादुपक्रमात् पुरा गार्हपत्यस्य जघनेन पश्चिमदेश इति यावत्। उदङ्मुखः उपविश्य वासवं वसुगतभगवद्देवताकं सामाभिगायति। गानमन्त्रमाह – **लोकेति ॥** हे वस्वन्तर्गतभगवन् त्वं लोकद्वारं भूलोकप्राप्तिद्वारं अपावार्णू३ अपावृणु अपगतावरणं कुरु। तेन द्वारेण वयं त्वां पश्येम, किमर्थम्? राज्यायेति सम्बन्धः । कम्पस्त्वाधिक्यार्थः । ''हुम्'' इत्यादिर्मन्त्रबीजाक्षरम् आधिक्येन पृथिवीलोके राजनायेत्यर्थः । इति सामाभिगायातीत्यन्वयः । अथोक्तसामगानानन्तरम् । जुहोति जुहुयात् । होममन्त्रमाह – **नम इति ॥** लोकक्षिते लोकनिवासिने । क्षि निवासगत्योरिति धातुः । तदेव निर्देशेनाऽह – **पृथिवीक्षित इति ॥** अग्नये वसुस्थितायादनादग्निनामकाय भगवते नमोऽस्तु । मे मह्यं यजमानाय लोकं यजमानप्राप्तियोग्यं लोकं विन्द प्रापय । कोऽसौ यजमानप्राप्तियोग्यो लोक इत्यत आह – **एष इति ॥** एष वै भूलोकरूपो वै यजमानस्य लोकः । कुतः ? अत्र भूलोकं प्रति । यजमानोऽहमायुषः परस्तान्मरणा-नन्तरमेताऽस्मि अतस्तं लोकं विन्देत्यर्थः । अत्र यजमानो यद्यपरोक्षज्ञानी तर्हि चरमदेहत्यागरूपमरणानन्तरं यद्यज्ञः तर्हि प्रसिद्धमरणानन्तरमिति विवेकः । स्वाहेत्यग्नौ जुहोति । तदनन्तरं हे वस्वन्तर्गत भगवन् प्रार्थनादिना प्रसन्नस्त्वं परिघं भूलोकभोगविशेषप्राप्तिप्रतिबन्धकीभूतं सनातनं प्रसिद्धार्गलसहितं यदस्ति तदपजहि अपनयेत्युक्त्वोत्तिष्ठति उत्तिष्ठेत् । एवं कृते किं स्यादित्यत आह– **तस्मा इति ॥** तस्मै एवं प्रातरनुवाकात् पुरा यजमानाय वसवः वसुनामकाः वसुस्थाः भगवद्रूपविशेषाः प्रसन्नाः सन्तः

प्रातः सवनं तत्कालकर्तव्यं सम्प्रयच्छन्ति निर्विघ्नेन सम्पादयन्तीत्यर्थः । ततश्च भूलोकं तद्गतभोगविशेषं च सम्प्रयच्छन्तीत्यर्थः । एवमुत्तरत्रापि योजना द्रष्टव्या । आग्नीध्री यस्य दक्षिणाग्रेः रौद्रं रुद्रस्थरुद्रनामक-भगवद्देवताकं विराज्याय अन्तरिक्षे विशेषेण राजनाय वायवे रुद्रान्तर्गताय ज्ञानादायुष्वाद् वाऽऽयुनामकाय परिघमन्तरिक्षलोकप्रतिबन्धकीभूतं यत्प्रसिद्धार्गलतुल्यमस्ति तन्माध्यन्दिनसवनं सम्प्रयच्छन्ति । ततश्चान्तरिक्षं तद्गतभोगविशेषं च सम्प्रयच्छन्तीति भावः । आदित्यम् आदित्यान्त-र्गतादित्यनामकभगवद्देवताकं वैश्वदेवं विश्वेदेवगतभगवद्देवताकं स्वा-राज्याय स्वर्गलोके आधिक्येन राजनाय । अथाऽदित्यसामगानानन्तरं वैश्वदेवं सामाभिगायेत् । साम्राज्याय स्वर्गलोक एव सम्यग् राजनाय तृतीयसवनं सम्प्रयच्छन्ति । ततश्च स्वर्गलोकं तद्गतभोगविशेषं च सम्प्रयच्छन्तीति भावः । एवं ज्ञानिनः फलमाह– **एष इति** ॥ यो विष्णुभक्तः एवमुक्तरीत्या वेद एष वै एष एव यज्ञस्य मात्रां यज्ञं माति निर्मातीति यज्ञमेति यजमान उच्यते । तं त्रातीति यज्ञमात्रा भगवान्, तं वेद ततश्च तत्प्रसादादज्ञश्चेत् स्वर्गं ज्ञश्चेन्मुक्तिं यातीति भावः । द्विरुक्तिरध्यायार्थावधारणार्था ॥ २-४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य
श्रीमच्छान्दोग्योपनिषद्भाष्यस्य टीकायां श्रीमद्वेदव्यासपूज्यपादशिष्य-
वेदेशभिक्षुविरचितायां पदार्थकौमुद्यां द्वितीयाध्यायः समाप्तः ॥ २ ॥

## अथ तृतीयाध्यायस्य प्रथमः खण्डः

### उपनिषत् (खण्डः -१)

*मधुविद्यानिरूपणम्*

॥हरिः॥ ॐ असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥

भाष्यम्

'य आदित्यगतो विष्णुः स एव मधुनामकः ।
मदधिर्मध्विति प्रोक्तो मदः सुखमिहोच्यते ॥
अ इत्याधिक्यमुद्दिष्टं मद् ज्ञानततिरुच्यते ।
तद्वत्ता ततिरुद्दिष्टा तेनानुभव ईरितः ॥
अधिकोऽनुभवो यस्य सर्वस्मादीप्सितादपि ।
सोऽयं मद इति प्रोक्तः सर्वं हि सुखसाधनम् ॥
तत्पूर्णो मधुनामा स्यात् तृतीयोऽतिशयार्थकः ।
देवानामुपजीव्यत्वात् स देवमधुनामकः ॥
आदित्वाच्च ततत्वाच्च[१] ज्ञानरूपत्वतस्तथा ।
आदित्य इति सम्प्रोक्तः प्रसिद्धमधुवच्च सः ॥
तिरोवंशादिसंयुक्तो द्युनाम्नी च द्युसंस्थिता ।
प्रकाशादिगुणैः श्रीस्तु वायोराश्रयरूपतः ॥
तिरोवंश इति प्रोक्ता मध्वपूपस्तु मारुतः ।

१. 'आदित्वादाततत्वाच्च' क.

**तस्मिन् सन्निहितो विष्णुर्विशेषेण यतः सदा ॥**
**सोऽन्तरिक्षमिति प्रोक्तः स्वान्तस्सम्यग्परीक्षणात् ।**
**अन्तरिक्षस्थितश्चासौ वस्वाद्या मधुकारिणः ॥**
**तत्पुत्रास्तु मरीच्याद्याः सूर्यरश्मिषु संस्थिताः ।**
**तिर्यक् स्थित्वा वशे कुर्याद् यस्माद् देवी रमा हरिम् ॥**
**भक्त्यैवातस्तिरोवंशस्तिर्यक्त्वं प्रणतिः स्मृता ।**
**तिर्यक् स्थित्वा स्वसंस्थं तु वशीकुर्याद् यतस्ततः ॥**
**वंशस्तिरश्चीनोऽन्योऽपि यस्मिन्नाप्यमुपस्थितम् ।**
**सोऽपूप आप्यो भगवान् मध्वाज्यादिप्रसिद्धगम् ॥**

## पदार्थकौमुदी

### भाष्यार्थः

**सूर्यादिस्थं हरिं नानारूपं वस्वादिसेवितम् ॥**
**सूर्यादिपालितद्वारं वन्देऽध्यात्माधिदैवगम् ॥ १ ॥**

पूर्वाध्यायान्ते वसुरुद्रादित्यानां प्रातःसवनाद्याधिपत्यमस्तीत्युक्तम् । तच्च तैर्न स्वमहिम्ना प्राप्तमिति वक्तुं तदुपास्यस्याऽदित्यान्तर्गतस्य भगवतो महिमानं निरूपयत्यस्मिन्नध्याये – **असौ वा आदित्यो देवमध्वित्यादिना** ॥ काव्यवदादित्यस्य प्रसिद्धमधुसाम्यमेवात्रोच्यत इति व्याख्याननिरासाय ब्रह्मविद्यात्वं सम्पादयन् खण्डपञ्चकं प्रमाणेनैव व्याचष्टे – **य आदित्यगत इत्यादिना** ॥ स एव न त्वन्य इत्यर्थः । अनेन श्रौतो वैशब्दो व्याख्यातः । केन निमित्तेन भगवान् मधुनामेत्यत आह – **मदधिरिति** ॥ मदो धीयतेऽस्मिन्निति मदधिः । मदाश्रय इति यावत् । स एव मध्विति प्रोक्त इत्यर्थः । निर्वचनत्वाद् दशब्दस्य लोप

इकारस्योकार इति भावः । मदशब्दस्य मत्ततार्थतत्वप्रतीतिवारणाय विक्षितार्थमाह – **मद इति** ॥ एवं सङ्क्षेपतो मधुशब्दं निरुच्य तद्विशदयितुं मदपदेन कथं सुखं लब्धमित्यतस्तावदक्षरार्थकथनपुरःसरं तद्दर्शयति – **अ इतीति** ॥ मदशब्दान्तर्गतेन अ इत्यनेनेत्यर्थः ॥ **ज्ञानततिरिति** ॥ ''माङ् माने'' इति धातोर्मशब्दस्य ज्ञानवाचित्वात् । तनु विस्तार इति धातोश्च तकारस्य ततिवाचित्वादित्यर्थः । नन्वेवमाधिक्येन ज्ञानस्य ततिरित्यर्थो लब्धः । नच सुखं तादृशमित्यत आह – **तद्वत्तेति** ॥ नात्र ज्ञानस्य ततिरिति विवक्षितम् । अपि तु ज्ञानेन ततिः पूर्णत्वमिति । तथाच ज्ञानवत्त्वं लब्धम् । तदपि विषयत्वेनैव विवक्षितमिति भावः ।

नन्वथापीदमयुक्तम् । सर्वेप्सितादाधिक्येन भ्रमादिसाधारणपरोक्ष-ज्ञानमात्रविषयस्य सुखत्वासम्भवात् । साक्षिभास्यत्वात् तस्येत्यत आह – **तेनेति** ॥ ज्ञानशब्देनेत्यर्थः । अनुभवः साक्षी। केचित्तु ज्ञानवत्त्वमेव विशदमाह – **तेनेति** ॥ तेन ज्ञानततिशब्दस्य ज्ञानवत्त्वार्थकत्वेन अनुभवोऽनुभवविषयः ज्ञानततिशब्दार्थ ईरित इत्यर्थ इत्याहुः । अक्षरार्थमुक्त्वा पदार्थमाह – **अधिक इति** ॥ अधिकः । आधिक्येन सर्वस्मादीप्सितादिति योग्यतया सम्बध्यते । सोऽयं मद इति प्रोक्तः । ''सुखमेव हि तथाविधम्''इति शेषः। एतदुपपादयितुं वनितादेर्विषयस्य न तथात्वमित्याह – **सर्वं हीति** ॥ सर्वं वनितादि हि यस्मात् सुखसाधनम् । सुखोपाधिकत्वेनैव ज्ञायते । तस्मादुक्तं युक्तमित्यर्थः । एवं मदशब्दार्थमुक्त्वा मधुशब्दार्थमाह – **तत्पूर्ण इति** ॥ तच्छब्देन मदपरामर्शः । ननु मदधिरेव मध्वित्युक्तरीत्या मदाश्रयत्वमात्रं लभ्यते । नतु तत्पूर्णत्वम् । तद्वाचकाभावादित्यत आह – **तृतीय इति** ॥

इकारापेक्षया तृतीय उकारस्तदादेशभूतोऽतिशयार्थकः पूर्णत्ववाची-त्यर्थः । ''तृतीयोऽतिशये'' इति महाव्याकरणसूत्रादिति भावः । एवं मधुशब्दं निरुच्येदानीं देवमधुशब्दार्थमाह – **देवानामिति** ॥ उप-जीव्यत्वं षष्ठ्यर्थ इति भावः ।

प्रसिद्धादित्यप्रतीतिवारणायाऽदित्यशब्दमपि भगवति निर्वक्ति– **आदित्वादिति** ॥ ''आदित्वात्'' इत्यादिशब्दार्थः । ''आततत्वात्'' इति तकारार्थः । ''ज्ञानरूपत्वतः'' इति यकारार्थः । नन्वेवं मधुशब्द-स्य भगवन्मात्रपरत्वे ''तस्य द्यौरेव तिरश्चीनवंशः'' इत्यादिना प्रसिद्ध-मध्वपेक्षितसाम्योक्तिरयुक्ता स्यादित्यतस्तदपि विवक्षितमित्याह – **प्रसिद्धेति** ॥ चशब्दो व्याख्यानान्तरसमुच्चयार्थः । देवानां मध्विव मध्विति तर्पकत्वेन साम्यान्मधुत्वमत्रेति ज्ञातव्यम् । यस्मात् सः प्रसि-द्धमधुवत् तस्मात् तिरोवंशादिसंयुक्तो वाच्योऽतस्तदत्रोच्यत इत्यर्थः । ''तस्य द्यौरेव तिरश्चीनवंशः'' इत्येतदचेतनस्य द्युलोकस्यैव तिरोवंशत्वमुच्यत इति प्रतीतिवारणाय व्याचष्टे – **द्युनाम्नीति** ॥ प्रकाशादिगुणैर्द्युनाम्नी श्रीस्तु श्रीरेव, न लोकः । तर्हि कथं लोके वृत्तिरित्यतस्तत्सम्बन्धादित्यभिप्रेत्याऽह – **द्युसंस्थितेति** ॥ एवमुत्तर-त्रापि द्रष्टव्यम् । सा च तिरोवंश इति प्रोक्ता तिरोवंशशब्दवाच्या तत्स्थानीया चेत्यर्थः । तदपेक्षितं साम्यमाह– **वायोरिति** ॥ वायोश्चा-पूपत्वेन वक्ष्यमाणत्वादपूपाश्रयत्वेन साम्यमिति भावः । ''अन्तरिक्ष-मपूपः'' इति वाक्यमचेतनमात्रपरत्वपरिहाराय व्याचष्टे– **मध्वपूप इति** ॥ अन्तरिक्षापूपशब्दवाच्यो मारुतो मध्वपूपत्वेन विवक्षित इत्यर्थः । तस्य प्रसिद्धापूपसाम्यमाह– **तस्मिन्निति** ॥ मधुत्वेन विवक्षितविष्णुस्थानत्वान्मधुस्थानत्वेन साम्यमिति भावः । मारुत-

स्यान्तरिक्षशब्दवाच्यत्वं केन निमित्तेनेत्यत आह – **स इति** ॥ स मारुतः मरीचयः पुत्रा इत्येतत् । मरीचयो रश्मयः । रश्मिस्था आपो भौमा इति व्याख्याननिरासाय सम्यग् व्याख्यातुं तदपेक्षितमाह – **वस्वाद्या इति** ॥ आद्यपदेन रुद्रादित्यादयो ग्राह्याः । वक्ष्यन्त इति शेषः । इदानीं तद्वाक्यं व्याख्याति – **तत्पुत्रा इति** ॥ अनेन मरीचयः सूर्यमरीचिस्थाः मरीच्याद्या ऋषयः पुत्राः भ्रमरपुत्रस्थानीया इति व्याख्यातं भवति । ''सूर्यरश्मिषु संस्थिताः'' इति नाडीस्थत्वेन साम्यमुपपादयितुम् । श्रियस्तिरोवंशस्थानीयत्वे तच्छब्दनिर्वचन-लब्ध-धर्मेणापि साम्यमाह – **तिर्यक् स्थित्वेति** ॥ किं बलाद् वशे कुर्यादि-त्यत उक्तम् – **भक्त्यैवेति** ॥ तिरोवंशस्तच्छब्दवाच्या तत्स्थानीया चेत्यर्थः । केयं देव्यास्तिर्यक् स्थितिरित्यत आह – **तिर्यक्त्वमिति** ॥ साम्योपपादनाय प्रसिद्धवंशेऽपि तच्छब्दं तथैव निर्वक्ति – **तिर्यक् स्थित्वेति** ॥ स्वसंस्थं मध्वपूपम् अनेन वशयतीति वंश इति निर्वचनं सूचितम् । अन्यद् योग्यतया लब्धमिति द्रष्टव्यम् । वंश इत्युच्यत इति शेषः । मारुतस्य प्रसिद्धापूपसाम्ये यन्मध्वाश्रयत्वं निमित्तमुक्तं तदप्य-पूपशब्दनिर्वचनलब्धमेवेत्याह– **यस्मिन्निति** ॥ अपूशब्दार्थः – **आप्य-मिति** ॥ अनेन अप् आप्यम् । उप उपस्थितं यस्मिन्नसावपूप इति निर्वचनं कृतं भवति । नन्वेतावताऽपि मधुभूतविष्णुस्थानत्वं कथं लब्धमित्यत आह – **आप्य इति** ॥ मुक्तैः प्राप्यत्वादिति भावः । साम्यमुपपादयितुं प्रसिद्धमध्वपूपेऽप्येतदेव निर्वचनमित्यभिप्रेत्य तत्र विवक्षितमाप्यमाह – **मध्वाज्यादीति** ॥ आज्यादिमधु प्रसिद्धगम् । प्रसिद्धमध्वपूपगमित्यर्थः । आप्यशब्दो लिङ्गव्यत्ययेनानुवर्तते । अब्वि-कारत्वादिति भावः ।

## उपनिषत्

*मधुनामकवासुदेवोपासना*

तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः ॥२॥

एतमृग्वेदमभ्यतपँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ ३ ॥

तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद् यदेतदादित्यस्य रोहितँ रूपम् ॥ ४ ॥ १ ॥

## भाष्यम्

*रश्मि-मधु-नाड्यादिपदानामर्थकथनम्*

प्राच्यरश्मिषु संस्थस्तु रतिशंमानरूपतः[१] ।
प्राच्यरश्मिरिति प्रोक्तो वासुदेवाभिधो हरिः ॥

एतद् विना नालमिति नाडीत्यंश उदाहृतः ।
स्वरूपांशैर्विना प्राप्तुं नालं हि प्रापितांऽशिनम् ॥

ऋग्वेदमानिनश्चैव वह्न्याद्या वसवस्त्वृचः ।
अर्च्यत्वात् प्रथमं चैव विशेषाद् यज्ञदेवताः ॥

---

१. 'स्वरतिर्मानरूपतः' ह.

## पदार्थकौमुदी

### भाष्यार्थः

"तस्य ये प्राञ्चो रश्मयः" इत्यादिवाक्यं "प्रसिद्धमधुवच्च सः" इति व्याख्यानपक्षे स्पष्टम् । तथाहि । अस्याऽदित्यस्य ये प्राञ्चो रश्मयः प्राच्यां दिशि गता रश्मयस्ता एवास्य मध्वपूपस्य प्राञ्चो मधुनाड्यः प्राचीदिग्गतमध्वाधारछिद्राणीवेत्यर्थः । एवं "दक्षिणा रश्मयः" इत्याद्यपि योज्यमिति केवलं भगवत्परत्वपक्षे तद्वाक्यजातं वासुदेवपरत्वेन व्याचष्टे – **प्राच्यरश्मिष्विति** ।। एवं सङ्कर्षणादयोऽपि "येऽस्य दक्षिणा रश्मयः" इत्यादावुच्यन्त इति ज्ञेयम् । अत एव "स्वरूपांशैः" इति वक्ष्यति । नाडीशब्दमपि तस्मिन्निर्वक्ति– **एतद्विनेति** ।। अंशो वासुदेवादिः । कः किं प्राप्तुम् एतद्विना नालमित्यत उक्तं विशदयति – **स्वरूपांशैरिति** ।। अंशिनं मूलरूपं प्राप्तुं, प्रापिता अधिकारी स्वरूपांशैर्वासुदेवादिभिर्विना नालं न समर्थो हीत्यर्थः । एवमिदं वाक्यपञ्चकमादिवाक्यं च दिङ्मात्रप्रदर्शनाय भगवन्मात्रपरतया व्याख्यातम् । अवशिष्टानां वाक्यानां भगवन्मात्रपरत्वप्रकारस्तु प्रमाणान्तरादवसेय इति ज्ञेयम् । "ऋच एव मधुकृतः" "यजूंष्येव मधुकृतः" "सामान्येव मधुकृतः" "अथर्वाङ्गिरस एव मधुकृतः" "गुह्या एवाऽदेशाः मधुकृतः" इति वाक्यपञ्चकं मधुदृष्टान्तपक्षे शब्दविशेषपरतावारणाय क्रमेण व्याचक्षाण आदिवाक्यं तावद् व्याचष्टे – **ऋग्वेदेत्यादिना** ।। वसव एव तु विशेषेण ऋचो ऋक्शब्दवाच्याः न शब्दविशेषाः । तत्र हेतुः – **ऋग्वेदमानिन इति** ।। अभिमानिनि शब्दस्य मुख्यत्वादिति भावः । हेत्वन्तरमाह– **अर्च्यत्वादिति** ।। प्रथमं प्रातः सवने विशेषादर्च्यत्वाच्च ऋच इति सम्बन्धः । चशब्दौ परस्परहेतुसमुच्चायकौ । द्वितीयवाक्यं व्याचष्टे– **यज्ञेत्यादिना** ।।खं० १ ।।

## ततश्चायं खण्डार्थः

असौ ज्ञानिप्रत्यक्षविषयः आदित्वात् ततत्वाज्ज्ञानरूपत्वदादित्य-नामाऽऽदित्यान्तर्गतो भगवान् सुखपूर्णत्वात् मधु देवोपजीव्यत्वाच्च देवमधुनामको वै। अत्र स भगवानधिकारिबोधनाय प्रसिद्धमधुनोपमीयत इत्यपि विवक्षितम्। ''देवानां मधु'' इति तर्पकत्वेन साम्यात्। अतोऽस्य विवक्षितं तिरोवंशादिकमाह – **तस्य द्यौरेवेति** ॥ तस्याऽ-दित्यनामकभगवल्लक्षणस्य मधुनः द्यौरेव प्रकाशादिगुणैः द्युनाम्नी द्युस्थिता श्रीरेव तिरश्चीनवंशः। तिरश्चीना प्रह्वीभावेन स्थित्वा हरिं वशीकरोतीति तिरश्चीनवंशनाम्नी। प्रसिद्धतिरोवंशस्थानीया मध्वपूपाश्रयत्वसाम्यात्। अन्तरिक्षं स्वान्तः हरिमीक्षत इत्यन्तरिक्षनामा अन्तरिक्षस्थश्च मरुद् अपूपः अप् आप्यं ब्रह्म उप समीपे स्थितं यस्मिन्नित्यपूपनामा। प्रसिद्धमध्वपूपतुल्यः मध्वाश्रयत्वसाम्यात्। ''ऋच एव मधुकृतः'' इति वक्ष्यमाणमधुकृत्पुत्रस्थानीयानाह– **मरीचय इति** ॥ मरीचयः सूर्यमरीचि-संस्था मरीच्याद्या ऋषयः पुत्राः प्रसिद्धमधुकृत्पुत्रस्थानीयाः। मध्वपूप-नाडीसंस्थिता हि प्रसिद्धभ्रमरपुत्राः। मरीच्यादयोऽपि सूर्यमण्डल-लक्षणक्षौद्रपटलस्थरश्मिलक्षणनाडीसंस्थिता इति साम्यात् ॥ १ ॥

तस्याऽदित्यस्य ये प्राञ्चः प्राच्यां दिशि गताः रश्मयस्ता एवास्या-पूपस्य प्राच्यो मधुनाड्यः। मध्वाधारच्छिद्रस्थानीया इत्यर्थः। केवल-भगवन्मात्रपरतापक्षे तु तस्य सवित्रन्तर्यामिणो भगवतः ये प्राञ्चः प्राच्यां दिशि गता रश्मयः रतिशम्मानरूपतो रश्मिशब्दवाच्याः वासुदेवादि-रूपविशेषास्ता एवास्य भगवतः मधुनाड्यः मधु सुखपूर्णमूलरूपं प्राप्तुं वासुदेवं विनाऽधिकारी नालमिति नाडीशब्दवाच्या इति योजना द्रष्टव्या। एवम् ''अथ येऽस्य दक्षिणा रश्मयः'' इत्यादिवाक्यान्यपि मधुदृष्टान्तपक्षे यथास्थितान्येव योज्यानि। भगवत्परत्वपक्षे तूक्तरीत्या

क्रमेण सङ्कर्षणप्रद्युम्नानिरुद्धनारायणपराणि द्रष्टव्यानि । भगवन्मात्रपरतया व्याख्यानपक्षेऽवशिष्टसर्ववाक्ययोजनाप्रकारस्तु आचार्यैर्नोक्तः । दिङ्मात्रप्रदर्शनस्यैतावतैव जातत्वात् । अतः प्रमाणान्तरादेवावगन्तव्यः । ऋच एव प्रातः सवने विशेषेणार्च्यत्वाद् ऋग्वेदाभिमानित्वाच्च ऋङ्नामानो वह्न्याद्या वसव एव मधुकृतः भ्रमरस्थानीया मधुव्यक्तिकृत्त्वसाम्यात् । देवा अपि हि मधुनामकब्रह्मव्यक्तिकृतः । ऋग्वेद एव पुष्पं पुष्पस्थानीयः । ज्ञानपोषकरो ह्ययम् । प्रसिद्धपुष्पमपि मधुकृत्पोषकमिति पोषकत्वेन साम्यात् । ता ऋग्वेदगता वाचः अमृताः अपौरुषेयत्वेनामृतशब्दवाच्याः । आपः आ सम्यक् सुरैः पेयत्वाद् अप्शब्दवाच्याश्च । प्रसिद्धपुष्पगतामृताप्स्थानीयमकरन्दतुल्या इति यावत् । पेयत्वसाम्यात् । वाक्पानं नाम श्रवणादिविचार एवेति द्रष्टव्यम् । इदानीं मधुव्यक्तिप्रकारमाह– **ता इति** ।। ता एता एव ऋचः पूर्वप्रकृतऋगाभिमानिनो वह्न्याद्या वसवः एतं ऋग्वेदं तल्लक्षणं पुष्पम् अभ्यतपन् अपिबन् । संव्यचारयन्निति यावत् । तस्याभितप्तस्य सम्यक् पीतस्य पुष्पस्थानीयस्य वेदस्य सकाशात् । यशः ज्ञानानन्दस्वरूपत्वाद् यशोनामकम् । तेजः तेजोरूपम् । इन्द्रियं परमैश्वर्यादिन्द्रियनामकम् । वीर्यं वीर्यरूपम् । अन्ने प्रसिद्धान्ने स्थित्वाऽद्यत इति अन्नाद्यम् । रसः बलरूपत्वाद् रसनामकम् । परं ब्रह्माख्यं मध्वजायत । व्यक्तमभवत् ।। २-३ ।।

तत्परं ब्रह्म व्यक्षरत् । देवानां धर्ममोक्षादीनिति शेषः । तद् ऋग्वेदाभिव्यक्तं वासुदेवाख्यं मधु । आदित्यमभितोऽश्रयत् । आदित्यमण्डललक्षणापूपसंस्थमभवत् । आदित्यमण्डलस्याप्यन्तरिक्षान्तर्भावादपूपत्वमुपपन्नमिति ध्येयम् । यद्वा, तद् वासुदेवाख्यं मधु । आदित्यमभितः पार्श्वतः पूर्वभागगतप्राच्यरश्मिष्विति यावत् । अश्रयत् । स्थितमभवदित्यर्थः । आदित्यमण्डले स्थानविशेषमाह– **तद्वा इति** ।।

## ततश्चायं खण्डार्थः

असौ ज्ञानिप्रत्यक्षविषयः आदित्वात् ततत्वाज्ज्ञानरूपत्वदादित्यनामाऽऽदित्यान्तर्गतो भगवान् सुखपूर्णत्वात् मधु देवोपजीव्यत्वाच्च देवमधुनामको वै । अत्र स भगवानधिकारिबोधनाय प्रसिद्धमधुनोपमीयत इत्यपि विवक्षितम् । ''देवानां मधु'' इति तर्पकत्वेन साम्यात् । अतोऽस्य विवक्षितं तिरोवंशादिकमाह – **तस्य द्यौरेवेति** ॥ तस्याऽदित्यनामकभगवल्लक्षणस्य मधुनः द्यौरेव प्रकाशादिगुणैः द्युनाम्नी द्युस्थिता श्रीरेव तिरश्चीनवंशः । तिरश्चीना प्रह्वीभावेन स्थित्वा हरिं वशीकरोतीति तिरश्चीनवंशनाम्नी । प्रसिद्धतिरोवंशस्थानीया मध्वपूपाश्रयत्वसाम्यात् । अन्तरिक्षं स्वान्तः हरिमीक्षत इत्यन्तरिक्षनामा अन्तरिक्षस्थश्च मरुद् अपूपः अप् आप्यं ब्रह्म उप समीपे स्थितं यस्मिन्नित्यपूपनामा । प्रसिद्धमध्वपूपतुल्यः मध्वाश्रयत्वसाम्यात् । ''ऋच एव मधुकृतः'' इति वक्ष्यमाणमधुकृत्पुत्रस्थानीयानाह– **मरीचय इति** ॥ मरीचयः सूर्यमरीचिसंस्था मरीच्याद्या ऋषयः पुत्राः प्रसिद्धमधुकृत्पुत्रस्थानीयाः । मध्वपूपनाडीसंस्थिता हि प्रसिद्धभ्रमरपुत्राः । मरीच्यादयोऽपि सूर्यमण्डललक्षणक्षौद्रपटलस्थरश्मिलक्षणनाडीसंस्थिता इति साम्यात् ॥ १ ॥

तस्याऽदित्यस्य ये प्राञ्चः प्राच्यां दिशि गताः रश्मयस्ता एवास्यापूपस्य प्राच्यो मधुनाड्यः । मध्वाधारच्छिद्रस्थानीया इत्यर्थः । केवलभगवन्मात्रपरतापक्षे तु तस्य सवित्रन्तर्यामिणो भगवतः ये प्राञ्चः प्राच्यां दिशि गता रश्मयः रतिशम्मानरूपतो रश्मिशब्दवाच्याः वासुदेवादिरूपविशेषास्ता एवास्य भगवतः मधुनाड्यः मधु सुखपूर्णमूलरूपं प्राप्तुं वासुदेवं विनाऽधिकारी नालमिति नाडीशब्दवाच्या इति योजना द्रष्टव्या । एवम् ''अथ येऽस्य दक्षिणा रश्मयः'' इत्यादिवाक्यान्यपि मधुदृष्टान्तपक्षे यथास्थितान्येव योज्यानि । भगवत्परत्वपक्षे तूक्तरीत्या

क्रमेण सङ्कर्षणप्रद्युम्नानिरुद्धनारायणपराणि द्रष्टव्यानि । भगवन्मात्रपरतया व्याख्यानपक्षेऽवशिष्टसर्ववाक्ययोजनाप्रकारस्तु आचार्यैर्नोक्तः । दिङ्मात्रप्रदर्शनस्यैतावतैव जातत्वात् । अतः प्रमाणान्तरादेवावगन्तव्यः । ऋच एव प्रातः सवने विशेषेणार्च्यत्वाद् ऋग्वेदाभिमानित्वाच्च ऋङ्नामानो वह्न्याद्या वसव एव मधुकृतः भ्रमरस्थानीया मधुव्यक्तिकृत्त्वसाम्यात् । देवा अपि हि मधुनामकब्रह्मव्यक्तिकृतः । ऋग्वेद एव पुष्पं पुष्पस्थानीयः । ज्ञानपोषकरो ह्ययम् । प्रसिद्धपुष्पमपि मधुकृत्पोषकमिति पोषकत्वेन साम्यात् । ता ऋग्वेदगता वाचः अमृताः अपौरुषेयत्वेनामृतशब्दवाच्याः । आपः आ सम्यक् सुरैः पेयत्वाद् अप्शब्दवाच्याश्च । प्रसिद्धपुष्पगतामृताप्स्थानीयमकरन्दतुल्या इति यावत् । पेयत्वसाम्यात् । वाक्पानं नाम श्रवणादिविचार एवेति द्रष्टव्यम् । इदानीं मधुव्यक्तिप्रकारमाह– **ता इति** ॥ ता एता एव ऋचः पूर्वप्रकृतऋगाभिमानिनो वह्न्याद्या वसवः एतं ऋग्वेदं तेल्लक्षणं पुष्पम् अभ्यतपन् अपिबन् । संव्यचारयन्निति यावत् । तस्याभितप्तस्य सम्यक् पीतस्य पुष्पस्थानीयस्य वेदस्य सकाशात् । यशः ज्ञानानन्दस्वरूपत्वाद् यशोनामकम् । तेजः तेजोरूपम् । इन्द्रियं परमैश्वर्यादिन्द्रियनामकम् । वीर्यं वीर्यरूपम् । अन्ने प्रसिद्धान्ने स्थित्वाऽद्यत इति अन्नाद्यम् । रसः बलरूपत्वाद् रसनामकम् । परं ब्रह्माख्यं मध्वजायत । व्यक्तमभवत् ॥ २-३ ॥

तत्परं ब्रह्म व्यक्षरत् । देवानां धर्ममोक्षादीनिति शेषः । तद् ऋग्वेदाभिव्यक्तं वासुदेवाख्यं मधु । आदित्यमभितोऽश्रयत् । आदित्यमण्डललक्षणापूपसंस्थमभवत् । आदित्यमण्डलस्याप्यन्तरिक्षान्तर्भावादपूपत्वमुपपन्नमिति ध्येयम् । यद्वा, तद् वासुदेवाख्यं मधु । आदित्यमभितः पार्श्वतः पूर्वभागगतप्राच्यरश्मिष्विति यावत् । अश्रयत् । स्थितमभवदित्यर्थः । आदित्यमण्डले स्थानविशेषमाह– **तद्वा इति** ॥

यदेतद् आदित्यस्य रोहितं रूपं तत् तत्र स्वयमपि लोहिताकारं तद् ऋग्वेदाभिव्यक्तम् एतद् यशआदिरूपम् । वासुदेवाख्यमेव मध्वतिष्ठत् । प्रसिद्धमध्वपि सम्पन्नं सद्धि क्षरति । पश्चादपूपं प्राच्यनाडीसंस्थं भवतीति साम्यम् ॥ ४ ॥

॥ इति प्रथमः खण्डः ॥ १ ॥

उपनिषत् (खण्डः -२)

*मधुनामकसङ्कर्षणोपासना*

**अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥**

**तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥**

**तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य शुक्लꣳरूपम् ॥ ३ ॥ २ ॥**

भाष्यम्

इन्द्राद्या यजुरुद्दिष्टा रुद्रा इन्द्रसहायतः[१] ।
इन्द्रशब्दोदितो वायुः स याज्यः सोमभुक् पुरः ॥

स हि शङ्करपूर्वाणां रुद्राणां मुख्य एव च ।

पदार्थकौमुदी

भाष्यार्थः

इन्द्राद्याः रुद्रा यजुरुद्दिष्टा यजुःशब्दवाच्याः । तत्र निमित्तम्–

---

१.'इन्द्रसखा यतः' क.

**यज्ञदेवता इति** ॥ अनेन याज्यत्वं यजुःशब्दप्रवृत्तिनिमित्तमुक्तं भवति । इन्द्रस्य रुद्रेषु प्रवेशः कुत इत्यत आह– **इन्द्रसखा इति** ॥ यतः कारणाद् रुद्राः इन्द्रसखायस्तत इन्द्रस्य रुद्रेषु प्रवेश इत्यर्थः । ''इन्द्रसहायतः'' इति क्वाचित्कः पाठः । स चेन्द्रो न प्रसिद्ध इत्याह– **इन्द्रशब्दोदित इति** ॥ ननु वायोरिन्द्रत्वे न तस्य रुद्रान्तर्भावः । याज्यत्वाभावेन यजुःशब्देन ग्रहणानुपपत्तेरित्याशङ्कायामितररुद्रापेक्षया तस्मिन्नेव मुख्यं याज्यत्वमस्तीत्याह– **स याज्य इति** ॥ सः माध्यन्दिने सवने सोमभुजां रुद्राणां पुरः पूर्वं याज्यो यतोऽत उक्तमुपपन्नमित्यर्थः । अत्रेन्द्रशब्देन प्रसिद्धेन्द्र एव वाच्यः किं न स्यादित्यत आह– **स हीति** ॥ अत्र रुद्रान्तर्गतो हीन्द्रः शङ्करादिरुद्रमुख्य एव वाच्यः । ''इन्द्रेण मुखेन'' इति वक्ष्यमाणत्वात् । शङ्करपूर्वाणां रुद्राणां मुख्यश्च स वायुरेव प्रसिद्धो न पुरन्दर इत्यर्थः ॥ द्वितीयः खण्डः ॥

### ततश्चायं खण्डार्थः

''अथ येऽस्य दक्षिणा रश्मयः'' इत्यादि व्याख्यातमेव । यजूंष्येव यजुर्वेदाभिमानिनो याज्यत्वाद् यजुःशब्दवाच्याः वाय्वाद्याः रुद्राः । तानि वा एतानि यजूंषि पूर्वप्रकृतयजुर्वेदाभिमानिनो रुद्राः । यदेतदादित्यस्य शुक्लं रूपं तत्तत्र तद्वै यजुर्वेदाभिव्यक्तं शुक्लवर्णम् एतद् यशआदिरूपं सङ्कर्षणाख्यं मध्वभवत् । शिष्टं समानम् ॥

॥ इति द्वितीयः खण्डः ॥

## उपनिषत्- (खण्डः - ३)

*मधुनामकप्रद्युम्नोपासना*

**अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः**

**सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥**
**तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्या-भितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥**
**तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद् यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥ ३ ॥ ३ ॥**

भाष्यम्

**सामनामान आदित्या मासशः समभोगतः ॥**

**इन्द्रो वरुण उद्दिष्टो यज्ञेषु व्रियते यतः ।**

**आदित्यानामधिपतिः स हि विष्णुनियोजितः ।**

**विष्णुस्तूपास्यरूपत्वान्नोपासकगणे युतः ॥**

**पदार्थकौमुदी**

**भाष्यार्थः**

तृतीयं वाक्यं व्याख्याति – **सामनामान इति** ॥ तत्र निमित्तमाह– **मासश इति** ॥ एकैकं मासम् एकैक आदित्यो भुङ्क्ते इति द्वादश-मासभोगिनो द्वादशादित्या इति समभोगात् सामनामान इति भावः। ''वरुणेन मुखेन''इत्यत्राप्यादित्याधिपतित्वेनोक्तो वरुणो न प्रसिद्ध इत्याह– **इन्द्र इति** ॥ पुरन्दर इत्यर्थः ।

ननु वरुणशब्देनान्यत्र रूढेन कथं पुरन्दरलाभ इत्यतो योगेनेत्याह– **यज्ञेष्विति** ॥ ननु प्रसिद्ध एव वरुणः किं न स्यादित्यतः पूर्ववद् बाधकमाह– **आदित्यानामिति** ॥ अत्र वरुण इतरादित्यापेक्षया मुख्य एव ग्राह्यः । अन्यस्य तदाधिपत्यासम्भवात् । आदित्यनामधिपतिश्च पुरन्दर एव प्रसिद्धो नाप्पतिरिति भावः। नन्विदमयुक्तम् । इतरादित्येषु

विष्णोरपि सत्त्वेनास्य तदाधिक्यासम्भवादित्यत उक्तम् – **विष्णुनियोजितो हि स इति** ॥ विष्णुनैव स्वेतरादित्याधिपतित्वं तस्य नियोजितमिति भावः । ननु सर्वादित्याधिपतित्वाद् विष्णुरेव वरुणशब्देन विवक्षितः किं न स्यात् ? अत्रोपासका एव देवा मधुकृत्त्वेन विवक्षिताः । विष्णुस्तूपास्यो मधुभूतः ''वरुणेन मुखेन'' इति चोपासकस्यैवेतरोपासकमुख्यत्वं विवक्षितम् । अतो वरुणशब्देनेन्द्र एव ग्राह्यो न विष्णुरित्याह – **विष्णुरिति** ॥ युतः प्रविष्टः ॥ क्वचित् ''नोपासकगुणैर्युतः'' इति पाठः । तत्रोपासकगणान्तर्गतो न भवतीत्यर्थः ॥ तृतीयः खण्डः ॥

## ततश्चायं खण्डार्थः

सामान्येव मधुकृतः सामाभिमानिनो मासशः समभोगवत्त्वेन सामशब्दवाच्याः आदित्या एव । यदेतदादित्यस्य कृष्णं रूपं तत्तत्र । तद्वै साम वेदाभिव्यक्तं कृष्णं रूपम् एतद् यश आदिरूपं प्रद्युम्नाख्यं मध्वाश्रितमभवत् । शिष्टं समानम् ॥

**॥ इति तृतीयः खण्डः ॥**

## उपनिषत् (खण्डः -४)

*मधुनामकानिरुद्धोपासना*

**अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥१ ॥**

**ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतप॰स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य॰ रसोऽजायत ॥ २ ॥**

**तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद् यदेतदादित्यस्य**

**परः कृष्णꣳ रूपम् ॥ ३ ॥ ४ ॥**

## भाष्यम्

**इतिहासपुराणानां सोमाद्या अभिमानिनः ।**
**अथर्वाङ्गिरसां चैवाप्यथर्वाङ्गिरनामकाः ॥**
**अधरं वर्तयेयुस्ते वृष्टिमङ्गरसास्तथा ।**
**मनस्त्वात् प्राणरूपत्वादथर्वाङ्गिरसस्ततः ॥**

## पदार्थकौमुदी

### भाष्यार्थः

चतुर्थवाक्यं व्याख्याति– **इतिहासपुराणानामिति** ॥ अनेन "अथर्वाङ्गिरसः" इति पदं इतिहासपुराणोपलक्षकमिति सूचितं भवति । "अथर्वाङ्गिरसां च सोमाद्या एव" इति सम्बन्धः । "अभिमानिनः" इति हेतुगर्भम् । यतोऽभिमानिनोऽतोऽथर्वाङ्गिरोनामकः – **अपीति** ॥ अपिशब्दः इतिहासपुराणनामकत्वसमुच्चयार्थः । योगेनापि अथर्वाङ्गिरोनामकत्वं तेषामाह– **अधरमिति** ॥ यतस्तेऽधरं वृष्टिं वर्तयेयुस्ततोऽथर्वाणः । तथाऽङ्गानां रसाः नियामकाः यतस्ततोऽङ्गिरसः । अथर्वाणश्चाङ्गिरसश्चेत्यथर्वाङ्गिरसोऽथर्वाङ्गिरोनामका इत्यर्थः । धकारस्य थकारो निर्वचनत्वात् । अङ्गेत्यत्राकारस्येकारोऽतिशयार्थः । अङ्गरसत्वं तेषां कथमित्यत उक्तम् – **मनस्त्वादिति** ॥ सोमस्य मनस्त्वात् मनोभिमानित्वात् । इतरेषां मरुतां प्राणरूपत्वात् प्राणापानादिरूपत्वात् । इन्द्रियाभिमानित्वाद् वेत्यर्थः । "अङ्गानां रसाः" इति पूर्वेण सम्बन्धः ॥ चतुर्थः खण्डः ॥

**ततश्चायं खण्डार्थः**

अथर्वाङ्गिरसः अथर्वणा आङ्गिरसा च दृष्टाः मन्त्रा अथर्वाङ्गिरसः। इतिहासपुराणोपलक्षणमेतत्। तदभिमानिनो अधरं वृष्टिप्रवर्तकत्वेनाज्ञानां रसत्वेन चाथर्वाङ्गिरोनामकाः सोमाद्याः देवाः। "इतिहासपुराणम्"इति द्वन्द्वैकवद्भावश्च। अथर्वाङ्गिरसामप्युपलक्षणमेतत्। "ता अमृताः" इत्यत्रेतिहासपुराणस्यार्थत एकप्रकारत्वेनामृतत्वं द्रष्टव्यम्। यदेतदादित्यस्य परः परम् अतिशयेन कृष्णं रूपं तत्त्र तद्वै। इतिहासपुराणाथर्वाङ्गिरोमन्त्राभिव्यक्तम् अनिरुद्धाख्यं सुनीलं मध्वतिष्ठत्। शिष्टं पूर्ववत्॥

॥ इति चतुर्थः खण्डः ॥

## उपनिषत् (खण्डः -५)

*मधुनामकनारायणोपासना*

**अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवाऽदेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः॥ १॥**

**ते वा एते गुह्या आदेशा एतद् ब्रह्माभ्यतपँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत॥ २॥**

**तद् व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद् यदेतदादित्यस्य मध्ये क्षोभत इव॥ ३॥**

**ते वा एते[१] रसानाँरसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि॥ ४॥**

**॥ ५॥**

भाष्यम्

गुह्यादेशा ब्रह्मपदे ये योग्या ब्रह्मणा सह।

१. 'एते' ह्. पाठे नास्ति।

**सर्वगुह्योपदेष्टारः सर्वेषां गुरवो हि ते ।**
**ब्रह्मेति सर्ववेदानां नामानन्तत्वतः स्मृतम् ॥**

## पदार्थकौमदी

### भाष्यार्थः

पञ्चमं वाक्यं व्याख्याति – **गुह्येति** ॥ श्रुतौ पार्थक्येन प्रयोगेऽपि गुह्यादेशा इत्येकमेव पदमिति भावेन गुह्यादेश इत्युक्तम् । ये ब्रह्मपदे योग्यास्ते ब्रह्मणा सह गुह्यादेशा गुह्यादेशशब्दवाच्या इत्यर्थः । केन निमित्तेन तच्छब्दवाच्यत्वं तेषामित्यपेक्षायामाह – **सर्वेति** ॥ अनेन गुह्यं गोप्यम् आदिशन्तीति निरुक्त्या सर्वगुह्योपदेष्टृत्वं निमित्तमुक्तं भवति । तदुपपादयति – **सर्वेषामिति** ॥ ते ऋजवो हि यस्मात् सर्वेषां गुरवः तस्मात् सर्वगुह्योपदेष्टार इति सम्बन्धः । ''ब्रह्मैव पुष्पम्'' इत्येतत् शब्दाधिकारात् । प्रणवाख्यं पुष्पमित्यपव्याख्यानमिति सूचयन् सम्यग्व्याचष्टे – **ब्रह्मेति** ॥ ब्रह्मशब्दप्रवृत्तिनिमित्तवत्वे न तन्नामकत्वं युक्तमित्याशयेनाऽह – **अनन्तत्वत इति** ॥ ''अनन्ता वै वेदाः'' इति श्रुतेरनन्तसङ्ख्याकत्वतः । वृद्ध्यर्थकबृहधातोरानन्त्यमप्यर्थ एवेति भावः ।

### भाष्यम्

**ऋग्वेदादींस्तु ते देवा अग्न्याद्याः संव्यचारयन् ।**
**मधुब्रह्मव्यक्तिकृत्त्वात् ते वै मधुकृतः स्मृताः ॥**
**ज्ञानपोषकरत्वात्तु वेदाः पुष्पाभिधाः स्मृताः ।**
**अन्यत्र मधुकृत्पोषान्नित्यत्वादमृताश्च ताः ॥**
**वेदवाचः सुरैः पेया भोग्यत्वादाप ईरिताः ।**

**वेदपानं विचारश्च श्रवणं पाठ एव च ॥**

**देवैर्विचारितेभ्यश्च वेदेभ्यो व्यक्ततां गतः[१] ।**

**ज्ञानानन्दस्वरूपत्वाद् यशस्तेजस्वरूपकः ॥**

**इन्द्रियं परमैश्वर्याद् वीर्यरूपश्च सर्वदा ।**

**सर्वानुग्रहशक्तित्वादन्नाद्यो बलरूपतः ॥**

**रसनामा च भगवान् .......... ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''ता वा एता ऋच एतमृग्वेदमभ्यतपन्''इत्यादि वाक्यपञ्चकं ऋगादीनां ऋग्वेदादितापकत्वायोगाद् व्याचष्टे – **ऋग्वेदादीनिति** ॥ तथाच ऋच इत्यादिकर्तृवाचकपदैः पूर्वप्रकृता वस्वाद्याः साध्यान्ताः देवा एव विवक्षिताः । तपनं च विचार एवेति न कोऽपि दोष इति भावः । ''ऋच एव मधुकृतः'' इत्यादिवाक्यैः देवानां मधुकृत्स्थानीयत्व-मुक्तम् । तदपेक्षितं साम्यं दर्शयति – **मधुब्रह्मेति** ॥ मधुव्यक्तिकृत्त्वेन साम्यमिति भावः । ऋग्वेदादीनां पुष्पत्वमपि प्रसिद्धपुष्पसाधारणपुष्प-शब्दप्रवृत्तिनिमित्तधर्मयोगेनेत्याह – **ज्ञानेति** ॥ अनेन पोषकत्वमेव पुष्पशब्दप्रवृत्तिनिमित्तमिति सूचितम् । अस्य प्रसिद्धपुष्पसाधारण्यं दर्शयति – **अन्यत्रेति** ॥ ''ता अमृता आपः'' इति वाक्यपञ्चकं ताः ऋग्वेदादिगता वाचः अमृताः आपः अमृताप्स्थानीयाः मकरन्दतुल्या इति यावदिति पुष्परसस्थानीयत्वकथनाय प्रवृत्तं तत्र वेदवाचाममृतत्वं

---

(१)'गता:' ह.पाठः । गतः भगवान् । 'गता:' इति पाठे वासुदेव-सङ्कर्षणप्रद्युम्नानिरुद्धनारायणाः ।

केन निमित्तेनेत्यत आह– **नित्यत्वादिति** ॥ नित्यत्वादपौरुषेयत्वात् । ''ताः'' इत्यनूद्य ''वेदवाचः'' इति व्याख्यानम् । ''सुरैः पेयाः'' यत इति हेतुगर्भं विशेषणम् । सुरैर्भोग्यत्वात् पाल्यत्वादिति निमित्तान्तरम् । अप्शब्दस्य पानपालनरूपोभयार्थकधातुजत्वस्य प्रसिद्धेरिति भावः । भोग्यत्वादाप ईरिताः । भोग्यत्वं च केन प्रकारेणेत्यतः सुरैः पेया इति योजनेत्यप्याहुः ।

ननु कथं वेदाः पेयाः अद्रवरूपत्वादित्यतः पानशब्दार्थमाह– **वेदपानमिति** ॥ पाठश्चेत्येतदेवेत्यध्याहृतेनैवशब्दसम्बन्धः । ''तस्याभितप्तस्य यशस्तेजः'' इत्यादिवाक्यपञ्चकं ''यशो विश्रुतत्वं तेजो देहगता दीप्तिः इन्द्रियं सामर्थ्योपेतैरिन्द्रियैरवैकल्यं वीर्यं सामर्थ्यं अन्नाद्यं चेत्येष रसोऽजायत'' इति परकीयव्याख्याननिरासाय प्रमाणेन व्याचष्टे – **देवैरित्यादिना** ॥ तथाच तस्य ऋग्वेदस्याभितप्तस्य विचारितस्य सकाशादित्यर्थ उक्तो भवति । अजायतेत्यस्यार्थः – **व्यक्ततां गत इति** ॥ ''अन्नाद्यः'' इत्यनूद्य ''सर्वानुग्रहशक्तित्वात्'' इति तात्पर्यं कथितम् । तेनान्ने स्थित्वाऽद्यते उपजीव्यते सर्वैरित्यन्नाद्यमिति व्याख्यातमिति ज्ञायते । बलरूपतः बलरूपत्वतः । रसनामेति सम्बन्धः ।

## भाष्यम्

..... ..... .... **संस्थितः सूर्यमण्डले ।**
**व्यक्षरद् धर्ममोक्षादीन् देवानां भगवान् हरिः ॥**
**ऋक् प्रोक्तो लोहिताकारो वासुदेवः परः पुमान् ।**

स एव सूर्यलौहित्ये प्राच्यरश्मिषु संस्थितः[१] ॥
सङ्कर्षणः शुक्लवर्णो यजुर्वेदोदितः प्रभुः ।
शुक्ले वर्णे च[२] सूर्यस्य दक्षरश्मिषु च स्थितः[३] ॥
प्रद्युम्नः श्यामवर्णस्तु सामवेदोदितः प्रभुः ।
प्रत्यग्रश्मिषु सूर्यस्य श्यामवर्णेऽपि च स्थितः ॥
अनिरुद्धः सुनीलश्च इतिहासपुराणयोः ।
अथर्ववेदे चोक्तः सन्नुदग्रश्मिषु संस्थितः ॥
सुकृष्णे सूर्यरूपे च मध्ये नारायणः प्रभुः ।
ऊर्ध्वरश्मिषु संस्थश्च प्रोद्यदादित्यसप्रभः ॥
महामरीचिपुञ्जेन चलतीवाचलोऽपि सन् ।
स वाच्यः सर्ववेदानामेवं पञ्चात्मको हरिः ॥
वेदानां सारभूतोऽसौ वेदानां नित्यताप्रदः ।
अतोऽमृतानाममृतो रसानां रस एव च ॥'

इति सामसंहितायाम् ।

## पदार्थकौमुदी

### भाष्यार्थः

''तदादित्यमभितोऽश्रयत्'' इति वाक्यमादित्यशब्दस्योक्तरीत्या भगवत्परत्वेऽसङ्गतं स्यात् ततोऽत्राऽदित्यशब्देन मण्डलमेव विवक्षित-मित्यभिप्रेत्य व्याचष्टे – **संस्थित इति** ॥ सूर्यमणडलस्याप्यन्त-

---

१.' च स्थितः' क २. 'शुक्लवर्णे च' क ३.'संस्थितः' क

रिक्षान्तर्भावादपूपत्वेन तत्स्थत्वं भगवल्लक्षणं मधुन उपपन्नमिति भावः । ''तद् व्यक्षरत्''इति वाक्यं दार्ष्टान्तिके योजयति– **व्यक्षरदिति** ॥ क्षर सन्ततदानविनाशयोरिति धातुः । ''तद्वा एतद् यदेतदादित्यस्य लोहितं रूपम्''इत्येतदप्रतीतेर्व्याचष्टे – **ऋक्प्रोक्त इत्यादिना** ॥ ऋक्प्रोक्त इति श्रौततच्छब्दपरामृश्यकथनम् । एवमुत्तरत्रापि द्रष्टव्यम् । ''स एव'' इति श्रौतवैशब्दार्थकथनम् । तेन सङ्कर्षणादिव्यावृत्तिः । ''सूर्यलौहित्ये लोहिताकारः संस्थितः'' इत्यनेन ''लोहितं रूपं'' इत्येतद्व्याख्यातम् । अनेनाऽदित्यस्य तन्मण्डलस्य यदेतद् रोहितं रूपं तत्तत्र स्वयमपि लोहिताकारं तद्वै ऋग्वेदाद्यभिव्यक्तं वासुदेवाख्यमेव मधु अतिष्ठदिति व्याख्यातं भवति ।

''तदादित्यमभितोऽश्रयत्''इति वाक्यं प्रकारान्तरेण व्याचष्टे– **प्राच्यरश्मिष्विति** ॥ अनेन तद् वासुदेवाख्यं मधु आदित्यमभितः पार्श्वतः पूर्वभागं प्राच्यरश्मिष्विति यावत् । अश्रयत् स्थितमभवदिति व्याख्यातं भवति । एवमेव ''दक्षरश्मिषु'' इत्यादिकं ''तदादित्यमभितोऽश्रयत्'' इत्यस्य तत्तत्पर्वगतस्य व्याख्यानमिति द्रष्टव्यम् । ''तद्वा एतद् यदेतदादित्यस्य शुक्लं रूपम्''इति वाक्यं व्याचष्टे– **सङ्कर्षण इति** ॥ पूर्ववदेव योजना द्रष्टव्या । ''तद्वा एतद् यदेतदादित्यस्य कृष्णं रूपम्''इति वाक्यं व्याचष्टे– **प्रद्युम्न इति** ॥ ''तद्वा एतद् यदेतदादित्यस्य परः कृष्णं रूपम्''इति वाक्यं व्याचष्टे– **अनिरुद्ध इति** ॥ परः कृष्ण इत्यस्यार्थः – **सुकृष्ण इति** ॥ ''तद्वा एतद् यदेतदादित्यस्य मध्ये'' इति वाक्यं योजयति – **मध्य इति** ॥ मण्डलमध्ये ऊर्ध्वरश्मिषु चेति चशब्दान्वयः । ''क्षोभत इव'' इति वाक्यमप्रतीतेर्व्याचष्टे– **चलतीवेति** ॥ अचलोऽपि सन् तत्र समाहितदृष्टेश्चलतीव दृश्यत

इत्यर्थः । तत्र निमित्तमाह– **महामरीचीति** ।। अत्रापि तच्छब्दपरामृश्यं दर्शयितुमुक्तम् – **स वाच्यः सर्ववेदानामिति** । ''ते वा एते रसानां रसाः'' इत्याद्यप्रतीतेर्व्याचष्टे– **एवं पञ्चात्मक इत्यादिना** ।। एवं पञ्चात्मकोऽसौ हरिः वेदानां सारभूतः उत्तमवाच्यो यतोऽत एव रसानां रसतम इत्युच्यते । वेदानां नित्यताप्रदश्च यतोऽत एवामृतानाममृतश्चेत्युच्यत इति योजना ।।

## भाष्यम्

*भगवत एव मधुविद्याप्रतिपाद्यता नाचेतनस्य*

**न चाचेतनमात्रमुपासितं पुरुषार्थप्रदानशक्तम् । 'ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्' इति वाक्यशेषाच्चैतदवगम्यते । 'य एतामेवं ब्रह्मोपनिषदं वेद ' इति च । कथं चाचेतनोपासनं ब्रह्मादिपदप्रदं भवति ? 'न वै तत्र न निम्लोचो[१] नोदियाय कदाचन', 'सकृद् दिवा हैवास्मै भवति' इत्यादि च मुक्तस्यैव मुख्यतो युज्यते ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं प्रमाणेनैतां विद्यां ब्रह्मपरत्वेन व्याख्यायेदानीं आपातप्रतीतमेवार्थमुपादाय यत्परेणैवोक्तं ब्रह्मातिरिक्तमेवाचेतनं ऋग्वेदादिप्रतिपाद्ययागादिकर्मफलभूतं यशआद्यन्नाद्यपर्यन्तम् आदित्याश्रितं रोहितादिरूपतया दृश्यमानं मधुतया तत्रोपासनार्थमुच्यत इति तदुपपत्ति-

१. 'निम्रोचः' ह.

विरुद्धमित्याशयेनाऽह – **नचेत्यादिना** ॥ चशब्दः पूर्वोदाहृतप्रमाण-विरोधसमुच्चायकः । अत्र हि वस्वादिपदप्राप्तिरूपपुरुषार्थप्रदत्व-मेतद्विद्याप्रतिपाद्यस्योच्यते । नच तदुक्तविधस्याचेतनस्य प्रतिपाद्यत्वे सम्भवति । तस्य तत्रास्वातन्त्र्यात् । अत उक्तरीत्या ब्रह्मैव प्रतिपाद्य-मिति भावः । अस्वातन्त्र्योपपादनायैव ''अचेतनमात्रम्'' इत्युक्तम् । चेतनानधिष्ठितमित्यर्थः ।

किञ्चोपसंहारे ब्रह्मण एवोपदेश्यत्वकथनात् तदेवात्र प्रतिपाद्यं नान्यदित्याह – **ज्येष्ठायेति** ॥ एतद् ब्रह्मैव प्रतिपाद्यं नाचेतनमित्येतत् । नन्वस्मिन्वाक्ये पित्रा ब्रह्मोपदेशः कर्तव्य इत्युक्तत्वेऽपि नैतस्या-विद्यायाः ब्रह्मपरता सिध्यतीत्यतः उक्तविद्यायाः ब्रह्मपरत्वप्रतिपादक-मुपसंहारगतं वाक्यान्तरं पठति – **ए एतामिति** ॥ ब्रह्मण उपनिषदं ब्रह्मोपनिषदम् । षष्ठ्यर्थश्च प्रतिपाद्यप्रतिपादकभाव इति भावः ।

किञ्चाचेतनोपासनायाः महत्तमब्रह्मादिपदप्राप्त्यादिप्रदत्वं ''साध्या-नामेवैको भूत्वा'' इत्यादिनोच्यमानं सर्वथाऽपि न सम्भवतीत्याह– **कथं चेति** ॥ अपिचोक्तार्थे सम्मतित्वेन वक्ष्यमाणे ''नवै तत्र'' इत्यादिश्लोके परं ब्रह्मैव प्रतिपाद्यतयाऽवगम्यते । अतोऽत्रापि तदेव प्रतिपाद्यमिति वक्तव्यमन्यथा श्लोकविसंवादापत्तेरित्याशयेनाऽह– **नवै तत्रेति** । ''कदाचन'' इत्यनन्तरं ''देवास्तेनाहं सत्येन मा विराधिषि ब्रह्मणा'' इति श्लोकोऽप्यनुपपन्नः स्यादिति शेषः । तत्र परब्रह्मणि दोषा नवै नैव, दोषाभावमेवैकदेशेन दर्शयन्नाह– **न निम्लोच इति** ॥ उदयास्तमयादिदोषाः तत्र न सन्तीत्यर्थः । हे देवास्तेन सत्येन ब्रह्मणा परब्रह्मणा तत्प्रसादेनाहं मा विराधिषि अवृद्धिं न प्राप्नुयामिति श्लोकार्थः ।

किञ्चैतद्विद्यावेत्तुः ''न हवा अस्मदुदेति'' ''न निम्लोचति सकृद्दिवा'' इत्यादिनोच्यमानं मुक्तिगं फलमेतद्विद्यायाः परब्रह्मपरता-मेव सम्पादयति । नह्यन्यविद्यया मुक्तिगं फलं प्रमितम् । स्यादेतत् । ''सकृद्दिवा''इत्यादिनोच्यमानं फलं यदि मुक्तिगं स्यात् । तदेव कुतः? अमुक्तस्याप्यमुख्यत एतादृशफलसम्भवादित्यत आह– **सकृद्दिवे-त्यादि** ॥ सकृत् सदेत्यर्थः । आदिपदेन सूर्योदयास्तमयाभावो वा श्लोकोक्त्याऽवृद्ध्यभावो वा ग्राह्यः । मुख्यार्थ एव च श्रुतेर्वर्णनीय इति भावः । यद्वा ''न वै तत्र''इत्यादिश्लोकोक्तमवृध्यभावरूपं ''सकृ-द्दिवा'' इत्युच्यमानं सदा दिवसभवनरूपं च फलं मुक्तस्यैव मुख्यतो युज्यते नान्यस्येत्येकवाक्यतया योज्यम् ।

भाष्यम्

**यशस्तेजइन्द्रियवीर्यान्नाद्यरसत्वं च भगवन्तं विना कस्य मुख्यतो युज्यते ?**

**'तस्य नाम महद् यशः' ।**

**'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।**

**ज्ञानवैराग्ययोश्चैव[१] षण्णां भग इतीरणा ' ।**

**'रसो वै सः' ।**

**'सुखात्मकं षड्गुणविग्रहं परं हृदि स्थितं ब्रह्म निरञ्जनं स्वरुक् ।**

**ऐश्वर्यवैराग्ययशोविबोधवीर्यश्रिया पूर्णमहं प्रपद्ये' ।**

**'अहं तत्तेजोरश्मीन्नारायणं पुरुषम्[२]' इत्यादेश्च ।**

**'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः ' इति च ।**

---

१. 'ज्ञानविज्ञानयोश्चैव' क. २. 'पुरुषं जातमग्रतः' क.

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च, नास्यां विद्यायामचेतनमात्रं प्रतिपाद्यम् । ''यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत''इत्युक्तयशस्त्वतेजस्त्वाद्यनुपपत्तेः । नचामुख्यं तत्तत्रास्तीति वाच्यम् । मुख्यत एव तेषां भगवति सम्भवेनामुख्यार्थ-ग्रहणायोगादित्याह– **यशस्तेज इत्यादि** ॥ कस्य युज्यते ? न कस्यापि । तत्र प्रमाणाभावादिति भावः । भगवत्यपि तेषां कुतो मुख्यतः सत्वमिति चेत् । पूर्वोदाहृतप्रमाणेनैव तथा व्याख्यातत्वात् । प्रमाणान्तराण्यप्याह– **तस्य नामेत्यादिना** ॥ ''समग्रस्य'' इत्येतद् यथायोग्यं लिङ्गवचनविपरिणामेन सर्वत्र सम्बध्यते । इति षण्णामेवेति सम्बन्धः । भगवांश्च हरिरेवेति ''को नाम लोके भगवत्पदार्थः'' इति प्रमाणसिद्ध इति भावः । यद्वा, भगश्च ''समा भग प्रविश'' इत्यादौ हरिरेव प्रसिद्ध इति भावः । ''रसो वै सः'' स एव रस इत्यर्थः । ''सुखात्मकम्'' इत्यत्र षड्गुणविग्रहत्वोक्त्या यश ऐश्वर्यं वीर्यं च लब्धम् । स्वरुक् स्वप्रकाशम् इत्युक्त्या च तेजोरूपत्वम् । ऐश्वर्येत्यत्रापि ऐश्वर्ये यशोवीर्याण्युक्तानि । अहेयत्वादहं पूर्णषड्गुणं नारायणाख्यं, तत् तेजो रश्मीन् रश्मिप्रेरकमित्यत्रापि तेजः, षड्गुणत्वोक्त्या च यश ऐश्वर्यं वीर्यं चेति त्रयं चोक्तम् । इत्यादेश्च यशआदिकं भगवन्तं विना कस्य मुख्यतो युज्यत इति सम्बन्धः । आदित्यान्तर्गतो भगवान्मधुतयोपास्य इति भवन्मतमप्ययुक्तम् । भगवत आदित्यान्तर्गतत्वे मानाभावादित्यत आह– **ध्येय इति** ॥ चशब्दः प्रागुक्तप्रमाणसमुच्चयार्थः । यद्वा भगवतस्तत्तेजोरूपत्व एव प्रमाणा-न्तरमिदम् । ''सवितृमण्डलमध्यवर्ती'' इत्यनेन वा ''हिरण्मयवपुः'' इत्यनेन वा तस्य लाभादिति द्रष्टव्यम् ।

### भाष्यम्

न चाचेतनस्यैश्वर्यादिरूपत्वं युज्यते ।

'ज्ञानात्मको भगवानैश्वर्यात्मको भगवान् शक्त्यात्मको भगवान्' इति च श्रुतिः ।

'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्'(ब्र.सू. ३-३-१) इति सर्ववेदप्रतिपाद्यत्वं भगवत उक्तं भगवता ।

'स सर्वनामा स च विश्वरूपः प्रसीदतां ब्रह्म महाविभूतिः' इति च।

'सर्वे वेदा यत्पदमामनन्ति' ।

'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव ' ।

'वेद रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥'

'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इत्यादेश्च ।

## पदार्थकौमुदी

### भाष्यार्थः

किञ्चास्तु कथञ्चिदचेतने तेजोरूपत्वसम्भवः । ऐश्वर्यादिकं तु सर्वथा तत्रासम्भावितमित्याह– **नचेति** ॥ नच भगवतस्तदसम्भावितमिति दर्शयितुं तस्यैश्वर्यवीर्यात्मकत्वे श्रुतिमपि प्रमाणयति– **ज्ञानात्मक इति** ॥ शक्त्यात्मकः वीर्यात्मको बलात्मको वा । किञ्च चेतनं रोहितादिरूपं मधुतयैतद्विद्याप्रतिपाद्यमिति न युक्तम् । सर्वस्यापि स्वरवर्णपदात्मनो वेदस्य भगवन्मात्रपरतायाः सूत्रपुराणश्रुतीतिहासैः

प्रतिपादितत्वेन तद्विरोधापातादिति भावेन वेदस्य भगवत्परताप्रतिपादकं सूत्रादिकं पठति – **सर्वेति** ।। सर्ववेदनिर्णयोत्पाद्यज्ञानं ब्रह्म । कुतः ? ''आत्मेत्येवोपासीत''इत्यादिविधीनां ''अत्र ह्येते सर्व एकीभवन्ति'' इत्याद्यानां तदुक्तयुक्तीनां च सर्वाधिकारिसाधारण्यादिति सूत्रार्थः । एकैव व्याहृतिर्व्याहरणं एकप्रकारमेव नाम । निर्दोषगुणपूर्तिवाचकत्वादेकप्रकारता । प्राणो[१]नारायण एवेति योजना । विष्णुरेव गीयत इति सम्बन्धः ।

## भाष्यम्

**उपनिषत्त्वाच्च विशेषतो न यत्किञ्चिदुच्यत इति वक्तुं युक्तम् –**

**'विष्णुरुक्तः सर्ववेदैर्मन्त्रेषु च[२] विशेषतः ।**
**आरण्यके विशेषेण नैवान्यत् किञ्चिदुच्यते ।।**
**कर्मार्थं च ब्राह्मणं स्यादमुख्यार्थविवक्षया ।**
**मुख्यतो विष्णुरेवैको ब्राह्मणेष्वपि कथ्यते ।।**
**आरण्यकेष्वृते विष्णुं नैवान्यत् किञ्चिदुच्यते ।**
**सूत्रात्मा तूच्यते विष्णोस्तद्विशिष्टत्ववित्तये ।।**
**कुत्रचित् तदुपास्तिश्च तस्याध्यर्द्धतनुत्वतः ।**
**तस्मिन् विष्णोरुपास्त्यर्थं नान्यथा किञ्चिदुच्यते ।।'**

**इति ब्रह्माण्डे ।**

## पदार्थकौमुदी

---

१. ''प्राणे'' इति मुद्रितपुस्तकस्थः पाठः । २. 'मन्त्रैरपि' क.

## भाष्यार्थः

किञ्च मन्त्रब्राह्मणरूपस्य वेदस्याप्राधान्येन कर्माद्यचेतनपरत्वेऽपि नोपनिषत्सु ब्रह्मान्यदुच्यत इत्यतोऽपि न त्वद्व्याख्या युक्तेत्याह– **उपनिषत्त्वादिति** ॥ यत्किञ्चित् ब्रह्मान्यत् । कुतो न युक्तमित्यपेक्षायां तत्र प्रमाणमाह – **विष्णुरिति** ॥ अरण्येऽध्येतव्यत्वादारण्यके उपनिषदि । "मन्त्रैरपि विशेषतः" इत्युक्त्या ब्राह्मणस्येषदन्यपरत्वं सूचितं तद्दर्शयति– **कर्मार्थं चेति** ॥ विष्णुरेक एवेति सम्बन्धः ।

ननु कथमारण्यकेष्वन्यन्नोच्यत इति । "सूत्रात्मनो वायोः" कचिदुक्तेः । कचित्तदुपास्त्युक्तेश्चेत्यतस्तदुक्तेः प्रयोजनमाह– **सूत्रात्मेति** ॥ तद्विशिष्टत्ववित्तये वाय्वपेक्षयोत्तमत्वज्ञानाय । तस्य सूत्रस्याधिकम् आ ऋद्धतनुत्वतः । सर्वविशिष्टप्रतिमात्वादिति यावत् । तस्मात् कारणात् तस्मिन् विष्णोरुपास्त्यर्थं कुत्रचित् तदुपास्तिश्चोच्यत इति योजना ।

## भाष्यम्

**'यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवत्राणनिरोधमस्य ।**

**[१]लीलावतारेधितकर्म वा स्याद् वन्ध्यां गिरं तां बिभृयान्न धीरः।**

**वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी ।**

**यन्न व्रजन्त्यघभिदो रचनानुवादाः शृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।**

**यास्तु श्रुता हतभगैर्नृभिरात्तवीर्यास्तांस्तान् क्षिपन्त्यशरणेषु तमस्सु हन्त' इत्यादि भगवद्वचनाच्च ।**

आत्तं वीर्यं याभिस्ताः आत्तवीर्याः याश्च यैर्हतभगैर्नृभिः श्रुताः अशरणेषु

१. 'लीलावतारैधितकर्म' प्र.पाठः ।

'सर्वासु शाखास्वारणमावर्तयेदारणमावर्तयेदुपनिषदमावर्तये-दुपनिषदमावर्तयेत्' इत्युपनिषदभ्यासस्य सतात्पर्यं विहितत्वाद-भगवद्विषयस्य निन्दितत्वाच्च नोपनिषत्स्वन्यदुच्यते ।

'अभ्यसेदधियज्ञं चाप्यधिदैवं विशेषतः ।
अध्यात्मं तु विशेषेण यस्माद् विष्णुस्त्रिषूदितः ॥' इति स्कान्दे ।
'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य[१] इत्यहम् ।
इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन ॥ '
इत्यादेश्च भगवदुपासना एव सर्वत्रोक्ताः ॥ ५ ॥

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च भागवतवाक्यरूपभगवद्वचनादभगवद्विषयस्य वचनस्य निन्दितत्वावगमात् सर्वासु शाखासु ''आरणमावर्तयेत्'' इतीतरा-धिक्येनोपनिषदभ्यासस्य विहितत्वाच्च नोपनिषत्स्वन्यदचेतनादिक-मुच्यत इति व्याख्यानं युक्तमित्याह– **यस्यामित्यादिना** ॥ हे अङ्ग धीर यस्यां वाचि मे पावनं पवित्रम् अस्य जगतः स्थित्युद्भवत्राणनिरोधं त्राणम् अन्नादिदानेन दैनन्दिनानिष्टनिचयपरिहारेण च रक्षणं निरोधः संहारः । एकवद्भावः । एतल्लक्षणं कर्म न प्रतिपाद्यम् । लीलावतारेधित-कर्म वा कृष्णाद्यवतारे कृतं कंसहननादिरूपं च यस्यां न प्रतिपाद्यं तां वन्ध्यां निष्फलां गिरं न बिभृयादिति योजना । अतीर्थीकृतं पात्रेऽप्रतिपादितं यः रक्षति सः दुःखदुःखी अतिशयितदुःखभाक् । या आत्तं वीर्यं याभिस्ताः आत्तवीर्याः याश्च यैर्हतभगैर्नृभिः श्रुताः अशरणेषु रक्षकरहितेषु तमःसु तांस्तान् क्षिपन्ति ताः मतिघ्नीः अन्यविषयाः

१. 'विकल्प्यापोह्य' ह.

कुकथाः येऽघभिधो हरेररचनानुवादाः कर्तृत्वादिगुणानुवादशून्याः शृण्वन्ति । ते यन्न व्रजन्ति । तद्धिश्वगुर्वधिकृतमित्युत्तरेणान्वयः । अभ्यासेनोक्तत्वात् ''सतात्पर्यम्'' इत्युक्तम् । सर्ववेदेषु विष्णुरेवोदितः उपनिषदि विशेषेणोदितो यतोऽतः सर्वत्र भगवदुपासना एवोच्यन्त इत्याशयेन तत्र प्रमाणान्तरं पठति – **अभ्यसेदिति** ॥ अधियज्ञं यज्ञमधिकृत्य वर्तमानं ब्राह्मणम् । अधिदैवं देवानधिकृत्य वर्तमानं मन्त्रम् । अध्यात्मम् आत्मानं परमात्मानम् अधिकृत्य वर्तमानमारण्यकम् । विशेषेणाभ्यसेदित्यर्थः ।

ननु ''विष्णुस्त्रिषूदितः'' इत्ययुक्तम् । तथात्वेऽधियज्ञत्वादिविरोधादित्यतस्तस्य विष्णुपरत्वप्रतिपादकं वाक्यमाह– **मामिति** ॥ कर्मादिविधात्री श्रुतिः मां प्रत्येव तद्विधत्ते । इन्द्राद्यभिधात्री च मामभिधत्ते । ''चत्वारि वाक्'' इत्यादि श्रुत्याऽहं विविधरूपत्वेन कल्प्यः। ''न सुरां पिबेत्'' इत्यादि श्रुत्याऽहमेवाप्रियादपोह्यः । एवम्भूताया अस्याः श्रुतेरित्यभिप्रायमहमेव वेद । न मत्तोऽन्य इत्यर्थः ॥ खं० ५॥

**ततश्चायं खण्डार्थः**

गुह्या एवाऽऽदेशाः सर्ववेदाभिमानिनो गुह्योपदेष्टृत्वेन गुह्यादेशशब्दवाच्याः ऋजवः ब्रह्मैव वेदराशिरेव । बृहधातोर्वृद्ध्यर्थत्वेनाऽनन्त्यवाचित्वात् । वेदानां च''आनन्ता वै वेदाः'' इति श्रुतेरनन्तत्वादिति भावः । यदेतदादित्यस्य मध्यं तत् तत्र मध्ये तद्वै । सर्ववेदाभिव्यक्तं प्रोद्यदादित्यसप्रभं नारायणाख्यं मध्वतिष्ठत् । स नारायणः क्षोभत इव स्वस्मिन् समाहितदृष्टेः पुंसो महामरीचिपुञ्जेनाचलोऽपि चलतीव दृश्यत इत्यर्थः । वेदानामितरशब्दापेक्षयोत्कर्षं वदन् वासुदेवादिरूपाणामृगादिवेदवाच्यत्वमुक्तमुपसंहरति – **ते वा इति** ॥ ते वा एते रोहितादिरूपा वासुदेवाद्याः पञ्चरसानां रसाः । आद्यरसशब्देन विवक्षितार्थमाह – **वेदा**

**हीति** ॥ वेदाः रसाः श्रेष्ठाः । हि प्रसिद्धा इत्यर्थः । तेषां वेदानामेते वासुदेवादयो रसाः उत्तमवाच्या इत्यर्थः । अमृता इत्युक्तममृतत्वं न वेदानां स्वातन्त्र्येणेति वदन्निगमयति – **तानि वा इति** ॥ तानि वा एतानि पूर्वप्रकृतवासुदेवादीनि पञ्चरूपाणि अमृतानि अमृतत्वप्रदानि । प्रथमामृतशब्देन विवक्षितमर्थमाह – **वेदा इति** ॥ वेदापौरुषेयत्वस्य प्रामाणिकत्वं हिशब्दार्थः ॥

॥ इति पञ्चमः खण्डः॥ ५॥

उपनिषत् (खण्डः -६)

*मधुनामकवासुदेवोपासना*

**तद् यत् प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशत्येतस्माद् रूपादुद्यन्ति ॥ २ ॥**

**स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति ॥ ३ ॥**

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव, तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥ ६ ॥**

भाष्यम्

'प्रथमामृतस्य द्रष्टारो वसवस्त्वग्निपूर्वकाः ।
यावत् पश्यन्ति तं विष्णुं तावत्ते नान्यभोगिनः ॥
एतदेव विशन्त्यद्धा मोक्षे ते तत एव च ।

**स्वेच्छयैव समुद्यन्ति मुक्ताः सन्तो बहिस्तथा ॥**

## पदार्थकौमुदी

### भाष्यार्थः

एवं पञ्चरूपिणं भगवन्तं मधुतया प्रपञ्चेन निरूप्येदानीं के कस्यामृतस्य सेवकाः ? किञ्च तेषां फलमित्याकाङ्क्षायां तत्सर्वं पञ्चभिः खण्डैर्निरूपयति – **तद्यदित्यादिना** ॥ तत्र ''वसव उपजीवन्ति'' इत्युक्तमुपजीवनं न भोक्तृत्वम् । ''एतदेवामृतं दृष्ट्वा''इत्यस्यासङ्गतत्वापत्तेरतोऽत्र विवक्षितमुपजीवनमाह– **प्रथमामृतस्य द्रष्टार इति** ॥ तथाच उपजीवन्तीत्यस्य पश्यन्तीत्यर्थ उक्तो भवति । ''अग्निना मुखेन'' इत्यत्राग्नेर्वस्वात्मता प्रतीयते । नचेदं सम्भवति । असङ्गतत्वात् । अग्नेः कथञ्चिद्देवारव्यत्वसम्भवेऽपि ''इन्द्रेण मुखेन'' इत्यादावस्यार्थस्यासम्भवाच्चेत्यतस्तात्पर्यमाह– **अग्निपूर्वका इति** ॥ तथाचाग्निना मुखेन प्रधानेन सहाग्निप्रधानाः सन्त इति यावदित्यर्थ उक्तो भवति । ''न वै देवा अश्नन्ति न पिबन्ति'' इति वाक्यस्य ''अन्नाद्यं रसोऽजायत''इति वचनात् कबलग्रासमश्नन्तीति प्राप्तं तत्प्रतिषिध्यतेऽनेन वाक्येनेति व्याख्याननिरासाय तात्पर्यमाह– **यावत्पश्यन्तीति** ॥ तथाच यावदेतदेवामृतं दृष्ट्वा तृप्यन्ति तावद्देवा नैवाश्नन्ति न पिबन्ति विषयभोगविरक्ता भवन्तीत्यर्थ उक्तो भवति । परव्याख्या त्वनेनैव प्रमाणेन विरोधात् ''अन्नाद्यं रसः'' इति वाक्यस्य भगवत्परतया प्रमितत्वेन कबलग्रासाशनस्याप्राप्तत्वेन प्रतिषेधायोगाच्चायुक्तेति ध्येयम् ॥

खण्डपञ्चके ''त एतदेव रूपमभिसन्दिशन्ति''इति वाक्यम् एतदेव रूपम् अभिलक्ष्याधुना भोगावसरो नास्माकमिति बुद्ध्याऽभिसंविशन्ति । उदासते । यदा चैतस्यामृतस्य भोगावसरो भवेत् तदैतस्मादमृता-

दमृतभोगनिमित्तमित्यर्थः । एतस्माद् रूपादुद्यन्ति उत्साहवन्तो भवन्ती-त्यादिपरप्रलापनिरासाय क्रमेण यथावद् व्याचक्षाणस्तावदादिवाक्यं व्याचष्टे– **एतदेवेति ॥** विशन्त्येवेत्येवशब्दान्वयः । अभीत्यस्यार्थः – **अऽद्धेति ॥** निश्चयेनेत्यर्थः । ततश्च भगवद्रूपाच्च समुद्यन्त्येवेत्यन्वयः । एवकारद्वयेन परोक्तव्युदासः । अप्रामाणिकत्वात् प्रमाणविरोधाच्च । स्वेच्छयैवानायासेनैव । स्वः परमात्मा तदिच्छयैवेति वा । समुद्यन्ति निर्गच्छन्ति । तथाशब्दः समुच्चये ।

**ततश्चायं खण्डार्थः**

तत् प्रसिद्धम् । यत् प्रथमममृतं वासुदेवाख्यं तद् वसवः प्राप्तपदाः उपजीवन्ति । श्रवणादिरूपविचारानन्तरं पश्यन्तीत्यर्थः । अग्निना मुखेन प्रधानेन सहिताः अग्निप्रधानका इत्यर्थः । इतरवसून् प्रति स उपदेष्टेति भावः । उपजीवन्तीत्युक्तापरोक्षज्ञाने विषयवैराग्यं कारणमिति दर्शयं-स्तत्साध्यमाह – **न वा इति ॥** यावदेवामृतं दृष्ट्वा तृप्यन्ति मुक्तिं प्राप्नुवन्ति तावद् देवाः नाश्नन्ति न पिबन्ति । उपलक्षणया समस्तविषयभोगविरक्ता भवन्तीत्यर्थः । तृप्यन्तीत्युक्तमेव विवृणोति – **एतदेव रूपमिति ॥** एतदन्तःप्रविष्टा भवन्तीत्यर्थः । उद्यन्ति स्वेच्छयैव बहिरपि निर्यान्ति ॥ १-२ ॥

एवं प्राप्तपदानां वसूनां सायुज्यरूपमुक्तिं फलमभिधायाधुनाऽ-प्राप्तपदानां वसुपदयोग्यानामेतद्विद्यासाध्यं फलमाह – **स य इति ॥** योऽधिकारी एतद् अमृतम् एवं वेद स वसूनामेवैको भूत्वा वसु-भोग्यदेशकालाधिपो भूत्वाऽग्निना मुखेन प्रधानेन तदुपदेशेनेति यावत् । एतदेवामृतं दृष्ट्वेत्यादि पूर्ववत् ॥ ३ ॥

ननु वसुभोग्यौ देशकालौ कियन्तौ ? यदधिपोऽयं भवतीत्युक्त-

मित्यपेक्षयामाह – **स यावदादित्य इति** ।। आदित्यः यावद् यावता कालेन काष्ठाद्वयसहितैकत्रिंशद्घटिकात्मकाहर्लक्षणेन तत्कालगन्तव्यदेशेन च पुरस्तादुदयाद्रौ उदेत्य पश्चादस्ताद्रावस्तमेता तावत् तावत एव उदयास्ताद्रिमध्यस्यैव देशस्योक्तपरिमाणाहर्लक्षणस्यैव कालस्य च वसूनामाधिपत्यमस्ति । सः पूर्वोक्तोऽधिकारी तत्पर्येता परितो गन्ता । न केवलमाधिपत्यं पर्येता । किन्तु स्वाराज्यं स्वं रञ्जयतीति स्वराट् स्वराडेव स्वाराज्यं विषयानुभवरूपो भोगः तमपि पर्येता । अधिगच्छतीत्यर्थः ।। ४।।

**।। इति षष्ठः खण्डः ।।**

**उपनिषत् (खण्डः -७)**

*मधुनामकसङ्कर्षणोपासनाफलम्*

**अथ यद् द्वितीयममृतं तद् रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ।। १ ।।**

**त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति ।। २ ।।**

**स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति ।। ३ ।।**

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद् दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यं स्वाराज्यं पर्येता ।। ४ ।। ख० ७ ।।**

भाष्यम्

एवं द्वितीयरूपं तु शिवाद्या वायुसंश्रिताः[१] ।

---

१. 'वायुसंस्थिताः' क.

**वायोर्हिरण्यगर्भत्वात् पदद्वयमुदाहृतम् ॥**

**रुद्राणामाश्रयत्वं च साध्यानामपि सर्वशः ।**

**अतो यजुर्विचारश्च सर्ववेदात्मनस्तथा ॥**

**वायोरेव विचारः स्याद् ब्रह्मणोऽपि विशेषतः ।**

**उभयाश्रयः स मोक्षेऽपि वायुरेव हि सर्वदा ॥**

## पदार्थकौमुदी

### भाष्यार्थः

द्वितीयखण्डस्थं ''एतदेव रूपम्''इति वाक्यं व्याचष्टे– **एवमिति ॥** यथा वसव एवं शिवाद्या द्वितीयं रूपं विशन्ति । ततो बहिः समुद्यन्ति चेत्यर्थः । ''इन्द्रेण मुखेन'' इत्यस्य व्याख्यानम्– **वायुसंस्थिता इति ।** वाय्वाश्रया इत्यर्थः । अनेन मुखशब्दस्य प्राधान्यवाचित्वमुपपादितं भवति ।

ननु वायोर्न रुद्रान्तर्भावः सम्भवति । तस्य ब्रह्मपदयोग्यत्वेन साध्यान्तर्भावात् । द्वितीयामृतद्रष्टृरुद्रान्तर्भावे च ''रुद्राणामेवैको भूत्वा''इति वक्ष्यमाणरुद्रपदप्राप्तिप्रसङ्गात् । नचैकस्य पदद्वयं दृष्टमित्यत आह – **वायोरिति ॥** हिरण्यगर्भत्वाद् भाविहिरण्यगर्भत्वात् । उदाहृतं प्रमाणेषु रुद्रपदं साध्यपदं चेति पदद्वयं नेतररुद्रसाध्यसाधारण्येनेत्याह – **रुद्राणामिति ॥** ''सर्वशः'' इति ''रुद्राणाम्'' इत्यत्रापि सम्बध्यते । साध्यानामाश्रयत्वमप्युदाहृतमिति सम्बन्धः । अनेन ''इन्द्रेण मुखेन ब्रह्मणा मुखेन''इत्युक्तमुभयत्र प्राधान्यमुपपादितं भवति । तदुभयाश्रयत्वं वायोरुपपादयति – **अत इति ॥** चोऽवधारणे । अत एव रुद्रसाध्याश्रयत्वादेव । वायोरेव यजुर्विचारः । तथा सर्ववेदात्मनः सर्ववेदरूपस्य ब्रह्मणोऽपि विचारः विशेषतः रुद्राद्यपेक्षया विशेषेण स्यादिति योजना ।

''ब्रह्मणः'' इत्यनेन वेदराशेरिति विवक्षितम् । ''ब्रह्मैव पुष्पम्'' इत्युक्तत्वादित्याशयेन तत् ''सर्ववेदात्मनः'' इति विवृतम् । न केवलं संसारे वायुरुभयाश्रय इत्याह– **उभयाश्रय इति** ॥ हि यस्मान्मोक्षेऽप्युभयाश्रयस्तस्मात् सर्वदोभयाश्रय इत्यर्थः । अनेन ''इन्द्रेण मुखेन ब्रह्मणा मुखेन'' इत्येतत् ''एतदेव रूपमभिसंविशन्ति'' इत्यत्रापि सम्बध्यत इत्युक्तं भवति ॥ **सप्तमः खण्डः** ॥

## ततश्चायं खण्डार्थः

अथ यद् द्वितीयममृतं सङ्कर्षणाख्यं शिष्टं पूर्ववत् । ननु कौ तौ रुद्रभोग्यौ देशकालौ ? यदधिपोऽयं भवतीत्युक्तमित्यपेक्षायामाह– **स यावदादित्य इत्यादिना** ॥ आदित्यः यावत् । यावता देशेन कालेन च दक्षिणत उदेता तद्देशगतान् प्रति स्वसामीप्येन उदयं प्राप्त इवोत्तरतोऽस्तमेता तान् प्रत्येव दूरगमनेनोत्तरदेशविशेषेऽस्तं प्राप्त इव तावतः कालस्य देशस्य च रुद्राणामाधिपत्यं सोऽधिकारी तत्पर्येता । तत्र स्वाराज्यं भोगं च पर्येता । ननु रुद्रभोग्यौ देशकालौ वसुभोग्य-देशकालापेक्षया कियन्तावित्यपेक्षायां तदर्धभूतावित्याह– **पुरस्तादि-त्यादिना** ॥ आदित्यः यावद् यावता कालेन सकाष्ठार्धनाड्युत्तरपञ्च-दशघटिकात्मकपूर्वरात्ररूपेण तद्गन्तव्यदेशेन च दक्षिणतः उदेतो-त्तरतोऽस्तमेता तावत् तावतः कालादेः द्विर्द्विगुणं कालं पुरस्तादुदेता पश्चादस्तमेता रुद्रभोग्यदक्षिणोदयकालाद्यपेक्षया वसुभोग्यः पूर्वोदय-कालादिर्द्विगुण इत्यर्थः । तथाच रुद्रभोग्यकालादेर्वसुभोग्यकालाद्यर्धता पर्यवस्यतीति भावः ॥ १-४ ॥

॥ इति सप्तमः खण्डः ॥

## उपनिषत् (खण्डः -८)

*मधुनामकप्रद्युम्नोपासनाफलवर्णनम्*

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेदाऽदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति ॥ ३ ॥

स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत् पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥ ८ ॥

### भाष्यम्

द्रष्टारोऽथ तृतीयस्य शक्रमुख्यादितेः सुताः ॥

### पदार्थकौमुदी

### भाष्यार्थः

''अथ यत् तृतीयम्''इत्यादेः ''उद्यन्ति''इत्यन्तस्य तात्पर्यमाह–**द्रष्टार इति** ॥ एतदेव विशन्ति । ततो बहिः समुद्यन्ति चेति शेषः । ''शक्रमुख्यादितेः सुताः''इत्यलुक्समासः । अलुग्दर्शनोऽनादरसूचकः । आदित्या इत्यर्थः । शक्रमुख्या इत्यनेन ''वरुणेन मुखेन''इत्येतदुक्तार्थम् ।

**ततश्चायं खण्डार्थः**

अथ यत्तृतीयममृतं प्रद्युम्नाख्यम्। शिष्टं पूर्ववत्॥ १॥

नन्वादित्यभोग्यौ देशकालौ कौ ? यदधिपोऽयं भवतीत्युक्तमित्यत आह– **स यावदादित्य इत्यादिना ॥** आदित्यः यावद् यावता कालेन देशेन च पश्चादुदेता तद्देशगतान् प्रति स्वसामीप्येनोदयं प्राप्त इव पुरस्तात् पूर्वदेशविशेषेऽस्तमेता तान् प्रत्येव किञ्चिद्दूरगमनसाम्येनास्तं प्राप्त इव तावत् तावतो देशस्य कालस्य चाऽदित्यनामाधिपत्यं वर्तते सः तत्पर्येता स्वाराज्यं भोगं च पर्येता । नन्वादित्यभोग्यौ देशकालौ रुद्रभोग्यदेशकालापेक्षया कियन्तावित्यपेक्षायां तदर्धभूतावित्याह– **दक्षिणत इत्यादिना ॥** आदित्यः यावद् यावता कालेन देशेन च पश्चादुदेता पुरस्तादस्तमेता तावत् तावतः कालस्य देशस्य च द्विर्द्विगुणं दक्षिणत उदेता उत्तरतोऽस्तमेता, आदित्यभोग्यपश्चिमोदयकालाद्यपेक्षया रुद्रभोग्यदक्षिणोदयकालादिर्द्विगुण इत्यर्थः । तथा चाऽदित्यभोग्यकालादेः रुद्रभोग्यकालाद्यर्धता पर्यवस्यतीति भावः । अनयैव रीत्योत्तरखण्डद्वयगतमिदं वाक्यं व्याख्येयम्॥ ४॥

**॥ इति अष्टमः खण्डः ॥**

## उपनिषत् (खण्डः - ९)

*मधुनामकानिरुद्धोपासनाफलम्*

**अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन नवै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति ॥ २ ॥**

**स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद् रूपादुदेति ॥ ३ ॥**

**स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥ ९ ॥**

**भाष्यम्**

**चतुर्थस्य तु सोमाद्या मरुतः ..... ॥**

**पदार्थकौमुदी**

**भाष्यार्थः**

''अथ यच्चतुर्थममृतम्''इत्यादेः ''उद्यन्ति''इत्यन्तस्य तात्पर्यमाह– **चतुर्थस्य त्विति** ॥ द्रष्टार इत्यादिकमनुवर्तते । ''सोमाद्याः'' इत्यनेन ''सोमेन मुखेन''इत्येतदुक्तार्थम् ॥ नवमः खण्डः ॥

**ततश्चायं खण्डार्थः**

चतुर्थममृतम् अनिरुद्धाख्यम् ।

**॥ इति नवमःखण्डः ॥**

उपनिषत् (खण्डः -१०)

*मधुनामकनारायणोपासनाफलम्*

**अथ यत्पञ्चमममृतं तत् साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति ॥ २ ॥**

**स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्**

रूपादुदेति ॥ ३ ॥

स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्व उदेताऽर्वाङस्तमेता साध्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥ १० ॥

## भाष्यम्

...... ........ .... पञ्चमस्य च ॥

ऋजवो ब्रह्ममुख्या हि सुपर्णः शेष एव च ।
सरस्वती सुपर्णी च वारुणी साध्यनामकाः ॥
अन्योन्यमुखता मुक्तौ ब्रह्मणां समता तथा ।
वाक्शेषादेर्मुखं ब्रह्मा मुक्तावपि विशेषतः ॥
द्रष्टोभयस्यापि शिवो द्वितीयस्यान्तगस्य[१] च ।
मोक्षे त्वन्यत्र चैकस्य परतः शेषभावतः ॥
ये चैतत्पदयोग्याः स्युर्देवाः पञ्च महागणाः ।
तेषामपि यदोपासा निश्छिद्रा मधुनामके ।
तदा वस्वादितां प्राप्य मुक्तिमेष्यन्त्यसंशयम् ॥

## पदार्थकौमुदी

''अथ यत्पञ्चमममृतम्''इत्यादेः ''उद्यन्ति'' इत्यन्तस्य तात्पर्यमाह– **पञ्चमस्य चेति** ॥ साध्यपदव्याख्यानम्– **ऋजव इति** ॥ ''ब्रह्मणा मुखेन''इत्येतस्यार्थकथनम्– **ब्रह्ममुख्या हीति** । ऋजूनामेतद्दर्शनादिकं प्रमाणसिद्धमिति हिशब्देनाऽह ।

१.'अन्त्यगस्य' ह.

नन्वेवं सरस्वतीशेषसुपर्णतत्पत्नीनां वस्वादिषु कुत्राप्यप्रविष्टत्वात् मधूपास्त्यभावः स्यादित्याशङ्कायां साध्यान्तर्भावमाह – **सुपर्ण इत्यादिना** ॥ ननु ''ब्रह्मणैव मुखेन''इत्युक्तं मुक्तौ ब्रह्मणः सकलसाध्यमुखत्वमयुक्तम् । ब्रह्मणोऽपि ऋजुत्वेन साध्यपदोक्तऋजुमुखत्वासम्भवादित्यत आह – **अन्योन्येति** ॥ तथाशब्दोऽप्यर्थः । यद्यपि ब्रह्मणां समता तथाऽप्यन्योन्यमुखता युज्यते । मुखशब्देनाप्राधान्याभावमात्रस्य विवक्षितत्वादिति भावः । यथाऽप्राधान्याभावमात्रेणेतरसाध्यान् प्रति ब्रह्मणः मुखत्वं तथा न साध्यपदोक्तवागादीन् प्रतीत्याह – **वाक्शेषादेरिति** ॥ विशेषतोऽपि प्राधान्येनापि । मुखमिति सम्बन्धः ।

ननु रुद्रस्यैव शेषत्वात् तस्य च द्वितीयामृतद्रष्टृत्वात् कथं साध्यान्तर्भाविनान्त्यामृतद्रष्टृत्वमित्यत आह – **द्रष्टेति** ॥ मोक्षार्थं परतः परजन्मनि । शेषत्वावस्थायाम् उभयस्यापि द्रष्टा । शेषभावतोऽन्यत्र तु शिवत्वावस्थायाम् एकस्यैव द्रष्टेति विवेकः । यद्वा, परतः शेषभावतः शेषत्वानन्तरम् । मोक्ष इति यावत् । उभयस्याप्यमृतस्य द्रष्टा । अन्यत्र रुद्रत्वे त्वेकस्येति योजना । पूर्वं प्राप्तपदानां वस्वादीनां मोक्षलक्षणं फलमुक्तम् । इदानीम् अप्राप्तपदानां तत्पदयोग्यानां मधूपासकानां किं फलमिति जिज्ञासायां वस्वादिपदप्राप्त्यादिकं फलमिति प्रतिपादयितुं ''स य एतदेवममृतं वेद'' इत्यारभ्य ''एतस्माद् रूपादुदेति''इत्यन्तं वाक्यं खण्डपञ्चकेऽपि प्रवृत्तं तत् तत्तत्पदायोग्यानामपि मधूपास्त्या तत्तत्पदप्राप्त्यादिर्भवतीति प्रतीतिनिरासाय व्याचष्टे – **ये चेति** ॥ देवाः देवत्वयोग्याः । श्रौताभिशब्दार्थः – **असंशयमिति** ॥ तस्य निश्चयार्थत्वेन पूर्वं व्याख्यातत्वात् ।

## भाष्यम्

*वस्वाद्याधिपत्यसम्बन्धिदेशकालनिरूपणम्*

उदेत्यास्तमयं यावद् याति भानुस्तु पर्वते ॥
उदयास्ताद्रिमध्यस्य वसवः पतयः स्मृताः ।
ततश्चास्तमयाद् यावदर्धरात्रं दिवाकरः ॥
दक्षिणादुत्तरं याति किञ्चित् पूर्वसमन्वितम् ।
तद्देशकालयोरीशा रुद्रा वायुपुरःसराः ॥
[१]वसुभोज्यादर्धकालमर्धदेशस्तथैव च ।
रुद्रभोज्योऽर्धरात्रात्तु याम आदित्यदैवतः ॥
पश्चिमात् पूर्वमार्गस्तु रौद्रादर्धः प्रकीर्तितः ।
ततः परोऽर्धयामस्तु सौम्याद् दक्षिणमार्गकः ॥
मारुतः काल उद्दिष्ट आदित्यार्धश्च देशतः ।
पश्चात् पश्चादुदेत्यैव[२] पूर्वतोऽस्तमुपैति च ॥
ततस्तदर्धकालेन चोत्तरादुदितस्तथा ।
अस्तं दक्षिणतो याति स कालो मारुतः स्मृतः ॥
उदेत्यैन्द्रपुरे[३] चोर्ध्वमर्वागुदयपर्वते ।
अस्तमेति तदर्धेन ब्रह्मा तस्य पतिः स्मृतः ॥

## पदार्थकौमुदी

### भाष्यार्थः

''वसूनामेवैको भूत्वा रुद्राणामेवैको भूत्वा''इत्यादिना वस्वादि-

---

१.'वसुभोग्यात्' क  २.'उदेत्येव' क  ३.'उदेत्येन्द्रपुरे' ह.

नन्वेवं सरस्वतीशेषसुपर्णतत्पत्नीनां वस्वादिषु कुत्राप्यप्रविष्टत्वात् मधूपास्त्यभावः स्यादित्याशङ्कायां साध्यान्तर्भावमाह – **सुपर्ण इत्यादिना** ॥ ननु ''ब्रह्मणैव मुखेन''इत्युक्तं मुक्तौ ब्रह्मणः सकलसाध्यमुखत्वमयुक्तम् । ब्रह्मणोऽपि ऋजुत्वेन साध्यपदोक्तऋजुमुखत्वासम्भवादित्यत आह – **अन्योन्येति** ॥ तथाशब्दोऽप्यर्थः । यद्यपि ब्रह्मणां समता तथाऽप्यन्योन्यमुखता युज्यते । मुखशब्देनाप्राधान्याभावमात्रस्य विवक्षितत्वादिति भावः । यथाऽप्राधान्याभावमात्रेणेतरसाध्यान् प्रति ब्रह्मणः मुखत्वं तथा न साध्यपदोक्तवागादीन् प्रतीत्याह – **वाक्शेषादेरिति** ॥ विशेषतोऽपि प्राधान्येनापि । मुखमिति सम्बन्धः ।

ननु रुद्रस्यैव शेषत्वात् तस्य च द्वितीयामृतद्रष्टृत्वात् कथं साध्यान्तर्भावेनान्त्यामृतद्रष्टृत्वमित्यत आह – **द्रष्टेति** ॥ मोक्षार्थं परतः परजन्मनि । शेषत्वावस्थायाम् उभयस्यापि द्रष्टा । शेषभावतोऽन्यत्र तु शिवत्वावस्थायाम् एकस्यैव द्रष्टेति विवेकः । यद्वा, परतः शेषभावतः शेषत्वानन्तरम् । मोक्ष इति यावत् । उभयस्याप्यमृतस्य द्रष्टा । अन्यत्र रुद्रत्वे त्वेकस्येति योजना । पूर्वं प्राप्तपदानां वस्वादीनां मोक्षलक्षणं फलमुक्तम् । इदानीम् अप्राप्तपदानां तत्पदयोग्यानां मधूपासकानां किं फलमिति जिज्ञासायां वस्वादिपदप्राप्त्यादिकं फलमिति प्रतिपादयितुं ''स य एतदेवममृतं वेद'' इत्यारभ्य ''एतस्माद् रूपादुदेति''इत्यन्तं वाक्यं खण्डपञ्चकेऽपि प्रवृत्तं तत् तत्तत्पदायोग्यानामपि मधूपास्त्या तत्तत्पदप्राप्त्यादिर्भवतीति प्रतीतिनिरासाय व्याचष्टे – **ये चेति** ॥ देवाः देवत्वयोग्याः । श्रौताभिशब्दार्थः – **असंशयमिति** ॥ तस्य निश्चयार्थत्वेन पूर्वं व्याख्यातत्वात् ।

## भाष्यम्

*वस्वाद्याधिपत्यसम्बन्धिदेशकालनिरूपणम्*

उदेत्यास्तमयं यावद् याति भानुस्तु पर्वते ॥
उदयास्ताद्रिमध्यस्य वसवः पतयः स्मृताः ।
ततश्चास्तमयाद् यावदर्धरात्रं दिवाकरः ॥
दक्षिणादुत्तरं याति किञ्चित् पूर्वसमन्वितम् ।
तद्देशकालयोरीशा रुद्रा वायुपुरःसराः ॥
[1]वसुभोज्यादर्धकालमर्धदेशस्तथैव च ।
रुद्रभोज्योऽर्धरात्रात्तु याम आदित्यदैवतः ॥
पश्चिमात् पूर्वमार्गस्तु रौद्रादर्धः प्रकीर्तितः ।
ततः परोऽर्धयामस्तु सौम्याद् दक्षिणमार्गकः ॥
मारुतः काल उद्दिष्ट आदित्यार्धश्च देशतः ।
पश्चात् पश्चादुदेत्यैव[2] पूर्वतोऽस्तमुपैति च ॥
ततस्तदर्धकालेन चोत्तरादुदितस्तथा ।
अस्तं दक्षिणतो याति स कालो मारुतः स्मृतः ॥
उदेत्यैन्द्रपुरे[3] चोर्ध्वमर्वागुदयपर्वते ।
अस्तमेति तदर्धेन ब्रह्मा तस्य पतिः स्मृतः ॥

## पदार्थकौमुदी

### भाष्यार्थः

''वसूनामेवैको भूत्वा रुद्राणामेवैको भूत्वा''इत्यादिना वस्वादि-

---

१.'वसुभोग्यात्' क २.'उदेत्येव' क ३.'उदेत्येन्द्रपुरे' ह.

भोग्यदेशकालाधिपत्यमुक्तम् । तदेव प्रतिदिनं तत्तद्भोग्यदेशकालविशेष-कथनेन विशदयितुं " स यावदादित्यः" इति वाक्यपञ्चकं प्रवृत्तम् । तस्य परव्याख्याननिरासाय तात्पर्यं प्रमाणेनैव वदंस्तावदादिवाक्यतात्पर्यमाह– **उदेत्यास्तमयमिति** ॥ परव्याख्यानं तु तत्प्रत्याख्यानावसरे दर्शयिष्यामः । पर्वते उदयपर्वते । उदेत्य यावद् यावता देशेन कालेन च । पर्वतेऽस्तपर्वते । अस्तमयं याति तावतः उदयास्ताद्रिमध्यस्य देशस्य । दिवारूपकालस्य चेत्यपि ग्राह्यम् । "स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेता" इत्यादिद्वितीयवाक्यतात्पर्यमाह– **ततश्चेति** ॥ ततश्चास्तमयात् पूर्वोक्तास्तगिरिप्राप्तिरूपास्तमयमारभ्य यावद् देशेन कालेनार्धरात्रम् अर्धरात्रपर्यन्तं यं देशविशेषं प्रति याति तद्देश-कालयोरस्ताद्रिमध्यदेशार्धरात्ररूपकालयो रुद्रा ईशा इत्यर्थः । "दक्षिणतः उदेतोत्तरतोऽस्तमेता" इत्यस्यार्थः – **दक्षिणादुत्तरमि-त्यादि** ॥ वसुभोग्यदेश-कालापेक्षया कियन्तौ रुद्रभोग्यदेशकालावित्य-पेक्षायां "यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावत्" इत्युक्तमित्यभिप्रेत्य तत्तात्पर्यमाह– **वसुभोग्यादिति** ॥ वसुभोग्याद् देशात् कालाच्चार्धकालम् अर्धकालः वसुभोग्यादेवार्धकालश्चेति सम्बन्धः ।

"स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्प-श्चादुदेता पुरस्तादस्तमेता" इत्यादितृतीयवाक्यतात्पर्यमाह– **अर्ध-रात्रादिति** ॥ अर्धरात्रात् परतो यामः, तावता कालेन गन्तव्यो देश-श्चाऽदित्यदैवतः । अनेनाऽदित्यानामेव तावदाधिपत्यमित्युक्तार्थम् । पूर्व-मार्गः पूर्वमार्गकः । कालो यामलक्षणः । तावता कालेन गन्तव्यो देशश्च । अनेन "पश्चादुदेता पुरस्तादस्तमेता"इत्युक्तार्थम् । रौद्रदेशात् कालाच्च । अनेन "द्विस्तावत्" इत्युक्तार्थम् । "स यावदादित्यः पश्चादुदेता

पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता'' इत्यादि चतुर्थवाक्यतात्पर्यमाह– **ततः पर इति ॥** ततः आदित्यदैवताद् यामात् परोऽर्धयामः कालः । तावता कालेन गन्तव्यो देशश्च मारुत उद्दिष्ट इत्यनेन मरुतामेव तावदाधिपत्यमित्यंशो व्याख्यातः । ''सौम्यात् उत्तराद् दक्षिणमार्गकः'' इत्यनेन ''उत्तरत उदेता दक्षिणतोऽस्तमेता'' इत्युक्त-तात्पर्यम् । ''द्विस्तावत्'' इत्यंशतात्पर्यमाह– **आदित्यार्धश्च देशत इति ॥** कालोऽपि ग्राह्यः । तथाच मारुतो देशः कालश्च आदित्यार्धः । आदित्यसम्बन्धि देशकालार्ध इत्यर्थः । नन्वत्र ''दक्षिणत उदेतोत्त-रतोऽस्सतमेता ।'' ''पश्चादुदेता पुरस्तादस्तमेता ।'' ''उत्तरत उदेता दक्षिणतोऽस्तमेता'' इत्यादौ अर्धरात्रयामतदर्धादिकालेषु प्रसिद्धोदया-स्तमयावनुपपन्नौ । अतोऽत्र गौणावेव तौ विवक्षितावित्याह – **पश्चात् पश्चादिति ॥** पूर्वपूर्वोक्तदेशेषु उदेत्य पश्चादुत्तरत्रोक्तदेशष्वस्तमुपैति चेत्यन्वयः । यद्वा, पश्चात् पश्चात् स्वापेक्षया पश्चाद् देश एव उदेति, पूर्वतः स्वाभिमुखे देशेऽस्तमुपैति चेति ।

अयं भावः । सविताऽस्ताद्रिं विहाय दक्षिणादुत्तरं याति यदा तदा सवितुः स्वपश्चात्तनदेशस्थः गम्यापेक्षया दक्षिणादिगवस्थितो योऽ-स्ताद्रिस्तत्प्राप्तिरस्ताद्रिस्थानां सवितृसामीप्येन दक्षिणोदयत्वेन विव-क्षिता । स्वाभिमुखोत्तरदेशविशेषप्राप्तिस्तेषामेव किञ्चिद्दूरगत्वसाम्येनोत्त-रास्तमयत्वेन विवक्षिता । एवं पश्चिमात् पूर्वं यदा याति तदा पश्चिमदेशविशेषस्थानां सवितृसामीप्येनोदयस्तेषामेव सवितुः पूर्वदेश-विशेषगमने दूरगत्वेनास्तमयः । एवमन्यत्रापीति । वक्ष्यति चैतत् ''आ-तपस्याल्पकालतः'' इत्यादिना ।

''ततः परोऽर्धयामस्तु''इत्युक्तं विवृणोति– **ततस्तदर्धकालेनेति ॥**

ततः आदित्यकालानन्तरं तदर्धकालेन आदित्यकालार्धेन येनेति शेषः । ''स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्व उदेताऽर्वागस्तमेता साध्यानामेव तावदाधिपत्यम्'' इति पञ्चमवाक्य-तात्पर्यमाह– **उदेत्येति** ॥ तदर्धेन मारुतकालार्धेन येन कालेनेति शेषः । देशोऽपि ग्राह्यः । मुख्यत्वाद् ब्रह्मग्रहणम् । इतरेऽपि साध्या ग्राह्याः । ''उदेत्य'' इत्यनेन ''ऊर्ध्व उदेता अर्वागस्तमेता'' इत्युक्तार्थम् । ''तदर्धेन'' इत्यनेन ''द्विस्तावत्''इत्यंशो व्याख्यातः । ''ब्रह्मा'' इत्यनेन साध्यानामेव तावदाधिपत्यमित्युक्तार्थम् ।

## भाष्यम्

*वस्वादिदेवताकालव्यवस्था*

**एकत्रिंशत्तु घटिकाः साधिका वसुदैवताः ।**
**तदर्धा रुद्रदैवत्यास्तत आदित्यदैवताः ।**
**तदर्धा मारुता ब्राह्मास्तदर्धा देशतस्तथा ।।' इति च ।**

**रौद्रो द्विगुणीभूतो वसुकालो यावांस्तावान् भवतीति द्विस्तावत् । अर्ध इत्यर्थः । ब्राह्मो मुहूर्त[१] इत्युषःकालस्य प्रसिद्धेश्च । रौद्रः काल इति पूर्वरात्रस्य प्रसिद्धेः[२] । अपररात्रस्य सौम्यकालत्वाच्च तस्मिन् काले शीतमुत्पद्यते । मारुतकालत्वाद् वायुश्च वाति । आग्नेय-कालत्वादेवाह्नि सैकघटिकं होमकर्माणि विशेषतः प्रवर्तन्ते ।**

---

१. 'ब्राह्मे मुहूर्ते' प्र.पाठः २. 'प्रसिद्धेः सार्धरात्रस्य । सौम्यः काल इत्यपररात्रस्य । सौम्यकालत्वाच्च' इत्याद्यानुपूर्वी प्रचलितपाठे ।

## पदार्थकौमुदी

### भाष्यार्थः

ननु षष्ठिघटिकात्मको ह्यहोरात्रः । तस्य विभागे वस्वादिभ्यः उक्तक्रमेण कृतेऽपि ईषदूनं घटिकाद्वयमवशिष्यते । तस्य देवता नोक्तेत्यतस्ता एव तद्देवतेत्याशयेन तदन्तर्भावाय स्पष्टं कालविभागमाह– **एकेति** ॥ "ततः" इत्यनन्तरं "तदर्धाः" इत्यावर्तनीयम् ।

खण्डचतुष्टयेऽपि श्रुतं "द्विस्तावत्" इति वाक्यं क्रमेण वस्वादिकालार्धपरत्वेन व्याख्यातमपि विप्रतिपत्तेस्तथा तद्वाक्यादप्रतीतेश्च सम्यग् व्याख्याति – **रौद्र इति** ॥ द्विरित्यस्यार्थः – **द्विगुणीभूत इति** ॥ द्विगुणीभूतः रौद्रः कालो यावान् तावान् वसुकालो भवतीति द्विस्तावदित्यस्यार्थ इत्यर्थः । पर्यवसितमाह – **अर्ध इति** ॥ वसुकालादर्धो रौद्रः काल इत्यर्थः । अनेन स आदित्यः यावद् यावति देशे काले च दक्षिणत उदेता उत्तरतोऽस्तमेता द्विस्तावत् तावतः कालस्य देशस्य च द्विर्द्विगुणं कालं "पुरस्तादुदेता पश्चादस्तमेता" इति श्रुत्यर्थ उक्तो भवति । अहरादिकालविशेषाणां वस्वादिदेवताकत्वं प्राधान्यक्रमेण युक्तिभिरप्युपपादयति – **ब्राह्म इति** ॥ "ब्राह्मे मुहूर्ते चोत्थाय" इति स्मृतौ प्रसिद्धेश्च ब्रह्मदेवताकत्वेनेति शेषः । अर्धरात्रात् परयामस्याऽदित्यदेवताकत्वप्रसिद्धेर्युक्तिर्नोक्ता । उदाहृतवक्ष्यमाणप्रमाणैश्च तत्सिद्धिरिति भावः । अपररात्रस्य सौम्यकालत्वे युक्त्यन्तरमाह – **सौम्यकालत्वाच्चेति** ॥ शीतस्य सोमधर्मत्वादिति भावः। नन्वेतावताऽस्तु सोमदेवताकत्वम् । मरुद्देवताकत्वं कुतस्तस्य कालस्येत्यत आह– **मारुतकालत्वाच्चेति** ॥ अह्नोऽग्न्यादिवसुदेवताकत्वे युक्तिमाह– **आग्नेयेति** ॥ उदयात् पूर्वमर्धघटिकाऽस्तमयात् परत अर्धघटिकेति सैकघटिकं

कालं ''कालाध्वनः'' इति द्वितीया ।

## भाष्यम्

*वस्वादिकालव्यवस्थायाः प्रामाणिकत्वनिरूपणम्*

'अहः सर्वं वसूनां[१] तु परेषां रात्रिरेव च ।
प्रदत्ता विष्णुना पूर्वं नालमित्यब्रुवन् परे ॥
पुनर्विशेषतो दत्तं रुद्राणां मरुतां तथा ।
माध्यन्दिनं तृतीयं चाप्यादित्यानां प्रदत्तवान् ।
विश्वेषामपि देवानां सामान्याद् वसुनामहः[२]॥' इति च ।

'सर्वस्याधिपतिर्ब्रह्मा रुद्राद्यास्तु द्वयोर्द्वयोः ।
वसवस्त्वह्न एवेशाः सामान्यान्न विशेषतः ॥' इति च ॥

'माध्यन्दिने तृतीये च रुद्रादे राज्यमिष्यते ।
तद्भृत्यत्वाद् वसूनां तु प्रातःकाले[३] विशेषतः ॥
तत्रापि वाय्वधीनत्वमग्न्यादीनां प्रकीर्तितम् ॥

## पदार्थकौमुदी

### भाष्यार्थः

ननु सर्वमहो वसुस्वामिकम् । रात्रिरेव रुद्रादिस्वामिकेति न युक्तम् । अहरेकदेशयोर्माध्यन्दिनसायंसवनयो रुद्रादित्यादिदेवताकत्वादित्यत आह– **अहः सर्वमिति** ॥ सर्वम् अहः वसूनां तु ''सामान्यान्न विशेषतः'' इति वक्ष्यमाणेन विशेषेण प्रदत्तम् । परेषामेव रुद्रादीनामेव । चस्त्वर्थः ।

---

१. 'सर्ववसूनां तु' ह. २. 'सामान्याद् वसुनाम्'' ह. ३. 'प्रातःकालः' ह.

रात्रिर्विशेषेण रुद्रादीनामेव दत्तेत्यर्थः । परे रुद्राद्याः । ननु रुद्राणां कथं माध्यन्दिनसवनं दत्तम् ? तस्याहरेकदेशत्वेन वसुकालत्वा-दित्यत उक्तम्– **विशेषत इति** ॥ वसूनां सामान्येनान्याधीनतया स्वामित्वेऽपि रुद्राणां विशेषतोऽनन्याधीनत्वेन तत्कालस्वामित्वमिति भावः । माध्यन्दिनं सवनमिति शेषः । ''तृतीयं च''इत्यत्र चस्त्वर्थः । पूर्ववद् विशेषेणेत्यर्थः । सवनमिति वर्तते । ''विशेषतः'' इत्यनेन सूचितं विशदयति– **सामान्यादिति** ॥

ननु ब्रह्मण ईषदूनघटिकाद्वयाधिपत्यमित्युक्तम् । तन्महतोऽल्पमल्प-स्य महदिति विरुद्धमित्याशङ्कां परिहरन्नुक्तं विशदयति– **सर्वस्येति** ॥ यद्यपि विशेषतो ब्रह्मा सर्वस्यापि कालस्याधिपतिरितरे च तदधीनतयैक-देशाधिपतयः । तथाऽपीषदूनघटिकाद्वयस्येतरत्योगेन स एवाधिपतिरि-त्युक्तमुपपन्नमिति भावः । द्वयोर्द्वयोरहोरात्रिभागयोर्माध्यन्दिनतृतीय-सवनयोर्विशेषेण रुद्रादित्यादिदेवताकत्वम् । वसुस्वामिकत्वं तु सामान्येनेत्युक्तम् । तत्र किं सर्वस्याप्यह्नः वसवः सामान्येनेशा उत माध्यन्दिनतृतीयसवनयोरेवेति जिज्ञासायामाह– **माध्यन्दिन इति** ॥ तु-शब्दोऽवधारणे । ''तद्भृत्यत्वादेव वसूनां राज्यमिष्यते'' इति सम्बन्धः । ''तद्भृत्यत्वात्'' इत्यनेन ''सामान्यात्'' इत्युक्तं सामान्यं स्पष्टीकृत-मिति ज्ञातव्यम् । प्रातःकालो विशेषतोऽनन्याधीनतया वसूनां भोग्य इति शेषः । तत्रापि न सर्वथा स्वातन्त्र्यमित्याह– **तत्रापीति** ॥ अत्र वायु-शब्देन ब्रह्मा विवक्षितः। ''सर्वस्याधिपतिर्ब्रह्मा'' इत्युक्तत्वात् ।

## भाष्यम्

*देशव्यवस्था*

**एवं पृथिव्यां रुद्राणामन्तरिक्षं प्रकीर्तितम्** (१)**।**

**मरुतां च द्युलोकेशा आदित्याः परिकीर्तिताः ॥**

**सर्वेषामधिपो ब्रह्मा युवाधीशस्तु**(२) **मारुतः ।**

**त्रिलोकाधिपतिश्चेन्द्रस्तेषामप्यधिपो हरिः ॥' इति च ।**

**स्वाराज्यं भोगः । स्वरञ्जनात् ।**

## पदार्थकौमुदी

### भाष्यार्थः

प्रसङ्गाद् वस्वादीनां लोकविभागं चाऽह– **एवमिति** ॥ प्रातःसवने यथा। एवं पृथिव्यामाधिपत्यं वसूनामिति शेषः। माध्यन्दिनसवने यथा। एवं रुद्राणामित्यादि योज्यम्। अनेन, (३)यद् वसूनां प्रातःसवनं रुद्राणां माध्यन्दिनं सवनम् आदित्यानां विश्वेषां च देवानां तृतीयसवनं क्व तर्हि यजमानस्य लोक इत्युक्तमुपपादितं भवति।

''स्वाराज्यं पर्येता'' इत्यत्र स्वाराज्यं स्वराड्भावं गच्छतीत्यपव्याख्याननिरासाय स्वाराज्यशब्दार्थमाह– **स्वाराज्यमिति** ॥ भोगो विषयानुभावः । ननु स्वाराज्यशब्दस्य कथं विषयानुभववाचकत्वम् ? अप्रसिद्धेरित्याशङ्कायां योगेनेत्याह– **स्वरञ्जनादिति** ॥ अनेन स्वं रञ्जयति सुखयतीति स्वराट्, स्वराडेव स्वाराज्यमिति निर्वचनं सूचितं

१.'एवं पृथिव्या रुद्राणां' ह. 'अन्तरिक्षे प्रकीर्तितम्' क २.'द्युवाधीशस्तु' प्र.पाठः। ३. 'यत्' इति क्वचिन्न दृश्यते।

भवति । परोक्तार्थे तु आधिपत्येन पौनरुक्त्यम् । व्याख्यानव्याख्येय-भावश्चागतिकागतिरिति भावः ।

## भाष्यम्

*परमतविमर्शः*

**न त्विन्द्राद् यमो द्विगुणकालं तिष्ठति तस्माद् वरुणस्तस्मात् सोम इत्यत्र किञ्चिन्मानम् । न च सोमाद् द्विगुणमेव ब्रह्मा तिष्ठति । द्विपरार्धं हि तस्य कालः । इन्द्रादयो हि मन्वन्तरमात्रं तिष्ठन्ति । न च वसूनां पूर्वो देशो रुद्राणां दक्षिण आदित्यानां पश्चिमो मरुतामुत्तर एव नान्यत्रेत्यत्र प्रमाणमस्ति । (१)तत्पक्षे रुद्रैः सहेन्द्रस्य दक्षिणत्वप्राप्तेश्च। न चेन्द्रशब्देन वायुस्तैर्गृहीतः । अत इन्द्रादेवेन्द्रस्य द्विगुणकालत्व-मिति विरोधः ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं ''स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता'' इत्यादिवाक्यचतुष्टयं दैनन्दिनदक्षिणाद्युदयपर-तया व्याख्यायेदानीं तत्परिशुद्धये यत्परव्याख्यानं ''स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावत्ततो द्विगुणकालं दक्षिणत उदेतो-त्तरतोऽस्तमेता रुद्राणां तावद्भोगकालः । तथा पश्चादुत्तरत ऊर्ध्वमुदेता

---

१.अत्र प्रचलितपाठे वाक्यानुपूर्व्या व्यत्यासः दृश्यते। तद् यथा – ''तत्पक्षे रुद्रैः सह इन्द्रस्य दक्षिणत्वप्राप्तेश्च । अत इन्द्रादेवेन्द्रस्य द्विगुणकालत्वमिति विरोधः । नचेन्द्रशब्देन वायुस्तैर्गृहीतः । इन्द्रादिपुरीणामुद्वासेनैवमङ्गीकारे''

विपर्ययेणास्तमेता पूर्वस्माद् पूर्वस्मात् द्विगुणोत्तरोत्तरेण कालेन अमरावत्यादीनां पुरीणां द्विगुणोत्तरेण कालेनोद्वासो यदा तदैव दक्षिणाद्युदयश्चेति''तद्दूषयति – **नत्वित्यादिना** ॥ अमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्वास इति तावदनुपपन्नम् । तथात्वे तदधिपतीनामिन्द्रादीनामपि द्विगुणोत्तरोत्तरकालेन नाशापत्तेः । नचेष्टापत्तिः । इन्द्रनाशे इन्द्रापेक्षया यमो द्विगुणं कालं तिष्ठति । यमनाशे यमाद् वरुणो द्विगुणं कालं तिष्ठति । तन्नाशे वरुणापेक्षया सोमो द्विगुणीकालं तिष्ठतीत्यत्र प्रत्यक्षाद्यन्यतमप्रमाणाभावेनाप्रामाणिकत्वादिति भावः । किञ्चैवं ''स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्व उदेताऽर्वागस्तमेता'' इत्येतत्सर्वथाऽनुपपन्नम् । त्वन्मते सोमतत्पुर्योर्नाशे ततो द्विगुणकालं ब्रह्मतत्पुर्योरवस्थानं ह्येतद्वाक्यप्रतिपाद्यम् । नच तत्सम्भवतीत्याह– **नच सोमादिति** ॥ पुर्युपलक्षणमेतत् । एवमुत्तरत्रापि । कुतो न तिष्ठतीत्यत आह – **द्विपरार्धमिति** ॥ हीति ''द्विपरार्ध्यधिष्ण्यमध्यासितः'' इति प्रमाणप्रसिद्धिमाह । एवमिन्द्रादीनां द्विगुणेनोत्तरोत्तरेण कालेनावस्थानमप्रामाणिकमित्युक्तम् । इदानीं प्रमाणविरुद्धं चेत्याह – **इन्द्रादय इति** ॥

ननु ब्रह्मणो द्विपरार्धमवस्थानेऽपि तदर्धं सोमः तदर्धं वरुणः तदर्धं यमः तदर्धमिन्द्रस्तिष्ठतीन्द्रस्य ब्रह्ममानेन सपादषड्वर्षमवस्थानाद् उत्तरोत्तरं द्विगुणकालम् अवस्थानं किं न स्यादित्यतो वाऽऽह – **इन्द्रादय इति** ॥ इन्द्रयमवरुणसोमाः मन्वन्तरमात्रं स्वस्वपदेषु तिष्ठन्तीति हि प्रमाणसिद्धम् । अतस्तद् व्याख्यानं तद्विरुद्धमिति भावः । वस्वाभिमानिकपूर्वदेशं परित्यज्य कालान्तरे रुद्राभिमानिकदक्षिणदेशे उदेतीति यो वस्वादीनां देशविभागनियम उक्तः सोऽपि प्रमाणाभावेनायुक्त इत्याह– **नच**

**वसूनामित्यादिना** ॥ पूर्व एव देश इत्येवमेवशब्दस्य सर्वत्र सम्बन्धः । अन्यत्रान्यः । इन्द्रपुर्युद्वासे पूर्वोदयद्विगुणकालं दक्षिणोदय इत्यत्र दूषणान्तरं वक्तुमाह – **तत्पक्ष इति** ॥ तत्पक्षे दक्षिणाद्युदयस्य पूर्वोदयद्विगुणकालत्वपक्षे । रुद्रैः सह रुद्रान्तर्भावाद् दक्षिणत्वप्राप्तेः दक्षिणोदयकालस्वामित्वप्राप्तेः । ततः किमित्यत आह – **अत इति** ॥ उपलक्षणं चैतत् । इन्द्रस्य नाशाङ्गीकारविरोधश्चेत्यपि द्रष्टव्यम् । ननु नष्ट इन्द्रोऽन्यः, रुद्रान्तःप्रविष्टस्त्विन्द्रो वायुरेवेति न विरोध इत्यत आह – **नचेति** ॥

भाष्यम्

**इन्द्रादिपुरीणामुद्वासत्वेनैवमङ्गीकारे तत्षोडशगुणत्वादूर्ध्वोदयस्यैकेन्द्रात् परतोऽनिन्द्रत्वमेव स्यात् ।**

**'अथ तत ऊर्ध्व उदेत्य' इति तत्पक्षे पश्चादप्यादित्यभावात् कल्पान्तलयो[१] न स्यादित्याद्यनन्तदोषदुष्टत्वेऽपि ग्रन्थाल्पत्वायैवोपरम्यते ॥**

**'वस्वादीनां तु सर्वेषां सर्वदिक्षु पुराण्यपि ।**
**सन्त्येवमपि धीवृत्त्यै प्रत्येकं दिक्षु कथ्यते ॥' इति च ।**

**ऐन्द्र्या उद्वासे रुद्राणामेवोदयाभाव इति च दोषः । अतो यत्किञ्चिदेतत् ।**

पदार्थकौमुदी

भाष्यार्थः

---

१. 'कल्पान्तलयोऽपि न स्यात्' ह्.पाठः । 'कल्पान्तप्रलयोऽपि' क.

इन्द्रपुर्युद्वासेन दक्षिणाद्युदयाङ्गीकारे दूषणान्तरमाह– **इन्द्रादि-पुरीणामित्यादिना** ॥ इन्द्रादीनां तत्पुरीणां चेत्यर्थः । "उद्वासत्वेन" इति पाठे भवितृप्रधानो निर्देशः । एवमङ्गीकारे दक्षिणाद्युदयाङ्गीकारे । तत् षोडशगुणत्वात् पूर्वोदयकालषोडशगुणत्वाद् ऊर्ध्वोदयस्य । ऊर्ध्वो-दयकालस्य । एकेन्द्रात् परत एकेन्द्रनाशानन्तरम् । अनिन्द्रत्वं, "दक्षि-णाद्युदयकालस्य" इति शेषः ।

अयं भावः । त्वन्मते दक्षिणाद्युदयकाले एकेन्द्रात् परत इन्द्राभाव एव स्यात् । तथाच तदुद्दिष्टकर्मविलोपे वेदाप्रामाण्यप्रसङ्गः । नच पूर्वेन्द्रस्तदानीमस्तीति वाच्यम् । त्वया तत्पुरीसहितस्य तस्योद्वासेन दक्षिणाद्युदयाङ्गीकारात् । नचेन्द्रतत्पुर्योरुद्वासानन्तरमल्पकाले एव प्रलयात् कर्मप्रवृत्तिरेव नास्तीति वाच्यम् । ऊर्ध्वोदयकालसमाप्त्यनन्तरं हि प्रलयोऽङ्गीकृतः । ऊर्ध्वोदयकालस्य च पूर्वोदयकालषोडशगुणत्वात् । इन्द्रनाशानन्तरमेव न प्रलय इति बहुतरकाले कर्मप्रवृत्त्यादिसत्त्वेन तदभावापत्तिरनिष्टैवेति । आदिपदबहुवचनाभ्यां यमनाशानन्तरं पश्चिमा-द्युदयकालस्यायमत्वं स्यादित्याद्यपि सूचितम् ।

किञ्च त्वत्पक्षे ऊर्ध्वोदयकालसमाप्त्यनन्तरमपि न प्रलयः सम्भवति । "अथ तत ऊर्ध्व उदेत्य"इत्युत्तरखण्डे ऊर्ध्वोदयकालसमाप्त्यनन्तरमपि आदित्यसद्भावाङ्गीकारात् । नह्यादित्योपेतः कालः प्रलय इति प्रामा-णिकमित्याह– **अथेत्यादिना** ॥ अस्मन्मते आदित्यशब्दस्य भगवत्प-रत्वात् । तस्य च प्रलयेऽवस्थितत्वान्न दोष इति सूचनाय तत्पक्षे इत्युक्तम् । पश्चादपि ऊर्ध्वोदयकालसमाप्त्यनन्तरमपि । उपसंहारे कारणं वदन् उपसंहरति– **इत्यादीति** ॥ पूर्वं वस्वादीनां पूर्वादिदेशनियमोऽप्रामाणिक

इत्युक्तम् । इदानीं प्रमाणविरुद्धश्चेत्याह– **वस्वादीनामिति** ॥ यद्यपि परव्याख्याननिराकरणस्योपसंहृतत्वान्नेदं युक्तम् । तथापि ''अनन्तदोष-दुष्टत्वेपि'' इत्यस्य प्रौढिवादत्वनिरासाय पुनर्दूषणोक्तिरित्यवसेयम् । तुशब्दोऽवधारणे । सर्वेषामपि वस्वादीनां देवानां सर्वदिक्षु पुराणि सन्त्येवेत्यन्वयः । ननु सर्वदेवानां सर्वदिक्ष्वपि पुराणि सन्ति चेदिन्द्रस्य पूर्वस्यां दिशि यमस्य दक्षिणस्यां पुरमित्यादि विशेषोक्तिः कथमित्यत आह– **एवमपीति** ॥ धीवृत्त्यै ध्यानार्थम् । कथ्यते । ''पुरं''इति शेषः । किञ्च स्यादयं वस्वादीनां देशनियमो यदीन्द्रपुर्युद्वासानन्तरं रुद्रादयः सन्तीति प्रामाणिकं स्यात् । तेषामिन्द्रपरिवारत्वेनेन्द्रनाशेऽवस्थित्य-सम्भवात् । अतो न त्वदभिप्रेतो देशनियमो युक्त इत्याह– **ऐन्द्या इति** ॥ उदयाभावोऽवस्थित्यभावः । उपसंहरति– **अत इति** ॥ प्रमाणाभावात् तद्विरोधाच्च । एतद् वस्वादीनां नियतदेशत्वकल्पनम् । यत्किञ्चित् फल्गिवत्यर्थः ।

## भाष्यम्

**'उदेति पूर्वतः सूर्यो निम्लोचति च पश्चिमे ।**
**एवं नियम उद्दिष्टो ब्रह्मणा विष्णुचोदनात् ॥**
**द्विगुणं द्विगुणं कालमुदित्वा दक्षिणादिषु ।**
**मध्ये चावस्थितिः[१] पश्चाद् ब्रह्माणं याचिता पुरा ॥**
**हिरण्यकेन सूर्यस्य हिरण्याक्षेण वै पुनः ।**
**तदाऽसुराणां देवत्वं ब्रह्मा तत् प्रददौ तयोः ॥**

१. 'व्यवस्थितिः' क.

तच्छ्रुत्वेन्द्रादिभिः प्रोक्तः कथं प्रादा वराविमौ ।
देवता हि विनश्येयुरेवं दत्ते वरे त्वया ॥
इत्युक्तो दैवतैः प्राह ब्रह्मा लोकपितामहः ।
न मया स वरो दत्तो दैतेयानां सुराः क्वचित् ॥
येन युष्मद्विनाशः स्यात् ततो व्यैतु[१] च वो भयम् ।
दक्षिणाद्युदयो यस्तु स हि दैनन्दिनो मया ॥
अभिप्रेतो नैव चायं कालान्तरगतः क्वचित् ।
अर्धनाड्युत्तरा नाडीः सकाष्ठा नित्यशो रविः ॥
पश्चादशोत्तरां गच्छेत् पूर्वं रात्रे तु दक्षिणात् ।
तदर्धं पश्चिमात् पूर्वं[२] तदर्धं चोत्तरादपि ॥
दक्षिणां च तदर्धं स ऊर्ध्वादर्वाक् च गच्छति ।
दक्षिणाद्युदयस्त्वेष न तु कालान्तरे क्वचित् ॥
यदोत्तरस्माद् द्विगुणः पूर्वो भवति वै सुराः ।
तदाऽपि द्विगुणत्वं स्यात् तन्मयाऽत्र विवक्षितम् ॥
अहःसाम्येऽपि क्रमश आतपस्याल्पकालतः ।
गिर्यावृत्तेः[३] क्षिप्रमन्येषूदयास्तमयाविव ॥

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च कालान्तरभाविदक्षिणाद्युदयस्यासुरमतत्वाद् दैनन्दिनोक्त-

---

१.'व्येतु' क २.'पूर्वा' ह. ३.'गिर्यावृतेः' ह

दक्षिणाद्युदयस्य च देवरहस्यत्वान्न त्वद्व्याख्यानं युक्तम् । किन्त्व-स्मद्व्याख्यानमेवेत्याशयेन तादृगाख्यायिकामाह– **उदेतीत्यादिना** ॥ पूर्वतः पूर्वस्यां दिशि । नियमोऽनन्यथाभावः । उद्दिष्टः उपदिष्टः । सूर्यं प्रतीति शेषः । पुनःशब्दः समुच्चये । पुरा हिरण्यकेन हिरण्याक्षेण च सूर्यस्य द्विगुणं द्विगुणकालं द्विगुणोत्तरोत्तरेण कालेन । दक्षिणादिषु उदित्वा पश्चान्मध्ये व्यवस्थितिः । ब्रह्माणं याचितेति योजना । ''मध्ये व्यवस्थितिः'' इत्यनेन ''अथ तत ऊर्ध्व उदेत्य'' इत्येतत्खण्डस्यापि त्वदीयं व्याख्यानमासुरमतमेवेति सूचयति। तदा तस्मिन् समयेऽसुराणां देवत्वं च याचितमिति शेषः । तद् वरद्वयम् ।

ननु यदि स वरस्त्वया न दत्तस्तर्हि दक्षिणाद्युदयो भविष्यतीति त्वद्वचनम् अप्रमाणं स्यादित्यतः स्वोक्त्यभिप्रायं देवान् प्रत्याह– **दक्षिणाद्युदय इत्यादिना** ॥ दैनन्दिनः दिने दिने भवः कचिच्चेत्यन्वयः । ननु त्वदभिप्रेतो दैनन्दिनो दक्षिणाद्युदयः कीदृश इत्यपेक्षायां तं विविच्याऽह– **अर्धनाडीति** ॥ रविर्नित्यशः पूर्वरात्रे तु पूर्वरात्र एव । अर्धनाड्युत्तराः सकाष्ठाः पञ्चदशनाडीः दक्षिणादुत्तरां दिशं गच्छेदिति योजना । अनेन दक्षिणोदयोत्तरास्तमयौ दर्शितौ । तथोक्तं पुरस्तात् । अत्र नाडीशब्दो घटिकापरः । काष्ठाशब्दश्च घटिकाष्टमांशपर इत्यवधेयम् । अनेन यदुक्तम् ''ईषदूनं घटिकाद्वयमवशिष्यते'' इति तस्य काष्ठोनघटिकाद्वयमवशिष्यत इत्येवार्थः । तन्मध्ये च काष्ठाद्वयसहित-घटिकाया वसुकालेऽन्तर्भावः । अवशिष्टस्य सकाष्ठार्धनाड्यात्मकस्य कालस्य रुद्रकालेऽन्तर्भाव इत्युक्तं भवतीति ज्ञातव्यम् । वसुरुद्र-कालयोरेव साधिका सकाष्ठेति विशेषाधिक्योक्तेरन्यत्र तदभावादेवा-वशिष्टकालविभागः कृतो नान्यत्रेति भावः । ''तदर्धम्'' इत्यत्र च न

तच्छ्रुत्वेन्द्रादिभिः प्रोक्तः कथं प्रादा वराविमौ ।
देवता हि विनश्येयुरेवं दत्ते वरे त्वया ॥
इत्युक्तो दैवतैः प्राह ब्रह्मा लोकपितामहः ।
न मया स वरो दत्तो दैतेयानां सुराः क्वचित् ॥
येन युष्मद्विनाशः स्यात् ततो व्यैतु[1] च वो भयम् ।
दक्षिणाद्युदयो यस्तु स हि दैनन्दिनो मया ॥
अभिप्रेतो नैव चायं कालान्तरगतः क्वचित् ।
अर्धनाड्युत्तरा नाडीः सकाष्ठा नित्यशो रविः ॥
पश्चादशोत्तरां गच्छेत् पूर्वं रात्रे तु दक्षिणात् ।
तदर्धं पश्चिमात् पूर्वं[2] तदर्धं चोत्तरादपि ॥
दक्षिणां च तदर्धं स ऊर्ध्वादर्वाक् च गच्छति ।
दक्षिणाद्युदयस्त्वेष न तु कालान्तरे क्वचित् ॥
यदोत्तरस्माद् द्विगुणः पूर्वो भवति वै सुराः ।
तदाऽपि द्विगुणत्वं स्यात् तन्मयाऽत्र विवक्षितम् ॥
अहःसाम्येऽपि क्रमश आतपस्याल्पकालतः ।
गिर्यावृत्तेः[3] क्षिप्रमन्येषूदयास्तमयाविव ॥

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च कालान्तरभाविदक्षिणाद्युदयस्यासुरमतत्वाद् दैनन्दिनोक्त-

१. 'व्येतु' क २. 'पूर्वा' ह. ३. 'गिर्यावृते:' ह

दक्षिणाद्युदयस्य च देवरहस्यत्वान्न त्वद्व्याख्यानं युक्तम् । किन्त्व-स्मद्व्याख्यानमेवेत्याशयेन तादृगाख्यायिकामाह– **उदेतीत्यादिना** ॥ पूर्वतः पूर्वस्यां दिशि । नियमोऽनन्यथाभावः । उद्दिष्टः उपदिष्टः । सूर्यं प्रतीति शेषः । पुनःशब्दः समुच्चये । पुरा हिरण्यकेन हिरण्याक्षेण च सूर्यस्य द्विगुणं द्विगुणकालं द्विगुणोत्तरोत्तरेण कालेन । दक्षिणादिषु उदित्वा पश्चान्मध्ये व्यवस्थितिः । ब्रह्माणं याचितेति योजना । ''मध्ये व्यवस्थितिः'' इत्यनेन ''अथ तत ऊर्ध्व उदेत्य'' इत्येतत्खण्डस्यापि त्वदीयं व्याख्यानमासुरमतमेवेति सूचयति। तदा तस्मिन् समयेऽसुराणां देवत्वं च याचितमिति शेषः । तद् वरद्वयम् ।

ननु यदि स वरस्त्वया न दत्तस्तर्हि दक्षिणाद्युदयो भविष्यतीति त्वद्वचनम् अप्रमाणं स्यादित्यतः स्वोक्त्यभिप्रायं देवान् प्रत्याह– **दक्षिणाद्युदय इत्यादिना** ॥ दैनन्दिनः दिने दिने भवः क्वचिच्चेत्यन्वयः । ननु त्वदभिप्रेतो दैनन्दिनो दक्षिणाद्युदयः कीदृश इत्यपेक्षायां तं विविच्याऽह– **अर्धनाडीति** ॥ रविर्नित्यशः पूर्वरात्रे तु पूर्वरात्र एव । अर्धनाड्युत्तराः सकाष्ठाः पञ्चदशनाडीः दक्षिणादुत्तरां दिशं गच्छेदिति योजना । अनेन दक्षिणोदयोत्तरास्तमयौ दर्शितौ । तथोक्तं पुरस्तात् । अत्र नाडीशब्दो घटिकापरः । काष्ठाशब्दश्च घटिकाष्टमांशपर इत्यवधेयम् । अनेन यदुक्तम् ''ईषदूनं घटिकाद्वयमवशिष्यते'' इति तस्य काष्ठोनघटिकाद्वयमवशिष्यत इत्येवार्थः । तन्मध्ये च काष्ठाद्वयसहित-घटिकाया वसुकालेऽन्तर्भावः । अवशिष्टस्य सकाष्ठार्धनाड्यात्मकस्य कालस्य रुद्रकालेऽन्तर्भाव इत्युक्तं भवतीति ज्ञातव्यम् । वसुरुद्र-कालयोरेव साधिका सकाष्ठेति विशेषाधिक्योक्तेरन्यत्र तदभावादेवा-वशिष्टकालविभागः कृतो नान्यत्रेति भावः । ''तदर्धम्'' इत्यत्र च न

सकाष्ठार्धनाड्युत्तरपञ्चदशघटिकार्धं कालं देशं चेत्यर्थः । अनेन क्रमेणोत्तरत्रापि तत्तदर्धविवक्षयामहोरात्रात्मककालस्य षष्टिघटिकातोऽप्याधिक्यापत्तेः । किन्तु पञ्चदशघटिकार्धमित्येव व्याख्येयम् । अधिकस्याल्पस्याविवक्षितत्वादिति ज्ञातव्यम् । एवमुत्तरत्रापि । ''पश्चिमात् पूर्वं गच्छेत्''इत्यनेन पश्चिमोदयपूर्वास्तमयावुक्तौ द्रष्टव्यौ । ''उत्तराद् दक्षिणां दिशं गच्छेत्'' इत्यनेन उत्तरोदयदक्षिणास्तमयौ दर्शितौ । ''ऊर्ध्वात्'' इत्यनेनोर्ध्वोदयादर्वागस्तमयावुक्तौ ।

ननु भवतु त्वदभिप्रेतो दैनन्दिनो दक्षिणाद्युदय एतादृशस्तथाऽपि द्विगुणं कालमुदित्वेति प्रार्थितत्वादुक्तदैनन्दिनदक्षिणाद्युदयस्य पूर्वोदयस्य पूर्वोदयाद् द्विगुणत्वादि कथमित्यतस्तत्रापि स्वाभिप्रेतमर्थमाह– **यदेति** ॥ उत्तरस्माद् दक्षिणाद्युदयकालात् पूर्वः पूर्वोदयकालः । नन्वेवं यदि दक्षिणाद्युदयो विवक्षितस्तर्हि उत्तरपुरीसंस्थानामस्मदहर्मानसमानमहर्मानं न स्यात् । अनेकेषामुदयास्तमयानां प्राप्तत्वादित्यतस्तदप्यहोऽस्मदहःसममेव । तत्रोक्ताश्चोदयास्तमयाः गौणा एव विवक्षिता इत्याह– **अहरिति** ॥ अहःसाम्येऽपि अन्येषु दक्षिणाद्युदयस्थानत्वेनोक्तदेशविशेषेषु उदयास्तमयाविव न मुख्यौ । तत्र मुख्यार्थसादृश्यं निमित्तमाह – **क्षिप्रं क्रमशो गिर्यावृत्तेरातपस्य तेजोमण्डलस्याल्पकालत इति** ॥

भाष्यम्

**कालान्तरे भाविनं तु दक्षिणाद्युदयं पुनः ।**
**अपेक्ष्यैव वरो दत्तो द्वितीयो देवता मया ॥**
**समयश्च कृतो नित्यो मया सूर्यस्य चानघाः ।**

पूर्वस्मादुदयो नित्यं[१] पश्चिमेऽस्तमयस्तथा ॥
नियमो नान्यथाऽयं स्यात् कदाचित् केनचित् क्वचित् ।
तस्मान्न वो भयं क्वापि प्रोक्ता इत्थं सुरास्तदा ।
विशोका अभवन् सर्वे ययुः स्वं स्वं निकेतनम् ॥[२] ' इति च ।

एतदेव मोक्षधर्मेषु बलिवासवसंवाद उक्तम् । देवान् प्रति ब्रह्मणो वचनं रहस्यत्वादविज्ञाय बलिना दक्षिणाद्युदय उक्तः । इन्द्रेण तु ब्रह्मवचनं जानता दक्षिणाद्युदयो नास्तीत्युक्तम् ।

'दैतेययोर्वरं ज्ञात्वा त्वविज्ञाय सुरान् प्रति ।
ब्रह्मणोक्तं हि बलिना वासवं प्रत्युदीरितम् ॥
दक्षिणाद्युदयान्ते तु त्वां जेष्यामि पुरन्दर ।
इत्युक्तस्तमुवाचेन्द्रो न कदाचन तद् भवेत् ॥
ब्रह्मणा नियमो यस्मात् कृतः प्रागुदयो रवेः ।
इत्युक्त्वा तु जगामेन्द्रो दिवमैरावतस्थितः ॥' इति च ॥१० ॥

## पदार्थकौमुदी

### भाष्यार्थः

अयं भावः । यद्देशस्थानां तेजोमण्डलं समीपवर्ति तेषामुदय इव । मण्डलसामीप्यसाम्यात् । प्रसिद्धोदयो हि मण्डलमस्माकं समीपवर्ति तत उक्तकालैर्गन्तव्यतत्तद्देशविशेषगमने दूरगमनसाम्येन पूर्वेषामस्तमय इव प्रसिद्धास्तमयेऽपि मण्डलमस्माकं दूरं यातीति । ननु भवतु त्वदभिप्रेतो

१. 'नित्यः' ह्र २. 'निवेशनम्' ह्र

दक्षिणाद्युदयो दैनन्दिनः। तथाऽप्यस्माकमनिष्टमेव। हिरण्यकेन दक्षिणाद्युदयेऽसुराणां देवत्वस्य प्रार्थितत्वात्। भवता च तस्य दत्तत्वाद् दैनन्दिनदक्षिणाद्युदयेऽसुराणां देवत्वप्राप्तेरित्यत आह– **कालान्तर इति**॥ भवतु कालान्तरभाविदक्षिणाद्युदयापेक्षया द्वितीयवरदानम्। तथाऽप्यनिष्टमेव। भवदिच्छया सूर्यस्य कालान्तरे दक्षिणाद्युदयेऽसुराणां देवत्वप्राप्तेरित्यत आह – **समयश्चेति**॥ नित्यो नियतः। तमेव समयमाह – **पूर्वस्मादिति**॥ तथेत्यनन्तरम् इतिशब्दोऽध्याहार्यः। केनचिन्निमित्तेन पुरुषेण वा कालान्तरभाविदक्षिणाद्युदयासत्वमेव ब्रह्मणोऽभिप्रेतम्, अतः स कदाऽपि न भविष्यतीत्यत्र मोक्षधर्मसंवादमपि वक्तुमाह – **एतदेवेति**॥ एतदेव कालान्तरे दक्षिणाद्युदयासत्वमेव।

उदाहरिष्यमाणमोक्षधर्मवचनस्य अभिप्रायाप्रतीतेस्तात्पार्यमाह– **देवानिति**॥ मोक्षधर्मवचनमुदाहरति– **दैतेययोरिति**॥ सुरान् प्रति ब्राह्मणोक्तम्। अविज्ञायेति सम्बन्धः। अविज्ञानमात्रेण कथं तथोक्तिरित्यत उक्तम्– **दैतेययोरिति**। यस्माद् ब्रह्मणा रवेः प्रागुदयविषये नियमः कृतः तस्मान्न कदाचन तद्भवेदिति सम्बन्धः॥ खं० ६॥ १०॥

**ततश्चायं खण्डार्थः**

पञ्चमममृतं नारायणाख्यम्। शिष्टं समानम्।

**॥ इति दशमः खण्डः ॥**

**उपनिषत् (खण्डः - ११)**

*प्रलये भगवत उदयास्ताभावसमर्थनम्*

**अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ॥ १ ॥**

न वै तत्र न निम्लोचो नोदियाय कदाचन ।
देवास्तेनाह९ सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥

भाष्यम्

'अथ सूर्यस्थितो विष्णुरादित्यस्त्वादिमूलतः ।
आदानाद् वाऽपि देवानामूर्ध्वं गच्छति मण्डलात् ॥
प्राप्य वैकुण्ठलोकं च [१]नोदेत्यस्तं न चैति सः ।
एकलः प्रलये स्थाता देवता नात्र संशयः ॥
तेन सत्येन न व्यृद्धिमाप्नुयां[२] ब्रह्मणा क्वचित् ।
इत्युवाच पुरा ब्रह्मा देवेभ्यः स चतुर्मुखः ॥
एतां विद्यां तु यो वेद नित्यमस्य दिवा भवेत्[३] ।
वैकुण्ठधामसंस्थस्य मुक्तस्यानुदयास्तकम् ॥

पदार्थकौमुदी

भाष्यार्थः

एवं प्रतिदिनं पूर्वाद्युदयं कुर्वन्नादित्यनामा हरिर्मधुतयोपास्य इत्युक्तम् । इदानीं प्रलयेऽपि किमेवमुदयादिकं करोतीत्यपेक्षायां नेत्याह – **अथ तत इति** ॥ प्रसिद्धादित्यपरतानिरासाय खण्डं प्रमाणेनैव व्याचष्टे– **अथेति** ॥ श्रुतौ कर्तृवाचिपदाभावादादित्यपदानुवृत्तिमभिप्रेत्य भगवति तन्निर्वक्ति – **आदिमूलत इति** ॥ आदिकारणत्वादित्यर्थः । ''तत ऊर्ध्वः'' इत्यस्य तात्पर्यार्थः – **मण्डलादूर्ध्वं गच्छतीति** ॥ उदेत्येत्यस्यार्थः – **वैकुण्ठलोकं प्राप्येति** ॥ अनेन उद् ऊर्ध्वं वैकुण्ठम् एत्य

१.'नोदैति' ह २.'न व्यृद्धिं प्राप्नुयां ह. ३.'दिवाऽभवत्' ह

प्राप्येत्यर्थ उक्तो भवति । ''मध्ये'' इत्यस्यार्थः – **प्रलय इति** ।। प्रलय-काल इत्यर्थः । तस्य स्थितिसृष्टिकालमध्यत्वादिति भावः ।

''देवास्तेनाहं सत्येन मा विराधिषि ब्रह्मणा''इत्यत्र ब्रह्मणा ब्रह्मस्वरूपेण मा विराधिषि मा विराध्ये यमप्राप्तिर्ब्राह्मणो मा भूदिति व्याख्यानमयुक्तम् । अप्रामाणिकत्वात् प्रमाणविरोधाच्चेति भावेन तद्-व्याचष्टे – **देवता इत्यादिना** ।। देवा इत्यस्यार्थः – **देवता इति** ।। ''कदाचन''इत्यस्य तात्पर्यम् – **न संशय इति** ।। तेन सत्येन सत्यवचनेन सत्येन ब्रह्मणेति वा । विराधिषीत्यस्यार्थः – **व्यृद्धिं** समृद्धिराहित्यं **प्राप्नुयामिति**[१] ।। ''विराधिषि'' इत्यत्र कर्तुरप्रतीतेस्तं दर्शयितुमाह– **इत्युवाचेति** ।।

''न ह वा अस्मा उदेति न निम्लोचति । सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद'' इति वाक्यम् अन्वयं दर्शयन्नेव मुक्तपरतया व्याचष्टे – **एतामित्यादिना** ।। ''सकृत्'' इत्यस्यार्थः – **नित्यमिति** ।। अनुदयास्तकं यथा भवति तथेति क्रियाविशेषणम् । अनेन ''न ह वा अस्मा उदेति'' इत्याद्युक्तार्थम् ।

### उपनिषत्

**न हवा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ।। ३ ।।**

**तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायाऽरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ।। ४ ।।**

---

१. 'आप्नुयामिति' क्वचित् पाठः ।

**इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वाऽन्तेवासिने ॥ ५ ॥**

**नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥ ६ ॥ ११ ॥**

भाष्यम्

'तदेतद् भगवान् विष्णुः प्रादाज्ज्ञानं विरिञ्चये ।
विरिञ्चिर्मनवे प्राह प्रजाभ्यो मनुरेव च ॥

पूरयित्वा तु पृथिवीं रत्नैः सप्तसमुद्रिणीम् ।
दत्वाऽपि गुरवे नैव पूर्यते गुरुदक्षिणा ॥

देवास्तूपासनायोग्या एकैकस्यामृतस्य हि ।
सर्वस्योपासने ब्रह्मा तदन्ये ज्ञानमात्रके ।
उपासने नैव योग्यास्तद्योग्या हि सुरा यतः ॥' इति देवश्रुतौ ।

ब्रह्मणा परेण मा विराधिषि । भगवत्प्रसादादवृद्धिं[१] न प्राप्नुयामित्यर्थः ॥ ११ ॥

## पदार्थकौमुदी

### भाष्यार्थः

''तद्धैतद्ब्रह्मा प्रजापतय उवाच'' इति वाक्यं ब्रह्मा हिरण्यगर्भः प्रजापतये विराजे इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **तदेतदिति** ॥ तदेतज्ज्ञानं मधुनामकभगवज्ज्ञानम् । ''यद्यप्यस्मा इमामद्भिः'' इत्या-

१.'व्यृद्धिं' ह.

दिवाक्यमप्रतीतेर्व्याचष्टे – **पूरयित्वेति** ॥ ''धनस्य पूर्णाम्''इत्यस्य तात्पर्यम् – **रत्नैः पूरयित्वेति** ॥ ''अद्भिः परिगृहीताम्'' इत्यस्य तात्पर्यम् – **सप्तसमुद्रिणीमिति** ॥ ''एतदेव ततो भूयः'' इत्यस्यार्थः – **नैव पूर्यते गुरुदक्षिणेति** ॥ सर्वाधिकारिकत्वप्रतीतिनिरासायैतद्विद्योपास्तौ योग्यानाह – **देवा इति** ॥ ''मा विराधिषि ब्रह्मणा'' इति वाक्यं पूर्वं ब्रह्मणा व्यृद्धिं न प्राप्नुयामिति व्याख्यातमपि ब्रह्मणा चतुर्मुखेन व्यृद्धिं विशेषेण ऋद्धिं इत्यन्यथाप्रतीतिनिरासाय विशदयति – **ब्रह्मणेत्यादिना** ॥ **खं०**॥ **११** ॥

## ततश्चायं खण्डार्थः

अथोदयास्तमयप्रचारानन्तरं प्रलये आदित्यनामा भगवान् ततो मण्डलादूर्ध्वः ऊर्ध्वं वैकुण्ठलोकम् । गच्छतीति शेषः । उदेत्य उद् ऊर्ध्वं वैकुण्ठं प्राप्य नैवोदेता । नास्तमेता तत्रैतादृशोदयादिकं न करोतीत्यर्थः । किन्तु एकलः एकप्रकार एव । मध्ये स्थितिसृष्टिकालमध्ये स्थाता ॥ १ ॥

एवं वैकुण्ठधाम्नि आदित्यनाम्नो हरेरुदयास्तमयाभावे प्रमाणमाह श्रुतिः । तत् तत्रोक्तार्थे । एषः वक्ष्यमाणः श्लोक इति । तत्र वैकुण्ठगत आदित्यनाम्नि हरौ नैव दोषा इति शेषः । दोषाभावमेकदेशेन दर्शयन्नाह– **न निम्लोच इत्यादिना** ॥ नोदियाय नोद्गतः । उदयास्तमयादिदोषास्तत्र न सन्तीत्यर्थः । हे देवास्तेन सत्येन भगवान्निर्दोष इत्यादिना सत्यवचनेन शपथरूपेणाहं ब्रह्मणा परब्रह्मणा तत्प्रसादादिति यावत् । मा विराधिषि अवृद्धिं न प्राप्नुयामिति देवान् प्रति ब्रह्मणो वचनम् । ''सत्येन ब्रह्मणा'' इति वा सम्बन्धः ॥ २ ॥

एतद्विद्यावेत्तुर्मुक्तिरूपं फलमाह – **न ह वा अस्मा उदेतीति** ॥ योऽधिकारी एतां ब्रह्मोपनिषदम् एवम् उक्तप्रकारेण वेद । अस्मै सविता ।

नोदेति न निम्लोचति । किन्तु सकृत्सदा । दिवैव भवति हेति सम्बन्धः ॥ ३ ॥

महदुपदेशपरम्पराप्राप्ता चेयं विद्याऽतो महतीत्याशयेनाऽह – **तद्धैतदिति ॥** तदेतत् मधुतया भगवज्ज्ञानम् । ब्रह्मा विष्णुः प्रजापतये विरिञ्चाय । मनवे स्वायम्भुवाय । प्रजाभ्यः इक्ष्वाकुप्रभृतिभ्यः । इयं चातिगोप्यत्वान्न यस्मै कस्मैचन वाच्येत्याह – **तद्धैतदुद्दालकायेत्यादिना ॥** यस्मादुद्दालकाय आरुणये ज्येष्ठाय पुत्राय पिता तदेतद्ब्रह्म प्रोवाच ॥ ४ ॥

तत् तस्मादिदं ब्रह्म, अन्योऽपि पिता ज्येष्ठायैव पुत्राय प्रब्रूयादिति योजना । प्रणाय्याय प्रणयवतेऽन्तेवासिने वा । ब्रह्म ब्रूयादिति सम्बन्धः ॥ ५ ॥

एतद्विद्योपदेष्टुः सदृशगुरुदक्षिणाभावाच्चैषा महतीत्याह– **यदीति ॥** यदि अस्मै एतद्विद्योपदेष्ट्रे अद्भिः समुद्रैः परिगृहीतां परिवृताम् । धनस्य रत्नादिधनेन पूर्णामपीमां पृथ्वीं दद्यात् । गुरुदक्षिणात्वेनेति शेषः । तर्ह्यपि तादृशपृथिवीदानं नैतद्विद्यादानसमम् । किन्तु ततः तादृशपृथ्वीदानादपि एतदेव एतद्विद्यादानमेव भूयोऽधिकमित्यर्थः । द्विरुक्तिरुक्तावधारणार्था ॥ ६ ॥

**॥ इति एकादशः खण्डः ॥**

## उपनिषत् (खण्डः -१२)

*(हयग्रीवमत्स्यादिरूपवाग्रूपानामुपासनम् )*

*गायत्रीप्रतिपाद्यसूर्यान्तर्गतभगवदुपास्तिः*

**गायत्री वा इद९ँ सर्वं भूतं यदिदं किञ्च वाग् वै गायत्री वाग् वा इद९ँ सर्वं भूतं गायति त्रायते च ॥ १ ॥**

## भाष्यम्

यदिदं किञ्च भूतं प्रभूतं परिपूर्णं तत् सर्वं गायत्री भगवानेव । 'भू बहौ' इति धातोः । 'बहुः पूर्णतायाम्' इति च ।

'यदिदं परितः पूर्णं मत्स्यकूर्मादिरूपकम् ।
तदिदं भगवान् विष्णुः सर्वान्तःस्थित एव च ॥
तन्निःसृतत्वाद् वेदानां गायकस्त्राति चाखिलम् ।
अतो गायत्रिनामाऽसौ वासुदेवः परः पुमान् ॥
भूमा भूतमिति प्रोक्तः पूर्णत्वात् पुरुषोत्तमः ।
अनन्यापेक्षमुद्रिक्तं सर्वस्य च नियामकम्[१] ॥
यद्यत्तत्तद्विष्णुरेव नान्यदेतादृशं क्वचित् ।
स एव भगवान् विष्णुर्वाङ्नामा वाचि संस्थितः ॥
वचनाद्धयशीर्षाख्यो गायत्र्यां च स आस्थितः ।

## पदार्थकौमुदी

### भाष्यार्थः

एवम् आदित्यान्तर्गतस्य भगवतो वस्वादिसर्वदेवतोपास्यत्वादिरूपं महिमानं निरूप्येदानीं तत्प्रतिपादकगायत्रीनिष्ठस्य गायत्रीनाम्नो भगवतः षड्विधत्वादिरूपो महिमा निरूप्यते– **गायत्रीत्यादिना** ॥ इदं सर्वं भूतं प्राणिजातम् । यत्किञ्च स्थावरं जङ्गमं वा तत्सर्वं गायत्री वै इत्यन्यथाप्रतीतिनिरासाय ''गायत्री वा इदं सर्वं भूतं यदिदं किञ्च'' इति वाक्यमन्वयप्रदर्शनपूर्वकं व्याचष्टे– **यदिदमिति** ॥ ''भूतं'' इत्यनूद्य

---

१. 'सर्वस्य विनियामकम्' क.

''प्रभूतं''इति व्याख्यानं तस्यैव लब्धार्थप्रदर्शनम् – **परिपूर्णमिति** ॥ यच्छब्दश्रवणात् तदित्यध्याहृतम् । ''वै'' इत्यस्यार्थः – **एवेति** ॥ नान्यदित्यर्थः । अनेन भूतशब्दवाच्यतया वक्ष्यमाणस्य मत्स्यादेः सर्वान्तस्थितस्य च रूपस्य गायत्रीनामकभगवदभिन्नांशत्वमुक्तं भवति ।

ननु भूधातोः सत्तार्थत्वप्रसिद्धेः कथं ''भूतं प्रभूतं'' इति व्याख्यातमित्यत आह – **भू बहाविति** ॥ नन्वथापि पूर्णमिति लब्दार्थकथनमयुक्तम् । बहुत्वस्य सङ्ख्याविशेषरूपस्यापूर्णसर्ववस्तुसाधारण्यादित्यत आह – **बहुरिति** ॥ तथाच पूर्णस्यैव मुख्यतो बहुशब्दवाच्यत्वेन प्रसिद्धत्वात् । मुख्यस्यैव च ग्राह्यत्वात् तत्पर्यायेणापि भूतशब्देन पूर्णमेव ग्राह्यमिति भावः ।

एवमादिवाक्यं स्ववाक्येन व्याख्याय तत्स्थेम्ने गायत्र्या वाग्रूपायाः सर्वात्मकत्वमत्रोच्यत इति परकीयव्याख्याननिरासाय च प्रमाणेनैव खण्डं व्याचष्टे– **यदिदमित्यादिना** ॥ परितो देशतो गुणतः कालतश्च पूर्णमिति भूतशब्दार्थकथनम् । तथा च यदिदं परितः पूर्णं मत्स्यकूर्मादिरूपकं सर्वान्तःस्थितं च । तदिदं सर्वं भगवान् गायत्रीनामा विष्णुरेवेति सम्बन्धः। भगवति गायत्रीशब्दं निर्वक्तुं प्राप्तं ''गायति च त्रायते च''इति वाक्यं कर्माप्रतीतेर्गानस्वरूपाप्रतीतेश्च तदुभयं दर्शयन् व्याचष्टे– **तदिति** ॥ तेनोच्चारितत्वादित्यर्थः । तथाच वेदोच्चारणमेवात्र गानं विवक्षितमिति भावः । भूतमिति पूर्णमिति व्याख्यानम् । तत्कथं शब्दलब्धमित्यतस्तद्दर्शयति – **भूमेति** ॥ भूतमिति भूमा प्रोक्तः । ''भू बहौ'' इति धातोः । भूमा च पुरुषोत्तमो मत्स्यादिरूपी प्रोक्तस्तस्य पूर्णत्वात् । भूमशब्दस्य च तदर्थत्वेन प्रसिद्धत्वात् । ''बहुः पूर्णतायाम्'' इत्युक्तेरिति भावः ।

यद्भूतं प्रभूतं पूर्णं तत्सर्वं गायत्रीनामा विष्णुरेवेति व्याख्यानम-

युक्तम् । मुक्तानां रमायाश्च पूर्णत्वेन विष्णुत्वापत्तेरत उक्तं विशदयति– **अनन्यापेक्षमिति ॥** उद्रिक्तं पूर्णं मत्स्यादि ततश्चानन्यापेक्षत्वेन पूर्णत्वं विशेषणीयमिति भावः । सर्वस्य विनियामकं सर्वान्तस्थितम् । यद्यदिति वीप्सा सर्वरूपसङ्ग्रहार्था । एतादृशम् अनन्यापेक्षमुद्रिक्तम् । अतो नाति-प्रसङ्ग इति भावः । अनेन गायत्रीनाम्नो हरेरत्र विवक्षितषड्विधरूपमध्ये यद्गायत्रीसंस्थं गायत्रीनामकं तदेव प्रथमं रूपं भूतशब्दोक्तम् । मत्स्यादि सर्वान्तस्थितं च द्वितीयमिति विवक्षितमित्युक्तं भवति । तस्य तृतीयं रूपं वक्तुं ''वाग्वै गायत्री'' इति वाक्यं प्रवृत्तम् । तद्गायत्र्याः शब्दात्मकत्व-मुच्यत इति व्याख्यानमप्रामाणिकमित्याशयेन व्याचष्टे – **स एवेति ॥** गायत्रीनामैव । वैशब्दार्थः – **एवेति ।** स एव वाङ्नामा नान्य इत्यनेनास्य तदभिन्नांशत्वमुक्तमिति ज्ञातव्यम् । वाङ्नामकत्वं केन निमित्तेनेत्यत उक्तम् – **वचनादिति ।** अनेन वक्तीति वागिति निर्वचनं सूचितं भवति । ''वाचि संस्थितः'' इत्येतदधिष्ठानकथनार्थम् । एवं पृथिव्यामपि संस्थित इत्यादिकमपि ज्ञातव्यम् । वाङ्नामा हरिः किंरूप इति जिज्ञासायामाह– **हयशीर्षाख्य इति ॥** ननु गायत्रीसंस्थोऽपि भगवान् किमाकार इत्याकाङ्क्षायामाह– **गायत्र्यामिति ॥** स हयशीर्षाख्यः ।

## उपनिषत्

*पृथिव्याख्यतुरीयभगवद्रूपोपासना*

**या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्या॑ हीद॑ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयन्ते ॥ २ ॥**

## भाष्यम्

**स एव पृथिवीनामा पृथिव्यामपि संस्थितः ॥**

**विष्णौ हि पृथिवीसंस्थे जगत्सर्वं प्रतिष्ठितम् ।**
**नातिशेते च तं कश्चित् स हि सर्वाधिको हरिः ॥**
**पृथुत्वात् पृथिवीनामा .............. ॥**

## पदार्थकौमुदी

### भाष्यार्थः

गायत्रीनाम्नो विष्णोश्चतुर्थं रूपं वक्तुं ''या वै सा गायत्री''इत्यादिवाक्यं प्रवृत्तम् । तत् प्रसिद्धपृथिवीमात्रपरमिति प्रतीतिनिरासाय व्याचष्टे – **स एवेति** ॥ गायत्रीनामैव । अस्यां हीदं सर्वं भूतं प्रतिष्ठितम् । ''एतामेव नातिशीयन्ते''इति वाक्यद्वयं प्रसिद्धपृथिवीमात्रपरत्वपक्षेऽनुपपन्नं स्यादित्याशयेन विष्णुपरतोपपादकतया क्रमेण व्याचष्टे – **विष्णाविति** ॥ नातिशेते नातिवर्तते । कुत इत्यत आह – **स हीति** ॥ स हरिः सर्वाधिकः प्रसिद्धो यत इत्यर्थः । नहि प्रसिद्धपृथिव्याः मुख्यतः सर्वभूताश्रयत्वं, नवा तां कोऽपि नातिशेत इति सम्भवतीति भावः । पृथिवीशब्दवाच्यत्वे निमित्तं दर्शयन् पञ्चमरूपप्रतिपादकं ''या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरम्''इति वाक्यं प्रसिद्धशरीरपरताप्रतीतिनिवारणाय व्याचष्टे – **पृथुत्वादित्यादिना** ॥

## उपनिषत्

*शरीराख्यपञ्चमभगवद्रूपोपासना*

**या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥**

### भाष्यम्

...... ....... **स एवान्तःशरीरगः ।**

शरित्वादीरणाच्चैव शरीरं भगवानजः ॥
पुरुषो जीव उद्दिष्टस्तस्मिन्नेव स्थितो विभुः[१]।

## पदार्थकौमुदी

### भाष्यार्थः

**स एव** पृथिवीनामैव, नान्यः इत्यनेन भिन्नस्थानत्वेन रूपयोर्भेदशङ्का न कार्येति दर्शितम् । एवमुत्तरत्रापि । शरीरस्यान्तरन्तःशरीरं पुरुषस्तस्मिन् गतोऽन्तःशरीरगः । शरीरत्वात् सुखरतिरूपत्वात् । अनेन "अस्मिन् पुरुषे शरीरम्" इत्यस्य तात्पर्यमुक्तम् । "पुरुषे" इति सप्तम्या निर्दिष्टं पुरुषं प्रदर्शयन्नुक्तं विशदयति – **पुरुष इति** ॥

## उपनिषत्

*हृदयाख्यषष्ठभगवद्रूपोपासना*

**यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ४ ॥**

### भाष्यम्

योऽसौ जीवे स्थितो विष्णुः शरीरमिति नामकः ॥
शंत्वाच्च रतिरूपत्वादीरणाच्च स एव तु ।
जीवचैतन्यरूपस्य हृदयेऽपि व्यवस्थितः ॥
अयनाद्धृदि विष्णुः स हृदयं कीर्तितो बुधैः ।

---

१. 'तस्मिन्नन्तः स्थितो विभुः' पा.

## पदार्थकौमुदी

### भाष्यार्थः

उक्तं शरीरशब्दप्रवृत्तिनिमित्तं विशदयन् षष्ठरूपप्रतिपादनाय प्रवृत्तं "यद्वैतत्पुरुषे शरीरम्" इत्यादिवाक्यं प्रसिद्धहृदयमात्रपरताप्रतीतिवारणाय व्याचष्टे – **योऽसावित्यादिना** ॥ हृदयशब्दं विष्णौ निर्वक्ति– **अयनादिति** ॥ अयनाद् ज्ञानात् । स्थितेर्वा ।

### उपनिषत्

**सैषा चतुष्पदा षड्विधा गायत्री ।**

### भाष्यम्

गायत्र्यां संस्थितो विष्णुः स्त्रीरूपः सूर्यसप्रभः ॥
द्वितीयश्चैव मत्स्यादिर्भूतनामाऽवतारगः ।
तृतीयो वाचि संस्थश्च स्त्रीरूपो हयशीर्षकः ॥
चतुर्थः पृथिवीसंस्थः स्त्रीरूपः पीतवर्णकः ।
जीवस्यान्तर्गतो व्याप्य शरीरमिति नामकः ॥
पञ्चमस्तद्धृदिस्थस्तु[1] षष्ठो हृदयनामकः ।
गायत्रीनामको विष्णुरेवं षड्विध उच्यते ॥
त्रिभिः स्वरूपपादैश्च भिन्नेनैकेन चैव हि ।
गायत्रीनामको विष्णुश्चतुष्पात् सम्प्रकीर्तितः ॥

### पदार्थकौमुदी

---

१. 'हृदिस्थश्च' क

### भाष्यार्थः

''सैषा चतुष्पदा षड्विधा गायत्री'' इति वाक्यं ''सैषा चतुष्पदा षडक्षरचतुष्पदा षड्विधा वाग् भूतपृथिवीशरीरहृदयप्राणरूपा सती षड्विधा''इति व्याख्याननिरासाय ब्रह्मपरतयैवोद्देश्यविधेयभावव्यत्यासेन व्याचष्टे– **गायत्र्यामित्यादिना** ।। पूर्वं चतुष्पात्त्वस्यानुक्तत्वादुत्तरत्र षड्विधत्वस्याकथनाच्च न यथास्थित एवोद्देश्यविधेयभावः। तथाच ''सैषा षड्विधा गायत्री चतुष्पदा'' इति योजनोक्ता भवति । तत्र षड्विधे-त्यनुवादवाक्यं तावद् ''गायत्र्याम्'' इत्यादिना ''षड्विध उच्यते'' इत्यन्तेन ग्रन्थेन व्याख्यायते । सूर्यसप्रभः प्रथम इति शेषः । तथाच स्वसाहित्येन षड्विधत्वं ज्ञातव्यम् । ''स्त्रीरूपः'' इत्यनेन स्त्रीलिङ्गोप-पत्तिरुक्ता। एवमुत्तरत्रापि।

### उपनिषत्

*भगवतः पादचतुष्टयविवृतिः*

**.......... तदेतदृचाऽभ्यनूक्तम्[१] ।। ५ ।।**

**तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ।। ६ ।।**

### भाष्यम्

**भिन्नपादः[२] सर्वजीवास्तस्य सादृश्यमात्रतः ।**
**स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः ।।**
**नारायणो वासुदेवो वैकुण्ठ इति ते त्रयः ।**

---

१.'ऋचाऽभ्युक्तम्' ह. २. 'भिन्नपादाः' क.

**अनन्तशयनं चैव तथाऽनन्तासनं हरेः ॥**

**बहुलक्षोच्छ्रिते नित्ये विमाने संस्थिते यतः[१] ।**

**चित्प्रकृत्यात्मनि ततो दिवीति कथितं[२] श्रुतौ ॥**

**लोकत्रयविवक्षायां परतो लक्षयोजनात् ।**

**[३]सर्वं द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः ॥**

**दिवः परश्च भगवान् सप्तलोकविवक्षया ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवमनुवादकं वाक्यं व्याख्यायेदानीं ''चतुष्पदा''इति विधायकांशं ''पादोऽस्य सर्वा भूतानि'' इति वक्ष्यमाणमन्त्रानुसारेण व्याचष्टे– ''पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि'' इति मन्त्रम् अस्य पादः सर्वाणि भूतानि तेजोबन्नादीनि स्थावरजङ्गमानि वा त्रिपात् । त्रयः पादा अस्य सोऽयम् अमृतं पुरुषाख्यं समस्तस्य गायत्र्यात्मनो दिवि द्योतनवति स्वात्मन्यवस्थितमित्यप्रामाणिकव्याख्याननिरासाय सम्यग् व्याचष्टे– **भिन्नपाद[४]इत्यादिना** ॥ ''सर्वभूतानि''इत्यस्यार्थः – **सर्वजीवा इति** ॥ ननु पाद इति चतुर्थो भागः, तथाच कथं भिन्नत्वे पादत्वमित्यत आह– **तस्येति** ॥ तथाच सर्वजीवानां तस्य भगवतः ज्ञानादिना सादृश्याद् गौणं पादत्वमिति भावः । ''त्रिपादस्यामृतं दिवि'' इत्यंशं व्याचष्टे – **स्वरूपपादा इति** ॥ अमृतशब्दार्थः – **स्वरूपेति** ॥ किंशब्दवाच्यास्त्रयः-

---

१.'विमाने नियतं स्थितः' क. । 'विमाने संस्थितं यतः' इति ह्.पाठे । २.'कथिते' ह् ३. 'स्थानद्वयं तद् विज्ञेयं' ह् । ४. मुद्रितपुस्तके, मातृकायां च 'भिन्नपाद इत्यादिना' इत्येव पाठो दृश्यते । परन्तु 'भिन्नपादा इत्यादिना' इति पाठेन भाव्यमिति भाति ।

पादा इत्यपेक्षायामाह – **नारायण इति** ॥ श्वेतद्वीपगो नारायणः अनन्तासनगो वासुदेवः वैकुण्ठस्थो वैकुण्ठ इति शब्दवाच्या इति शेषः । ननु वैकुण्ठस्य सत्यलोकोपरिस्थितत्वादस्तु वैकुण्ठस्य दिवि स्थितत्वं, नतु नारायणवासुदेवयोः । श्वेतद्वीपानन्तासनयोर्भूप्रदेशस्थितत्वादित्यतस्तद्घटयन्नाह – **अनन्तेति** ॥ तथाचशब्दौ परस्परसमुच्चये । हरेरनन्तशयनं च नारायणाख्यं तथाऽनन्तासनं वासुदेवाख्यं रूपं बहुलक्षोच्छ्रिते नित्ये चित्प्रकृत्यात्मनि विमाने यतः संस्थितं तत एव श्रुतौ ''दिवि''इति कथितमित्यन्वयः । नित्यत्वोपपादनायं ''चित्प्रकृत्यात्मनि'' इत्युक्तम् । ''विमाने'' इति जात्येकवचनम् । विमानयोरित्यर्थः । ननु विमानस्य बहुलक्षोच्छ्रितत्वेऽपि ततोऽपि बहुलक्षोच्छ्रितस्य स्वर्गस्यैव द्युत्वादनन्तशयनानन्तासनयोः कथं दिविस्थितत्वमित्यतस्तद्घटयन्नाह – **लोकेति** ॥ तथाच भूर्भुवः स्वरिति लोकत्रयविवक्षायां लक्षयोजनोच्छ्रितान्तरिक्षोपरितनानां श्वेतद्वीपानन्तासनवैकुण्ठानां द्युत्वात् तस्थं रूपत्रयं दिवि संस्थितमित्युपपन्नमिति भावः । ननूक्तरीत्या रूपत्रयस्य दिवि स्थितत्वेऽपि ''अथ यदतः परो दिवः'' इत्यादिनोच्यमानं दिवःपरत्वं कथमित्यत आह– **दिव इति** ॥ भगवान् त्रिरूपः । एतच्च तद्वाक्यव्याख्यावसर एव स्पष्टं करिष्यति ।

## उपनिषत्

*प्रकारान्तरेण भगवतः पादचतुष्टयविवृतिः*

**यद्वैतद् ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥**

**अयं वाव स योऽयमन्तःपुरुष आकाशो यो वै सोऽन्तःपुरुष**

आकाशः ॥ ८ ॥

अयं वाव स योऽयमन्तर्हृदय आकाशो यो वै सोऽन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीꣳ श्रियं लभते य एवं वेद ॥ ९ ॥ १२ ॥

भाष्यम्

परं ब्रह्मेति भगवान् सर्वगः सम्प्रकीर्तितः ॥
स एव जीवस्य बहिर्हृदयाकाश आस्थितः ।
योऽयं हृदयगः सोऽथ जीवान्तर्व्याप्य संस्थितः ॥
व्याप्तो जीवान्तरे योऽसौ स जीवहृदि संस्थितः ।
एवं चापि चतुष्पात्त्वं वासुदेवस्य कीर्तितम् ॥
स एव पूर्णो भगवानप्रवर्त्यस्तथाऽखिलैः ।
अन्यैः प्रवर्त्यते योऽसौ स प्रवर्तीति गीयते ॥
अप्रवर्त्यो हरिर्नित्यस्वतन्त्रत्वात्[1] सदैव च ।
[2]अस्य प्रवृत्तिर्नास्तीति सोऽप्रवर्तीति कीर्तितः ॥
पूर्णा स्वतन्त्रा श्रीश्चास्य वेत्तुर्भवति शाश्वती ।
साक्षाद् गायत्र्युपासायां[3] योग्य एकश्चतुर्मुखः ॥
तस्मादनन्यतन्त्राऽस्य श्रीर्भवेन्नान्यथा क्वचित् ।
विष्णुतन्त्रत्वमस्य स्यात् परेषां तस्य तन्त्रता ।
यथाक्रमेण तन्त्रत्वं योग्यताक्रमतो भवेत् ॥' इति सत्तत्त्वे [4] ।

---

१.'नित्यः स्वतन्त्रत्वात्' ह. २.'अस्मिन्' ह. ३.'गायत्र्युपासायाः' ह.
४.'इति च सत्तत्त्वे'क.

## पदार्थकौमुदी

### भाष्यार्थः

''यद्वैतद्ब्रह्मेतीदं वाव तत्''इत्यादि ''हृदय आकाशः'' इत्यन्तं वाक्यं प्रसिद्धाकाशप्रतिपादकमिति प्रतीतिनिरासाय प्रकारान्तरेण गायत्रीनामकस्य भगवतः चतुष्पात्त्वप्रतिपादनपरतया व्याचष्टे – **परं ब्रह्मेति** ॥ श्रौतब्रह्मशब्देन परमेव विवक्षितमित्याशयेन ''परम्'' इत्युक्तम् । सर्वगः शरीरान्तर्बहिश्च व्याप्त इत्यर्थः । बृहधातोर्देशतोऽपि वृद्ध्यभिधायकत्वात् । तथाच चतुर्षु रूपेष्विदंप्रथममिति भावः । द्वितीयं रूपं दर्शयितुं प्राप्तं ''इदं वाव तद् योऽयं बहिर्धा पुरुषादाकाशः'' इत्यंशं व्याचष्टे – **स एवेति** ॥ वावेत्यस्यार्थः – **एवेति** ॥ स एव सर्वग एवेत्यनेन रूपभेदशङ्कानिरासः । हृदयाकाशे जडशरीरगहृदयाकाशे ।

तृतीयरूपप्रदर्शकं ''यो वै स बहिर्धा पुरुषादाकाशः'' इत्यादिकं व्याचष्टे – **योऽयमिति** ॥ चतुर्थरूपाभिधायकं ''यो वै सोऽन्तः पुरुष आकाशः'' इत्यादिवाक्यं व्याचष्टे – **व्याप्तो जीवान्तर इति** ॥ जीवहृदि जीवस्वरूपहृदि । निगमयति – **एवं चेति** ॥ चोऽवधारणे । चतुष्पात्त्वमेवेति सम्बध्यते । तेन परोक्ताकाशत्रैविध्यप्रतिपादनपरत्वनिरासः । ''तदेतत् पूर्णमप्रवृत्ति''इति वाक्यं तदेतद् हार्दं नभः । पूर्णं अपरिच्छिन्नम् । अप्रवृत्ति अनुच्छित्तिधर्मकमित्यप्रामाणिकव्याख्याननिरासाय सम्यग् व्याचष्टे – **स एवेति** ॥ यः प्राक् षड्विधत्वादिना निरूपितः पूर्णः देशतः कालतो गुणतश्च । यद्वा स एव यो जीवस्वरूपहृदयग इत्यर्थः । अत एव ''यो वै सोऽन्तर्हृदय आकाशस्तदेतत् पूर्णम्'' इत्यव्यवहितरूपस्यैव पूर्णत्वादिकथनमुपपद्यते । पूर्वव्याख्याने त्विदमुपलक्षणत्वेनोक्तमिति ज्ञातव्यम् ।

अन्यकर्तृकप्रवृत्तिविषयत्वाभावः कथमप्रवृत्तिशब्दार्थ इत्यतस्तं दर्शयितुं तावत् प्रवृत्तिशब्दार्थमाह – **अन्यैरिति** ॥ कर्मणि प्रत्यय इति भावः । इदानीमप्रवृत्तिशब्दार्थं सहेतुकमाह – **अप्रवर्त्य इति** ॥ ततश्चा-प्रवृत्तीति शेषः । हरिश्च सदाऽप्रवर्त्य एव नित्यस्वतन्त्रत्वात् । ततश्चाप्रवृत्ति इति गीयत इति योजना । प्रवर्तयतीति प्रवृत्तिः प्रवर्तकः । न विद्यते प्रवृत्तिः प्रवर्तको यस्य अप्रवृत्तिरिति कर्तर्येव प्रत्ययमभिप्रेत्य प्रकारान्तरेणा-प्रवृत्तिशब्दार्थमाह – **अस्येति** ॥ ''पूर्णामप्रवर्तिनीम्'' इत्यादिवाक्यं दृष्टफलमात्रप्रतिपादकमिति प्रतीतिनिरासाय व्याचष्टे – **पूर्णेति** ॥ योग्यतापेक्षया पूर्णा । अप्रवर्तनीत्यस्यार्थः – **स्वतन्त्रेति** ॥ स्वावरान-धीनेत्यर्थः । ''शाश्वती'' इत्यनेन मुक्तसम्बन्धीदं फलमिति सूचितम् । अन्यगतस्य शाश्वतत्वाभावात् ।

गायत्र्युपासायां सर्वेषामप्यधिकारसद्भावात् सर्वेषामपीदं फलं किं मुख्यम् ? नेत्याह – **साक्षादिति** ॥ मुख्यत इत्यर्थः । ''अनन्यतन्त्रा'' इत्यनेन स्वतन्त्रेत्युक्तं विवृतम् । अन्यथा अमुख्योपासकस्येतरस्य । नन्वनन्यतन्त्रेत्येतदयुक्तम् । चतुर्मुखश्रियोऽपि विष्णुतन्त्रत्वादित्यत आह– **विष्ण्विति** ॥ अस्य श्रिय इति शेषः । विष्णुशब्देन रमाऽप्युपलक्ष्यते । तथाच विष्णुव्यतिरिक्तस्वेतरानधीनत्वमेवानन्य-तन्त्रत्वं विवक्षितमिति न कोऽपि दोष इति भावः । नन्विदं रुद्रादि-साधारणम् अतः कथमस्यैव मुख्यमित्युक्तमित्यत आह – **परेषामिति** ॥ तस्य तन्त्रता तदधीनत्वम् । तथाच रुद्रादयो न विष्णुमात्रव्यतिरिक्त-स्वेतराधीनाः, ब्रह्माधीनताया अपि सत्त्वात् । अत उक्तं फलं तस्यैवेति भावः । तदपि रुद्रादिमानुषान्तानां नैकप्रकारेणेत्याह – **यथेति** ॥ परेषामिति निवर्तते । यथाक्रमेणेत्युक्तं क्रममेवाऽह – **योग्यतेति** ॥ यद्वा,

अस्तु ब्रह्मण फलं मुख्यम् । इतरेषां कथमित्यत आह– योग्यतेति ॥ भवेद् अत्रोक्तं फलमिति शेषः ।

भाष्यम्

ब्रह्मशब्दाच्च भगवानित्यवसीयते । पूर्णाप्रवृत्तित्वं च तस्मिन्नेव मुख्यम् । 'तावानस्य महिमा'इति मन्त्राच्च । 'पादोऽस्य विश्वा भूतानि'इति जीवानां चतुष्पादान्तर्भावात् 'भूतं यदिदं किञ्च'इति षड्विधान्तर्भूतं भूतं मत्स्याद्यवताररूपमेव ।

'द्वाविंशेष्ववतारेषु जीवोऽप्युक्तो यथा पृथुः ।
तथा पादेषु चतुर्षु सान्निध्याज्जीव ईरितः ॥
यथा कालः पुमान् व्यक्तं प्रकृतिश्च परस्य तु ।
विष्णो रूपाणि गण्यन्ते पररूपेण वै सह ॥
एवं भूतानि गण्यन्ते भिन्नान्यपि पदैः सह ।
मूर्तामूर्ते यथा रूपे ब्रह्मणस्तु तथैव च ।
भिन्नान्यपि तु भूतानि पदानि स्वपदैः सह ॥' इति प्राथम्ये ।

'सुदर्शनाख्यं स्वास्त्रं तु प्रायुङ्क्त दयितं त्रिपात् '
इति श्रीभागवते प्रयोगाच्च न जीवो भगवत्स्वरूपम् ।

'सुवर्चला यथा सूर्यपत्न्यंशः समुदाहृता ।
एवं जीवा भगवतो वस्तुभेदेऽपि सर्वदा ॥' इति च ॥१२ ॥

पदार्थकौमुदी

भाष्यार्थः

एवमेतां विद्यां ब्रह्मपरतया प्रमाणेन व्याख्यायेदानीं यत्परेण शब्दात्मिका गायत्र्येवात्र प्रतिपाद्येति व्याख्यातं तत्र बाधकं भगवत्परतासाधकं च दर्शयति – **ब्रह्मशब्दाच्चेति** ॥ चशब्दः पूर्वोदाहृतप्रमाणसमुच्चायकः । एवार्थो वा । भगवानेवेति सम्बन्धः। तेन परोक्तव्यावृत्तिः । अत्र हि ''यद्वैतद्ब्रह्म''इति गायत्र्यां ब्रह्मशब्दः श्रूयते । ब्रह्मशब्दमुख्यार्थश्च भगवानेवेत्यन्यत्रोपपादितम् । अतोऽत्र गायत्री भगवानेवेति निश्चीयत इति भावः । एवं भगवत्परतानिश्चायकश्रुतिमभिधायोपसंहारे तथाविधलिङ्गं चास्तीत्याशयेनाऽह – **पूर्णेति** ॥ अत्रोच्यमानमिति शेषः । मुख्यं यतोऽतो भगवनावेत्यवसीयत इति सम्बन्धः । विशेषानुक्तेः पूर्णत्वम् । अनन्यनियम्यत्वरूपमप्रवर्तित्वं च मुख्यमेव ग्राह्यम् । तच्च नान्यस्य प्रतिपाद्यत्वे सम्भवतीति भावः । समाख्यामप्याह – **तावानस्येति** ॥ पुरुषसूक्तस्य हि भगवत्परत्वमन्यत्रोपपादितम् । तत्समाख्यानाच्चात्रापि भगवानेव प्रतिपाद्य इत्यवसीयत इति भावः । एवमस्या विद्यायाः भगवत्परतामुपपाद्येदानीं यदुक्तं ''गायत्री वा इदं सर्वं भूतम्'' इत्यत्र भूतं मत्स्यादीति तत्समर्थनाय यत्परेणोक्तं भूतं प्राणिजातं स्थावरजङ्गमात्मकमिति तद्दूषयति – **पादोऽस्येति** ॥

अयं भावः । अत्र हि गायत्र्याः षड्विधत्वं चतुष्पात्त्वं चोच्यते – **भूतमिति** ॥ षड्विधान्तर्गतं तद् यदि प्राणिजातं विवक्षितं स्यात् तदा पुनरुक्तिप्रसङ्गः । स्थावरजङ्गमात्मकसर्वजीवानां ''पादोऽस्य विश्वा भूतानि'' इत्यनेन चतुष्पादान्तर्भावस्योक्तत्वात् । अतोऽत्र भूतशब्देन मत्स्याद्यावताररूपमेव ग्राह्यं न प्राणिजातमिति । स्यादेतत् । यदि ''पादोऽस्य''इत्यत्र जीवाः विवक्षिताः स्युः । नचैतदस्ति । तथात्वे

भिन्नानां तेषामभिन्नैस्त्रिभिस्सह पाठायोगात् । अतो न पौनरुक्त्य-मित्याशङ्कायां भिन्नानामभिन्नैः सह पाठं सदृष्टान्तं प्रमाणैरेवोप-पपादयति– **द्वाविंशेष्वित्यादिना** ॥ जीवोऽपि पृथुः हरेः सान्निध्याद् यथावतारेषूक्तो "ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः" इत्यादौ तथा पादेषु चतुर्षु जीवोऽपि ईरितः । "पादोऽस्य" इत्यत्र भिन्नानामभिन्नैः सहोक्तौ किं निमित्तमित्यपेक्षयामुक्तम्– **सान्निध्यादिति** ॥ पुमान् ब्रह्मा । पररूपेण मत्स्यादिना । पदैः स्वरूपभूतैः । ननु कुत एवं भिन्नानामभिन्नैः सहोक्तिः समर्थनीया, जीवा अप्यभिन्ना एवेति किं न स्यात् ? तथा सति पादशब्दोऽप्युपपन्नः स्यादित्यत आह– **सुदर्शना-ख्यमिति** ॥ यदि जीवोऽपि भगवत्स्वरूपभूत एव पादो विवक्षितः स्यात् तदा भागवतादौ त्रिपात्त्वेनोक्तिरनुपपन्ना स्यात् । अपितु चतुष्पात्त्वेनैव स्यात् । जीवस्य भिन्नत्वे तु स्वरूपभूतपादत्रयवत्त्वेन त्रिपात्त्वोक्ति-रुपपन्नेति भावः । चशब्दः "विंशेषु"[१] इत्यादिपूर्वोदाहृतवक्ष्यमाण-प्रमाणविरोधसमुच्चयाकः । नन्वेवं कथं पादशब्दप्रयोगोऽदृष्टत्वादित्यत-स्तत्पर्यायांशशब्दप्रयोगो भिन्नेऽपि दृष्ट इत्याह– **सुवर्चलेति** ॥ सूर्यपत्नी संज्ञा । भगवतः अंश उदाहृतः । सर्वदेति संसारे मुक्तौ चेत्यर्थः ॥ **द्वादशः खण्डः** ॥

## ततश्चायं खण्डार्थः

गायत्री वै गायत्रीनामा गायत्रीसंस्थस्त्रीरूपो हयशीर्षाख्यो भगवान् प्रसिद्धः । वक्ष्यमाणषाड्विध्यान्तर्गतमिदं प्रथमं रूपम् । तस्य द्वितीयं रूपमाह– **गायत्री वा इति** ॥ यदिदं किञ्च भूतं प्रभूतम् अनन्यापेक्षं पूर्णं

---

१. "द्वाविंशेषु" इति मुद्रितपुस्तकस्थ पाठः ।

मत्स्यादिसर्वान्तस्थितं च तदिदं सर्वं गायत्रीनामा भगवानेव । एवं च भूतशब्दाभिधेयं मत्स्यादि सर्वान्तस्थितं च द्वितीयं रूपमित्युक्तं भवति । अस्यैव तृतीयं रूपमाह – **वागिति** ॥ गायत्रीनामा भगवान् वाग्वै वाक्संस्थो वचनाद् वाङ्नामा स्त्रीरूपो हयशीर्षाख्य एव । नतु तद्भिन्न इत्यर्थः । वाङ्नामकस्य भगवद्रूपत्वं कुत इत्यतस्तल्लक्षणयोगादित्याह – **वाग्वा इति** ॥ इदं सर्वं भूतं प्राणिजातं वाग्वै वाङ्नामकभगवदधीनमेव । ''यदधीना यस्य सत्ता तत् तदित्येव भण्यते'' इति वचनात् । वाचा हि प्रवर्तते निवर्तते च लोकः । सर्वप्रवर्तकत्वं च भगवल्लक्षणं प्रसिद्धमेवेति भावः । ननु हयशीर्षाख्यस्य गायत्रीसंस्थस्य गायत्रीशब्दवाच्यत्वं केन निमित्तेनेत्यपेक्षायामाह – **गायति चेति** ॥ वेदान् गायति निःसारयति प्रथमो वक्तेति यावत् । त्रायते च ''अखिलम्'' इति शेषः । इति गायत्रीति सम्बन्धः ॥ १ ॥

उक्तानुवादपूर्वकं चतुर्थं रूपमाह – **या वै सेत्यादिना** ॥ या वै सा गायत्री तत्संस्थः तन्नामा भगवान् सा इयं वाव, इयं खलु । इयं केत्यपेक्षायामाह – **येयमिति** ॥ पृथुत्वात् पृथिवीनामा पृथिवीसंस्थ-स्त्रीरूपो भगवान् । अस्यापि भगवद्रूपत्वं कुत इत्यतः सर्वाश्रयत्व-सर्वोत्तमत्वरूपतद्धर्मयोगादित्याह – **अस्यामित्यादिना** ॥ अस्यां पृथिवीसंस्थे स्त्रीरूपे भगवति भूतं प्राणिजातं नातिशीयन्ते नातिवर्तन्ते । तदपेक्षया नीचा इति यावत् । भगवल्लक्षणत्वेन प्रसिद्धमिदं धर्मद्वय-मस्यामपि प्रसिद्धमिति दर्शयितुं हिशब्दः ॥ २ ॥

उक्तमनुवदंस्तदभिन्नपञ्चमं रूपमाह – **या वा इत्यादिना** ॥ या सा पृथिवी वै पृथिवीनाम्नी प्रसिद्धा सा इयं वाव, इयं खलु । इयमित्युक्तमेव विशदयति – **यदिदमिति** ॥ अस्मिन् प्रत्यक्षसिद्धे पुरुषे जीवे यदिदं शरीरं सुखरतिरमणरूपत्वात् तन्नामकं भगवद्रूपम् । अस्यापि भगवद्रूपत्वं

पूर्ववदुपपादयितुमाह – **अस्मिन् हीति** ॥ इन्द्रियाश्रयत्वं सर्वोत्तमत्त्वं च भगवल्लक्षणं जीवान्तर्यामिणि प्रसिद्धमिति हिशब्दार्थः ॥ ३ ॥

उक्तानुवादेनास्य षष्ठं रूपमाह – **यद्वैतदिति** ॥ पुरुषे जीवे शरीरं शरीरशब्दाभिधेयं यत्तद्वै प्रसिद्धं भगवद्रूपं तद् इदं वाव, वक्ष्यमाणं खलु । तत्किं यदिदमस्मिन् पुरुषे जीवेऽन्तःस्वरूपहृदीति यावत् । विद्यमानं हृदयं हृद्ययनाद्धृदयनामकं भगवद्रूपम् । अस्याप्युक्तरीत्या भगवद्रूपत्वमुपपादयति – **अस्मिन् हीति** ॥ ४ ॥

एवं भगवतो गायत्रीभूतवाक्पृथिवीशरीरहृदयलक्षणं षड्विधत्वं निरूप्य तदनुवदंश्चतुष्पात्त्वमाह – **सैषेति** ॥ सैषा षड्विधा गायत्री चतुष्पदेति योजना । के ते चत्वारः पादाः? कुत्र च तिष्ठन्ति? किमेकप्रकाराः इत्याशङ्कानिरासाय स्वोक्तं भगवतश्चतुष्पात्त्वं ऋक्सम्मत्या दृढीकुर्वन् विशदयति – **तदेतदिति** ॥ तदेतद्भगवतश्चतुष्पात्त्वम् ऋचा मन्त्रेणाभि उक्तशङ्कात्रयमभितः उत्तरत्वेनेति यावत् । अनु आनुकूल्येनोक्तम् ॥ ५ ॥

तं मन्त्रं पठति – **तावानिति** ॥ अस्य पुरुषस्य महिमा तावान् पूर्वोक्तः । न केवलमेतावान् पुरुषः । किन्तु ततः पूर्वोक्तमहिम्नोऽपि ज्यायान् । अधिकमाहात्म्योपेतः । तदेव माहात्म्यं दर्शयति– **पाद इत्यादिना** ॥ अस्य पुरुषस्य सर्वा सर्वाणि भूतानि जीवाः पादः भिन्नांशाः । ज्ञानादिना तत्सादृश्यात् । अमृतं स्वरूपभूतं त्रिपात् पादत्रयं नारायणवासुदेववैकुण्ठसञ्ज्ञं दिवि भूर्भुवस्सुवरिति लोकत्रयविवक्षायां लक्षयोजनोच्छ्रितान्तरिक्षोपरितनेषु द्युसञ्ज्ञिकेषु श्वेतद्वीपानन्तासनवैकुण्ठेषु तिष्ठतीति शेषः । इति उक्तमित्यन्वयः ॥ ६ ॥

गायत्रीनाम्नः प्रकारान्तरेण चतुष्पात्त्वमाह – **यद्वैतदित्यादिना** ।। तद् गायत्रीनामकं भगवद्रूपं ब्रह्म वै सर्वगं खलु । तथाचेदं [१] सर्वशरीरान्तर्बहिर्व्याप्तं रूपं प्रथमम् । एतदनुवदन् द्वितीयं रूपं दर्शयति – **यद्वैतमिति** ।। यत्तद् ब्रह्म सर्वगं वै प्रसिद्धं तद् इदं वाव इदं खलु । इदं किम् ? योऽयं पुरुषात् जीवस्वरूपाद् बहिर्धा बहिः जडहृदये आसमन्तात् काशत इत्याकाशनामाऽस्ति । अनेन जीवस्य बाह्यहृदयगं रूपं द्वितीयं रूपमित्युक्तं भवति । एतदनुवादपूर्वकं तृतीयं रूपमाह – **यो वा इत्यादिना** ।। ७ ।।

यो बाह्यहृदयगः । सः अयम् । अयं वाव कः ? योऽयमन्तःपुरुषे जीवान्तर्व्याप्य संस्थितः आकाशः आकाशनामा । पूर्वानुवादपुरःसरं तुरीयं पादमाह – **यो वा इति** ।। अन्तःपुरुषे जीवान्तर्व्याप्तः स आकाशः आकाशनामा ।। ८ ।।

अयं वाव कोऽयम् ? योयमन्तर्हृदये जीवस्वरूपहृदि संस्थितः आकाशः आकाशनामा । अस्य महिमानमाह– **यो वा इति** ।। स यो वै अन्तर्हृदये जीवहृद्गतः आकाशनामा तदेतत्पूर्णं देशतः कालतो गुणतश्च । अप्रवृत्ति अन्यैः प्रवर्त्यं यत् तत् प्रवृत्ति न प्रवृत्ति अप्रवृत्ति[२] । अथवा न विद्यते प्रवृत्तिः प्रवर्तको यस्य तदप्रवृत्ति । एतद् उक्तसर्वरूपसाधारणम् । उपलक्षणत्वेन चरमस्योक्तमिति ज्ञातव्यम् । एतद्विद्यावेत्तुः फलमाह– **पूर्णामिति** ।। यश्चतुर्मुखपदयोग्यो मुख्योऽधिकारी एवमुक्तरीत्या गायत्रीनामानं भगवन्तं वेद सः पूर्णां स्वयोग्यतानुसारेण पूणाम् अप्रवर्तिनीं विष्णुव्यतिरिक्तस्वेतरानधीनां श्रियम् इह मुक्तौ च लभत इत्यर्थः । इतरे च

---

१. 'शरीरान्तर्बहिर्व्याप्तं' इति मुद्रितपुस्तकस्थः पाठः । २. ''अत्र प्रवर्ति अन्यैः प्रवर्त्यं यत् तत् प्रवर्ति न प्रवर्ति अप्रवर्ति । अथवा न विद्यते प्रवृत्तिः प्रवर्तको यस्य तदप्रवर्ति ।'' इति पाठेन भाव्यमिति भाति ।

स्वस्वयोग्यतानुसारेण श्रियं लभन्त इत्यपि द्रष्टव्यम् ॥ ९ ॥

॥ इति द्वादशः खण्डः ॥

## उपनिषत् (खण्डः -१३)

### *(हृदयनामकपरमात्मनो द्वारपालकाः)*

*पूर्वद्वारपालकः सूर्यः*

**तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत् तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥**

*दक्षिणद्वारपालकश्चन्द्रः*

अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद ॥ २ ॥

*पश्चिमद्वारपालको वह्निः*

अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद् ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्व्यन्नादो भवति य एवं वेद ॥ ३ ॥

*उत्तरद्वारपालक इन्द्रः*

अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत् कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान् व्युष्टिमान् भवति य एवं वेद ॥ ४ ॥

*ऊर्ध्वद्वारपालकः प्रधानवायुः*

अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्त-देतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान् भवति य एवं वेद ॥ ५ ॥

*द्वारपालकोपासनायाः फलम्*

ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ॥ ६ ॥
अस्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद । अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः ॥ ७ ॥

यत्रैतदस्मिंच्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव [१]ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ ८ ॥ १३ ॥

भाष्यम्

'प्राणाभिमानी चक्षुश्च सूर्य एव ह्युदाहृतः ।
तेजोऽन्नाद्यभिमानी च प्राग्द्वाराधिपतिर्हरिः[२] ॥

---

१. 'प्रज्वलतः' क. २. 'तेजोऽनाद्यभिमानी च प्रागुद्वाराधिपतिः' प्र.पा.

दक्षिणाधिपतिस्सोमो व्यानः श्रोत्राभिमानवान्[१] ।
यशोलावण्यरूपश्च पश्चिमद्वारपस्तथा ॥
वागपानात्मको वह्निर्ब्रह्मतेजोऽन्नदेवता ।
उत्तरद्वारपस्त्विन्द्रः समानो मनआत्मकः[२] ' ॥
कीर्त्यैश्वर्यात्मको नित्यमूर्ध्वद्वारप एव च ।
प्रधानवायुराकाशः सार्वज्ञादुन्नतेस्तथा ॥
उदान ऊर्जितत्वात् स ओजः पूर्णत्वतो महः ।
परस्य ब्रह्मणस्त्वेते पुरुषाः पञ्च कीर्तिताः ॥
द्वारपा हृदये चैव विष्णुलोके च सर्वदा ।
[३]आन्तरद्वारपा ह्येते जयाद्या बाह्यतः स्मृताः ॥
एवमेतानुपास्यैव तद्गुणांशांशभाग् भवेत् ।
विष्णुलोकं तथा गच्छेद् भवेदपि सुसन्ततिः ॥

## पदार्थकौमुदी

### भाष्यार्थः

"यदिदमस्मिन् पुरुषे हृदयम्" इति "योऽयमन्तःपुरुष आकाशः" इति हृत्पुरगत्वेन प्रकृतस्य परब्रह्मणः स्वस्वोपासनानुरूपफलप्रद-द्वारपालकत्वरूपो महिमा निरूप्यते– **तस्य हवा इत्यादिना** ॥ अत्र "प्राङ्सुषिः स प्राणस्तच्चक्षुः" "दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं" "प्रत्यङ्सुषिः सोऽपानः सा वाक्" "उदङ्सुषिः स समानस्तन्मनः"

---

१.'व्यानश्रोत्राभिमानवान्' हृ. २.'समानमनआत्मकः' हृ. ३.'अन्तरद्वारपाः' हृ.

''ऊर्ध्वः सुषिः स उदानः स वायुः''इति वाक्यपञ्चकेन क्रमेण तत्तत्सुषि-प्राणव्यानापानसमानोदानानां चक्षुःश्रोत्रवाङ्मनसाकाशाभेदः आदित्य-चन्द्राग्निपर्जन्यवाय्वभेदश्चोच्यत इति प्रतीयते । नच तत्सम्भवति । बाधात् । अतो यथावत् खण्डं प्रमाणेनैव व्याचक्षाणस्तावदादिवाक्यं व्याचष्टे – **प्राणेति** ॥ प्राणः श्वासरूपजडवायुवृत्तिः । एवमुत्तरत्र व्यानादिपदेन तत्तन्नामकजडवायुवृत्तिरेव ग्राह्या । चक्षुस्तदभिमानी । ''स योऽस्य प्राङ्सुषिः'' इत्यस्य तात्पर्यम् – **प्रागिति** । अस्येत्यस्यार्थः – **हरेरिति** ॥ ''अथ योऽस्य दक्षिणः सुषिः स व्यानः'' इति द्वितीयं वाक्यं व्याचष्टे – **दक्षिणेति** ॥ दक्षिणाधिपतिः दक्षिणद्वाराधिपतिः । श्रीरित्य-स्यार्थः – **लावण्यरूप इति** । ''अथ योऽस्य प्रत्यङ्'' इत्यादितृतीयं वाक्यं व्याचष्टे – **पश्चिमेति** ॥ वागपानात्मकः वागापानाभिमानी । ब्रह्मवर्चसमित्यस्यार्थः – **ब्रह्मतेज इति** ॥ वेदाध्ययनलब्धं तेज इत्यर्थः । अन्नमन्नाद्यं देवताऽभिमानिनी । अथ ''योऽस्योदङ्सुषिः'' इति चतुर्थं वाक्यं व्याचष्टे – **उत्तरेति** ॥ पर्जन्यशब्दार्थः – **इन्द्र इति** ॥ आत्मकोऽभिमानी । व्युष्टिशब्दार्थः – **ऐश्वर्येति** ॥ कीर्त्यैश्वर्यात्मकत्वं न तदभिमानित्वमात्रं किन्तु तद्रूपत्वमपीति भावेन ''नित्यम्'' इत्युक्तम् । मुक्तावप्यनुवर्तमानस्य स्वरूपत्वात् । अत एव तेजोन्नाद्येष्वपि एवमेव विवक्षितमिति ध्येयम् । अथ ''योऽस्योर्ध्वः सुषिः'' इत्यादि पञ्चमं वाक्यं व्याचष्टे – **ऊर्ध्वेति** ॥ ऊर्ध्वद्वाराधिपश्च प्रधानवायुरेव । अत्रापि वायोराकाशोदानाद्यभिमानित्वेनैवाऽकाशादिशब्दवाच्यत्वमित्यभिप्राये-ण तान् शब्दांस्तस्मिन्निर्वक्ति– **आकाश इत्यादिना** ॥ एवमादि-त्यचन्द्राग्नीन्द्रेषु प्राणादिव्यानाद्यपानादिसमानादिशब्दा निर्वक्तव्याः ॥

''ते वा एते पञ्च ब्रह्मपुरुषाः'' इति वाक्यं ब्रह्मणश्चतुर्मुखस्य पुरुषाः

वेदपुरुषा इति वाऽन्यथाप्रतीतेर्यथावद् व्याचष्टे– **परस्येति** ॥ ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वान्मुख्यार्थस्यैव च ग्राह्यत्वादिति भावः । षष्ठ्या लब्धमर्थं दर्शयति– **द्वारपा इति** ॥ स्वर्गस्य लोकस्य द्वारपा इत्येतत्तात्पर्यमाह– **विष्णुलोक इति** ॥ सर्वदैव । ननु विष्णुलोके जयादेरेव द्वारपत्वप्रसिद्ध्या कथमेतेषां द्वारपत्वमत आह– **आन्तरेति** ॥ बाह्यतः द्वारपा इति बुद्ध्या विविक्तमनुवर्तते ।

''तेजस्व्यन्नादो भवति'' । ''श्रीमान् यशस्वीभवति'' । ''ब्रह्मवर्चस्व्यन्नादो भवति'' । ''कीर्तिमान् पुष्टिमान् भवति'' । ''ओजस्वी महस्वान् भवति'' इति फलप्रतिपादकवाक्यपञ्चकस्य तत्तद्वारपसमानमेव तेजआदिकं तत्तदुपासकानामित्यन्यथाप्रतीतिनिरासाय तात्पर्यमाह – **एवमेतानिति** ॥ ''स य एतानेवम्'' इति वाक्यं प्रसिद्धस्वर्गलोकप्राप्तिपरतानिरासाय व्याचष्टे – **विष्णुलोकमिति** ॥ स्वरूपभूतरमणज्ञानात्मकत्वात् स्वर्गशब्दो विष्णुलोकपर इति भावः । शूरपुत्रकत्वप्रतीतिनिरासाय वीर इत्यस्य तात्पर्यमाह – **सुसन्ततिरिति** ॥

भाष्यम्

**योऽसौ वैकुण्ठगो विष्णुः सप्तलोकोपरिस्थितः ।**
**स एव सर्वलोकेषु विश्वतो ब्रह्मणस्तथा ॥**

**उच्चेषूत्तमलोकेषु तथा प्रत्यवरेषु च ।**
**पुरुषेषु च सर्वेषु स एकः संव्यवस्थितः ॥**

**प्राणसंस्थस्स वै विष्णुः प्राणोऽग्नौ संव्यवस्थितः ।**
**स्पर्शेन दृश्यते चाग्निस्तद्दृष्टिरिव सा ततः ॥**

**स प्राणः स्तौति तं विष्णुं सा स्तुतिः श्रूयते सदा ।**

**कर्णौ पिधाय तद्विद्वान् दिव्यचक्षुः सुकीर्तिमान् ।**
**मुक्तो भूत्वा भवेद् यस्मादुपासीतैव तं ततः ॥'इति संस्तत्त्वे[१]।**

## पदार्थकौमुदी

### भाष्यार्थः

"त्रिपादस्यामृतं दिवि" इत्यनेन नारायणादिमूर्तित्रयस्य श्वेतद्वीपानन्तासनवैकुण्ठाख्यद्युस्थितत्वमुक्तम् । तस्यैव दिवः परत्वादिरूपं माहात्म्यं तदधिष्ठातानां च श्वेतद्वीपादीनां विश्वतः पृष्टत्वादिनेतरलोकवैलक्षण्यं तस्य भेदशङ्कानिरासाय हृद्गतेनैक्यं च प्रतिपादयितुं "अथ यदतः परः" इत्यादिवाक्यं प्रवृत्तम् । तत्तथाऽप्रतीतेर्व्याचष्टे – **योऽसावित्यादिना** ॥ यदित्यनेन प्रकृत द्युस्थितपरामर्श इति दर्शयितुं "वैकुण्ठगः" इत्युक्तम् । वैकुण्ठस्य द्युत्त्वेनोक्तत्वात् । उपलक्षणं चैतत् । श्वेतद्वीपानन्तासनयोरपि द्युत्त्वेनोक्तत्वात् तद्गतौ नारायणवासुदेवावपि ग्राह्यौ । "दिवः परः" इत्यनेनोक्तं दिवःपरत्वं वैकुण्ठस्योपपादितुमुक्तम् – **सप्तलोकेति** ॥ एतच्चोत्तरत्र स्पष्टं भविष्यति । नारायणवासुदेवयोरपि दिवःपरत्वमग्रे दर्शयिष्यति । स एव त्रिरूपो भगवान् । सर्वत इत्यस्यार्थः – **सर्वेषु लोकेष्विति** ॥ निर्धारणे सप्तमी । अस्या "उच्चेषु"इति सम्बन्धः । "विश्वतः" इत्यनूद्य "ब्रह्मणः" इति व्याख्यानम् । पृष्ठेष्वित्यस्यार्थः – **उच्चेष्विति** ॥ उत्तमेष्वित्यस्यार्थः – **उत्तमलोकेष्विति** ॥ अनुत्तमेष्वित्यस्यार्थः – **प्रत्यवरेषु चेति** ॥ चोऽवधारणे । एक इत्यनेन सम्बध्यते । "यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इत्यस्य तात्पर्यम्– **पुरुषेषु च सर्वेष्विति** ॥

---

१. 'उपासीतैव सन्ततमिति सत्तत्त्वे' क.

तथाचैवं योजना। योऽसौ वैकुण्ठगः यश्च श्वेतद्वीपानन्तासनगो विष्णुः स एव सर्वलोकेषु मध्ये उच्चेषु तथा विश्वतो ब्रह्मणः उच्चेषु उत्तमलोकेषु सर्वेषु पुरुषेषु च संव्यवस्थितः सच एक एवेति । ऐक्यं च ''इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः'' इत्यनेनोक्तमिति ज्ञातव्यम्। प्रकृत-सर्वलोकगमनूद्य तस्य पुरुषान्तःस्थितत्वविधानात् । भगवतः उक्त-पुरुषान्तःस्थितत्वे प्रमाणप्रदर्शनाय ''तस्यैषा दृष्टिः'' इत्यादिवाक्यं तद् उष्णिमाऽग्नेर्धर्मोऽतस्तद्दृष्टिः कथं भगवत्प्रमापिकेत्याशङ्कामपाकुर्वन् व्याचष्टे – **प्राणसंस्थ इति** ॥ वैशब्दश्चशब्दार्थः । यतः स विष्णुः प्राणसंस्थः प्राणश्चाग्नौ संव्यवस्थितः अग्निश्च स्पर्शेन त्वगिन्द्रियेण दृश्यते ततः सा तद्दृष्टिरिव अग्न्याश्रितप्राणगविष्णुदृष्टिरिवेत्यर्थः।

तत्रैव प्रमाणान्तरप्रतिपादकं ''तस्यैषा श्रुतिः'' इत्यादिवाक्यम-प्रतीतेर्व्याचष्टे – **स प्राण इत्यादिना** ॥ पिधाय विद्यमानेन । तथाच प्राणकर्तृकस्तुतिरूपश्रुतिविषयतया हृदि भगवत्सिद्धिः । नहीतरवदधि-कार्युत्तमप्राणस्यापि भगवदसन्निधौ तत्स्तुतिरुपपन्नेति भावः । ''चक्षुष्यः श्रुतो भवति'' इति वाक्यमैहिकमात्रपरमित्यन्यथाप्रतीतिनिरासाय व्याचष्टे – **तद्विद्वानिति** ॥ तत् पुरुषान्तर्विद्यमानं ज्योतिरुक्तरीत्या दृष्टं श्रुतं चेत्येतत्। चक्षुष्य इत्यस्यार्थः – **दिव्यचक्षुरिति** ॥ अनेन चक्षुष्यो दर्शनीय इति व्याख्यानमप्रामाणिकमिति ज्ञातव्यम्। ''यस्मादुपासीत'' इत्यनेन य एवं वेद स चक्षुष्यादिर्भवतीति यस्मात् तस्मादुपासीतेति हेतुहेतुमद्भावेन योजनोक्ता।

## भाष्यम्

**'दिक्षु यानाद् यशो व्याप्तं कीर्तिः प्रत्यक्षतः स्तुतिः' इति शब्द-निर्णये ।**

सर्वतः पृष्ठेषु सर्वत उच्चेषु वैकुण्ठक्षीरसागरानन्तासनादिषु विश्वतो ब्रह्मणोऽप्युच्चेषु ॥ तत उत्तमोऽन्यो[1] नास्तीत्यनुत्तमाः । सर्वतः स्वयमुत्तमाः ।

'पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ।
अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरेः[2] ॥
व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ।
पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ॥
दिवीन्द्रसदनं चैव तत्परे तु दिवः परे ।
पृथिव्यां ब्रह्मणो मेरौ वैजयन्तेऽन्तरिक्षगम्[3] ।
[4] तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम् ।
तेभ्योऽनन्तासनाद्या यत्परतो विश्वतः परे ॥' इति सत्तत्त्वे ।

'निनदः समुद्रघोषः स्यान्नदथुर्मेघसम्भवः ' इति सत्तत्त्वे[5] ।

'चक्षुष्यश्चक्षुषि ब्रह्मण्येष यातीत्युपासकः ' इति च ॥१३ ॥

## पदार्थकौमुदी

### भाष्यार्थः

ननु ''तदेतत्कीर्तिश्च'' इत्यत्र यशःकीर्तिशब्दयोरेकार्थत्वात् ''तदेतच्छ्रीश्च यशश्च''इति प्रकृतयशःपदं विहाय कीर्तिपदोपादाने किं कारणमित्यतोऽर्थभेदं कारणमाह – **दिक्ष्विति** ॥ व्याप्तं यश इत्युच्यते । ''दिक्षु यानात्'' इति निर्वचनादित्यर्थः । ''विश्वतः पृष्ठेषु''इत्यादिकं प्रमाणेन

---

१.'तत उत्तमो नास्तीति' क. २.'स्थितो हरिः' क. ३.'जयन्ते त्वन्तरिक्षगम्' ह. ४.'तृतीयं सत्यलोकं च' क. ५.'इति च सत्तत्त्वे' क.

व्याख्यातमपि स्वयं विशदयन् ''अनुत्तमेषूत्तमेषु'' इत्येतत् प्रकारान्तरेण व्याचष्टे – **सर्वतः पृष्ठेष्वित्यादिना** ॥ आदिपदेनेतरेऽपि लोका ग्राह्याः । तेषु सर्वतः पृष्ठत्वादिकं छत्रिन्यायेनेति द्रष्टव्यम् । ततस्तेभ्यो लोकेभ्यः । अन्यलोकः । ननु सर्वतःपृष्ठत्वं वैकुण्ठस्यैव युक्तम् । नतु क्षीरसागरानन्तासनयोर्भूसम्बद्धयोरतः कथमेतदित्यतः कयाचिद् विवक्षयैतदुपपन्नमिति प्रमाणेनैवाऽह – **पृथिवीस्थेष्विति** ॥ तथाच सर्वतः पृष्ठत्वमनन्तासने पार्थिवसर्वलोकविवक्षया, अन्तरिक्षात्मकसर्वलोकविवक्षया श्वेतद्वीपे, व्यात्मकसर्वलोकविवक्षया च वैकुण्ठे उक्तमिति नानुपपत्तिरिति भावः ।

ननु ''अथ यदतः परो दिवः'' इति वाक्यं द्युस्थितमूर्तित्रयपरमिति व्याख्यातम् । तदयुक्तम् । द्युस्थितस्य दिवःपरत्वायोगात् । इत्यतस्तदपि विवक्षाभेदेनोपपन्नमिति प्रमाणेनैवाऽह – **पृथिव्यां द्यौरित्यादिना** ॥ तत्परे मेर्वादिभ्यः परे । तथाच पृथिव्यां महामेरोर्द्युत्वात् तत्परानन्तासनस्य दिवःपरत्वम्, आकाशे सूर्यमण्डलस्य द्युत्त्वात् तत्परश्वेतद्वीपस्य दिवःपरत्वं, दिवीन्द्रसदनस्य द्युत्वात् तत्परवैकुण्ठस्य दिवःपरत्वमुपपन्नमिति ज्ञातव्यम् । अत एव श्रुतौ ''अतो दिवः'' इत्युक्तम् । ननु सत्यलोकोच्चवैकुण्ठे विश्वतः पृष्ठत्वसम्भवेऽपि श्वेतद्वीपानन्तासनयोः कथं तदित्यतस्तदपि विवक्षाविशेषेणोपपन्नमिति प्रमाणेनैवाऽह – **पृथिव्यामित्यादिना** ॥ ब्रह्मणः सदनमित्यन्वयः । जयन्तं वैजयन्तम् । तथाच विश्वतः पृष्ठत्वं मेरुस्थब्रह्मसदनापेक्षयाऽनन्तासनस्य, अन्तरिक्षगवैजयन्तापेक्षया श्वेतद्वीपस्य, सत्यलोकगसदनापेक्षया वैकुण्ठस्य विवक्षितमित्यत्रापि नानुपपत्तिरिति भावः । ततः विश्वतः पर इत्युदिता इति शेषः । ''रथस्येव घोषो निनदः ऋषभकूजितमिव शब्दो नदथुरित्यप्रामाणिकं व्याख्यान-

मित्याशयेन स्वयं प्रमाणेनैव तदुभयं व्याचष्टे– **निनद इति** ॥ ''चक्षुष्यः'' इति ''दिव्यचक्षुः''इति व्याख्यातम् । तत्तेन कथं लब्धमित्यतः प्रमाणेनैव तन्निरुच्य दर्शयति – **चक्षुष्य इति** ॥ तथाच ब्रह्मद्रष्टृत्वाभिप्रायेणैव दिव्यचक्षुरिति तात्पर्यमुक्तमिति भावः ॥ ॥ खं० १३ ॥

॥ **ततश्चायं खण्डार्थः** ॥

तस्य ''यदिदमस्मिन्नन्तः पुरुषे हृदयम्'' इति प्रकृतस्य एतस्य ''योऽयऽमन्तःपुरुष आकाशः'' इत्युक्तस्य हृदयस्य हृद्ययनाद्धृदय-नामकस्य परब्रह्मणः पञ्च पञ्चसङ्ख्याका देवसुषयः । सुषिपदेन तत्रत्या द्वारपा लक्ष्यन्ते । तथाच देवभूताः सुषयो द्वारपा इत्यर्थः । अत एवाग्रे ''स्वर्गस्य लोकस्य द्वारपाः'' इत्येवोक्तिः । उपास्या इति शेषः । देवसुषयो देवनिर्गमद्वाराणीत्यप्याहुः । को देवः ? कस्मिन् द्वारे कथमुपासितः कीदृशं फलं प्रयच्छतीत्याकाङ्क्षायामाह – **स योऽस्य प्राङ्सुषिरित्यादिना** ॥ अस्य हार्दस्य परब्रह्मणः स यः प्राङ्सुषिः तत्स्थो द्वारपः स आदित्यः स प्राणः प्राणनामकजडवायुवृत्त्यभिमानी । तच्चक्षु-श्चक्षुरभिमानी । तदेतदादित्यरूपं तेजोऽन्नाद्यं प्रसिद्धतेजोऽन्नाद्य-भिमानीत्युपासीत । य एवं वेदोपासीत स तेजस्व्यन्नादो भवति । आदित्यगुणभूततेजःप्रभृत्यंशांशभाग् भवतीत्यर्थः ॥ १ ॥

दक्षिणः सुषिः तत्स्थो द्वारपः स चन्द्रमाः स च व्यानः । तन्नामक-जडवायुवृत्त्यभिमानी, तच्छ्रोत्रं तदभिमानी । तदेच्चन्द्रमसो रूपं श्रीर्लावण्यं यशः दिक्षु यातीति यशः सर्वत्र व्याप्तम् । तदुभयाभिमानीत्युपासीत । श्रीमान् यशस्वीभवति चन्द्रगुणभूतश्रीप्रभृत्यंशांशभाग् भवतीत्यर्थः । एव-मुत्तरत्रापि तत्तद्वारपोक्तगुणांशांशभाक्त्वं तत्तदुपासकानां द्रष्टव्यम् ॥२ ॥

प्रत्यङ्सुषिः तत्स्थो द्वारपः सोऽग्निः । सोऽपानोऽपानाभिमानी

सा वाग् वागिन्द्रियाभिमानी । तदेतदग्रे रूपं ब्रह्मवर्चसं वेदाध्ययनजातं तेजोऽन्नाद्यं प्रसिद्धं तदुभयाभिमानीत्युपासीत । शिष्टं पूर्ववत् ।। ३ ।।

उदङ्सुषिस्तत्स्थो द्वारपो यः स पर्जन्यामेन्द्र स समानस्तदभिमानी तन्मनः तदभिमानी । तदेतदिन्द्रस्य रूपं कीर्तिः प्रत्यक्षतः स्तुतिः । व्युष्टिरैश्वर्यं तदुभयाभिमानीत्युपासीत ।। ४ ।।

ऊर्ध्वः सुषिः तत्स्थो द्वारपो यः स वायुः प्रधानवायुः स उदानस्तदभिमानी उन्नतेरुदानशब्दवाच्यः । स आकाशः आकाशाभिमानी सार्वज्ञादाकाशनामा । तदेतद्वायो रूपम् ओजः तदभिमानी ऊर्जितत्वादोजःशब्दवाच्यं महस्तदभिमानी पूर्णत्वान्महःशब्दवाच्यमित्युपासीत । एवमादित्यचन्द्राग्नीन्द्राणामपि प्राणादिव्यानादिअपानादिसमानादिशब्दवाच्यत्वं द्रष्टव्यम् ।। ५ ।।

निगमयति – **ते वा इति ।।** ब्रह्मणः परब्रह्मणः हार्दस्य पुरुषाः भृत्याः द्वारपा इत्यर्थः । किं हृदयपुर्येव द्वारपाः ? नेत्याह– **स्वर्गस्य लोकस्येति ।।** स्वरूपभूतरमणज्ञानात्मकस्य विष्णोर्लोकस्य द्वारपाः । जयाद्याः बाह्यद्वारपाः, एते त्वान्तरद्वारपा इति ज्ञातव्यम् । एवं वेत्तुः फलमाह – **स य इति ।।** अस्य कुले वीरो जायते । सुसन्ततिर्भवति । स्वर्गं लोकं स्वरूपभूतरमणज्ञानात्मकं लोकं विष्णुलोकम् । ''य एतानेवं पञ्च'' इति पुनरुक्तिः । ''प्रतिपद्यते'' इत्युक्तफलान्तरविवक्षया ।

''त्रिपादस्यामृतं दिवि''इत्यनेन द्युस्थितत्वेनोक्तमूर्तित्रयस्य दिवःपरत्वादिरूपं माहात्म्यं तदधिष्ठितानां लोकानां च सर्वतः पृष्ठत्वादिनेतरलोकवैलक्षण्यं भेदशङ्कानिरासाय तस्यैव हृदयगतेनाभेदं च प्रतिपादयति – **अथ यदतः पर इत्यादिना ।।** अथ द्वारपोपास्तिकथनानन्तरं पुनर्भगवन्माहात्म्यमेवोच्यत इत्यर्थः । यत् श्वेतद्वीपा-

नन्तासनवैकुण्ठगतं मूर्तित्रयं तत्। अतो बुद्धिस्थतया विवक्षितायाः दिवः परः परम्। एतच्च भाष्ये स्पष्टम्। ज्योतिस्तेजोमयं विश्वतो ब्रह्मसदनेभ्यः पृष्ठेषु उच्चेषु सर्वतः सर्वलोकेभ्यः पृष्ठेषु उच्चेषु अनुत्तमेषु न विद्यते उत्तमलोको येभ्यस्तेषु स्वयमेवोत्तमेषु श्वेतद्वीपानन्तासनवैकुण्ठेषु दीप्यते प्रकाशते। यद्वा, अनुत्तमेषु प्रत्यवरेषु लोकेष्वित्यर्थः। अत्र विश्वतः पृष्ठत्वं सर्वतः पृष्ठत्वं च भाष्ये स्पष्टं तत्रैव द्रष्टव्यम्। तत् सर्वलोकेषु दीप्यमानं तेजः इदं वाव इदं खलु। इदं किम्? यदिदमस्मिन्नन्तःपुरुषे पुरुषहृदये ज्योतिरस्ति तत्। अथ पुरुषान्तस्तत्सद्भावे प्रमाणमाह – **तस्येति**॥ तस्य हृद्गतस्य परब्रह्मणः एषा दृष्टिः अयं साक्षात्कारः॥ ६-७॥

एषा का? यत्र यद् अस्मिन् शरीरे संस्पर्शेन शरीरसम्बद्धेन त्वगिन्द्रियेणोष्णिमानं विजानातीति एतत् एषा। अयं भावः। त्वगिन्द्रियेण तावच्छरीरगते वह्नावौष्ण्यं दृश्यते। वह्नौ च प्राणः प्राणे च भगवान्। अतः एषा दृष्टिस्तस्यैवेति। तत्रैव प्रमाणान्तरमप्याह– **तस्येति**॥ तस्य हृदयगतस्य भगवतः। एषा प्राणेन क्रियमाणा श्रुतिः स्तुतिरूपा पुरुषान्तःस्थितप्राणेन क्रियमाणस्तुतिविषयतयाऽत्र[१] परब्रह्मसिद्धिरिति भावः। काऽसौ श्रुतिरित्यतो येदानीमस्मदादिभिरपि श्रूयते सेत्याह– **यत्रेति**॥ यत्र यदा यामिति वा। कर्णावपि गृह्य वर्तमानः पुरुषः निनदमिव समुद्रघोषमिव। नदथुरिव नदथुमिव। मेघघोषमिव ज्वलतोऽग्नेर्घोषमिव च उपशृणोति। एतद् एषा एतादृशप्रमाण गम्यत्वेनोपासनाऽपि कर्तव्येत्याह– **तदेतदिति**॥ तदेतत् हार्दं ब्रह्म दृष्टं दृष्टमिव दृष्टलिङ्गानुमेयं

---

१. ''स्तुतिविषयतयाऽन्तः परब्रह्मसिद्धिः'' इति मातृकायां दृश्यते। क्वचित् ''स्तुतिविषयतया तत्र परब्रह्मसिद्धिः'' इत्यपि पाठो दृश्यते। पत्र. सं. ४३॥

श्रुतं स्तुतिरूपश्रुतिप्रतिपाद्यम् इत्युपासीत । एवमुपासकस्य फलमाह– **चक्षुष्य इति ॥** चक्षुषि ब्रह्मणि यातीति चक्षुष्यः दिव्यचक्षुः श्रुतः सुकीर्तिमान् भवति । मुक्ताविति शेषः । एवमुक्तप्रकारेण वेदोपास्ते । द्विरुक्तिर्विद्यावधारणार्था ॥ ८ ॥

॥ इति त्रयोदशः खण्डः ॥

## उपनिषत् (खण्डः -१४)

### *हर्युपासना*

**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥**

**मनोमयः प्राणशरीरो भारूपः सत्यकामः सत्यसङ्कल्प आकाश आत्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥**

### भाष्यम्

'इदं ब्रह्मातिसामीप्यात् सर्वं पूर्णगुणत्वतः ।
तच्च ब्रह्म जलान् साक्षाद् योऽसौ विष्णुर्जलेऽनिति[१] ॥
आनीदवातमिति यं वेदवागवदत् स्फुटम् ।
अप्रकेते तु सलिले ब्रह्मा नारायणो हि[२], सः ॥
इति शान्त उपासीत यस्माज्ज्ञानमयः पुमान् ।
क्रतुस्तु निश्चितं ज्ञानं[३] तद्वशः पुरुषोऽमृतौ ॥

१.'अनति' ह. २.'नारायणोऽपि सः' क. ३.'निश्चितज्ञानं' ह.

**तस्माद् विनिश्चितं ज्ञानं कुर्याद् विष्णौ महद्गुणे[१] ।**
**महाज्ञानात्मकत्वात्तु प्रोक्तो विष्णुर्मनोमयः ॥**
**यस्माद् बलशरीरोऽसावतः प्राणशरीरकः ।**
**आसमन्तात् प्रकाशात् स आकाशात्मा प्रकीर्तितः ॥**
**सर्वगन्धादिरूपश्च भोक्ता चैषां सदैव हि ।**
**इति निश्चयकृद् याति तमेव पुरुषोत्तमम् ॥' इति सद्गुणे ।**

## पदार्थकौमुदी

### भाष्यार्थः

हृद्गतस्यैवोपास्त्यन्तराणि दर्शयन् ''तद् यदिदमस्मिन्नन्तःपुरुषे ज्योतिः'' इति हृद्गतेन बहिष्ठस्यैक्यमुक्तम् । तद्धृद्गतस्याणुत्वेन बहिष्ठस्य व्याप्तत्वेन नोपपन्नमित्याशङ्कामपि हृद्गतस्य व्याप्तत्वोपपादनेन परिहरति – **सर्वं खल्वित्यादिना** ॥ तत्र सर्वं समस्तम् इदं जगन्नामरूपविकृतं प्रत्यक्षादिविषयं ब्रह्म । कथं सर्वस्य ब्रह्मत्वमित्यत आह– **तज्जलानि-तीति** ॥ तस्माद् ब्रह्मणो जातमतस्तज्जं, तथा तस्मिन्नेव ब्रह्मणि लीयतेऽतस्तल्लं, तथा तस्मिन्नेव कालेऽनिति प्राणिति चेष्टतेऽतोऽनित्येवं ब्रह्मात्मतया त्रिषु कालेषु विशिष्टम् । तद्व्यतिरेकेणासदतस्तदेवेद-मित्यादिपरकीयं व्याख्यानमप्रामाणिकं प्रमाणविरुद्धं चेत्याशयेन खण्डं प्रमाणेनैव व्याचष्टे – **इदं ब्रह्मेत्यादिना** ॥ ब्रह्मं सर्वान्तस्थत्वेनाति-सामीप्याददिमित्युच्यत इत्यर्थः । सर्वमित्युच्यते । तदित्यनूद्य ब्रह्मेति व्याख्यानम् । चोऽवधारणे । तेन तद्ब्रह्मैव जलान् न जगदिति परोक्त-व्यावृत्तिः ।

---

१. 'महागुणे' प्र.पाठः

ननु जगदपि ब्रह्मगं परम्परया जलानित्यत उक्तम् – **साक्षादिति** ॥ अव्यवधानेनेत्यर्थः । नात्र ब्रह्मशब्देनामुख्यार्थविवक्षेति दर्शयन् जलान् शब्दं निर्वक्ति – **योऽसाविति** ॥ यो विष्णुरसौ जलेऽनिति चेष्टते यतोऽतो जलानित्युच्यत इत्यर्थः । विष्णुर्जलेऽनितीति कुत इत्यतस्तत्र श्रुतिं प्रमाणयन्नाह – **आनीदवातमिति** ॥ तुशब्द एवार्थे । यं ''आनीद-वातम्'' इति वेदवाक् स्फुटं निरवकाशतयाऽवदत् स ब्रह्मैव । कथमित्य तोऽन्यस्मिन्नेतद्वाक्यतात्पर्यासम्भवादित्याशयेनोक्तम् – **अप्रकेतेऽपरि-मिते सलिल इति** ॥ नह्यगाधे चेतनप्रकृत्यात्मनि प्रलयजलेऽन्यस्य सुखेनावस्थानं सम्भवतीति ।

अयं मन्त्रार्थः । प्रलयकाले तदेकं सर्वोत्तमम् अवातं वातप्रेरणया विनैव स्वधया सुखेनैव, नतु सुखप्राप्त्याद्यर्थम् आनीत् अचेष्टत । तस्मादन्यत् परः परं किञ्चन नाऽस । तमश्चेतनप्रकृत्यात्मकमग्रे प्रलये आसीत् । यत्तमोऽप्रकेतमपरिमितं सलिलं भूत्वाऽऽसीत् तेनेदं सर्वं गूळ्हं गूहितमासीदिति । तत्रैव प्रमाणान्तरमप्याह – **नारायणोऽपीति** ॥ स विष्णुर्नारायणशब्दवाच्योऽपि इत्यर्थः । नारायणशब्दवाच्यश्च ''आपो नाराः'' इत्यादिना प्रलयार्णवशाय्येव प्रसिद्ध इति भावः ।

हृद्गतस्यैवोपास्त्यन्तरविधायकं ''अथ खलु क्रतुमयः पुरुषः'' इत्यादिवाक्यं तदप्रतीतेर्व्याचष्टे – **यस्मादित्यादिना** ॥ अनेन खलुशब्दो हेत्वर्थ इत्युक्तं भवति । अस्य तस्मादित्युत्तरेणान्वयः । हेतुहेतुमद्भावोप-पादनाय क्रतुमयत्वं विशदयितुं ''यथा क्रतुः''इत्यादिवाक्यम् । तस्य कर्मविशेषार्थत्वप्रतीतिनिवारणाय क्रतुशब्दार्थं दर्शयंस्तात्पर्यमाह– **क्रतुस्त्वति** ॥ तुशब्द एवार्थे । निश्चितं ज्ञानमेव, नान्यदिति । मृतौ मुक्तौ । तादर्थ्ये सप्तमी । स्वयोग्यज्ञानाधीनमुक्तिमानिति यावत् । '' स

क्रतुं कुर्वीत'' इत्यस्य तात्पर्यमाह– **तस्मादिति** ।। विष्णाविति शेषोक्तिः । तथाच पुरुषोऽधिकारी यस्मात् क्रतुमयः स्वयोग्यज्ञानानुसारिफलवान् तस्माद् विष्णौ क्रतुं स्वयोग्यतानुसारेण निश्चयज्ञानरूपोपासनां कुर्वीत । अन्यथा स्वयोग्यफलालाभादित्युक्तं भवति । ''महागुणे'' इत्यनेन ''मनोमयः'' इत्यादेरुत्तरग्रन्थस्योपासनाविषयविष्णुविशेषगुणप्रतिपादकत्वेन सङ्गतिरुक्तेति ज्ञातव्यम् । ''मनोमयः'' इत्यादिकमप्रतीतेर्मनोविकारित्वादिप्रतीतेश्च व्याचष्टे – **महाज्ञानेत्यादिना** ।। मयटः प्राचुर्यार्थत्वं स्वरूपार्थत्वं चेत्याशयेन ''महाज्ञानात्मकत्वात्''इत्युक्तम् । तुशब्दोऽवधारणार्थः । नतु मनोविकारित्वादिति । ''आ'' इत्यनुवादेन ''समन्तात्''इति व्याख्यानम् । अवशिष्टस्य तात्पर्यम् – **सर्वगन्धादिरूपश्चेति** ।। पुनरुक्तस्य ''सर्वकर्मा सर्वकामः''इत्यादेस्तात्पयम्– **भोक्तेति** ।। ''एतमितः प्रेत्य'' इत्यादेस्तात्पर्यमपेक्षितं पूरयन्नाह– **इतीति** ।। ''तमेव याति'' इति श्रुतौ शेषोक्तिः ।

## उपनिषत्

*भगवान् अणोरणीयान् महतो महीयांश्च*

**एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद् वा सर्षपाद्वा श्यामाकाद् वा श्यामाकतण्डुलाद् वा एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः ।। ३ ।।**

*भगवत्तत्वज्ञानिनो लभ्यफलम्*

**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽ-**

**वाक्यनादर एष म आत्माऽन्तर्हृदय एतद् ब्रह्मैतमितः प्रेत्याभिसम्भविताऽस्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माऽह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥ १४ ॥**

## भाष्यम्

**एकत्र सर्वगन्धादिना चिदानन्दात्मकसर्वगन्धादिरूपत्वमुच्यते । अन्यत्र तद्भोक्तृत्वम् ॥ १४ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

वाक्यद्वयस्य ''सर्वगन्धादिरूपश्च'' ''भोक्ता चैषाम्'' इति व्याख्यातत्वेऽपि तदेकस्यैव वाक्यस्यार्थद्वयप्रदर्शनमिति प्रतीयते । अतो विवच्य दर्शयति – **एकत्रेति** ॥ एकत्रादिवाक्ये । सर्वगन्धादिना तत्प्रतिपादकेन वाक्येन । प्राकृतगन्धादिरूपत्वेऽनित्यत्वं स्यादित्यत उक्तम्– **चिदानन्दात्मकेति** ॥ अन्यत्र चरमे वाक्ये । तद्भोक्तृत्वमुच्यत इत्यनुवर्तते । अतो न पौनरुक्त्यमिति शेषः ॥ खं० ॥ १४ ॥

### ॥ ततश्चायं खण्डार्थः ॥

ब्रह्म हृदयगतं यत्परं ब्रह्म । इदं हृदयगत्वादेवातिसमीपगम् । सर्वं पूर्णगुणम् । खल्वित्युक्तार्थप्रसिद्धिद्योतको निपातः । तज्जलानिति जलेऽनिति चेष्टत इति शान्तो भगवन्निष्ठबुद्धिः उपासीत । उपास्त्यन्तरमपि सहेतुकमाह – **अथ खल्वित्यादिना** ॥ अथोपास्त्यन्तरमारभ्यत इत्यर्थः । खल्विति हेत्वर्थे । पुरुषोऽधिकारी । क्रतुशब्दश्चोपासनापरपर्यायस्येत्थमेवेति निश्चयरूपज्ञानस्य वाचकः । अभिप्रेतहेतुहेतुमद्भावोपपादनायात्र विवक्षितं क्रतुमयत्वं दर्शयति – **यथा क्रतुरिति** ॥ यथा यादृशः क्रतुर्यस्य स

यथाक्रतुः । तथा तदनुरूपफलवान् । इतः अस्माल्लोकाद् देहाद् वा प्रेत्य मृत्वा भवति मुक्तौ स्वयोग्यज्ञानानुसारिफलवान् भवतीत्यर्थः । तथाच पुरुषो यस्मात् क्रतुमयः स्वयोग्यज्ञानानुरूपफलवान् तस्मात् स विष्णौ क्रतुं स्वयोग्यं निश्चयज्ञानं उपासनमिति यावत् । कुर्वीत कुर्यादित्युक्तं भवति ॥ १ ॥

एवं विहितोपासनायामुपसंह्रियमाणगुणान् दर्शयति – **मनोमय इत्यादिना** ॥ मनोमयो महाज्ञानात्मकः । प्राणशरीरो बलशरीरः । भारूपो दीप्तिरूपः । सत्यकामोऽवितथेच्छः । सत्यसङ्कल्पः सफलसङ्कल्पः । सङ्कल्पो नाम कर्मारम्भकालीनमनोवृत्तिविशेषः । आसमन्तात् काशत इत्याकाशः । काशनं चात्र ज्ञानं विवक्षितमिति न भारूप इत्यनेन पौनरुक्त्यमिति ध्येयम् । आत्मा आदानादिकर्ता । सर्वकर्मा तत्तन्नियामकतया सर्वकर्मकर्ता । काम्यन्त इति कामाः द्रव्याणि । गन्धरसशब्दौ गुणान्तरस्याप्युपलक्षकौ । सर्वमिदमभ्यात्तः प्राप्तः, सर्वमिदमभि अभितः आत्तो धृतः स्थित इति वा । न विद्यतेऽनुग्रहमन्तरेण वाक्यं यस्य सोऽवाक्यः । न विद्यते आदरः आश्चर्यं यस्य सः नादरः[१] । अवाक्यश्चासौ नादरश्च सोऽवाक्यनादरः । लौकिक इव निरर्थकवाक्यरहितोऽवाक्यः, नादरः आत्मसम्भावनारहित इत्यप्याहुः ॥ २ ॥

हृद्गतस्याणोर्महता बाह्येनैक्यमुपपादयितुं तस्याणुत्वमनूद्य महत्त्वमप्युपास्यमाह – **एष म इत्यादिना** ॥ य एषः मे हृदयेऽन्तरात्मा व्रीह्यादेरणीयान् अतिशयेनाणुः स एष मे हृदयेऽन्तरात्मा । पृथिव्यादिभ्यो ज्यायानत्यन्तस्थूल इत्यर्थः ॥ ३ ॥

अचिन्त्यैश्वर्येण लोकदृष्ट्या विरुद्धत्वेन दृश्यमानप्रामाणिक-

---

१. 'यस्य सो अनादरः' इति मातृकागतः पाठः । पत्र. सं-६७

**वाक्यनादर एष म आत्माऽन्तर्हृदय एतद् ब्रह्मैतमितः प्रेत्याभिसम्भविताऽस्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माऽह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥ १४ ॥**

## भाष्यम्

**एकत्र सर्वगन्धादिना चिदानन्दात्मकसर्वगन्धादिरूपत्वमुच्यते । अन्यत्र तद्भोक्तृत्वम् ॥ १४ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

वाक्यद्वयस्य ''सर्वगन्धादिरूपश्च'' ''भोक्ता चैषाम्'' इति व्याख्यातत्वेऽपि तदेकस्यैव वाक्यस्यार्थद्वयप्रदर्शनमिति प्रतीयते । अतो विवच्य दर्शयति – **एकत्रेति** ॥ एकत्रादिवाक्ये । सर्वगन्धादिना तत्प्रतिपादकेन वाक्येन । प्राकृतगन्धादिरूपत्वेऽनित्यत्वं स्यादित्यत उक्तम्– **चिदानन्दात्मकेति** ॥ अन्यत्र चरमे वाक्ये । तद्भोक्तृत्वमुच्यत इत्यनुवर्तते । अतो न पौनरुक्त्यमिति शेषः ॥ खं० ॥ १४ ॥

### ॥ ततश्चायं खण्डार्थः ॥

ब्रह्म हृदयगतं यत्परं ब्रह्म । इदं हृदयगत्वादेवातिसमीपगम् । सर्वं पूर्णगुणम् । खल्वित्युक्तार्थप्रसिद्धिद्योतको निपातः । तज्जलानिति जलेऽनिति चेष्टत इति शान्तो भगवन्निष्ठबुद्धिः उपासीत । उपास्त्यन्तरमपि सहेतुकमाह – **अथ खल्वित्यादिना** ॥ अथोपास्त्यन्तरमारभ्यत इत्यर्थः । खल्विति हेत्वर्थे । पुरुषोऽधिकारी । क्रतुशब्दश्चोपासनापरपर्यायस्येत्थमेवेति निश्चयरूपज्ञानस्य वाचकः । अभिप्रेतहेतुहेतुमद्भावोपपादनायात्र विवक्षितं क्रतुमयत्वं दर्शयति – **यथा क्रतुरिति** ॥ यथा यादृशः क्रतुर्यस्य स

यथाक्रतुः । तथा तदनुरूपफलवान् । इतः अस्माल्लोकाद् देहाद् वा प्रेत्य मृत्वा भवति मुक्तौ स्वयोग्यज्ञानानुसारिफलवान् भवतीत्यर्थः । तथाच पुरुषो यस्मात् क्रतुमयः स्वयोग्यज्ञानानुरूपफलवान् तस्मात् स विष्णौ क्रतुं स्वयोग्यं निश्चयज्ञानं उपासनमिति यावत् । कुर्वीत कुर्यादित्युक्तं भवति ॥ १ ॥

एवं विहितोपासनायामुपसंह्रियमाणगुणान् दर्शयति – **मनोमय इत्यादिना ॥** मनोमयो महाज्ञानात्मकः । प्राणशरीरो बलशरीरः । भारूपो दीप्तिरूपः । सत्यकामोऽवितथेच्छः । सत्यसङ्कल्पः सफलसङ्कल्पः । सङ्कल्पो नाम कर्मारम्भकालीनमनोवृत्तिविशेषः । आसमन्तात् काशत इत्याकाशः । काशनं चात्र ज्ञानं विवक्षितमिति न भारूप इत्यनेन पौनरुक्त्यमिति ध्येयम् । आत्मा आदानादिकर्ता । सर्वकर्मा तत्तत्क्रिया-मकतया सर्वकर्मकर्ता । काम्यन्त इति कामाः द्रव्याणि । गन्धरसशब्दौ गुणान्तरस्याप्युपलक्षकौ । सर्वमिदमभ्यात्तः प्राप्तः, सर्वमिदमभि अभितः आत्तो धृतः स्थित इति वा । न विद्यतेऽनुग्रहमन्तरेण वाक्यं यस्य सोऽवाक्यः । न विद्यते आदरः आश्चर्यं यस्य सः नादरः[१] । अवाक्यश्चासौ नादरश्च सोऽवाक्यनादरः । लौकिक इव निरर्थकवाक्यरहितोऽवाक्यः, नादरः आत्मसम्भावनारहित इत्यप्याहुः ॥ २ ॥

हृद्गतस्याणोर्महता बाह्येनैक्यमुपपादयितुं तस्याणुत्वमनूद्य महत्त्वम-प्युपास्यमाह – **एष म इत्यादिना ॥** य एषः मे हृदयेऽन्तरात्मा व्रीह्यादेरणीयान् अतिशयेनाणुः स एष मे हृदयेऽन्तरात्मा । पृथिव्यादिभ्यो ज्यायानत्यन्तस्थूल इत्यर्थः ॥ ३ ॥

अचिन्त्यैश्वर्येण लोकदृष्ट्या विरुद्धत्वेन दृश्यमानप्रामाणिक-

---

१. 'यस्य सो अनादरः' इति मातृकागतः पाठः । पत्र. सं-६७

सर्वगुणभोक्तृत्वात् तस्य नेदमसम्भावितमित्याशयेनाऽह– **सर्वकर्मेत्यादिना** ॥ अत्रैतावद्गुणभोक्तृत्वं विवक्षितमतो न पूर्वभेदः। निगमयति– **एष म इति** ॥ एतद् ब्रह्म अस्मिंश्च क्रतुं कुर्वीतेति सम्बन्धः। उपासनाकाले कर्तव्यमित्थम्भावं सूचयन्नेवमुपासकस्य फलमाह– **एतमिति** ॥ इतो देहात् प्रेत्य मृत्वैतं मदुपास्यमभिसम्भविता याताऽस्मीति यस्य स्यात् । उपासनेतिकर्तव्यरूपा बुद्धिरिति शेषः। स तं प्राप्नोत्येव। तत्र विचिकित्सा संशयो नास्तीत्यर्थः । श्रुतिः स्वोक्तार्थे ऋषिसम्मतिमाह – **इतीति** ॥ शाण्डिल्यो ह शाण्डिल्य इति प्रसिद्धः ऋषिः ? इति पूर्वोक्तरीत्या आह स्मोक्तवान् किल। [१]द्विरुक्तिरादरार्था ॥ ४ ॥

**॥ इति चतुर्दशः खण्डः ॥ १४ ॥**

## उपनिषत् (खण्डः-१५)

*विश्वाश्रयस्य हरेः शरीरम्*

**अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलं स एष कोशो वसुधानस्तस्मिन् विश्वमिदꣳ [२]श्रितम् ॥१ ॥**

### भाष्यम्

**'क इत्यानन्द उद्दिष्ट उश इच्छा प्रकीर्तिता ।**
**आनन्देच्छास्वरूपोऽसौ कोशो विष्णुः प्रकीर्तितः ॥**
**तस्योदरेऽन्तरिक्षं च पृथिवी पादबुध्नयोः[३] ।**

---

१. 'द्विरभ्यास आदरार्थः' इति पाठो मातृकायाम्। परन्तु 'अभ्यास आदरार्थः' इत्येतावन्मात्रेण पर्याप्तत्वाद् द्विरित्यंशोऽस्मिन् पाठेऽधिक इत्यवधेयम् । पत्र. सं.६७। २.'सर्वमिदम्' ह. क. ३. 'पादमूर्ध्नयोः' ह.

**शिरोविवरगा द्यौश्च दिशो बाहुषु संस्थिताः ॥**

**अजरोऽयं महाविष्णुर्वसवो देवतागणाः ।**

**तेषां निधानं भगवांस्तस्मिन् सर्वमिदं श्रितम् ॥**

## पदार्थकौमुदी

### भाष्यार्थः

"एभ्यो लोकेभ्यो ज्यायान्" इति भगवान् महानित्युक्तम्। तत्राऽ-काशवदशरीरो महानिति प्रतीतिनिरासाय विग्रहेणैव महानिति दर्शयन् वायुजनकबाहुमत्त्वादिना भगवदुपास्तीराह– **अन्तरिक्षोदर इत्यादिना ॥** अविद्यमानमेव भावनार्थमाकारवत्तयोच्यत इति प्रतीतिवारणाय खण्डं प्रमाणेनैव व्याचक्षाणस्तावत् कोश इवानेकधर्मसादृश्यात् कोश इत्यप-व्याख्यानमिति भावेन कोशशब्दार्थमाह – **क इत्यादिना ॥** "अन्त-रिक्षोदरः" इत्यादिकमन्तरिक्षादेरुदराद्यभेदप्रतीतिवारणाय व्याचष्टे– **तस्योदर इत्यादिना ॥** तथाचान्तरिक्षमुदरे यस्य सोऽन्तरिक्षोदरः । भूमिर्बुध्नयोर्यस्य स भूमिबुध्न इति व्यधिकरणो बहुव्रीहिरित्युक्तं भवति । "उत्तरं बिलम्" इत्यस्य तात्पर्यम्– **शिरोविवरगेति ॥** अनेन "सप्तसु प्रथमा" इति सूत्राद् बिलमिति सप्तम्यर्थ इत्युक्तं भवति। स्रक्तयः कोणा इत्यप्रामाणिकमित्याशयेन "दिशो ह्यस्य स्रक्तयः" इत्येतद्व्याचष्टे – **दिश इति ॥** "बाहुषु" इत्यनेन "स्रक्तयः" इति प्रथमा सप्तम्यर्थ इत्युक्तं भवति । "न जीर्यति" इत्येतत्तात्पर्यमाह– **अजरोऽयमिति ॥** वसु प्राणिकर्मफलाख्यं धीयतेऽस्मिन्निति वसुधान इत्यप्रामाणिक-व्याख्याननिरासाय वसुधान इत्येतद्व्याचष्टे – **वसव इति ॥** "वसवः" इत्यनूद्य "देवतागणाः" इति व्याख्यानम्। "तस्मिन् सर्वमिदं श्रितम्" इत्यस्य सर्वं समस्तं प्राणिकर्मफलं सह तत्साधनैः श्रितमिति व्याख्याने सर्वशब्दार्थसङ्कोच एव दोष इत्याशयेन तदनुवदति – **तस्मिन्निति ॥**

## उपनिषत्

*दिशामाश्रयस्य भगवतो बाहव:*

तस्य प्राची दिग् जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदꣳ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदꣳ रुदम् ॥ २ ॥

## भाष्यम्

प्राचीदिक्संस्थितस्तस्य बाहुर्दक्षिण ऊर्ध्वगः ।
जुहूः स होमकर्तृत्वाद् भुङ्क्ते ह्येतेन[१] केशवः ॥
दक्षिणस्त्वधरो बाहुर्दक्षिणादिक्स्थितो विभोः ।
सहमानेति स प्रोक्तो मानं वेदात्मकं यतः ॥
शङ्खो वेदात्मकः शङ्खसहितो दक्षिणाधरः ।
बाहुर्जुहोति चक्रेण शत्रूनित्यथवा जुहूः ॥
प्रतीचीदिक्स्थितस्तस्य वामबाहुस्तथोत्तरः ।
राजीयुक्तगदायुक्तो राज्ञीनामा[२] प्रकीर्तितः ॥
अधरो वामबाहुर्य उत्तरादिक्स्थितो विभोः ।
श्रिय आधारपद्मित्वात् सुभूतानामकः स्मृतः ॥
दिङ्नामानश्च ते प्रोक्ता धर्मज्ञानादिदेशनात्[३] ।

---

१. 'ह्येनेन' ह. २. 'राज्ञी नाम' ह. ३. 'धर्मज्ञानातिदेशनात्' ह.

**तेभ्यो जातो [1]महावायुर्दिशां वत्सस्ततः स्मृतः ॥**
**धर्मज्ञानादिरूपेण विष्णोर्बाहुचतुष्टयात् ।**
**जातं वायुं विदित्वैव पुत्रो भूत्वा न रोदिति ॥**
**न जायते न म्रियते मुक्तो भूत्वा सुखी भवेत् ।**
**वायुं हरेः सुतं ज्ञात्वा नाहं पुत्रतयाऽरुदम् ॥**
**हरेः प्रसादसामर्थ्यादजरा चामरा ह्यहम् ।**
**अनादिकालसम्बन्धादित्युवाच परा[2] रमा ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''दिशो बाहुषु संस्थिताः'' इत्युक्तम् । तत्र बाहुचतुष्टयमध्ये को बाहुः? किंदिगाश्रयः ? किंनामा ? किञ्च धत्त इति जिज्ञासायां विवेकार्थं प्राप्तं ''तस्य'' इत्यादिवाक्यमन्यथाप्रतीतिनिरासाय व्याचष्टे– **प्राची दिगिति** ॥ प्राचीदिक् संस्थिता अस्मिन्निति प्राचीदिक्संस्थितः । प्राच्याश्रय इत्यर्थः । एवमुत्तरत्रापि । अन्यथा ''दिशो बाहुषु संस्थिताः'' इत्यनेन विरोधादिति ध्येयम् । संस्थितः प्रवर्तक इत्यन्ये । ऊर्ध्वगः उपरितनः । जुहूशब्दं तस्मिन्निर्वक्ति– **जुहूरिति** ॥ हु दानादनयोरिति धातोरिति भावः । अधरोऽर्वाक्तनः । सहमानशब्दं तस्मिन्निर्वक्तुं मानशब्दार्थं तावदाह– **मानमिति** ॥ यत इत्यस्योत्तरत्रान्वयः । शङ्खो वेदात्मकः वेददेवताभिमन्यमानः । इदानीं सहमानशब्दार्थमाह– **शङ्ख-सहित इति** ॥ यत एवं मानशब्दलभ्यः शङ्खः अत इत्यर्थः । प्रकारान्तरेण

---

१. 'महान् वायुः' ह. २.'पुरा' ह.

जुहूशब्दार्थमाह – **जुहोतीति** ॥ उत्तरः उपरितनः । राज्ञीशब्दविवक्षितमर्थं दर्शयति – **राजीयुक्तेति** ॥ राजीशब्दो दीप्तिवाची ॥ एवं च राज्ञा दीप्तिमता गदाख्येनाऽयुधेनाधिष्ठिता राज्ञीत्युक्तं भवति । यद्वा, राज्ञी-शब्दो रागपर्यायः । तथा चारातिभटशोणितरागयोगाद् राज्ञी गदा तया युताऽपि राज्ञीनामेति द्रष्टव्यम् । उक्तं हि । ''दिग्धामरातिभटशोणित-कर्दमेन''इति । सुभूताशब्दार्थमाह – **श्रिय इति** ॥ कान्तेरित्यर्थः । एवं च भूतं भूतिः सुभूतेन शोभनकान्तिमता पद्मेनाधिष्ठितत्वात् सुभूतानामेत्युक्तं भवति ।

''वायुं दिशां वत्सं वेद''इत्यस्य दिग्वायुशब्दयोः प्रसिद्धार्थता-प्रतीतिवारणाय तात्पर्यमाह – **दिङ्नामानश्चेति** ॥ ते बाहवः । महावायुः प्रधानवायुः । तेभ्यः चतुर्भ्यः । किमेकरूपस्यैव वायोरुत्पत्तिरिति जिज्ञासायामुक्तंविवृण्वन् ''न पुत्ररोदं रोदिति''इत्येतदप्रतीतेर्व्याचष्टे – **धर्मज्ञानादिरूपेणेति** ॥ आदिपदेन वैराग्यैश्वर्ययोर्ग्रहणम् । एवं सति पुत्रो भवति न रोदितीत्यल्पार्थत्वं प्रतीयते । तां निवारयन्नुक्ताभिप्रायमाह – **न जायत इत्यादिना** ॥ ''सोऽहमेवम्'' इति वाक्यं कस्येति न प्रतीयते अतो व्याचष्टे– **वायुमिति** ॥ पुत्रतया उत्पन्नेति शेषः । ''अमुना''इति वक्ष्यमाणमत्राप्यनुवर्तत इत्याशयेन तत्तात्पर्यमाह – **हरेः प्रसादेति** ॥ अत्रापि पूर्ववदल्पार्थत्वप्रतीतिनिरासायाभिप्रायमाह – **अजरेत्यादिना** ॥ अस्मीति शेषः । नन्वेवं चेद् रमाया एतज्ज्ञानानन्तरमेव मुक्तिरिति प्राप्तमत आह – **अनादीति** ॥ अनादिकालत इत्यर्थः ।

## उपनिषत्

*हरेर्बाहूपासनया रमया लब्धफलनिरूपणम्*

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥

अथ यदवोचं प्राणं प्रपद्य इति प्राणो वा इद९ सर्वं भूतं यदिदं किञ्च तमेव तत् प्राप्स्यथ ॥ ४ ॥

अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरीक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५ ॥

अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६ ॥

अथ यदवोचं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥ ७ ॥ १५ ॥

भाष्यम्

अविनष्टं परानन्दकामं[१] विष्णुं सदा ह्यहम् ।
प्रपद्ये तत्प्रसादेन केवलं नाऽत्मशक्तितः ॥

प्राणं सर्वप्रणेतारं प्रपद्ये केशवं सदा ।
प्रभूतं यदिदं किञ्चित्[२] प्रादुर्भावात्मकं हरेः ॥

मत्स्याद्यं तत् प्राण एव विष्णुर्नास्त्यत्र संशयः ।
तस्मान्मत्स्यादिरूपं तं विष्णुमेव प्रपद्यथ ॥

हे जना इत्यवोचत् सा लक्ष्मीः सर्वाः प्रजाः प्रति ।
प्राणनामा वासुदेवो मोक्षं स्वान् प्रणयेद् यतः ॥

१.'अविनष्टपरानन्दम्' ह २.'किञ्च' पाठान्तरम्।

सङ्कर्षणस्तु भूर्नामा भूषयेज्ज्ञानतो यतः ।
स पृथ्व्यां पृथिवीनामा स्वात्मानं प्रथयेद् यतः ॥
अन्तरिक्षेऽन्तरिक्षाख्यो यतः साध्वन्तरीक्षते ।
दिवि द्युनामा स विभुः सर्वक्रीडाकरत्वतः ॥
प्रद्युम्नश्च भुवोनामा सृष्ट्या यद्भावयेज्जगत् ।
सोऽग्निनामा परो वह्नावत्ति सर्वं यतो हुतम् ॥
वायुनामा स वायुस्थो वात्यायुश्च यतोऽस्य तत् ।
आदित्याख्यः स आदित्य आददात्यायुरस्य यत् ॥
स्वर्नामा त्वनिरुद्धोऽसौ[१] परानन्दप्रदत्वतः ।
ऋग्वेदाख्यः स ऋग्वेदे ज्ञानं वेदयते यतः ॥
यजुर्वेदो यजुर्वेदे यज्ञं वेदयते यतः ।
सामवेदः सामवेदे साम्यं वेदयते ह्ययम् ॥
एवं चतुर्विधं तत्त्वं तदवोचमहं हरेः ।
इत्युवाचेन्दिरा देवी स्तुवन्ती परमं हरिम् ॥' इति च[२]।
'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती यदि[३]' इति च ॥१५ ॥

## पदार्थकौमुदी

### भाष्यार्थः

''अरिष्टं कोशम्''इत्येतदप्रतीतेर्व्याचष्टे– **अविनष्टमित्यादिना** ॥ अरिष्टमित्यस्यार्थः– **विनष्टमिति** । ''परानन्दकामम्'' इति ''कोशम्''

---

३.'स्वर्णामा ह्यनिरुद्धोऽसौ' ह. २.'इति' ह. ३.'पुम्भ्यः शक्तिमती कचित्' ह.

इत्यस्य । कशब्दः परानन्दवाची । उशशब्दश्चेच्छापरपर्यायकामवाची-त्यर्थः । ''प्रपद्ये'' इति प्रयोगात् कादाचित्कप्रपत्तिप्रसक्तिपरिहाराय सदेत्युक्तम् । तथाच क्रियाप्रबन्धे लडित्युक्तं भवति । अमुनेत्यस्यार्थः – **तत्प्रसादेनेति** । ''अमुना'' इति त्रिरुक्तिरादरार्थेति सूचयति – **केवल-मिति** ॥ ''प्राणं प्रपद्ये'' इति वाक्यं प्रसिद्धप्राणपरताप्रतीतिनिरासाय व्याचष्टे – **प्राणमिति** ॥ ''प्राणम्'' इत्यनूद्य ''सर्वप्रणेतारम्''इति व्याख्यानम् । अनेन प्रणयतीति निर्वचनं सूचितं भवति । सर्वप्रणेतृत्वोपपादनाय ''केशवम्''इत्युक्तं ब्रह्मरुद्रप्रवर्तकम् । ''प्राणो वा इदं सर्वं भूतं यदिदं किञ्च'' इति प्रतीतिनिरासाय व्याचष्टे – **प्रभूतमित्यादिना** ॥ प्राण एव विष्णुः प्राणनामा विष्णुरित्यर्थः । वैशब्दार्थः – **एवेति** । तद्व्यावर्त्यप्रदर्शनम् – **नास्तीति** ॥ ''तमेव तत्प्राप्स्यथ'' इति वाक्यं तच्छब्दपरामृश्यं दर्शयन् अपेक्षितपूरणेन व्याचष्टे – **तस्मादिति** ॥ तत् इत्यस्यार्थः – **तस्मादिति** ॥ अस्या उपासनाया अप्येवंफलवत्त्वदर्शनादित्यर्थः ।

प्राणभूर्भुवःस्वःपदैर्वासुदेवादिमूर्तिचतुष्टयं प्रतिपाद्यमित्यभिप्रेत्य तान् शब्दान् तत्र निरुच्य दर्शयन् ''पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये'' इत्यादिवाक्यगतपृथिव्यादिशब्दानपि प्रसिद्धपृथिव्यादिपरताप्रतीतिनिरा-साय सङ्कर्षणादौ निर्वक्ति – **प्राणनामेत्यादिना** ॥ पृथिव्यां स्थित इति शेषः । एवमन्तरिक्ष इत्यादावपि । अस्य जगतः आयुश्चाऽयुप्रदश्च यतः तत् तस्माद् वायुनामेति सम्बन्धः । [१]''परानन्दप्रदत्वतः स्वः'' इत्यत्र सुशब्दस्य शोभनत्ववाचित्वात् । व इत्यस्य सुखवाचित्वादिति भावः ।

१. 'परानन्दप्रदत्वतः' इत्यारभ्य 'अनन्तसुखो यद् व्याहृतीरितः' इत्यन्तो भागः कचिन्न दृश्यते । पत्र. सं- ४८

सङ्कर्षणस्तु भूर्नामा भूषयेज्ज्ञानतो यतः ।
स पृथ्व्यां पृथिवीनामा स्वात्मानं प्रथयेद् यतः ॥
अन्तरिक्षेऽन्तरिक्षाख्यो यतः साध्वन्तरीक्षते ।
दिवि द्युनामा स विभुः सर्वक्रीडाकरत्वतः ॥
प्रद्युम्नश्च भुवोनामा सृष्ट्या यद्भावयेज्जगत् ।
सोऽग्निनामा परो वह्नावत्ति सर्वं यतो हुतम् ॥
वायुनामा स वायुस्थो वात्यायुश्च यतोऽस्य तत् ।
आदित्याख्यः स आदित्य आददात्यायुरस्य यत् ॥
स्वर्नामा त्वनिरुद्धोऽसौ[१] परानन्दप्रदत्वतः ।
ऋग्वेदाख्यः स ऋग्वेदे ज्ञानं वेदयते यतः ॥
यजुर्वेदो यजुर्वेदे यज्ञं वेदयते यतः ।
सामवेदः सामवेदे साम्यं वेदयते ह्ययम् ॥
एवं चतुर्विधं तत्त्वं तदवोचमहं हरेः ।
इत्युवाचेन्दिरा देवी स्तुवन्ती परमं हरिम् ॥' इति च[२] ।
'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती यदि[३]' इति च ॥१५ ॥

## पदार्थकौमुदी

### भाष्यार्थः

''अरिष्टं कोशम्''इत्येतदप्रतीतेर्व्याचष्टे– **अविनष्टमित्यादिना** ॥ अरिष्टमित्यस्यार्थः– **विनष्टमिति** । ''परानन्दकामम्'' इति ''कोशम्''

१.'स्वर्णामा ह्यनिरुद्धोऽसौ' ह. २.'इति' ह. ३.'पुम्भ्यः शक्तिमती क्वचित्' ह.

इत्यस्य । कशब्दः परानन्दवाची । उशशब्दश्चेच्छापरपर्यायकामवाची-त्यर्थः । ''प्रपद्ये'' इति प्रयोगात् कादाचित्कप्रपत्तिप्रसक्तिपरिहाराय सदेत्युक्तम् । तथाच क्रियाप्रबन्धे लडित्युक्तं भवति । अमुनेत्यस्यार्थः – **तत्प्रसादेनेति** । ''अमुना'' इति त्रिरुक्तिरादरार्थेति सूचयति – **केवल-मिति** ॥ ''प्राणं प्रपद्ये'' इति वाक्यं प्रसिद्धप्राणपरताप्रतीतिनिरासाय व्याचष्टे – **प्राणमिति** ॥ ''प्राणम्'' इत्यनूद्य ''सर्वप्रणेतारम्''इति व्याख्यानम् । अनेन प्रणयतीति निर्वचनं सूचितं भवति । सर्वप्रणेतृत्वोपपादनाय ''केशवम्''इत्युक्तं ब्रह्मरुद्रप्रवर्तकम् । ''प्राणो वा इदं सर्वं भूतं यदिदं किञ्च'' इति प्रतीतिनिरासाय व्याचष्टे – **प्रभूतमित्यादिना** ॥ प्राण एव विष्णुः प्राणनामा विष्णुरित्यर्थः । वैशब्दार्थः – **एवेति** । तद्व्यावर्त्यप्रदर्शनम् – **नास्तीति** ॥ ''तमेव तत्प्राप्स्यथ'' इति वाक्यं तच्छब्दपरामृश्यं दर्शयन् अपेक्षितपूरणेन व्याचष्टे – **तस्मादिति** ॥ तत् इत्यस्यार्थः – **तस्मादिति** ॥ अस्या उपासनाया अप्येवंफलवत्त्वदर्शनादित्यर्थः ।

प्राणभूर्भुवःस्वःपदैर्वासुदेवादिमूर्तिचतुष्टयं प्रतिपाद्यमित्यभिप्रेत्य तान् शब्दान् तत्र निरुच्य दर्शयन् ''पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये'' इत्यादिवाक्यगतपृथिव्यादिशब्दानपि प्रसिद्धपृथिव्यादिपरताप्रतीतिनिरा-साय सङ्कर्षणादौ निर्वक्ति – **प्राणनामेत्यादिना** ॥ पृथिव्यां स्थित इति शेषः । एवमन्तरिक्ष इत्यादावपि । अस्य जगतः आयुश्चाऽयुप्रदश्च यतः तत् तस्माद् वायुनामेति सम्बन्धः । [१]''परानन्दप्रदत्वतः स्वः'' इत्यत्र सुशब्दस्य शोभनत्ववाचित्वात् । व इत्यस्य सुखवाचित्वादिति भावः ।

१. 'परानन्दप्रदत्वतः' इत्यारभ्य 'अनन्तसुखो यद् व्याहृतीरितः' इत्यन्तो भागः कचिन्न दृश्यते । पत्र. सं- ४८

**यथोक्तम्**– ''अनन्तसुखो यद्व्याहृतीरितः'' इति । साम्यं स्वरूपाणां तत् तेन ''प्राणं प्रपद्ये'' इत्यादिवाक्येन । ''सोऽहमेवम्'' इत्यादिरमावाक्यमिति व्याख्यातम् । तद्युक्तम् । पुल्लिङ्गश्रवणात् । तस्याश्च स्त्रीत्वादित्यत आह – **पुल्लिङ्गेनेति** ॥ तर्हीति शेषः । इयं च पुंवच्छक्तिमतीति भावः । क्वचित्तु ''श्रीश्च''इति पाठस्तदा यदीत्यस्य यस्मादित्यर्थः ॥ खं० ॥ १५ ॥

## ततश्चायं खण्डार्थः

कोशः आनन्देच्छास्वरूपो विष्णुरन्तरिक्षमुदरे यस्यासावन्तरिक्षोदरः । भूमिर्बुध्नयोर्मूलयोः पादमूलयोरिति यावत् । यस्य स भूमिबुध्नः । विग्रहवतोऽपि नाशो नाऽशङ्क्य इत्याह – **न जीर्यतीति** ॥ न जरावान् भवति । न नश्यतीति यावत्[१] । अस्य लोकाश्रयविग्रहस्य भगवतो दिशश्चतस्रः स्रक्तयः शाखाः बाहव इति यावत् । प्रथमा सप्तम्यर्थे । स्रक्तिषु दिशः स्थिता इत्यर्थः । अस्य भगवत उत्तरं बिलं शीर्षसम्बन्धिविवरम् । अत्रापि प्रथमा सप्तम्यर्थे । तस्मिन् द्यौः द्युलोकस्तिष्ठतीत्यर्थः । न केवलं लोकाश्रयः किन्तु तत्रत्यदेवाद्याश्रयश्चेत्याह – **स एष इति** ॥ स एषः यथोक्तगुणः कोशः आनन्देच्छारूपो विष्णुः । वसवो देवतागणाः धीयन्तेऽस्मिन्निति वसुधानः । तस्मिन् कोशशब्दवाच्ये विष्णौ । इदं प्रत्यक्षादिसिद्धं सर्वं जगत् श्रितमाश्रितम् ॥ १ ॥

दिशश्चतस्रः स्रक्तिशब्दवाच्यबाहुसंस्था इत्युक्तम् । तत्र बाहुचतुष्टयमध्ये को बाहुः? किंदिगाश्रयः? किंनामा? किमायुधयुक्तश्चेति जिज्ञासायां तत्सर्वं विविच्य दर्शयति– **तस्येत्यादिना** ॥ प्राचीदिक्

---

१. अत्र 'न नयतीति' मुद्रितपुस्तकस्थः पाठः प्रामादिक इत्यवधेयम् । मातृकाद्वये तथाऽदर्शनात् ।

प्राचीदिगाश्रयत्वात् तच्छब्दवाच्यो दक्षिणोर्ध्वबाहुः। जुहोति दानादाने[१] करोतीति जुहूर्नाम। अथवा चक्रेण शत्रूञ्जुहोतीति जुहूः। शत्रुनाशक-चक्रवानिति यावत्। दक्षिणा दक्षिणादिगाश्रयो दक्षिणाधरबाहुः सहमानानाम, मानं वेदः देवताभिमन्यमानः शङ्खः, तेन सहितः प्रसिद्ध इत्यर्थः। प्रतीची प्रतीचीदिगाश्रयो वामोर्ध्वबाहुः राज्ञीनाम राज्ञा दीप्तिमता गदारूपायुधेन अधिष्ठिता राज्ञीति प्रसिद्धेत्यर्थः। अथवा, दैत्यशोणितरागयोगाद् राजी गदा, तयाऽधिष्ठिताऽपि राज्ञीत्यर्थः। उदीची उदीचीदिगाश्रयो वामधरबाहुः। सुभूता नाम भूतं भूतिः कान्तिरिति यावत्। एवं च सुभूतेन शोभनकान्तिमता पद्मेनाधिष्ठिताऽपि सुभूतेति प्रसिद्धेत्यर्थः। न केवलं बाहूनां तत्तद्दिगाश्रयत्वादिमात्रं किन्तु धर्मज्ञानवैराग्यैश्वर्यरूपवायुजनकत्वं च ज्ञातव्यमित्याशयेनाऽह– **तासा-मिति**॥ तासां च तिसृणां प्राच्याद्याश्रयाणां जुह्वादिनामिकानां बाहुरूप-स्रक्तीनां वायुर्महावायुः धर्मादिरूपेण वत्सः पुत्रः। तथाच जुहूजातो धर्मः, सहमानजातं ज्ञानं राज्ञीजातं वैराग्यं, सुभूतजातमैश्वर्यमिति विवेको द्रष्टव्यः।

एवंवेत्तुः फलमाह – **स य एवमित्यादिना**॥ योऽधिकारी एवमुक्तरीत्या एतं धर्मादिरूपं वायुं दिशां धर्मज्ञानातिदेशनेन[२] दिङ्नामकानां बाहुरूपस्रक्तीनां वत्सं वेद सः पुत्ररोदं पुत्रो भूत्वा रोदनं न रोदिति न करोतीत्यर्थः। कस्यापि पुत्रो न भवति। मुक्तो भवतीति भावः। एवं वायुं दिग्वत्सञ्ज्ञात्वेतत्फलमाप्तवान् कश्चिदस्ति किम्? इति जिज्ञासायामाह – **सोऽहमित्यादिना**॥ रमावाक्यमिदम्। पुंवच्छक्ति-मत्त्वाच्च स इति पुल्लिङ्गशब्दवाच्यत्वं तस्याः। सोऽहमेवमुक्तरीत्या एतं चतूरूपं वायुं दिशां धर्मज्ञानातिदेशनात् तन्नामिकानां चतसृणां

१. 'दानादने' इति पाठः क्वचित्। २. 'धर्मज्ञानातिदेशेन' इति मातृकायाम्।

बाहुरूपस्रक्तीनां वत्सं वेद पुत्ररोदं पुत्रयतोत्पन्ना सती रोदनं मा रुदं नाकार्षम् । अनादित एवाजरामरा चाऽभवमित्यर्थः ॥ २ ॥

''अमुना''इति वक्ष्यमाणमत्रापि सम्बध्यते। एवं चामुना हरिप्रसादेनैवेदं फलमाप्तमित्युक्तं भवति। न केवलमिदमेव फलं मयाऽऽप्तम्। किन्तु ''कोशो न जीर्यति'' इत्युक्तोपासनानुरूपमपि फलान्तरमाप्तमित्याह – **अरिष्टं कोशमिति** ॥ अहम् अरिष्टम् अविनष्टं कोशं परानन्देच्छारूपं विष्णुं सदा प्रपद्ये उपासे । प्राप्ता चास्मीत्यर्थः । किमुपास्तिबलात् तं निरुध्य? नेत्याह – **अमुनेति** ॥ तत्प्रसादेनेत्यर्थः । त्रिरुक्तिरादरार्था । उपास्त्यन्तराणि विधातुं तत्र रुच्युत्पादनाय तादृगुपासनया मया फलमाप्तमिति तावदादौ दर्शयति रमा – **प्राणं प्रपद्य इत्यादिना** ॥ प्राणं सर्वं प्रणयतीति वा, स्वान् मोक्षं प्रणयेदिति वा प्राणनामानं वासुदेवम्। भूः ज्ञानेन भूषयतीति भूनामकं सङ्कर्षणम् । भुवः भावयतीति भुवोनामकं प्रद्युम्नम्। स्वः परानन्दप्रदत्वेन स्वर्नामकमनिरुद्धम्॥ ३ ॥

किं तत इत्यतः ''प्राणं प्रपद्ये''इत्यादिनोक्तानां वासुदेवादीनां चतुर्णामभिप्रेतं माहात्म्यं विशदयन्ती भवद्भिरप्येवमुपास्तिः कार्येति विधत्ते – **अथ यदवोचमित्यादिना** ॥ यदिदं किञ्च भूतं प्रभूतं पूर्णं मत्स्याद्यं तत्सर्वं प्राणो वै प्राणनामा वासुदेव एव यस्मात् तस्माद्धे जनास्तं मत्स्याद्यभिन्नं वासुदेवमुपासनया प्राप्स्यथ । तत्प्राप्तिहेतुभूतामुपास्तिं कुरुतेति यावत्। एवं ''तमेव तत्प्राप्स्यथ''इति वाक्यं ''अथ यदवोचं भूः प्रपद्ये'' इति ''अथ यदवोचं भुवः प्रपद्ये'' इति ''अथ यदवोचं स्वः प्रपद्ये'' इति वाक्यत्रयशेषत्वेनापि योजनीयम्॥ ४ ॥

पृथिवीं पृथिवीसंस्थं प्रथयतीति पृथिवीनामकम् । अन्तरिक्षं अन्तरिक्षसंस्थम् अन्तरीक्षत[१] इत्यन्तरिक्षनामकम् । दिवं क्रीडाकरत्वेन

१. 'अन्तरीक्ष्यत' इति पाठः प्रामादिकः

द्युनामानं तद्गतं च सङ्कर्षणमवोचम् । अतो यूयमपि तं लोकत्रयव्यापिनं तत्तल्लोकनामानं सङ्कर्षणमुपासनया प्राप्स्यथ।

अग्निमग्निस्थं सर्वं हुतमत्तीत्यग्निनामकम् । वायुं वातीति वाः । आयुःप्रदत्वादायुः । वाश्चासावायुश्चेति वायुनामानं वायुस्थम् । आदित्यम् अस्याऽयुराददातीत्यादित्यनामानमादिस्थं प्रद्युम्नमहं प्रपद्ये यतोऽतो यूयमप्यग्न्यादिदेवान्तर्गतं तत्तन्नामानं प्रद्युम्नमुपासनया प्राप्स्यथ।

ऋग्वेदम् ऋचं ज्ञानं वेदयत इति ऋग्वेदनामानम् ऋग्वेदस्थम् । यजुर्वेदं यजुर्यज्ञं वेदयत इति युजुर्वेदनामानं तत्संस्थम् । सामवेदं साम्यं वेदयत इति सामवेदनामानं तत्संस्थमनिरुद्धम् अहं प्रपद्येऽतो यूयमपि ऋगादिवेदव्यापिनं तत्तद्वेदनामानम् अनिरुद्धमुपासनया प्राप्स्यथेति ॥ २- ७ ॥

॥ इति पञ्चदशः खण्डः ॥

## उपनिषत् (खण्डः-१६)

*जीवनं यज्ञात्मकम् – तत्र प्रातःसवनम्*

**पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातःसवनं चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदꣳ सर्वं वासयन्ति ॥ १ ॥**

**तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिनꣳ सवनमनुसन्तनुतेति माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ २ ॥**

*माध्यन्दिनसवनम्*

**अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनꣳ सवनं चतुश्च-**

त्वारिंशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिन९ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीद९ सर्व९ रोदयन्ति ॥ ३ ॥
तं चेदेतस्मिन् वयसि किञ्चदुपतपेत् स ब्रूयात् प्राणा रुद्रा इदं मे माध्यन्दिन९ सवनं तृतीयं सवनमनुसन्तनुतेति माऽहं प्राणानां रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ ४ ॥

*सायंसवनम्*

अथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयं सवनमष्टाचत्वारिंशदक्षरा जगती जागतं तृतीयं सवनं तदस्याऽदित्या अन्वायत्ताः प्राणा वाव आदित्या एते हीद९ सर्वमाददते ॥ ५ ॥
तं चेदेतस्मिन् वयसि किञ्चदुपतपेत् स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥ ६ ॥

भाष्यम्

'विष्णुपूजार्थयज्ञोऽहमित्युपासनमादरात् ।
कुर्वीत पुरुषो नित्यं तस्य यत्षोडशोत्तरम् ॥
(१) शतमायुस्तत् सवनत्रयमीरितमुत्तमम् ।
चतुर्विंशत्तु यत्पूर्वं प्रातःसवनमेव तत् ॥
प्रार्थयित्वा वसूंस्तद्वं पुमान् मृत्युमपानुदेत् ।

१.शतमायुस्तत्तु सवनत्रयं' ह.

**मध्ये चतुश्चत्वारिंशन्मध्यमं सवनं स्मृतम् ॥**

**रुद्राणां प्रार्थनेनात्र पुमान् मृत्युमपानुदेत् ।**

**ततोऽष्टचत्वारिंशत्तु[१] तृतीयं सवनं स्मृतम्[२] ।**

**आदित्यानां प्रार्थनेन तद्वं मृत्युमपानुदेत् ॥' इति सर्वयज्ञे ।**

## पदार्थकौमुदी

### भाष्यार्थः

उक्तवक्ष्यमाणानेकभगवदुपास्तीनामायुषः क्षणिकत्वेन देहस्य च रोगोपहतत्वेनानुष्ठानमशक्यमित्याशङ्कायामायुर्वृद्ध्यर्थं रोगपरिहारार्थं च पुरुष(स्य)यज्ञरूपामुपास्तिमाह – **पुरुषो वाव यज्ञ इत्यादिना** ॥ अत्र पुरुषस्य यज्ञसाम्यं काव्य इवोच्यत इति प्रतीयते । नतूपासार्थम् । तथोपासाविधायकाभावात् । ब्रह्मसम्बन्धश्च न प्रतीयते । अतो ब्रह्म-सम्बन्धं दर्शयन्नपेक्षितं पूरयन् खण्डं प्रमाणेनैव व्याचष्टे– **विष्ण्वति** ॥ वावेत्यस्यार्थः – **नित्यमादरादिति** ॥ पुरुषस्य यज्ञरूपत्वे [३]साम्येन सवनत्रयस्थानीयं किञ्चिन्नोक्तमतस्तद्दर्शयति – **तस्येति** ॥ उत्तमं प्रसिद्धसवनत्रयापेक्षया बहुत्वादुत्तमफलसाधनत्वाच्चेति भावः । विशेषतः प्रातःसवनादिस्थानीयं दर्शयितुं ''तस्य यानि''इत्यादिकोपनिषत् ॥ तत्र ''तस्य यानि चतुर्विंशतिवर्षाणि''इति प्रथमवाक्यं मध्यमान्तिमचतु-र्विंशतिवर्षाणीति प्रतीतिं वारयन् व्याचष्टे – **चतुर्विंशदिति** ॥ विंशति-शब्दपर्ययो विंशच्छब्दः । आयुरिति वर्तते । चतुर्विंशतिवर्षसङ्ख्याक-मायुरित्यर्थः । पूर्वमेवेति सम्बन्धः ।

---

१.'तत्' ह. २.'मतम्' ह. । ३. 'सामान्येन' इति मातृकायाम् । पत्र. सं-५२,६९

''स ब्रूयात्'' इत्यारभ्य ''अगदो भवति''इत्यन्तवाक्यस्य ''सः ब्रूयात्''इत्यादिना वसूनाज्ञापयतीति प्रतीतिवारणाय तात्पर्यमाह – **प्रार्थयित्वेति** ॥ ''अथ यानि चतुश्चत्वारिंशद्वर्षाणि''इति वाक्यम् अन्तिमचतुश्चत्वारिंशद्वर्षाणीति प्रतीतिं वारयन् व्याचष्टे – **मध्य इति** ॥ चतुर्विंशत्यष्टचत्वारिंशद्वर्षरूपायुषोर्मध्ये विद्यमानं चतुश्चत्वारिंशद्वर्षसङ्ख्याकमायुरित्यर्थः। मध्यमं माध्यन्दिनम्। ''स ब्रूयात् प्राणा रुद्राः'' इत्यादेः ''अगदो भवति''इत्यन्तस्य वाक्यस्य रुद्राज्ञापकत्वप्रतीतिवारणाय तात्पर्यमाह – **रुद्राणामिति** ॥ अत्र गतमिति शेषः। ''अथ यान्यष्टचत्वारिंशद्वर्षाणि'' इति वाक्यं यत्किञ्चिदष्टचत्वारिंशद्वर्षप्रतीतिवारणाय व्याचष्टे – **तत इति** ॥ उत्तरमिति शेषः। अष्टचत्वारिंशद्वर्षसङ्ख्याकमायुरित्यर्थः।

## उपनिषत्

*पुरुषयज्ञोपासनायाः फलम्*

**एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत् प्राह षोडशं वर्षशतं जीवति य एवं वेद ॥ ७ ॥ १६ ॥**

## भाष्यम्

*महिदासकृष्णकपिलाख्यजीवानां चरितम्*

**महिदासोऽन्यः । कृष्णश्चान्य एव ।**

**'महिदासस्त्वैतरेयः कृष्णोऽन्यो देवकीसुतः ।**

कपिलश्च द्वितीयोऽन्यस्त्रय एते पुरा नराः[१] ॥

सङ्गत्योच्चैस्तपस्तेपुर्ब्रह्मणे परमेष्ठिने ।

मातुः स्वस्य च नामैक्यं विष्णुना स्यादिति ह्युभौ ॥

स्वात्मशिष्यप्रशिष्याणां नामैक्यं[२] कपिलस्तथा ।

एवमेव च वेदोक्ता भवेमेति त्वतन्द्रिताः ॥

तान् वरान् प्रददौ तेषां ब्रह्मा लोकपितामहः ।

तस्मात् [३]तन्नामिनश्चाऽ संस्त्रयस्ते मुनयोऽपि हि ॥

महिदासस्त्वैतरेयो बह्वृचोपनिषद्गतः ।

साक्षात् स भगवान् विष्णुस्तन्नामैको मुनिर्ह्यभूत् ॥

कृष्णस्तु वासुदेवाख्यः परमात्मैव केवलम्[४] ।

तन्नामा देवकीपुत्रस्त्वन्योऽप्यभवदञ्जसा ॥

कपिलो वासुदेवाख्यः साक्षान्नारायणः प्रभुः ।

तन्नामा कपिलोऽन्यस्तु शिष्यनाम्ना सहाभवत् ॥

स षोडशशतञ्जीवी महिदासोऽपरस्त्वृषिः ।

घोरशिष्यस्तथा कृष्णः कपिलश्च कुशास्त्रकृत् ॥

त्रय एते वरं प्राप्य ब्रह्मणः परमेष्ठिनः ।

कृतकृत्याः प्रमुमुदुस्तन्नामानश्च तेऽभवन् ॥' इति कालकीये ॥

पदार्थकौमुदी

भाष्यार्थः

---

१.'पुरातनाः' ह. २.'नामैक्ये' ह. ३.'तन्नामिनस्त्वासन्' ह.४.'केवलः' ह.

अत्रापि ''स ब्रूयात् प्राणा आदित्याः'' इत्यादेरादित्याज्ञापकत्व-भ्रमवारणाय तात्पर्यमाह – **आदित्यानामिति ॥**

अत्रोक्तमहिदासस्य भगवदवतारत्वे ''स ह षोडशं वर्षशतम् अजीवत्'' इत्युक्ताल्पायुष्ट्वानुपपत्तिः । रोगाद्युपतापे प्रार्थनेन तत्परि-हाररूपफलकथनायोगाच्च । तथोत्तरखण्डोक्तकृष्णस्यापि भगवदव-तारस्य ग्रहणे ''सोऽपिपास एव बभूव'' इति न युज्यते । नहि सर्वविद्याभिज्ञस्य सदातनस्य भगवतः परिच्छिन्नायुरात्मकयज्ञविद्या-श्रवणादिनाऽन्यविद्याभ्योऽपिपासत्वं सम्भवति । अतोऽत्रोक्तो महिदासः उत्तरत्रोक्तः कृष्णश्च काविति जिज्ञासायामाह – **महिदास इति ॥** महिदासः अत्रोक्तः । अन्यः भगवदवतारान्महिदासात् । कृष्णश्चोत्तर-खण्डोक्तोऽन्य एव भगवदवतारात् कृष्णात् । अत उपनिषदुक्तं फलं तयोरुपपन्नमिति वाक्यशेषः । स्यादेतत् । यदि भगवदवतारातिरिक्तौ महिदासकृष्णौ स्याताम् । तदेव कुतः ? तत्र प्रमाणाभावादित्याशङ्कायां तत्सद्भावे प्रमाणमाह – **महिदास इति ॥** तुशब्दः प्रकृतत्वानुसन्धानार्थः। ऐतरेयो महिदासो भगवदवतारादन्योऽस्ति, देवकीसुतः कृष्णोऽपि भगवदवताराद् द्वितीयः । कपिलश्च भगवदवतारादन्यः । नन्वेते सुरादिषु के ? इति जिज्ञासायामाह – **त्रय इति ॥** पुरेत्यस्योत्तरत्रान्वयः ।

नन्विदमयुक्तम् । अत्रोक्तमहिदासस्यैतरेयत्वश्रवणाद् उत्तरोक्त-कृष्णस्य च देवकीसुतत्वश्रवणात् । अन्यत्रोक्तकपिलस्यापि आसुरि-प्रभृतिशिष्यकत्वश्रवणात् । तेषां च क्रमेण भगवदवतारमहिदासादि-धर्मत्वात् । नचान्यमहिदासकृष्णयोर्भगवन्नामित्वेऽन्यकपिलतच्छिष्ययो-र्भगवदवतारकपिलतच्छिष्यनामित्वे च निमित्तमस्ति । प्रशिष्यानामैक्यं च श्रूयमाणमनुपपन्नम् । वेदप्रतिपाद्याश्चैते श्रूयन्ते । नहि नराणां कारणेन

विना वेदप्रतिपाद्यता युक्ता। अत एते भगवदवतारा एव। फलकथनं तु कथञ्चिन्नेयमित्याशङ्कायां नामैक्यादौ निमित्तमाह – **पुरेत्यादिना** ॥ एत इति वर्तते। विष्णुना स्वस्य नामैक्यं तन्मात्रा स्वमातुश्च नामैक्यं स्यादित्यभिप्रायेणेत्यर्थः। नामैक्यं ''विष्णुरूपकपिलतच्छिष्यप्रशिष्यैः'' इति शेषः। एवमेव विष्णुरूपमहिदासादिवदेव। ऐतरेयत्वादिना वेदोक्ताश्चेति सम्बन्धः। चशब्दस्तन्मातृशिष्यप्रशिष्या अपि तन्मात्रादि-नामिन आसन्नित्याह – **मुनयोऽप्यासन्** ॥ हिशब्दोऽयमर्थः प्रसिद्ध इत्याह। यस्मादेवं वरान् प्रददौ तस्मादिति हेत्वर्थे वा। उक्तार्थे कालकीयगतमेव स्थानान्तरस्थं वाक्यमुदाहरति – **महिदास इति** ॥ ''षोडशशतं जीवी''इत्युक्तः श्रुताविति शेषः। अत्र कारणमाह – **त्रय इत्यादिना** ॥ खं १६ ॥

॥ ततश्चायं खण्डार्थः ॥

पुरुषोऽधिकारी जीवः अहं विष्णूपूजार्थं यज्ञ इत्युपासनं कुर्वीत। वावेति निपातसमुदायस्तस्याऽदरनैरन्तर्यरूपेत्थम्भावद्योतकः। अत्र पुरुषस्य यज्ञरूपत्वे प्रसिद्धयज्ञसाम्येन भाव्यम्। प्रसिद्धयज्ञे च सामान्यतः सवनत्रयात्मकमेकं प्रसिद्धम्। तच्चात्र तस्य यत् षोडशोत्तरं शतमायुस्तदिति ज्ञेयम्। अथ तत्र प्रातःसवनं तत्स्थानीयमत्राऽह – **तस्य यानीति** ॥ तस्य पुरुषस्य तस्याऽयुषो मध्ये यानि पूर्वाणि चतुर्विंशतिवर्षाणि तत् प्रातःसवनं, चतुर्विंशतिवर्षाणां प्रातःसवनत्वं कथमित्यत आह – **चतुर्विंशत्यक्षरेति** ॥ किं तत इत्यत आह– **गायत्रं हीति** ॥ प्रातःसवनं गायत्रं गायत्रीछन्दस्कं प्रसिद्धम्। तथाच चतुर्विंशतिवर्षात्मकस्याऽयुषः [१]प्रातःसवनज्ञाप्य-

---

१. 'प्रातः सवजाप्य' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः।

गायत्र्यक्षरसङ्ख्यासाम्यात् प्रातःसवनत्वोक्तिरिति भावः । प्रसिद्धयज्ञे प्रातःसवनं वसुस्वामिकं प्रसिद्धम् । अतोऽत्राप्युक्तं प्रातःसवनं वस्तुस्वामिकमित्याह– **तदस्येति** ॥ अस्य पुरुषयज्ञस्य तद् उक्तं प्रातःसवनं वसवो देवाः अन्वायत्ताः अनुगताः स्वामिन इत्यर्थः ।

नन्वग्न्यादीनां वसूनामधिदैवरूपाणामध्यात्मं पुरुषायुष्यविशेषात्मक-प्रातःसवनस्वामिता कथमित्यत आह– **प्राणा वा इति** ॥ त एवाध्यात्मं प्राणा इन्द्रियाभिमानिनो वसवो वसुशब्दवाच्यत्वेन विवक्षिता इत्यर्थः । तेषु वसुशब्दप्रयोगे निमित्तमाह– **एत इति** ॥ हि यस्मादिदं सर्वं पुरुषादिप्राणिजातमेते वासयन्ति तस्माद् वासनाद् वसव इत्यर्थः । प्राणेषु हि देहे वसत्सु सर्वमिदं वसति नान्यथेति भावः ।

किञ्च प्रातःसवने प्रार्थिता वसवस्तत्र प्रसक्तविघ्नान् परिहृत्य माध्यन्दिनसवनपर्यन्तं तत्सम्पादयन्तीति प्रसिद्धम् । तदप्यत्रास्तीत्याह– **तं चेदिति** ॥ तं पुरुषयज्ञसम्पादिनमधिकारिणम् एतस्मिन् प्रातःसवनरूपे चतुर्विंशतिवर्षात्मके वयसि किञ्चित् ज्वरादिकमुपतपेत् दुःखमुत्पादयेद् तदा स पुरुषः आत्मानं यज्ञं मन्यमानो ब्रूयात् प्रार्थयेत् । वसूनिति शेषः । किमिति ? हे प्राणा इन्द्रियदेवाः, वासनाद् वसुसञ्ज्ञा यूयम् इदं चतुर्विंशतिवर्षात्मकं मे मम यज्ञरूपस्य प्रातःसवनं वर्तते तत् माध्यन्दिनं सवनम् अनुसन्तनुत माध्यन्दिनेन सवनेन तद्रूपेणाऽयुषा सहितं कुरुते-त्यर्थः । माऽहं यज्ञो युष्माकं प्राणानां वसूनां प्रातःसवनेशानां मध्ये भवतां तत्राऽधिपत्ये सतीति यावत् । एवमुत्तरत्रापि । विलोप्सीय विलुप्येय विच्छिद्येयेत्यर्थः । इतिशब्दः प्रार्थनमन्त्रसमाप्त्यर्थः । प्रार्थनं मोघं किं ? नेत्याह– **उद्धैवेति** ॥ ततः प्रार्थनात् ततो ज्वरादेरुदेत्येव ह उद्गच्छत्येव हि । तदेव विवृणोति– **अगद इति** ॥ व्याधिरहितो भवतीत्यर्थः ॥ १-२ ॥

''अथ यानि चतुश्चत्वारिंशद्वर्षाणि''इत्यादि पूर्ववद् व्याख्येयम् ।

रोदयन्ति प्राणिदेहे स्वानवस्थानेनातो रुद्रा इत्यर्थः । इदं सर्वं शब्दादिविषयजातम् ॥ ३ ॥ ४ ॥

आददति[१] विषयीकुर्वन्ति ज्ञापयन्त्यत आदित्या इत्यर्थः । तृतीयसवनं वर्तते । तदायुः षोडशोत्तरं वर्षशतम् अनुसन्तनुत तेन पूर्णेनाऽयुषा सहितं कुरुत । यज्ञं समापयतेत्यर्थः ॥ ५ ॥ ६ ॥

एवं स्वात्मानं यज्ञतयोपास्य निर्विघ्नं पूर्णमायुः प्राप्तवानस्ति किम् ? इति जिज्ञासायामस्तीत्याह – **एतद्ध स्मेत्यादिना** ॥ एतत् पुरुषस्य यज्ञत्वेनोपासनं वै किल तद्विद्वान् तत्पुरुषयज्ञोपासनं विद्वान् महिदासो नामतः इतराया अपत्यमैतरेयो भगवदवतारमहिदासादन्यो मुनिः, आह स्म । हे गदसः त्वं मे यज्ञरूपस्य ममैतच्छरीरं किं किमर्थमुपतपसि । योऽहं यज्ञोऽनेन त्वत्कृतोपतापेन न प्रेष्यामि न मरिष्यामि । अतो वृथा तव श्रम इत्यर्थः । इत्याह स्मेति सम्बन्धः । स एवं निश्चयः । षोडशं वर्षशतम् अजीवत् । अन्योऽपि य एवं यथोक्तं पुरुषयज्ञं वेदोपास्ते सोऽप्येवं निश्चयः, षोडशं वर्षशतं जीवतीत्यर्थः । क्वचित् प्राहेति पठ्यते । तदेतिशब्दोऽध्याहार्यः । इति स्मा प्राहेत्यर्थः ॥ ७ ॥

॥ इति षोडशः खण्डः ॥

## उपनिषत् (खण्डः -१७)

*पुरुषयज्ञस्य दीक्षोपसदादीनां विचारः*

**स यदशिशिषति यत् पिपासति यन्न रमते ता अस्य दीक्षाः ॥ १ ॥**

**अथ यदश्नाति यत् पिबति यद् रमते तदुपसदैरेति ॥ २ ॥**

**अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥३॥**

**अथ यत् तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य**

---

१. 'आददते' इति क्वचित् पाठः । प.सं. ५५

दक्षिणाः ॥ ४ ॥

तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथः ॥ ५ ॥

तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसीति ।

भाष्यम्

'स्वरूपभूतयज्ञस्य क्षुत्पिपासाऽरतिस्तथा ।
दीक्षा भोजनपाने च रतिश्चोपसदः स्मृताः ॥
व्यवायहासभक्षास्तु स्तुतशस्त्रात्मकाः[१] स्मृताः ।
तपोदानार्जवाहिंसाः सत्यमप्यस्य दक्षिणाः[२] ॥
सोष्यत्यसोष्टेति ततो यज्ञवत् पुत्रजन्मनि ।
आहुर्हि पुनरुत्पत्तिः प्रसवः प्रथमा पितुः ॥
यज्ञस्नानं तु मरणं तदा ध्यायेत् त्रयं पुमान् ।
भगवन्नक्षयोऽसि त्वमच्युतोऽसि गुणैः सदा ।
प्राणाच्च सुखितो नित्यमाधिक्येनेति[३] चिन्तयेत् ॥'

इति सत्तत्त्वे ।

पदार्थकौमुदी

भाष्यार्थः

ननु प्रसिद्धयज्ञे दीक्षोपसदस्तुतशस्त्राणि दक्षिणा सोष्यत्यसोष्टेति-

१.'स्तुतिशस्त्रात्मकाः' ह. २.'दक्षिणा' क. ३.'सुखतो नित्यमधिकश्चेति' ह.

शब्दोऽवभृथश्चेत्येतानि सन्ति। तत्स्थानीयानि कानि सन्ति पुरुषयज्ञ इति जिज्ञासायामाह – **स यदशिशिषतीत्यादिना** ॥ अप्रतिपत्तिविप्रतिपत्ति-निरासाय खण्डं प्रमाणेनेव व्याचक्षाणस्तावदादिवाक्यं व्याचष्टे– **स्वरूपभूतेत्यादिना** ॥ अस्येत्यस्यार्थः – **पुरुषस्वरूपभूतयज्ञस्येति** ॥ दीक्षापूर्वभावित्वसाम्यात्[१] । "अथ यदश्नाति" इत्यादि व्याचष्टे– **भोजनेत्यादिना** ॥ उपसदो यज्ञाङ्गयजमानव्यापारविशेषाः । दीक्षा-नन्तर्यसाम्यात् । "अथ यद्धसति" इत्यादि व्याचष्टे – **व्यवायेत्या-दिना** ॥ तुशब्दस्तेषां विहितत्वरूपविशेषवाची । स्तुतशस्त्रात्मकाः सामगानमन्त्रात्मकाः । शब्दवत्त्वसाम्यात् । "अथ यत्तपः" इत्यादि व्याचष्टे – **तप इत्यादिना** ॥ अस्य पुरुषयज्ञस्य । दक्षिणाधर्मपोषकत्व-साम्यात् । "तस्मादाहुः"इति वाक्यं व्याचष्टे– **सोष्यतीत्यादिना** ॥ तस्मादित्यस्यार्थः – **तत इति** ॥ पुरुषस्य यज्ञरूपत्वादित्यर्थः । पुनरुत्पादनमित्यस्यार्थः – **पुत्रजन्मनीति** ॥ तथाच यथा यज्ञे देवदत्तः पूर्वं सोमं सोष्यति । अनन्तरं सोममसोष्टेति शब्दः प्रयुज्यते तथाऽत्रापि यजमानस्य पुत्रजन्मनि पुनरुत्पादनरूपे आसन्ने यजमानभार्या पुत्रं सोष्यति । सति च तस्मिन्नसोष्टेत्याहुरिति सोष्यत्यसोष्टेति शब्दवत्त्व-मुभयत्र सममित्यर्थः ।

ननु पुत्रजन्म पुरुषस्य कथं [२]पुनरुत्पादनरूपमित्याशङ्कायां तदुपपादयति – **हीत्यादिना** ॥ पुनरुत्पत्तिनिरूपणस्य प्रथमोत्पत्तिज्ञाना-धीनत्वात् तमाह – **प्रथमेति** ॥ पितुर्यजमानस्योत्पत्तिः प्रथमा प्रसवः पुत्रस्य पुत्रजन्मेति यावत् । सा तस्य पुनरुत्पत्तिः । पुत्रदेहस्य तद्देहांश-

---

१. 'दीक्षापूर्वभावित्वसामान्यात्' इति मातृकागतः पाठः । पत्र. सं. ६९,७०

२. 'पुनरुत्पादनमिति' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

दक्षिणाः ॥ ४ ॥

तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथः ॥ ५ ॥

तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसीति ।

भाष्यम्

'स्वरूपभूतयज्ञस्य क्षुत्पिपासाऽरतिस्तथा ।
दीक्षा भोजनपाने च रतिश्चोपसदः स्मृताः ॥
व्यवायहासभक्षास्तु स्तुतशस्त्रात्मकाः[1] स्मृताः ।
तपोदानार्जवाहिंसाः सत्यमप्यस्य दक्षिणाः[2] ॥
सोष्यत्यसोष्टेति ततो यज्ञवत् पुत्रजन्मनि ।
आहुर्हि पुनरुत्पत्तिः प्रसवः प्रथमा पितुः ॥
यज्ञस्नानं तु मरणं तदा ध्यायेत् त्रयं पुमान् ।
भगवन्नक्षयोऽसि त्वमच्युतोऽसि गुणैः सदा ।
प्राणाच्च सुखितो नित्यमाधिक्येनेति[3] चिन्तयेत् ॥'

इति सत्तत्त्वे ।

पदार्थकौमुदी

भाष्यार्थः

ननु प्रसिद्धयज्ञे दीक्षोपसदस्तुतशस्त्राणि दक्षिणा सोष्यत्यसोष्टेति-

१. 'स्तुतिशस्त्रात्मकाः' ह. २. 'दक्षिणा' क. ३. 'सुखतो नित्यमधिकश्चेति' ह.

शब्दोऽवभृथश्चेत्येतानि सन्ति । तत्स्थानीयानि कानि सन्ति पुरुषयज्ञ इति जिज्ञासायामाह – **स यदशिशिषतीत्यादिना** ॥ अप्रतिपत्तिविप्रतिपत्ति-निरासाय खण्डं प्रमाणेनेव व्याचक्षाणस्तावदादिवाक्यं व्याचष्टे– **स्वरूपभूतेत्यादिना** ॥ अस्येत्यस्यार्थः – **पुरुषस्वरूपभूतयज्ञस्येति** ॥ दीक्षापूर्वभावित्वसाम्यात्[१] । ''अथ यदश्नाति'' इत्यादि व्याचष्टे– **भोजनेत्यादिना** ॥ उपसदो यज्ञाङ्गयजमानव्यापारविशेषाः । दीक्षा-नन्तर्यसाम्यात् । ''अथ यद्धसति'' इत्यादि व्याचष्टे – **व्यवायेत्या-दिना** ॥ तुशब्दस्तेषां विहितत्वरूपविशेषवाची । स्तुतशस्त्रात्मकाः सामगानमन्त्रात्मकाः । शब्दवत्त्वसाम्यात् । ''अथ यत्तपः'' इत्यादि व्याचष्टे – **तप इत्यादिना** ॥ अस्य पुरुषयज्ञस्य । दक्षिणाधर्मपोषकत्व-साम्यात् । ''तस्मादाहुः''इति वाक्यं व्याचष्टे– **सोष्यतीत्यादिना** ॥ तस्मादित्यस्यार्थः – **तत इति** ॥ पुरुषस्य यज्ञरूपत्वादित्यर्थः । पुनरुत्पादनमित्यस्यार्थः – **पुत्रजन्मनीति** ॥ तथाच यथा यज्ञे देवदत्तः पूर्वं सोमं सोष्यति । अनन्तरं सोममसोष्टेति शब्दः प्रयुज्यते तथाऽत्रापि यजमानस्य पुत्रजन्मनि पुनरुत्पादनरूपे आसन्ने यजमानभार्या पुत्रं सोष्यति । सति च तस्मिन्नसोष्टेत्याहुरिति सोष्यत्यसोष्टेति शब्दवत्त्व-मुभयत्र सममित्यर्थः ।

ननु पुत्रजन्म पुरुषस्य कथं [२]पुनरुत्पादनरूपमित्याशङ्कायां तदुपपादयति – **हीत्यादिना** ॥ पुनरुत्पत्तिनिरूपणस्य प्रथमोत्पत्तिज्ञाना-धीनत्वात् तमाह – **प्रथमेति** ॥ पितुर्यजमानस्योत्पत्तिः प्रथमा प्रसवः पुत्रस्य पुत्रजन्मेति यावत् । सा तस्य पुनरुत्पत्तिः । पुत्रदेहस्य तद्देहांश-

---

१. 'दीक्षापूर्वभावित्वसामान्यात्' इति मातृकागतः पाठः । पत्र. सं. ६९,७०

२. 'पुनरुत्पादनमिति' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

त्वात् । ''आत्मा वै पुत्रनामाऽसि'' इति श्रुतेरिति हिशब्दार्थः । अन्ये तु प्रसवो मातुरिति शेषः। तर्हि प्रथमोत्पत्तिः केति जिज्ञासायामाह – **प्रथमेति** ॥ उत्पत्तिरित्यनुवर्तत इत्याहुः । ''तन्मरणमेवाभृथः'' इत्येतद् व्याचष्टे– **यज्ञस्नानमिति** ॥ समाप्तिसाम्यात् । ''सोऽन्तवेलायाम्'' इत्येतदप्रतीतेरेकार्थत्वप्रतीतेश्च व्याचष्टे– **तदेति** ॥ अन्तवेलायामित्यस्यार्थः – **तदा मरणकाल इति** । ''प्रतिपद्येत'' इत्यस्यार्थः – **ध्यायेदिति** ॥ स इत्यस्यार्थः – **पुमानिति** ॥ यज्ञरूप इत्यर्थः । एतदनन्तरं श्रुतावेवमुपासनयाऽपरोक्षज्ञानं तेन च भगवत्प्राप्तिर्भवतीति वक्तव्यम् ।

## उपनिषत्

*भगवदुपासनया अपरोक्षज्ञानम्, भगवत्प्राप्तिश्च*

**तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥**

**आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम् । परो यदिध्यते दिवा । उद् वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ इत्यगन्म ज्योतिरुत्तममिति ॥ ७ ॥ १७ ॥**

## भाष्यम्

आदित् तस्मादेव तत्प्रसादादेव । प्रत्नस्य पुरातनस्यानादेर्भगवतो रेतसो रतिरूपस्य ज्योतिः पश्यन्ति[१] । वासेन रमयतीति वासरम् । दिवः परतो वैकुण्ठे यदिध्यते । ऋद्धतममेव सर्वदा । 'अथ यदतः परो दिवः' इत्युक्तत्वाच्च[२] । न चाऽदित्यमण्डलं

१.'प्रपश्यन्ति' ह. २.' ''अथ यदतः परः'' इत्युक्तत्वाच्च' ह.

दिवः परतः । उत्तरं ज्योतिः पश्यन्तः स्वरानन्दरूपं परिपश्यन्तो वयं तमस उदगन्म । उत्तरं ज्योतिः पश्यन्तस्तदेवोत्तरं स्वश्च पश्यन्तः । द्विरुक्तिस्तात्पर्यार्था [१] । उदाख्यं ज्योतिरुत्तमं तमसः सकाशाद-गन्म प्राप्ताः स्मेत्यर्थः[२] । 'तस्योदिति नाम' इति श्रुतेः । देवत्रादेवं देवविषयेऽपि देवं देवानां देवमित्यर्थः । सूरिभिः प्राप्यत्वात् सूर्यम् ।

'रतिरूपं परं ज्योतिरनादेः केशवस्य यत् ।
तत्प्रसादेन पश्यन्ति हृदि वासाद् रतिप्रदम् ॥
यत्पूर्णं सर्वदा भाति[३] वैकुण्ठे परतो दिवः ।
तदुदाख्यं प्रपश्यन्तो निर्गत्य तमसो वयम् ॥
ज्योतिरानन्दसद्रूपमुत्तमोत्तमसूत्तमम् ।
देवानां दैवतं साक्षात्सूरिप्राप्यं परं पदम् ।
प्राप्ताः स्म वासुदेवाख्यमिति मन्त्रदृगब्रवीत् ॥' इति नारायणीये
॥ १७ ॥

## पदार्थकौमुदी

### भाष्यार्थः

अत्र चार्थद्वये ऋचौ प्रमाणत्वेन प्रस्ताव्योदाहरति श्रुतिः – **तत्रैत इत्यादिना** ॥ तदृग्द्वयं सूर्यपरताप्रतीतिनिरासाय[४] क्रमेणानूद्य व्याकुर्वन् प्रथमां तावद् व्याचष्टे– **आदिदित्यादिना** ॥ इदित्यस्यार्थः – **एवेति** ।

१.'तात्पर्यार्थे' ह. २.'प्राप्ताः स्म इत्यर्थः' ह. ३.'पूर्णं सत् सदा भाति' ह. ४. 'प्रतीतिवारणाय' 'प्रतीतिनिवारणाय' इति च मातृकायाम् । पत्र.सं- ५६,७०

पश्यन्ति उक्तोपासनाया । ''दिवा''इति तृतीया पञ्चम्यर्थेति भावेन ''दिवः'' इत्युक्तम् । पर इत्यस्यार्थः – **परत इति** ।। तदेव विशदयति – **वैकुण्ठ इति** ।। ''इध्यते'' इति सामान्यतो वर्तमानद्ध्युक्तेः ऋद्धिरल्पा कादाचित्की चेति प्रतीतिं वारयन्नाह – **ऋद्धतममेवेति** ।। यद्यपि ऋद्धतममेव सर्वदा, तथाऽपि लोकदृष्ट्या इध्यत इत्युच्यत इति भावः । वैकुण्ठस्य दिवः परत्वं प्रागुक्तं स्मारयति – **अथ यदत इति** ।। नन्वत्रेध्यत इत्युच्यमानमादित्यमण्डलमेव किं न स्यादित्यत आह – **न चेति** ।। तस्यान्तरिक्षगतत्वादिति भावः । उद्वयमिति द्वितीयामृचमन्वयं दर्शयन् व्याचष्टे – **उत्तरमिति** ।। ज्योतिः पश्यन्तः उक्तोपासनयेति शेषः । ''स्वः आनन्दरूपम्'' ज्योतिरिति वर्तते । ''ज्योतिः पश्यन्तः स्वः पश्यन्तः'' इत्युक्त्या ज्योतिःस्वःपदार्थयोर्भेदप्रसक्तावाह – **उत्तरमिति** ।। नन्वेवं ज्योतिरेव चेत् स्वस्तर्हि ''ज्योतिः पश्यन्तः स्वः पश्यन्तः'' इति दृशि द्विरुक्तिर्व्यर्था स्यादित्यत आह – **द्विरुक्तिरिति** ।। पूर्वम् ''उद्वयं तमसस्परि''इति वाक्यं उदित्येतद् ''अगन्म'' इत्यनेनान्वितम् । तथाच तमस उदगन्म उद्गताः स्म इत्यर्थ इति व्याख्यातम् । इदानीं प्रकारान्तरेण व्याचष्टे – **उदाख्यमिति** ।। तमसो दुर्गायाः उत्तममिति सम्बन्धः । अथवा ''तमसो निर्गत्य''इति शेषः ।

ननु भवेदिदं व्याख्यानम् । यदि भगवत उदाख्यत्वं प्रामाणिकं स्यात् तदेव कुत इत्यतस्तत्र प्रमाणमाह– **तस्येति** ।। ''देवं देवत्रा''इत्येतद् अप्रतीतेरन्वयप्रदर्शनपूर्वकं वाक्यार्थतात्पर्यदर्शनेन[१] व्याचष्टे– **देवत्रा-देवमिति** ।। नन्वादित्यपरमेवेदं वाक्यं न भगवत्परम् । ''सूर्यम्'' इति

---

१. 'वाक्यार्थतात्पर्यार्थदर्शनेन' इति मुद्रितपुस्तके ।

तच्छ्रुतेः । ''देवं देवत्रा'' इत्यस्य स्वावरोत्तमत्वेन सूर्येऽपि सावकाश-त्वात् । दिवः परत्वलिङ्गादपि श्रुतेर्बलवत्त्वादिति चेन्न । दिवःपरत्व-लिङ्गस्य निरवकाशतया बाधायोगात् । श्रुतेश्च भगवत्यपि सावकाशत्वा-दित्याशयेन सूर्यशब्दं भगवति निर्वक्ति – **सूरिभिरिति** ॥ प्रमाणविरोधाच्च नाऽदित्यपराविमौ मन्त्रावित्याशयेनैतद्व्याख्यानरूपं प्रमाणमुदाहरति – **रतिरूपमिति** ॥ ''रेतसः'' इत्यस्य तात्पर्यम् – **रतिरूपमिति** ॥ हृदि पश्यन्ति । एध वृद्धौ, इन्धी दीप्तौ इति धातुद्वयस्यापि रूपमिध्यत इत्येतदित्याशयेनोक्तम्– **यत्पूर्णं सर्वदा भातीति** ॥ उत्तरमुत्तरमुत्तममिति पदत्रयार्थः – **उत्तमोत्तमसूत्तममिति** ॥ खं १७ ॥

**॥ ततश्चायं खण्डार्थः ॥**

सोऽधिकारी अशिशिषति अत्तुमिच्छतीति यत् । पिपासति पातुमिच्छतीति यत् । यच्चेष्टाप्राप्तिनिमित्तं न रमत इति, ताः क्षुत्पिपासारतयोऽस्य स्वरूपभूतयज्ञस्य दीक्षाः पूर्वभावित्वसाम्यात् । दुःखसाम्यादित्यप्याहुः ॥ १ ॥

अथेति साम्यान्तरकथनप्रारम्भार्थम् । एवमग्रेऽपि । सः अश्नातीति यत् पिबतीति यद् इष्टलाभेन रमत इति यत् तद् भोजनादिक-मुपसदैर्यज्ञाङ्गयजमानव्यापारविशेषैः । समानतामेति । दीक्षानन्तर्य-साम्यात् ॥ २ ॥

अथ सः हसतीति यत्, जक्षति भक्षयतीति यत्, यच्च मैथुनं चरतीति तत् हासादिकं स्तुतैः सामगानैः शस्त्रैः शंसनमन्त्रैश्च समानतामेति । शब्दवत्त्वसाम्यात् ॥ ३ ॥

अथ यत्तपः कायक्लेशात्मकं शास्त्रविचाररूपं वा, दानं सत्पात्रे

न्यायार्जितवित्तादेः, आर्जवं धर्ममार्गे मनोवाक्कायकर्मणामेकप्रकारत्वं, अहिंसा व्यर्थहिंसाभावः, सत्यवचनं, ता अस्य पुरुषयज्ञस्य दक्षिणाः धर्मपोषकत्वसाम्यात् ।। ४ ।।

तस्मात् पुरुषस्य यज्ञरूपत्वादेवास्य पुरुषस्य पुनरुत्पादनं पुत्रजन्मरूपं यदा आसन्नं तदा अस्य भार्यापुत्रं सोष्यति यदा [१]चैतद्भवति तदाऽसोष्टेत्याहुः । प्रसिद्धयज्ञे यथा देवदत्तः सोमं सोष्यतीति पूर्वमनन्तरं च सोममसोष्टेति शब्दः प्रयुज्यते तथाऽत्रापि सोष्यत्यसोष्टेति शब्दसम्बन्धोऽस्तीति भावः । पुरुषस्य स्वपितुः सकाशाज्जन्म प्रथमं स्वस्मात् पुत्रजन्म पुनरुत्पादनरूपं पुत्रदेहस्यापि स्वदेहांशत्वादिति द्रष्टव्यम् । तन्मरणं पुरुषमरणम् अस्य पुरुषयज्ञस्यावभृथो यज्ञस्नानम्, समाप्तिसाम्यात् ।। ५ ।।

अत्र तात्पर्यद्योतनाय स्तुतिरूपमर्थवादमाह – **तद्धैतदित्यादिना** ।। घोरो नामतः, आङ्गिरसो गोत्रतः । तत् पूर्वखण्डोक्तम् एतद् एतत्खण्डोक्तं पुरुषयज्ञप्रकारं कृष्णाय देवकीपुत्राय भगवदवतारादन्यस्मै कस्मैचिद् ऋषये उक्त्वा वक्ष्यमाणं भगवदुपासाप्रकारं चोवाच । सोऽपिपास एवान्यविद्याभ्यो बभूव । अस्यामेव विद्यायां निष्ठावान् जात इति यावत् । अन्ये तु ''पिपास एव''इति पाठमभिप्रेत्य सोऽपि पिपासादिदीक्षादिमांश्च बभूवेत्याहुः । घोर आङ्गिरसः कृष्णाय किमुवाचेति जिज्ञासायां तदाह – **स इत्यादिना** ।। सः एवं यथोक्तयज्ञविद् अन्तवेलायाम् अवभृथरूपमरणकाले एतत्त्रयं वक्ष्यमाणभगवद्धर्मत्रयं प्रतिपद्येत ध्यायेत् । हे भगवन् त्वम् अक्षितमक्षयोऽसि, अच्युतं गुणैरच्युतोऽसि, प्राणशंसितं प्राणादाधिक्येन सुखितोऽसि इति

---

१. 'च तद्भवति' इति मातृकायाम् । प.सं. ५७,७०

प्रतिपद्येतेत्यन्वयः । एतादृशयज्ञध्यानेनापरोक्षज्ञानं तेन भगवत्प्राप्तिरूपं फलं च प्रतिपद्यत इति वक्तव्यम्। अस्मिन्नर्थद्वये ऋचौ प्रस्ताव्योदाहरति– **तत्रेति**॥ तत्रोक्तेऽर्थद्वये एते वक्ष्यमाणे द्वे ऋचौ भवतः ॥ ६ ॥

प्रत्नस्य पुरातनस्यानादे रेतसः रतिरूपस्य भगवतः वासेन रमयतीति वासरं यद् दिवा दिवः परः परे वैकुण्ठे इध्यते पूर्णमेव सदा भाति । तज्ज्योतिः आत् इत् अस्मादेव उक्तोपासनासाध्यभगवत्प्रसादादेवेति यावत्। सूरयः पश्यन्ति। स्वरानन्दरूपं ज्योतिः परिपश्यन्तो वयम्। पुनः पश्यन्त इत्युक्तिरादरार्था। तमसोऽज्ञानाद्यनर्थादुदगन्म उद्गाता स्मः । न केवलमेतावत् किन्तु देवत्रादेवं देवविषयेऽपि देवं देवानां देवमित्यर्थः । सूरिभिः प्राप्यत्वात् सूर्यं तन्नामकमुत्तरमुत्तरमुत्तमं । उत्तमोत्तमसूत्तमं ज्योतिर्वासुदेवाख्यम् अगन्म प्राप्ता स्मः । उद् उदाख्यम् । ज्योतिरिति सम्बन्धः । तमसो निर्गत्येति शेषः । तथा चात्र न क्रियावृत्तिर्न वा[१] वाक्यभेद इति द्रष्टव्यम् । इतिशब्दस्य भवत इत्यनेन सम्बन्धः । द्विरुक्तिरुक्तावधारणार्था ॥ ७ ॥

**॥ इति सप्तदशः खण्डः ॥**

## उपनिषत् (खण्डः -१८)

*अध्यात्माधिदैवतयोः भगवदुपासना*

**मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ १ ॥**

*अध्यात्माधिदैवतयोर्हरे रूपचतुष्टयम्*

**तदेतच्चतुष्पाद् ब्रह्म वाक्पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो**

१. 'वा' इति मातृकायां न दृश्यते।

दिशः पाद इत्युभयमेवाऽदिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ २ ॥

*वागिन्द्रिये वासुदेवः*

वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥

*घ्राणेन्द्रिये सङ्कर्षणः*

प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥

*चक्षुरिन्द्रिये प्रद्युम्नः*

चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥५ ॥

*श्रोत्रेऽनिरुद्धः*

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥ ६ ॥ १८ ॥

भाष्यम्

'मनःसंस्थस्तु यो देवः साक्षान्नारायणः प्रभुः ।
स एवाऽकाशसंस्थश्च मन आकाशनामकः ॥

**मननान्मन आकाश आसमन्तात् प्रकाशनात् ।**
**वासुदेवादिभेदेन स वागादिषु संस्थितः ॥**
**अग्न्यादिषु च तन्नामा वागादिस्थः स एव तु ।**
**अग्न्यादिस्थैः सहैवेशो भाति दुष्टांस्तपत्यथ ॥**
**एवं विद्वांस्तमीशेशं यशोज्ञानसुखात्मताम् ।**
**कीर्तिं च ब्रह्मसम्प्राप्त्या[१] वरतां मुक्तिगामपि ।**
**प्राप्य भाति तपत्यद्धा स्वाज्ञानादिकमेव च ॥' इति च ॥१८॥**

## पदार्थकौमुदी

### भाष्यार्थः

लब्धायुषः पुरुषस्य तत्सार्थक्यार्थमध्यात्ममधिदैवतं[२] च भगवदुपास्तिं तत्फलं चाऽऽह– **मनो ब्रह्मेत्यादिना** ॥ अत्रान्तःकरणादिकमब्रह्मैव ब्रह्मतयोपास्यमुच्यत इति परव्याख्यानमप्रामाणिकं प्रमाणविरुद्धं चेत्याशयेन ''आकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च'' इति वाक्यमप्रतीतेः प्रमाणेनैव व्याचष्टे– **मनःसंस्थ इत्यादिना** ॥ तुशब्दो विशेषार्थः । तमेवाऽऽह– **साक्षादिति** ॥ साक्षादनन्याधीनत्वेन मनःसंस्थो न रुद्रादिरिवेति । मनोनामक इत्यपि ग्राह्यम् । ''स एव''इत्युक्त्या स्थानभेदेन भेदशङ्का परिहृतेति ज्ञातव्यम् । तथा चाध्यात्मं मनोनामकस्य भगवतोऽधिदैवमाकाशे मनआकाशनामकं रूपद्वयमस्तीत्युक्तं भवति ।

ब्रह्मणः मनआकाशनामकत्वं केन निमित्तेनेति जिज्ञासायामाह–

---

१.'ब्रह्म सम्प्राप्य' ह. २. 'अधिभूतम्' इति मातृकागतः पाठः (पत्र.सं. ५८,७१)। अयं च प्रमादमूलक इत्यवधेयम् ।

**मननादित्यादिना** ॥ आ इत्यनुवादेन समन्तादिति व्याख्यानम् "तदेतच्चतुष्पात्"इत्यादिकम् अध्यात्मं जडवागादिपरम्, अधिदै चाग्न्यादिदेवतामात्रपरमिति प्रतीतिनिरासाय व्याचष्टे – **वासुदेवादीति** तन्नामा तत्तन्नामा । "वागेव ब्रह्मणश्चतुर्थः पादः । सोऽग्निना" "प्रा एव ब्रह्मणश्चतुर्थः पादः । स वायुना" इत्यादिवाक्यचतुष्टयतात्पर्यमाह **वागादिस्थ इत्यादिना** ॥ अत्रापि "स एव"इत्यनेन स्थानभेदनिमित्त भेदशङ्कापरिहारः । तुशब्दः स्वस्य स्वसाहित्योपपादकविशेषार्थः तमेवाऽह – **ईशोऽघटितघटकशक्तिमानिति** ॥ "सह"इत्यनेनाग्निने त्यादितृतीया सहार्थ इत्युक्तं भवति । "तपति"इत्यस्य कर्मानुक्तेस्त दाह – **दुष्टानिति** ॥ अथशब्दः समुच्चयार्थः । "भाति च तपति च इत्यादिफलप्रतिपादकवाक्यचतुष्टयं व्याचष्टे – **एवमित्यादिना** ॥ कीर्ति शब्दा पुनरुक्ततया यशःशब्दमनुवदंस्तदर्थमाह – **ज्ञानेति** ॥ "ब्रह्म वर्चसेन" इत्यस्यार्थः – **ब्रह्म सम्प्राप्स्येत्यादि** । "वर्"इत्यस्य वरणेने त्यर्थमभिप्रेत्याऽह – **सम्प्राप्येति** ॥ तस्यैव भावप्रधानत्वमभिप्रेत्या र्थान्तरमाह – **वरतामिति** ॥ नन्विदं प्रतिदिनमपि सुषुप्तावस्त्यतो विद्याफलमित्यतश्च सुइत्यस्य तात्पर्यमाह – **मुक्तिगामिति** ॥ आवि र्भूतामित्यर्थः । तथाच ब्रह्मणो विष्णोर्वरणेन प्राप्त्या चायितं संपादित माविर्भूतं वरत्वं ब्रह्मवर्चसमित्युक्तं भवति । तथोक्तमैतरेयभाष्ये **परब्रह्मणो विष्णोर्वरणादेव सम्यक् चायितं स्वरूपमिति** । तपति चे सम्बन्धः ॥ खं० १८ ॥

॥ ततश्चायं खण्डार्थः ॥

मननान्मनोनामा साक्षान्मनःसंस्थो नारायणो ब्रह्मेत्युपासीतेत्यध्यात देहमधिकृत्य वर्तमानब्रह्मविषयकमुपासनं निरूपितम् । अथाधिदैव

देवतामधिकृत्य वर्तमानब्रह्मविषयमुपासनमुच्यत इत्यर्थः । आसमन्तात् प्रकाशनादाकाशनामा तन्नामकदेवसंस्थो नारायणो ब्रह्मेत्युपासीत । पूर्वोपासनापेक्षयेयमुपासनाऽतिशयितेत्याशयेनाऽह – **आकाश इति ॥** योऽसौ मनःसंस्थो नारायणः स एवाऽकाशस्थो मनआकाशनामकः । अत आकाशे मनआकाशनामकोभयरूपसद्भावात् "आकाशो ब्रह्म" इत्यनेनाध्यात्ममधिदैवतं चेत्युभयं रूपमादिष्टं भवति ।। १ ।।

तद् अध्यात्ममेतद् अधिदैवं यद् ब्रह्म तच्चतुष्पात् चत्वारः पादा यस्येति चतुष्पात् । वासुदेवादिरूपचतुष्टयोपेतमित्यर्थः । अध्यात्मं तावत् पाद-चतुष्टयमाह – **वाक् पाद इत्यादिना ॥** वचनाद् वाङ्नामा वाक्संस्थो मनोगतनारायणस्य पादो वासुदेवनामांशः, प्राणः प्रकृष्टनेतृत्वात् प्राणनामा प्राणसंस्थस्तस्यैव पादोंऽशः सङ्कर्षणाख्यः, चष्ट इति चक्षुर्नामा तत्संस्थः पादोंऽशः प्रद्युम्नाख्यः, शृणोतीति श्रोत्रनामा तत्संस्थः पादांशोऽनिरुद्धाख्यः, इत्याध्यात्मं मनःसंस्थभगवदंशाश्चत्वरो निरू-पिताः । अथाधिदैवतम् आकाशादिगतभगवदंशा निरूप्यन्त इत्यर्थः । अग्निरङ्गनेतृत्वादग्निनामा तत्संस्थो वासुदेवः पाद एकोंऽशः । आयु-र्ज्ञानस्वरूपत्वाद् वायुनामा तत्संस्थः सङ्कर्षणोऽपरः पादः । आदानादादित्यनामा तत्संस्थः प्रद्युम्नोऽन्यः पादः । धर्मज्ञानातिदेशनाद् दिङ्नामाऽनिरुद्धश्चतुर्थः पादः । अत्रापि पूर्वपादचतुष्टयज्ञानापेक्षयै-तत्पादचतुष्टयज्ञानमतिशयितम् । अग्न्यादौ वागादिसंस्थानामपि क्रमेण सद्भावादित्याशयेनाऽह – **इतीति ॥** "अग्निः पादः" इत्यादिनाऽ-ध्यात्मं वागादिसंस्थं पादचतुष्टयम् अधिदैवतमग्न्यादिसंस्थं पादचतुष्टय-मित्युभयमादिष्टमुपदिष्टं भवति ।। २ ।।

तदेव विशदयति – **वागेवेति ॥** वाङ्नामा योऽयं ब्रह्मणः चतुर्थः पादो वासुदेवः स एवाग्निसंस्थोऽग्निना तन्नामकेन ज्योतिषा ज्योतिर्मयेन

**मननादित्यादिना** ॥ आ इत्यनुवादेन समन्तादिति व्याख्यानम् । ''तदेतच्चतुष्पात्''इत्यादिकम् अध्यात्मं जडवागादिपरम्, अधिदैवं चाग्न्यादिदेवतामात्रपरमिति प्रतीतिनिरासाय व्याचष्टे – **वासुदेवादीति** ॥ तन्नामा तत्तन्नामा । ''वागेव ब्रह्मणश्चतुर्थः पादः । सोऽग्निना'' ''प्राण एव ब्रह्मणश्चतुर्थः पादः । स वायुना'' इत्यादिवाक्यचतुष्टयतात्पर्यमाह – **वागादिस्थ इत्यादिना** ॥ अत्रापि ''स एव''इत्यनेन स्थानभेदनिमित्त-भेदशङ्कापरिहारः । तुशब्दः स्वस्य स्वसाहित्योपपादकविशेषार्थः । तमेवाऽह – **ईशोऽघटितघटकशक्तिमानिति** ॥ ''सह''इत्यनेनाग्निने-त्यादितृतीया सहार्थ इत्युक्तं भवति । ''तपति''इत्यस्य कर्मानुक्तेस्त-दाह – **दुष्टानिति** ॥ अथशब्दः समुच्चयार्थः । ''भाति च तपति च'' इत्यादिफलप्रतिपादकवाक्यचतुष्टयं व्याचष्टे – **एवमित्यादिना** ॥ कीर्ति-शब्दा पुनरुक्ततया यशःशब्दमनुवदंस्तदर्थमाह – **ज्ञानेति** ॥ ''ब्रह्म-वर्चसेन'' इत्यस्यार्थः – **ब्रह्म सम्प्राप्येत्यादि** । ''वर्''इत्यस्य वरणेने-त्यर्थमभिप्रेत्याऽह – **सम्प्राप्येति** ॥ तस्यैव भावप्रधानत्वमभिप्रेत्या-र्थान्तरमाह – **वरतामिति** ॥ नन्विदं प्रतिदिनमपि सुषुप्तावस्त्यतो न विद्याफलमित्यतश्च सुइत्यस्य तात्पर्यमाह – **मुक्तिगामिति** ॥ आवि-र्भूतामित्यर्थः । तथाच ब्रह्मणो विष्णोर्वरणेन प्राप्त्या चायितं संपादित-माविर्भूतं वरत्वं ब्रह्मवर्चसमित्युक्तं भवति । तथोक्तमैतरेयभाष्ये– **परब्रह्मणो विष्णोर्वरणादेव सम्यक् चायितं स्वरूपमिति** । तपति चेति सम्बन्धः ॥ खं० १८ ॥

॥ ततश्चायं खण्डार्थः ॥

मननान्मनोनामा साक्षान्मनःसंस्थो नारायणो ब्रह्मेत्युपासीतेत्यध्यात्मं देहमधिकृत्य वर्तमानब्रह्मविषयकमुपासनं निरूपितम् । अथाधिदैवतं

देवतामधिकृत्य वर्तमानब्रह्मविषयमुपासनमुच्यत इत्यर्थः । आसमन्तात् प्रकाशनादाकाशनामा तन्नामकदेवसंस्थो नारायणो ब्रह्मेत्युपासीत । पूर्वोपासनापेक्षयेयमुपासनाऽतिशयितेत्याशयेनाऽऽह – **आकाश इति ॥** योऽसौ मनःसंस्थो नारायणः स एवाऽऽकाशस्थो मनआकाशनामकः । अत आकाशे मनआकाशनामकोभयरूपसद्भावात् ''आकाशो ब्रह्म'' इत्यनेनाध्यात्ममधिदैवतं चेत्युभयं रूपमादिष्टं भवति ॥ १ ॥

तद् अध्यात्ममेतद् अधिदैवं यद् ब्रह्म तच्चतुष्पात् चत्वारः पादा यस्येति चतुष्पात् । वासुदेवादिरूपचतुष्टयोपेतमित्यर्थः । अध्यात्मं तावत् पाद-चतुष्टयमाह – **वाक् पाद इत्यादिना ॥** वचनाद् वाङ्नामा वाक्संस्थो मनोगतनारायणस्य पादो वासुदेवनामांशः, प्राणः प्रकृष्टनेतृत्वात् प्राणनामा प्राणसंस्थस्तस्यैव पादोंऽशः सङ्कर्षणाख्यः, चष्ट इति चक्षुर्नामा तत्संस्थः पादोंऽशः प्रद्युम्नाख्यः, शृणोतीति श्रोत्रनामा तत्संस्थः पादांशोऽनिरुद्धाख्यः, इत्याध्यात्मं मनःसंस्थभगवदंशाश्चत्वरो निरू-पिताः । अथाधिदैवतम् आकाशादिगतभगवदंशा निरूप्यन्त इत्यर्थः । अग्निरङ्गनेतृत्वादग्निनामा तत्संस्थो वासुदेवः पाद एकोंऽशः । आयु-र्ज्ञानस्वरूपत्वाद् वायुनामा तत्संस्थः सङ्कर्षणोऽपरः पादः । आदानादादित्यनामा तत्संस्थः प्रद्युम्नोऽन्यः पादः । धर्मज्ञानातिदेशनाद् दिङ्नामाऽनिरुद्धश्चतुर्थः पादः । अत्रापि पूर्वपादचतुष्टयज्ञानापेक्षयै-तत्पादचतुष्टयज्ञानमतिशयितम् । अग्न्यादौ वागादिसंस्थानामपि क्रमेण सद्भावादित्याशयेनाऽऽह – **इतीति ॥** ''अग्निः पादः'' इत्यादिनाऽ-ध्यात्मं वागादिसंस्थं पादचतुष्टयम् अधिदैवतमग्न्यादिसंस्थं पादचतुष्टय-मित्युभयमादिष्टमुपदिष्टं भवति ॥ २ ॥

तदेव विशदयति – **वागेवेति ॥** वाङ्नामा योऽयं ब्रह्मणः चतुर्थः पादो वासुदेवः स एवाग्निसंस्थोऽग्निना तन्नामकेन ज्योतिषा ज्योतिर्मयेन

वासुदेवेन सह भाति तपति च दुष्टान् । एवंवेत्तुः फलमाह– **भातीत्यादिना ॥** योऽधिकारी एवमुक्तरीत्या वेदोपास्ते सः कीर्त्या यशसा ज्ञानसुखात्मकेन ब्रह्मवर्चसेन ब्रह्मणो विष्णोर्वरणेन सम्प्राप्तिरूपेण चायितम् आविर्भूतं वरत्वं मुक्तिगं यत्तेन च भाति तपति चाज्ञानादिकम् ॥ ३ ॥

एवं यः प्राणचक्षुःश्रोत्रसंस्थस्तन्नामा सङ्कर्षणादिः स एव वाय्वादिस्थः सन् वाय्वादिनामकेन सङ्कर्षणाद्याख्येन ज्योतिषा सह भातीत्यादि योज्यम् । शिष्टं समानम् ॥ ४-६ ॥

**॥ इति अष्टादशः खण्डः ॥**

## उपनिषत् (खण्डः - १९)

*आदित्ये भगवदुपासना*

**आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् तत् सदासीत् तत् समभवत् तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥**

**तद्यद्रजतं सेयं पृथिवी यत्सुवर्णं सा द्यौर्यज्जरायु ते पर्वता यदुल्बं स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदक॰ँ स समुद्रोऽथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन् सर्वाणि च भूतानि च सर्वे च कामास्तस्मात् तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे च कामाः ॥ २- ३ ॥**

स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन् निम्रेडेरन् ॥ ४ ॥ १९ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि तृतीयोऽध्यायः ॥ ३ ॥

भाष्यम्

'अगम्यत्वादसन्नाम ब्रह्म नारायणाभिधम् ।
प्रलये[1] वासुदेवाख्यं गम्यं सदभवद् विदाम् ॥
तत्प्रकृत्या समभवत् तत आण्डमजायत ।
तस्मिन्नादित्यनामाऽसावभवत् सूर्यमण्डले ॥
नियन्तैव च सूर्यस्य भगवान् पुरुषोत्तमः ।
तस्मादादित्यनामानमादित्यस्थं जनार्दनम् ।
ब्रह्मोपासीत परमं सर्ववेदज्ञता ततः ॥' इति ब्रह्मतत्त्वे ।

उलूलव उरूरवः । अतिमहान्तो गायत्र्यादिघोषाः उप च निम्रेडेरन् । मुक्ते तस्मिन्नेव वसेयुः ।

'सूर्यबिम्बस्थिते विष्णौ जायमाने परात्मनि ।
गायत्रीपूर्वकैर्वेदैर्ब्रह्माद्याःसमुपस्थिताः ॥
उपतिष्ठन्त्यतो नित्यं गायत्र्यादिभिरञ्जसा ।
तद्विद्वान् मुक्त आवासो वेदानां सर्वदा भवेत् ॥' इति च ॥१९

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छान्दोग्योपनिषद्भाष्ये तृतीयोऽध्यायः ॥ ३ ॥

---

१. 'प्रळये' ह.

## पदार्थकौमुदी

### भाष्यार्थः

यत्प्राप्त्या पुरुषस्य ज्ञानद्वारा मोक्षो भवति तेषां वेदानां प्राप्ति-सम्पादिकामादित्यनिष्ठां काञ्चन भगवदुपास्तिमाह – **आदित्य इत्यादिना** ।। ''असदेवेदमग्र आसीत्''इति वाक्यं प्रलये शून्यावस्थान-प्रतीतिं व्याहृतिं च परिहर्तुं प्रमाणेनैव व्याचष्टे – **अगम्यत्वादिति** ।। ''सत्'' इत्यनुवादेन विदां विदुषां गम्यमिति व्याख्यानम् । सदेर्गत्यर्थ-त्वात् । ''तत् समभवत्''इत्येतदप्रतीतेरपेक्षितं पूरयन् व्याचष्टे – **तत्प्रकृत्येति** ।। तद्वासुदेवाख्यं ब्रह्म प्रकृत्या मायया समभवत् सम्भोगमकरोत् । ''तदाण्डं निरवर्तत'' इत्येतद् व्याचष्टे – **तत इति** ।। ततः सम्भोगानन्तरं तत्त्वसृष्ट्यादिद्वारा अण्डमजायतेत्यर्थः ।

''अथ यत्तदजायत सोसावादित्यः'' इति वाक्यं प्रसिद्धादित्य-परमिति प्रतीतिनिरासाय व्याचष्टे – **तस्मिन्निति** ।। तस्मिन्नण्डे । ननु भगवत आदित्यनामकत्वे मण्डलान्तर्गतसूर्ये कथं तच्छब्दप्रयोग इत्यत उक्तम् – **मण्डले विद्यमानस्य सूर्यस्य नियन्तैवेति** ।। तथाच ''तदधीनत्वात्'' इति न्यायेन तत्र तच्छब्दप्रयोग इत्युक्तं भवति । चो हेतौ । भगवानेवेत्येवशब्दसम्बन्धः । ''पुरुषोत्तमः'' इत्युत्तरवाक्य-तात्पर्यकथनम् । तथा च यतः पुरुषोत्तमो ब्रह्मादिसर्वदेवोपस्थाप्यत्वेनो-त्तरवाक्ये कथितोऽतो भगवानेवाऽदित्यनामा, न प्रसिद्ध इति योजना ।

''असदेवेदमग्र असीत्'' इत्यारभ्य ''सोऽसावादित्यः'' इत्यन्तं वाक्यं ''आदित्यो ब्रह्म'' इति प्रथमवाक्यार्थे हेतुप्रतिपादकमित्याशयेन हेतुहेतुमद्भावं दर्शयन्नादित्यो ब्रह्मेत्यादिसाध्यांशं व्याचष्टे–**तस्मादिति** ।।

एवमुत्पन्नाण्डगर्भरूपत्वात्। ''यदेनं साधवो घोषा [१]आ च गच्छेयुः'' इत्यादिफलवाक्यतात्पर्यमाह– **सर्वेति** ॥ ''उलूलवः'' इत्येतदप्रतीतेरनूद्य व्याचष्टे – **उलूलव इति** ॥ एवं पदार्थमुक्त्वा ''उलूलवो घोषाः'' इति वाक्यार्थमाह – **अतिमहान्त इति** ॥ घोषा वेदा इत्यर्थः । तेषामतिमहत्त्वमानन्त्यं, व्याप्तत्वं वा। ''अनन्ता वै वेदाः'' ''यावद् ब्रह्म विष्ठितं तावती वाक्'' इति श्रुतेः । ''उप च निम्रेडेरन्'' इत्येतदनूद्यापेक्षितं पूरयन् व्याचष्टे – **उप चेति** ॥ एवं स्ववचनेनोक्तार्थदाढर्याय ''तं जायमानम्'' इत्यादिवाक्यव्याख्यानरूपं प्रमाणमुदाहरति – **सूर्येति** ॥ ''वेदैः'' इत्यादिना ''घोषाः'' इत्यादि प्रथमा तृतीयार्थे व्याख्यातेति ज्ञातव्यम् । ''सर्वाणि भूतानि'' इत्यस्यार्थः – **ब्रह्माद्या इति** ॥ ''उदतिष्ठन्'' इत्यस्यार्थः– **उपस्थिता इति** ॥ ''उलूलवोऽनूत्तिष्ठन्ति'' इत्यस्यार्थः– **उपतिष्ठन्तीत्यादि** ॥ ''तस्मात्''इत्यस्यार्थः – **त इति** ॥ तथाच यस्माद् ब्रह्माद्या उपस्थिता अतोऽद्यतना अप्युपतिष्ठन्तीति योजना । प्रति-प्रत्त्यायनमित्यनयोरर्थः – **नित्यमञ्जसेति** ॥ ''स य एतदेवम्'' इति फलवाक्यमैहिकमात्रपरमितिप्रतीतिवारणाय व्याचष्टे– **तद्विद्वानिति** ॥ मुक्तो भवेत्। वेदानामावासोऽपि भवेदित्यर्थः । तथाच श्रुत्युक्तमुपलक्षणमिति द्रष्टव्यम् ॥ खण्डः - १९ ॥

## ॥ ततश्चायं खण्डार्थः ॥

आदित्य आदित्यस्थः आदानादित्यनामा परं ब्रह्मेति आदिश्यते उपदिश्यत इत्यादेशः । आदित्यान्तर्गतमादित्यनामानं जनार्दनं परं ब्रह्मेत्युपासीतेति यावत्। नन्वादित्यान्तर्गतस्यैव कुत उपास्तिः कर्तव्येति

---

१. 'आगच्छेयुः'' इति मुद्रितपुस्तकस्थपाठः ।

जिज्ञासायां तस्याण्डान्तर्गतजराय्वादिरूपपर्वताद्यपेक्षया गर्भरूपत्वेनातिशयितत्वादिति वक्तुं तावदण्डोत्पत्तिं निरूपयितुमाह– **तस्येत्यादिना ॥** तस्याऽदित्यान्तर्गतस्य भगवतः उपास्यत्वोपपत्त्यर्थं व्याख्यानम् । सृष्टेरिति शेषः । सृष्टिनिरूपणं क्रियत इति यावत् । कारणस्य पूर्वभावं दर्शयितुमाह – **असदेवेति ॥** इदमस्य जगतोऽग्रे पूर्वं प्रलये असत् सद्यते गम्यत इति सत् । न सत् असद् अगम्यं ब्रह्मैवाऽसीदित्यर्थः । तद् अगम्यं ब्रह्म सद् विद्वद्गम्यं वासुदेवाख्यमासीत् । तस्माद् वासुदेवाख्यं रूपान्तरमासीदित्यर्थः । एवं प्रकृतिरपि मायाऽऽसीदिति वक्तव्यम् । तद् वासुदेवाख्यं रूपं समभवत् मायया सम्भोगमकरोत् । तत्तस्मात् पुन्नामकब्रह्मादिमहत्तत्वादिचाण्डमण्डपर्यन्तं निरवर्तताजायत । अण्डमपि जातम् । तद् अण्डं संवत्सरस्य कालस्य मात्रां परिमाणं प्रमाणान्तरे यावदुक्तं तावत्पर्यन्तमित्यर्थः । अशयत अनिर्भिन्नस्वरूपमेव स्थितं बभूव । तत् ततः प्रमाणसिद्धसंवत्सरकालपरिणामादूर्ध्वं निरभिद्यत । अधोलोकाश्रयकपालद्वयवत्त्वविवक्षया निर्भिण्णमिव । नतु निर्भिण्णमेव । प्रमाणान्तरविरोधात् । अन्तर्लोकादिकल्पनाक्षमावकाशविशेषवज्जातमिति भावः । ते लोकाश्रयत्वेन विवक्षिते आण्डकपाले अण्डसम्बन्धिनी ऊर्ध्वाधोभागकपाले रजतं च सुवर्णं चाभवतामधोभागगं रजतमयमूर्ध्वभागगं च सुवर्णमयमित्यभवतामित्यर्थः ॥ १ ॥

तद् यद्रजतमयमाण्डकपालमधोभागगं सेयं पृथिवी, पृथिवी लोकस्तत्र वर्तत इत्यर्थः । अत्र पृथिवीशब्देनातलादयोऽपि[१] गृह्यन्ते । लोकत्रयविवक्षायां तेषामपि भूत्वेन विवक्षितत्वादिति ध्येयम् । यत्सुवर्णं सुवर्णमयमाण्डकपालमूर्ध्वभागगं सा द्यौर्द्युलोकस्तत्सम्बद्ध इत्यर्थः ।

१. 'अतलादयो गृह्यन्ते' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः । मूलकोशेषु तथाऽदर्शनात् ।

अत्रापि द्युशब्देन महदादीनां ग्रहणम् । अस्याण्डस्य प्रसिद्धाण्डसाम्यमधिकारिणाऽवश्यं ज्ञातव्यमित्यभिप्रेत्य तत्साम्यमाह– **यज्जराय्वित्यादिना** ॥ यद् जरायुर्गर्भपरिवेष्टनं ते तत्स्थानीयाः पर्वताः । यदुल्बं कललं सः तत्स्थानीयः समेघो मेघैः सहितो नीहारः । या धमनयः [२]सिरास्ताः तत्स्थानीयाः नद्यः । यद् वास्तेयं तस्य वस्तौ भवमुदकं सः तत्स्थानीयः समुद्रः ।

अथ यत्तत् तत्राण्डे जायत गर्भरूपं सः तत्स्थानीयोऽसावादित्यनामा तत्संस्थो जनार्दनः । अत्रान्तरिक्षलोकोऽप्युभयकपालगलोकमध्यस्थस्तत्राऽदित्यादिनिरूपणेन निरूपितप्राय इत्यवधेयम् । एवं चैवमुत्पन्नाण्डगर्भरूपत्वादादित्यान्तर्गतस्य भगवत उक्तमुपास्यत्वं युक्तमित्युक्तं भवति । नन्वत्राऽदित्यशब्देन प्रसिद्ध आदित्य एव किं न स्यात् । न स्यात् । अस्य गायत्र्यादिसर्ववेदवेद्यत्वात् । ब्रह्मादिदेवतोपास्यत्वाच्च । नहीदं प्रसिद्धादित्ये सम्भवतीत्याशयेनाऽह– **तं जायमानमिति** ॥ तं जायमानं प्रकटीभवन्तं सर्वाणि भूतानि ब्रह्मादीनि उलूलवोऽतिमहान्तोऽनन्ता व्याप्ताश्च घोषाः गायत्र्यादयो वेदाः । प्रथमा तृतीयार्थे । गायत्र्यादिभिर्वेदैः सर्वे च कामाः सर्वैर्मङ्गलद्रव्यैरिति यावत् । अनूदतिष्ठन्नुपासामकुर्वन् यस्मात् तस्मादद्यतनानि सर्वाणि भूतानि सर्वे कामाः सर्वैर्मङ्गलद्रव्यैरुलूलवो घोषाः अतिमहद्भिः गायत्र्यादिभिर्वेदैस्तस्योदयं प्रति । अयनमस्तमयं च प्रति प्रत्त्यनूत्तिष्ठन्ति नित्यमञ्जसोपस्थानं कुर्वन्ति ॥ २-३ ॥

एवं वेत्तुः फलमाह– **स य इत्यादिना** ॥ स यः प्रसिद्धोऽधिकारी एतद् आदित्यान्तर्गतम् एवमुक्तरीत्या विद्वान् आदित्यं तत्संस्थं तन्नामकं

---

२. 'शिराः' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

ब्रह्मेत्युपास्ते एनमधिकारिणं साधवोऽपौरुषेयाः घोषाः वेदाः आगच्छेयुरिति यत् तदभ्याशः समीप एव शीघ्रमेव सर्ववेदप्राप्तिर्भवतीत्यर्थः । प्राप्ताश्च वेदाः न विस्मृता भवन्तीत्याह – **उपनिम्रेडेरंश्चेति** ॥ सर्वदा उपवसेयुश्चेत्यर्थः । इदमुपलक्षणम् । मुक्तो भवतीत्यपि द्रष्टव्यम् । द्विरुक्तिरुक्तावधारणार्थेत्युक्तम् ॥ ४ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य
श्रीमच्छान्दोग्योपनिषद्भाष्यस्य टीकायां
वेदव्यासतीर्थपूज्यपादशिष्यवेदेशभिक्षुविरचितायां पदार्थकौमुद्यां
तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थाध्यायस्य प्रथमः खण्डः

### उपनिषत्

*जानश्रुतेरुपाख्यानम्*

।।हरिः।।ॐ।। जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुवाक्य[१] आस । स ह सर्वत आवसथान् मापयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीति ॥ १ ॥
अथ ह हꣳसा निशायामतिपेतुस्तद्धैवꣳ हꣳसो हꣳसमभ्युवाद होहोयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत् त्वा मा प्रधाक्षीरिति ॥ २ ॥
तमु ह परः प्रत्युवाच कम्वर एनमेतत् सन्तꣳ सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ॥ ३ ॥
यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद् वेद यत् स वेद स[२] मयैतदुक्त इति ॥ ४ ॥

*रैक्वमुनेरन्वेषणम्*

तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ॥ ५ ॥
यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत् स वेद स मयैतदुक्त

१. 'बहुपाक्यः' इति पाठान्तरम् । २. 'वेद सर्वं स' ह.

इति ॥ ६ ॥

**स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय तꣳ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमृच्छेति ॥ ७ ॥**

**सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहꣳ ह्यरा३ इति ह प्रतिजज्ञे स ह क्षत्ताऽन्विष्याविदमिति प्रत्येयाय ॥ ८ ॥ १ ॥**

## भाष्यम्

**॥हरिः ॐ ॥ भल्लाक्ष मन्दाक्ष । यथा कृते जिते त्रेतादिजयफलं च तस्यैव भवति[१] । एवमन्येषां पुण्यफलं प्राधान्येन तस्यैव भवति अरे अङ्ग, इष्ट । सयुग्वा रैक्वो ज्ञातव्यः । अहं ह्यरा ३ इति प्लुतिः पामकषणभावेन ॥ १ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

**अपरं ब्रह्म वायुं च परं ब्रह्म सुखाधिकम् ।**
**वासुदेवादिरूपं च वामनं चानिशं भजे ॥ १ ॥**

पूर्वं मधुगायत्र्यादिविद्याः परब्रह्मविषया निरूपिताः । अत्र पुनः परापरब्रह्मविद्यामेव वक्तुमयमध्यायः प्रवर्तते । तत्राऽऽदौ परापरब्रह्मविषयां संवर्गविद्यां वक्तुम् आख्यायिकामाह– **जानश्रुतिरित्यादिना खण्डद्वयेन ॥** अत्र भद्रं सारासाराभिज्ञम् अक्षम् इन्द्रियं यस्यासौ भद्राक्ष इति कश्चित् । तदसत् । श्रुतहानाश्रुतकल्पनाप्रसङ्गात् । भल्लाक्षेत्यस्यैवायमर्थ

---

१. 'फलं तस्य भवति' क.

इत्यङ्गीकारे निन्दाप्रकरणविरोधात् । ''भल्लाक्षेति मन्ददृष्टित्वं सूचयन्नाह'' इति त्वद्भाष्यविरोधाच्चेति भावेन तदनूद्य व्याचष्टे – **भल्लाक्षेति ॥** जानश्रुतेर्ज्योतिरतिक्रम्य गमने तव प्राप्तं दाहं न जानासीति भावेन मन्दाक्ष इति सम्बोधित इति भावः । तथाचोक्तं गीतामाहात्म्ये–

''प्रकाशमानं पुरतस्तेजःपुञ्जं न पश्यथ ।

जानश्रुतेर्महीभर्तुः पुण्यकीर्तेरिति स्फुटम् ॥''इति । ''यथा कृताय'' इत्यादिकमेवं व्याचक्षते । द्यूते प्रवृत्तानां ये दीर्घदन्तादिमया अक्षास्तेषु चतसृषु दिक्षु चत्वारोऽङ्का भवन्ति । एकाङ्को द्व्यङ्कस्त्र्यङ्कश्चतुरङ्क इति । ते चैकाधिकत्वसामान्यात् कलिद्वापरादिनामानः । तथाच द्यूते कृताय चतुरङ्काय विजितायाधरेयास्त्रिद्व्येकाङ्कास्त्रेतादिनामानः संयन्त्यन्तर्भवन्तीति तदसत् । कृतशब्दस्य प्रसिद्धकृतयुगार्थत्वग्रहणे बाधकाभावेन द्यूताभिनिवेशेनैवं श्रुतिव्याख्यानायोगात् । परित्यज्यान्यानि निदर्शनानि द्यूतदृष्टान्तग्रहणायोगाच्च । नचाक्षेषु शौण्डा राजानोऽतोऽक्षगतचतुरङ्कनिदर्शनेनैव जानश्रुतिबोधनाय हंसो हंसं सम्बोधितवानिति वाच्यम् । जानश्रुतेः परमधार्मिकत्वेनाक्षासक्तत्वाभावात् । हंसाश्च देवा वा ऋषयो वा जानश्रुतिकृतान्नदानेन तुष्टाः समागता इति त्वयाऽपि व्याख्यातत्वेन तेषामज्ञानासम्भवाच्चेति भावेन स्वयं तद्वाक्यं व्याचष्टे – **यथेति ॥** कृते[१] कृतयुगधर्मे प्राप्तफले सति, अनेन चतुर्थी सप्तम्यर्थेत्युक्तं भवति । ''अधरेयास्त्रेतादयः'' इति पदार्थमभिप्रेत्योक्तम्– **त्रेतादिजयफलमिति॥** तस्यैव जितकृतधर्मस्यैव । प्रधानजयेऽप्रधानजयस्य सिद्धत्वादिति भावः । ''एवमेनं सर्वं तदभिसमेति'' इति दार्ष्टान्तिकवाक्यं प्रजानां किमपि साधुकर्म नास्तीति प्रतीतिं निवारयन् व्याचष्टे – **एवमिति ॥**

---

१. 'कृते' इति पदं मातृकासु न दृश्यते ।

स्वाम्यधिकरणन्यायादिति भावः। ''अङ्गारे ह स युग्वानमिव रैक्वमात्थ इति'' इत्यत्रानन्वयशङ्कां वारयितुमङ्गार इत्येतद्व्याकुर्वन्नपेक्षितं पूरयति – **अरे इति** ॥ ''अङ्ग'' इत्यनुवादेन ''इष्ट'' इति व्याख्यानम्। ''स युग्वा'' इत्यध्याहारः। तथाच कुतोऽसौ ज्ञातव्य इत्याकाङ्क्षायां यतः ''स युग्वानमिव रैक्वमात्थ'' इति हंसेनोक्तमिति न तस्यासङ्गतिरिति भावः। ''अहं ह्यरा३'' इति प्लुतिरनादर इति व्याख्यानमसत्। अनहङ्कारेण मुनिना वृथा विनयोपागततदनादरकरणायोगादिति भावेन तदभिप्रायमाह – **अहं हीति** ॥ पामानं कषमाणमिति प्रकृतत्वादिति भावः ॥

## ॥ ततश्चायं खण्डार्थः ॥

जनश्रुतस्य पुत्रो जानश्रुतिः। हेत्यैतिह्ये। पुत्रायणगोत्रापत्यं पौत्रायणः। श्रद्धया देयं यस्यासौ श्रद्धादेयः बहु [१]प्रभूतं दातुं शीलमस्येति बहुदायी, बहुपाक्यो अहन्यहनि अन्नार्थिभ्यो बहुपक्तव्यवान्, प्रतिष्ठानपुरे राजाऽऽस।

''अस्ति गोदावरीतीरे प्रतिष्ठानं पुरं महत्।

तत्र जानश्रुतिर्नाम्ना मेदिनीवल्लभोऽभवत् ॥'' इति वचनात्। स जानश्रुतिः सर्वतः सर्वासु दिक्षु ग्रामेषु नगरेषु चाऽवसन्त्येष्वित्यावसथास्तान् मापयाञ्चक्रे कारयामास। जनाः सर्वत एत्य मे ममान्नं तेष्वावसथेषु वसन्तोऽत्स्यन्ति भोक्ष्यन्तीति बुद्ध्या ॥ १ ॥

तत्रैवं सति तस्मिन् राज्ञि अत्युच्चसौधभवनमधिरुह्य स्थिते सत्यथ हंसाः देवहंसाः निशायाम् अन्तरिक्षमार्गेणातिपेतुः विनिर्गताः।

''ततोऽन्तरिक्षमार्गेण यूथानां पक्षसंहिताः।

मृणालचञ्चवो देवि देवहंसा विनिर्गताः ॥'' इति वचनात्। अत्राऽह–

१. 'भूतं' इति मातृकायाम्। पत्र. सं. १३२, १७८

''त्वरया गच्छतां तेषामन्योन्यं मर्मभाषिणाम्।

भल्लाक्षप्रमुखाः द्वित्राः पुरस्तान्निर्ययुर्जवात्॥'' इति वक्तव्यम्। तत्तदा हंसो हंसम् अभ्युवाद। ''पाश्चात्यहंसाः ऊचुस्तान् पुरतो गच्छतो जवात्'' इत्यर्थः। होहोयीति सम्बोध्य भल्लाक्ष भल्लाक्ष मन्दाक्ष मन्दाक्ष। कुतो मन्दाक्षत्वमित्यत आह – **जानश्रुतेरिति**॥ जानश्रुतेः पौत्रायणस्य ज्योतिः प्रकाशमानं तेजःपुञ्जं दीपाध्वररूपं दिवा सममाततम्। तदपि त्वं न पश्यसीति भावः। यथोक्तम् – ''यस्य दीपाध्वरे धूमैः श्यामलाः कल्पशाखिनः'' इति तज्ज्योतिस्त्वामतिक्रम्य गच्छन्तं मा प्रसाङ्क्षीः मा प्रसाङ्क्षीत्। सम्बद्धं मा भूत्। मा प्रधाङ्क्षीः मा प्रधाङ्क्षीत्। मा दहतु। तज्ज्योतिरतिक्रम्य गमने त्वां सम्बध्य दहेदिति भावः। इत्यभ्युवादेति सम्बन्धः॥ २॥

तं हंसं प्रति परोऽग्रगामी हंसः उच्चैः प्रत्युवाच। यथोक्तम्। ''हंसा हसित्वा सावज्ञमूचुर्वचनमुच्चकैः''इति। अरे हंसैतद्वचनं कमेनमुद्दिश्याऽ-त्थ। सन्तं निर्दुष्टं सयुग्वानं सशकटं रैक्वमिवेति। अननुरूपमस्मिन्नुक्तमेवं वक्तुं रैक्व एव योग्य इति भावः। एवमुक्त इतर आह – **य इति**॥ नु इदानीं यस्त्वयोक्तः सयुग्वा रैक्वः स कथम्? किंमाहात्म्यवानिति॥ ३॥

पृष्टोऽपर आह – **यथेति**॥ यथा कृताय विजिताय कृतयुगे विजिते सत्यधरेयास्त्रेतादयः संयन्ति। त्रेतादिजयफलं च तस्यैव भवति। एवमेनं रैक्वं यत्किञ्च प्रजाः साधु कुर्वन्ति सर्वं तदभिसमेति [१]प्राधान्येन। सर्वविघ्ननिवारके महामुनौ तस्मिन् राष्ट्रे वसति सति सर्वाभिः प्रजाभिः निर्विघ्नेन [२]साधुकर्मकरणेन प्राधान्यात् तत्फलं भवति। स्वाम्यधिकरण-न्यायादिति भावः। प्राधान्यमेवाऽह – **यस्तद्वेदेति**॥ यः कोऽप्यधिकारी

---

१. 'प्राधान्येन' इति पदं मातृकासु न दृश्यते। २. 'साधुकरणे प्राधान्यात् तस्यैव तत्फलं भवति' इति मातृकायाम्। पत्र. सं. ७३, १३३, १७८

यज्ज्ञातव्यं वेद तत्सर्वं स रैक्वो वेदेत्यर्थः । उपसंहरति – **स इति ॥** स रैक्वो मयैतदेतेन प्रकारेणोक्त इति ॥ ४ ॥

एवं पुरोहंसेनोक्ते सति तदु तत्सर्वं जानश्रुतिः पौत्रायणः उपशुश्राव ह । ततः स श्रुतहंसकृतानादरः सञ्जिहान एव शयनीयादुत्तिष्ठन्नेव क्षत्तारं सारथिमुवाच । यथोक्तम् ।

''ततः सारथिमाहूय भूपालो विस्मयाश्रयः ।

सन्दिदेश महात्मा स रैक्व आनीयतामिति ॥''। अरे अङ्गेष्ट । ''सयुग्वा रैक्वो ज्ञातव्यः'' इति शेषः । कुतोऽसौ ज्ञातव्यः ? यतः ''सयुग्वानमिव रैक्वमात्थ'' इति हंसेनोक्तम् । समग्रहंसवाक्योपलक्षणमेतत् ॥ ५ ॥

यस्त्वयोक्तः सयुग्वा रैक्वः स कथमिति क्षत्रा पृष्टः पौत्रायणो हंसोक्तं तल्लक्षणमाह – **यथेति ॥** ६ ॥

स ह क्षत्ताऽन्विष्य तत्रैवेतस्ततो विचार्य नाविदमिति प्रत्येयाय । तं होवाच पौत्रायणः । अरे यत्र प्रदेशे ब्राह्मणस्य ब्राह्मणानामन्वेषणा शास्त्रविचारणा प्रवर्तते तत्तत्रैनमृच्छावगच्छेति ॥ ७ ॥

एवमुक्तः स क्षत्ता पुनस्ततो निर्गत्य वाराणस्यादिसमस्ततीर्थाटनं कृत्वा कुत्रापि तमनुपलम्भमानः काश्मीरनगरमासाद्य तत्र राजद्वारि शकटस्याधस्तात् । पामानं कषमाणं कण्डूयमानं रैक्वमवलोक्य राज्ञा निरूपितैश्चिह्नैरयमेव रैक्व इति निश्चित्योप समीपे गत्वा प्रणम्योपविवेश । तथाचोक्तं गीतामाहात्म्ये– ''तत्रोपविश्य तं रैक्वं प्रत्यभ्युवाद क्षत्ता । हे भगवंस्त्वमेव किं स युग्वा रैक्वः'' इति । एवमुक्तो रैक्वो अहं ह्यरा३इति प्रतिजज्ञे । प्लुतिः पामकषणभावेन । किमर्थमत्र विश्रान्तः? किञ्च कर्तुं चिकीर्षसीत्युक्तो वयं पूर्णमनोरथाः । परं केनापि वटुना परिचर्याविधायिना भवितव्यमित्युक्तवानिति ग्राह्यम् । स ह क्षत्ता रैक्वमन्विष्याविदमिति

राजानं प्रत्येयाय। यथावृत्तं च न्यवेदयत्॥ ८॥ इति प्रथम खण्डः॥

## उपनिषत् (खण्डः २)

*रैक्वस्य वैराग्यम्*

[१]तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वरीरथं तदादाय प्रतिचक्रमे तꣳ हाभ्युवाद ॥ १॥

रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवताꣳशाधि यां देवतामुपास्स इति॥ २ ॥

तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति तदुह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३॥

तꣳ हाभ्युवाद रैक्वेदꣳ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥ ४ ॥

तस्या ह मुखमुपोद्गृह्णन्नुवाचाऽजहारेमाः शूद्रानेनैव मुखेनाऽलापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै स होवाच ॥ ५ ॥ २ ॥

## भाष्यम्

*शूद्रशब्दव्याख्यानम्*

शुचाऽऽद्रवणाच्छूद्रो राजा पौत्रायणः ।
'राजा पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः ।
प्राणविद्यामवाप्यास्मात् परं धर्ममवाप्तवान्॥' इति पाद्मे ॥ २॥

१. 'तदुह' इत्यत्र 'अथ ह' इति ह. पाठे।

## पदार्थकौमुदी

### भाष्यार्थः

"अहहारे त्वा शूद्र" इति रैक्वोक्तेः पौत्रायणः शूद्र इत्यसत्। तथा सति वैदिकसंवर्गविद्याध्ययनायोगात्। नचाधिकाराभावेऽपि पौत्रायणो वेदविद्यां विचारयामासेति किं न स्यादिति वाच्यम्। अनधिकारिणं प्रति मुनेरुपदेशासम्भवात्। नहि गवाद्याशया तस्यापरोक्षज्ञानिनः अन्याय्या प्रवृत्तिः सम्भवति। कथं तर्हि शूद्रेति सम्बोधनमित्यत आह – **शुचेति**॥ दीर्घस्वरार्थत्वेनाऽद्रवणादित्युक्तम्। शुग्द्र एव शूद्रो रुद्र इतिवत्। शुचाऽऽद्रवणादेव शूद्रेति सम्बोधितो नतु वर्णावरत्वाभिप्रायेणेत्यर्थः। शुगस्य हंसकृतानादरश्रवणादुत्पन्नेति भावः। तथाच सूत्रम् – "शुगस्य तदनादरश्रवणात् तदाद्रवणात्" इति।

ननु शूद्रः कुतो यौगिकोऽङ्गीक्रियते ? रूढार्थः किं न स्यात्। योगरूढ्यो रूढेरेव प्राबल्यात्। शूद्रस्यापि वेदविद्याधिकारस्येष्टत्वादित्यत आह – **राजेति**॥ "अयमश्वतरीरथः" इति रथित्वलिङ्गात्। क्षत्तृसम्बन्धाच्च। बाधकवशाद् रूढित्याग इति भावः। राजैव पौत्रायणो न शूद्रः किन्तु शोकेनाऽद्रवणादेव शूद्र इत्युक्त इत्यत्र श्रुतिमाह– **राजेति**॥ शोकेनाऽद्रवणपरिज्ञानं च मुनेः सर्वज्ञत्वादुपपद्यते। विपक्षे बाधकं सूचयति – **प्राणेति**॥ "परं धर्मम्" इत्यनेन संवर्गविद्यावेत्तुः श्रुत्युक्तं सार्वज्ञरूपं फलमुपलक्षणमित्युक्तं भवति। श्रद्धादेयत्वादिना[१] धर्मित्वसिद्धेः "परम्" इत्युक्तम्। शूद्रशब्दस्य स्वार्थे तात्पर्यमभ्युपेत्यायं यौगिको व्याख्यात इति ध्येयम्। क्रुद्धोक्तित्वेन स्वार्थे तात्पर्याभावे तु

---

१. 'श्रद्धादायित्वादिना' इति मातृकासु। प.सं. ७३,१८०,१३४

[१]रूढत्वेऽपि न दोषः। यथोक्तम्–

''ततो विलोक्य तत्सर्वं रैक्वो राज्ञे चुकोप ह।

रे शूद्र मामकं वृत्तं न जानासि दुरीश्वर '' इति ॥ द्वितीयः खण्डः ॥

## ॥ ततश्चायं खण्डार्थः ॥

तत् तस्मात् क्षत्रा रैक्ववार्ताया एवमुक्तत्वादेव ह । जानश्रुतिः पौत्रायणो गवां षट्शतानि निष्कं मुक्ताहारम् अश्वतरीभ्यां युक्तं रथं तदा गुरुदक्षिणार्थत्वेनाऽदाय प्रतिचक्रमे, रैक्वं प्रति गतवान्। गतः स पौत्रायणः तं रैक्वं प्रत्यभ्युवाद॥ १॥

हे रैक्वेमानि गवां षट्शतानि अयं निष्कोऽयमश्वतरीरथः तव दक्षिणात्वेन वर्तते। हे भगवो भगवंस्त्वं मे ममैतां देवतामनुशाधि त्वं यां देवतां उपास्स इति॥ २॥

तं राजानं प्रति परो लोकविलक्षणो मुनिः प्रत्युवाच । अहेति सम्बोधनम् । हे शूद्र हारः इत्वा रथश्च गोभिः सह तवैवास्त्विति । ''हारेत्वा'' इति सेदुराजेत्यादिवद् विसर्गलोपेन भवति। हारेत्वानाविति वा। तथात्वे पृथगन्वयः। हारेण युक्त इत्वा हारेत्वेति वा। तत्तस्माद् रैक्वेणैवमुक्तत्वादेव ह जानश्रुतिः पौत्रायणोऽल्पं धनमाहृतमिति मुनेः कोप इत्यभिप्रेत्य तदा[२] पुनरेव गवां सहस्रं निष्कमश्वतरीरथ-मृषेर्भार्यार्थमात्मनो दुहितरं चाऽदाय तत्[३] तत्र प्रतिचक्रमे॥ ३॥

स गत्वा रैक्वं प्रत्यभ्युवाद । रैक्वेदं गवां सहस्रम् अयं निष्कोऽयमश्वतरीरथः इयं तव जाया यस्मिंस्त्वमास्से अयं ग्रामश्च तव

---

१. 'रूढित्वेऽपि' इति क्वचित्। पत्र. सं. १८०,१३४ २. 'तदा' इत्यत्र 'तदुह' इति क्वचित्। पत्र.सं. ७३। ३. 'तत् तत्र' इति पदद्वयं मातृकासु न दृश्यते।

दक्षिणात्वेन वर्तते । हे भगवो मा मां तां देवतामन्वेव शाधि सम्यगेव शिक्षय ॥ ४ ॥

एवमुक्तो रैक्वस्तस्याः जायार्थमानीताया राज्ञो दुहितुर्मुखमुपोद्गृह्णन् शनैः पश्यन्नतिक्रुद्धः सन्नुवाच । हे शूद्र त्वमिमा गुरुदक्षिणाः अजहार अपहर । विरक्तस्य मम तेन प्रयोजनाभावात् । मदभिप्रेतश्च परिचर्याविधायी वटुरेव । स च नाऽनीतः । त्वं तु शुश्रूषया विनाऽनेन गवादिनैव मुखेन माम् आलापयिष्यथा आलापयिष्यसीति । इत्युक्ते शापभीतेन राज्ञा प्रसादितो रैक्वस्तस्मै होवाच । श्रुती [१]राज्ञादत्तरैक्वावासग्रामसञ्ज्ञामाह – **त इति** ॥ ते हैते प्रसिद्धाः ग्रामाः । महावृषेषु देशेषु काश्मीरापरपर्यायेषु रैक्वपर्णा नाम । यत्र येषु ग्रामेषु रैक्व अस्मै राजार्थं तदुपदेशार्थमेवोवास ॥ ५ ॥

**॥ इति द्वितीयखण्डः ॥**

## उपनिषत् (खण्डः-३)

*रैक्वोपदिष्टसंवर्गविद्या*

**वायुर्वाव संवर्गो यदा वा महाप्रलये अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥**

**यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान् सर्वान् संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥**

**अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव**

---

१. 'राजदत्तरैक्वावासग्रामसञ्ज्ञाम्' इति मातृकायाम् । पत्र. सं. १३५,१८१.

वागप्येति प्राणꣳ चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति ॥ ३ ॥

तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥

*वायुरेव संवर्गः, अस्मिन् विषये ऐतिह्यम्*

अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥ ५ ॥

स होवाच महात्मनश्चतुरो देव एकः कः सो जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६॥

तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायाऽत्मा देवानां जनिता प्रजानाꣳ हिरण्यदꣳष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै[१] वयं ब्रह्मचारिन्निदमुपास्महे दत्तास्मै भिक्षामिति ॥ ७ ॥

तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात् सर्वासु दिक्ष्वन्नमेव दश कृतꣳ सैषा विराडन्नादी तयेदꣳ सर्वं दृष्टꣳ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ८ ॥ ३ ॥

## भाष्यम्

'संवृङ्क्ते सर्वदेवान् यद्वायुः संवर्ग ईरितः ।
महिमाऽस्य महानेष यदनाद्योऽत्ति देवताः ॥' इति प्रभञ्जने ।

---

१. 'वै' इति पदं हृषिकेशीये नास्ति ।

**'दशेति वै सर्वम्' इति श्रुतेः ।**

**कृतस्य च पूर्णात्मकत्वादध्यात्माधिदैवतभेदेन[१] पञ्चदेवता दशभूताः कृतम् । तस्माद् वायुना सह दशसङ्ख्यापूरणात् सर्वदिक्षु स्थिता देवता वायुना सहान्नमेव । अन्नादी देवता विराड् विष्णुरेव । अनद्यमान इत्यन्यैरनद्यमानः ।**

**'वायुस्तु सर्वदेवात्ता वायोरत्ता जनार्दनः ।**
**न तस्य कश्चिदत्ताऽस्ति स विराडधिराजनात् ॥' इति च ॥३ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

किमुवाचेत्यत आह– **वायुरिति** ॥ वायुर्बाह्यः संवर्गस्तृणादेः संवर्जनात् सङ्ग्रहणाद्वेत्यसत् । "यां देवतामुपास्से तां मे शाधि"इति देवताप्रश्नोत्तरत्वात् श्रुतावेवाग्न्यादिदेवतासंहारकत्वस्य संवर्गशब्द-प्रवृत्तिनिमित्तत्वेनोक्तत्वाच्चेति भावेन प्रमाणेनैव "वायुर्वाव संवर्गः" इत्येतद्व्याचष्टे – **संवृङ्क्त इति** ॥ संहरते । "महान्तमस्य" इत्यस्यार्थ-माह – **महिमेति** ॥ देवता इत्यनन्नशब्दार्थः । "मर्त्यमन्नम्"इति वचनेनान्नशब्दस्य मर्त्यवाचकत्वात् । "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्" इति वाक्यं पञ्चकद्वयस्य परस्परभिन्नत्वप्रतीतिं वारयन् व्याचष्टे – **अध्यात्मेति** ॥ दशभूताः पूर्णाः कृतमित्युच्यन्त इत्यर्थः । दशशब्दस्य पूर्णार्थत्वे श्रुतिमाह – **दशेतीति** ॥ "सर्वं पूर्णमिहोच्यते" इति स्मृतिश्च ग्राह्या । अध्यात्माधिदैवतभेदेनावस्थितानां पञ्चदेवतानां

---

१. 'दैवभेदेन' ह.

पूर्णत्वेऽपि कृतत्वोक्तिः कथमित्यतो गौण्येति भावेनाऽह – **कृतस्येति** ॥ कृतयुगस्य पूर्णधर्मात्मकत्वादित्यर्थः । "तस्मात् सर्वासु दिक्ष्वन्नमेव" इति वाक्यमप्रतीत्यन्यथाप्रतीतिनिरासाय व्याचष्टे – **तस्मादिति** ॥ यस्माद्ध्यात्माधिदैवभेदेन द्विरूपस्य वायोस्तेषु प्रवेशस्तस्माद् वायुना सह दशसङ्ख्यापूरणाद् दशदिक्ष्वपि स्थिता दशसङ्ख्याका देवता अन्नमेवे-त्यर्थः । वायोरन्नमिति प्रतीतिनिरासाय "वायुना सहा" इत्युक्तम् । एवं तर्हि "सैषा विराडन्नादी"इत्युत्तरवाक्यविरोधः । तत्र ह्युपक्रान्तवायु-देवताऽन्नादित्वेनोच्यत इत्यत आह – **अन्नादीति** ॥ नात्रोपक्रान्तो वायुरन्नादित्वेनोच्यते । पूर्ववाक्ये तस्यान्नत्वेनोक्तत्वात् । अन्यथा दशत्वानुपपत्तेः । नहि स एवान्नमन्नादी च । तस्मादन्नादिदेवता विष्णुरेव । उपक्रमादप्युपपत्तेर्बलीयस्त्वादिति भावः । विराट् विष्णुरित्यनेन विराट् शब्दाद् ब्रह्मान्नादीत्यपि निरस्तम् । तस्यापि वाय्वत्तृत्वासम्भवात् । ननु विष्णोरन्नादित्वमङ्गीकृत्य वायोरन्नत्वाङ्गीकारे तदद्यत्वप्राप्त्या "अनद्य-मानो यदनन्नमत्ति" इत्यनद्यमानत्वोक्तिविरोध इत्यत आह– **अनद्यमान इति** ॥ विष्ण्वन्यैः । "यदनन्नमत्ति" इति वायोः सर्वदेवतासंहारक-त्वोक्तेः कथं तस्य विष्ण्वन्नत्वमित्यतः श्रुत्यर्थनिश्चायकं प्रमाणमाह– **वायुस्त्विति** ॥३॥

## ॥ ततश्चायं खण्डार्थः ॥

वायुर्वाव मुख्यवायुरेव संवर्गः । कथम्? यदा वै महाप्रलयेऽ-ग्निरुद्वायति उपशाम्यति तदा वायुमेवाप्येति । यदा सूर्योऽस्तमेति तदा वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति तदा वायुमेवाप्येति ॥ १ ॥

यदाऽऽपः तदभिमानी इन्द्रः, तथोक्तं पुरस्तात् । उच्छुष्यन्ति वायुमेवापियन्ति । कुतः ? यतो वायुरेवैतान् संवृङ्क्ते संहरतीति हि

प्रसिद्धमित्यर्थः। इत्यधिदैवतं संवर्गस्वरूपं निरूपितम्॥ २॥

अथाध्यात्मं संवर्गस्वरूपं निरूप्यते। प्राणो मुख्यप्राणः। सः मुख्यप्राणो यदा जीवं प्रस्वापयति तदा वाक् प्राणमप्येतीत्यर्थः। स इति बुद्धिस्थजीवपरामर्शो वा। अत्र वागादिशब्देन तदभिमानिनः प्रागुक्ता देवता उच्यन्ते॥ ३॥

उपसंहरति – **ताविति**॥ एवं तावेतौ द्वावेव संवर्गौ देवेषु वायुरेव प्राणेषु इन्द्रियेषु मुख्यप्राण एवेति॥ ४॥

तत्राऽऽख्यायिकामारभते – **अथेति**॥ हेत्यैतिह्ये। शौनकं शुनकस्यापत्यं कापेयं कपिगोत्रोद्भवं चाऽभिप्रतारिणं नामतः। कक्षसेन-स्यापत्यं काक्षिसेनिं चेत्येतौ परिविष्यमाणौ क्वचिदन्नं परिवेषयन्तौ कश्चिद् ब्रह्मचारी बिभिक्षेऽन्नं याचितवान्। तौ उभौ तस्मै ब्रह्मचारिणेऽन्नं न ददतुरेव। हेत्याश्चर्ये॥ ५॥

तदा स ब्रह्मचार्युवाच ह। हे कापेय! हे अभिप्रतारिन्! यो भुवनस्य गोपाः गोप्ता एको देवश्चतुरो महात्मनोऽधिदैवमग्न्यादीनध्यात्मं वागादीन् जगार जग्रास गॄ निगरणे। यं च तं प्रसिद्धं मर्त्येषु बहुधा वसन्तं मर्त्याः नाभिपश्यन्ति। स कः? किंनामा? किंमहिमा च? तदहं जानामि। त्वं जानासि चेत् तद्वदस्वेत्यर्थः। तस्माद् यस्मै देवायैतदन्नं प्रसिद्धं तस्मा एतदन्नं न दत्तमिति॥ ६॥

एवं ब्रह्मचारिणोक्ते तदु तदैव शौनकः कापेयस्तत्पृष्टं दैवतं प्रतिमन्वानो विचारयन् प्रत्येयाय व्यजानात्। उवाच च – **आत्मेति**॥ हे ब्रह्मचारिन्! यस्त्वया पृष्टो देवः देवनामाग्न्यादीनामात्मा स्वामी प्रजानां जनिता जनयिता पिता हिरण्यदंष्ट्रो बभसो भक्षणशीलः सोऽनसूरिर्नामतः।

अनश्चासौ सूरिश्चेत्यनसूरिः । तन्माहात्म्यमाह – **महान्तमिति** ।। अस्य अनस्य मुख्यप्राणस्य महिमानं महान्तमाहुर्विद्वांसः । कुतः ? यद्यस्मादसौ स्वयं विष्वन्यैरनद्यमानोऽन्नममर्त्यं सर्वदेवजातमत्तीत्यनेनैव प्रकारेण वयमिदं दैवतमुपास्महे । अस्मै वायुदेवताभिज्ञाय ब्रह्मचारिणे भिक्षां दत्तेत्यन्यान् प्रत्याह कापेयः ।। ७ ।।

एवमुक्ताः केचित् परिवेषकास्तस्मै तदैव भिक्षां ददुहं । एवमाख्यायिकया वायोः सर्वसंहर्तृत्वमुक्तम् । तर्हि स एव सर्वसंहर्ता किं नेति भावेनाऽह रैक्वः – **ते वा इति** ।। ते वा एते अध्यात्माधि-दैवभेदेनोक्ताः अग्न्याद्याः वागादयश्च वायुना मुख्यप्राणेन च सह पञ्चान्ये पञ्चान्ये दश सन्तः पूर्णाः सन्तो यतः तत् तस्मात् कृतमित्युच्यन्ते । कृतयुगस्यापि पूर्णधर्मात्मकत्वात् । किं तत इत्यत आह–**तस्मादिति** ।। तस्माद् उक्तरीत्या वायुना सह दशसङ्ख्यापूरणात् । सर्वासु दिक्षु दशस्वपि दिक्षु स्थिताः दश पूर्णाः अत एव कृतमित्युक्ताः अग्न्याद्या वागादयश्च वायुना मुख्यप्राणेन च सहान्नमेव । त एते कस्यान्नं यो वायोरप्यत्तेत्यत आह – **सैषेति** ।। सैषा वाय्वाद्यन्नादिदेवता विराड् अधिराजनाद् विराण्णामा विष्णुरेव । तस्यास्तदज्ञाने कथमेतदत्तृत्वं स्यादित्यत आह – **तयेति** ।। तया विराडाख्यदेवतयेदं सर्वं वाय्वादिकं दृष्टम् । सा सर्वज्ञेत्यर्थः । एवं विष्णूपासकस्य तदनुरूपं फलमाह – **सर्वमिति** ।। योऽधिकारी एवं सर्वज्ञत्वेनान्नादित्वेन च विराडाख्यं विष्णुं वेदोपास्ते । अस्यानेनोपा-सकेनेदं स्वयोग्यं सर्वं दृष्टं भवति । सोऽन्नादश्च भवति ।। ८ ।।

**।। इति तृतीयः खण्डः ।।**

## उपनिषत् (खण्डः-४)

*जाबालसत्यकामोपाख्यानम्*

सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किङ्गोत्रो न्वहमस्मीति ॥ १ ॥

सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि[१] स सत्यकाम एव जाबालो ब्रुवीथा इति ॥ २ ॥

स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥ ३ ॥

त౨होवाच किङ्गोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातर౨ सा मा प्रत्यब्रवीद् बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽह౨सत्यकामो जाबालोऽस्मि भो इति ॥ ४ ॥

त౨ होवाच नैतदब्राह्मणो विवक्तुमर्हति समिध౨ सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशतं गा निराकृत्योवाचेमाः सोम्यानु संव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणाऽवर्तेयम्[२] इति । स ह वर्षगणं प्रोवास ता यदा सहस्र౨ सम्पेदुः ॥ ५ ॥ ४ ॥

---

१. 'त्वमसीति स त्वं सत्यकामो जाबालः' इति ह. २. 'आवर्तय' इति क्वचित् पाठः।

## भाष्यम्

**'आर्जवं ब्राह्मणे साक्षाच्छूद्रोऽनार्जवलक्षणः ।**

**गौतमस्त्विति विज्ञाय सत्यकाममुपानयत् ॥' इति साम-संहितायाम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं परापरब्रह्मविषया संवर्गविद्या निरूपिता । इदानीं परब्रह्मविषयामेव वासुदेवादिचतुर्मूर्तिविद्याम् आख्यायिकापुरःसरमाह – **सत्याकाम इत्यादिखण्डषट्केन ॥** ननु गोत्रानिर्णये ब्राह्मण्यानिर्णयात् कथं गौतमः सत्यकामोपनयने प्रवृत्तः ? शूद्रसंस्कारस्य निषिद्धत्वादिति चेन्न । ''नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि'' इति वचनेन सत्यकामस्याऽर्जवं ज्ञात्वा ''नैतदब्राह्मणो विवक्तुमर्हति'' इति शूद्रत्वाभावनिर्धारण एव तदुपनयने प्रवृत्तत्वात् । तथा च सूत्रम्– **''तदभावनिर्धारणे च प्रवृत्तेः''** इति । आर्जवज्ञानेऽपि शूद्रत्वाभावनिर्धारणं कथमित्यत आह– **आर्जवमिति ॥** ब्राह्मणे ब्रह्माणनयोग्ये त्रैवर्णिके साक्षान्मुख्यतः आर्जवं लक्षणमिति शेषः ।

### ततश्चायं खण्डार्थः

सत्यकामो नामतो जाबालो जबालापुत्रो जबालाख्यां स्वमातरमामन्त्रयाञ्चक्रे आकारितवान् उवाच च । हे भवति अहं ब्रह्मचर्यं वेदाध्ययनमुद्दिश्य विदेशं गत्वा वत्स्याम्याचार्यकुले । किं ततः ? ममाधुनापि नोपनयनम् । ते च गोत्रानिर्णये नोपनयनं कुर्युरतोऽहं किंगोत्रोऽस्मीति । नु वितर्के ॥ १ ॥

एवं पृष्टा सा ह एनं स्वपुत्रमुवाच । हे तात त्वं यद्गोत्रोऽसि एतन्नाहं वेद । कस्मान्न वेत्थेत्यत आह – **बह्विति** ॥ यतोऽहं बहु यथेष्टं चरन्ती परिचारिणी दासी । यौवने त्वामलभे । अतः साऽहमेतन्न वेद यद्गोत्रस्त्वमसीति । जबाला तु नामाहमस्मि । सत्यकामो नाम त्वमसि । स त्वं सत्यकामो जाबालोऽस्मीत्येवाऽऽचार्याय ब्रवीथा इति ॥ २ ॥

स सत्यकामो हारिद्रुमतं हरिद्रुमतोऽपत्यं गौतमं गोत्रतः एत्योवाच । भगवति पूजार्हे त्वयि ब्रह्मचर्यमुद्दिश्य वत्स्यामीति भावेन भगवन्तमुपेयामिति ॥ ३ ॥

तं होवाच गौतमः । हे सोम्य त्वं किंगोत्रोऽसि ? नु वितर्के । नाधुनापि तवोपनयनसंस्कारः । तदभावे च नाध्ययनम् । गोत्रानिर्णये च ब्राह्मण्यानिर्णयान्नोपनयनसंस्कार इति भावः । एवमुक्तः स सत्यकाम उवाच । अहं यद्गोत्रोऽस्मि नाहमेतद्वेद । पिता नु नास्त्येव । अपृच्छं मातरम् । सा मा मां प्रत्यब्रवीत् । मात्रोक्तमेवाऽऽह – **नेति** ॥ उक्तार्थमेतत् ॥ ४ ॥

एवं सत्यवचनेन सत्यकामस्याऽऽर्जवं ज्ञात्वा गौतमस्तं होवाच । एतदार्जवसंयुक्तं वचनमब्राह्मणस्त्रैवर्णिकेतरः वि सर्वथा वक्तुं नार्हति । आर्जवस्य ब्राह्मणलक्षणत्वात् । त्वं तु सत्याद् ब्राह्मणधर्मभूतात् नागाः नापेतवानसि अतस्त्वं ब्राह्मण एव । अतोऽनुपनीतं त्वामुपनेष्ये । तदर्थं समिधमाहरेति योजना । तमुपनीय कृशानामबलानां केषाञ्चिद् ब्राह्मणानां चतुःशतं गा निराकृत्य गोष्ठान्निष्काल्योवाच । षष्ठी द्वितीयार्थे वा । कृशा अबलाः चतुश्शतं स्वकीया गा इत्यर्थः । हे सोम्येमा अनुसंव्रजेति ता गा अरण्यं प्रत्यभिप्रस्थापयन्नुवाच गौतमः । असहस्रेणासम्पूर्णसहस्रेण गोयूथेन सह नाऽऽवर्तय न प्रत्यागच्छ । किन्तु सम्पूर्णसहस्रेण सह

प्रत्यागच्छेति । स[१] एवमुक्तस्ता गास्तृणोदकबहुलं द्वन्द्वरहितमरण्यं प्रवेश्य ताश्चतुश्शतसङ्ख्याका गा यदा यावता वर्षगणेन सहस्रं सम्पेदुः तावन्तं वर्षगणं तत्रैव प्रोवास ॥ ५ ॥ चतुर्थः खण्डः ॥ ४ ॥

## उपनिषत् (खण्डः-५)

*ऋषभरूपिवायुना वासुदेवाख्यरूपोपदेशः*

अथ हैनमृषभोऽभ्युवाद सत्यकामा ३ इति भगव इति ह प्रति-शुश्राव प्राप्ताः सोम्य सहस्रꣳ स्मः प्रापय न आचार्यकुलम् ॥ १ ॥ ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाच प्राची दिक् कला प्रतीची दिक् कला दक्षिणा दिक् कलोदीची दिक् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥ स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकान् जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥ ५ ॥

## उपनिषत् (खण्डः-६)

*अग्निना सङ्कर्षणाख्यभगवद्रूपोपदेशः*

अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिध-माधाय पश्चादग्नेः प्राङ् उपोपविवेश ॥ १ ॥

---

१. 'सः' इत्येत् क्वचिन्न दृश्यते । पत्र.सं. १८५, १३८

तमग्निरभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥
ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥
स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकान् जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥ ६ ॥

उपनिषत् (खण्डः-७)

*हंसरूपिणा चतुर्मुखब्रह्मणा प्रद्युम्नाख्यभगवद्रूपोपदेशः*

हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङ् उपोपविवेश ॥ १ ॥
तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥
ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥
स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकान् जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥ ७ ॥

## उपनिषत् (खण्डः- ८)

*मद्गुरूपिवरुणेनानिरुद्धरूपोपदेशः*

मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङ् उपोपविवेश ॥ १ ॥

तं मद्गुरुपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै स होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोकान् जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥ ८ ॥

## उपनिषत् (खण्डः- ९)

प्राप हाऽचार्यकुलं तमाचार्योऽभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ १ ॥

ब्रह्मविदिव वै सोम्य भासि को नु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवांस्त्वेव मे कामे ब्रूयात् ॥ २ ॥

श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयतीति तस्मै हैतदेवोवाचात्र ह न किञ्चन वीयायेति वीयायेति ॥ ३ ॥ ९ ॥

भाष्यम्

'वायुर्वृषभरूपः सन्नग्निर्हंसश्चतुर्मुखः ।
मद्गुरूपश्च वरुणः सत्यकामाय होचिरे ॥
प्रकाशानन्ततेजोवत्स्थानवत्सञ्ज्ञिका[१] हरेः ।
वासुदेवादिका मूर्तीः प्रत्येकं चतुरात्मनः ॥
दिगादिषु स्थितास्तेषामधिपाश्च तदाख्यकाः ।
नाऽचार्यबुद्ध्या तैरुक्तमतोऽनुज्ञां गुरोरगात् ॥
उत्तमाचार्यसम्प्राप्त्यै नावराचार्यतः क्वचित् ।
इच्छेदनुज्ञां श्रुत्वाऽपि नानुज्ञां प्रार्थयेत् ततः ॥
ऋषिभ्यस्तूत्तमा देवा देवेभ्यो वायुरुत्तमः ।
वायोश्च भगवान् विष्णुर्न तस्मादुत्तमो गुरुः ॥'

इत्याचार्यसंहितायाम् ।

अत्र ह न किञ्चन वीयाय । देवेभ्यः श्रुत्वा न च ते[२] काचिद्धानिरभवदित्यर्थः ॥ ५-९ ॥

पदार्थकौमुदी

भाष्यार्थः

ऋषभाग्निहंसमद्गूनां कथं सत्यकामोपदेष्टृत्वम् ? तेषां पश्वादित्वादित्यत आह – **वायुरिति** ॥ वरुणश्चेत्येते । हंस आदित्यो मद्गुः प्राण इत्यप्रामाणिकं व्याख्यानमित्यनेनोक्तं भवति । ऋषभाद्युपदिष्टाः ब्रह्मणः पादाः प्रकाशवदनन्तवज्ज्योतिष्मदायतनवन्नामानः क इत्यत आह –

१.'सञ्ज्ञकाः' ह. २. 'न ते' ह.

**प्रकाशेति** ॥ द्वन्द्वान्ते श्रुतो मतुप् सर्वत्रान्वेति । ''मूर्तीः ऊचिरे''इति सम्बन्धः । कथं तर्हि ''प्राची दिक्कला'' इत्यादिना प्रत्येकं प्राच्यादीनां कलात्वोक्तिरित्यत आह – **प्रत्येकमिति** ॥ प्रत्येकं चतुरात्मनो हरेस्तदाख्यकाः प्राचीदिगादिशब्दाभिधेयाः वासुदेवादिकाः मूर्तीरूचिर इत्यन्वयः । तदाख्यत्वे निमित्तद्वयम् – **दिगादिष्वित्यादि** ।

ननु यदि ऋषभाद्या देवता एव कथं तर्हि तदुपदिष्टेन सत्यकामेन गौतमो ''भगवांस्त्वेव मे कामे ब्रूयात्'' इति प्रार्थ्यते । ''पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि । गृह्णीयादविचारेण'' इत्युक्तेरित्यत आह– **नेति** ॥ यदृच्छयोपदेष्टार एव ते, नत्वनेनाऽचार्यतया स्वीकृताः । अत एव समग्रानुग्रहपुरःसरं वयमेतस्याऽचार्या इति बुद्ध्या तैर्नोक्तमित्यर्थः । ''पूर्वानुज्ञा तु मृग्यते'' इत्युक्तेः सत्यकामस्तानाचार्यत्वेन स्वीकृत्यैव पश्चाद्गौतमादनुज्ञामवापेति किं न स्यादित्यतः शिक्षामुत्तरमाह– **उत्तमेति** ॥ उत्तमाचार्यतः श्रुत्वाऽपीत्याद्येव प्रकृतोपयोगि । समगुर्वन्तर-स्वीकारविषयं तदिति भावः । तर्हि वाय्वादिभ्यः श्रुतवताऽपि सत्यकामेन गौतमानुज्ञाप्रार्थनाद् गौतमो वाय्वादिसम इति किं न स्यादित्यत आह – **ऋषिभ्य इति** ॥ गौतमोऽपि कश्चिद् ऋषिरिति भावः । ''अत्र ह न किञ्चन वीयाय'' इत्यनुज्ञाप्रदानवचनमप्रतीतेरनूद्य व्याचष्टे – **अत्रेति** ॥ श्रुत्वा स्थितस्य ॥ खं ४–९ ॥

**॥ ततश्चायं खण्डपञ्चकार्थः ॥**

अथ गोसहस्रसम्पत्त्यनन्तरमेनं श्रद्धातपोभ्यां सिद्धं सत्यकामम् ऋषभः श्रेष्ठो वायुरेव वृषभरूपः सन् तस्मै तुष्टः स्वयमेवाऽगत्याभ्युवाद । सत्यकामा ३ इति । व्यासङ्गभर्त्सनार्था प्लुतिः । ''भगव'' इति ह प्रतिशुश्राव प्रत्युत्तरमदात् सत्यकामः । हे सोम्य! वयं सहस्रं प्राप्ताः स्मः ।

पूर्णा तव प्रतिज्ञा। अतो नोऽस्मान् आचार्यकुलं प्रापय॥ १॥

अहं ब्रह्मणः परब्रह्मणः पादमंशं वासुदेवाख्यं ते तव ब्रवाणीत्येवमुक्तेन सत्यकामेन ब्रवीत्वित्युक्तः तस्मै होवाच । प्राची दिक् तदन्तर्गतस्तन्नामको वासुदेवः कला ब्रह्मपादस्य। प्रतीचीस्थः सङ्कर्षणः दक्षिणास्थः प्रद्युम्नः उदीचीस्थोऽनिरुद्ध इति ज्ञेयम् । उक्तमनुवदन्नुपदिष्टमूर्ते रहस्यं नामाऽह – **एष इति** ॥ हे सोम्यैष चतुष्कलः । एवं पुनर्वासुदेवादिचतुष्कलोपेतो ब्रह्मणः पादो वासुदेवाख्यः प्रकाशवान्नाम वै ॥ २॥

एवमुपासकस्य फलमाह – **स य इति** ॥ योऽधिकारी एतं चतुष्कलं ब्रह्मणः पादमेवं प्रकाशवान्नामेति विद्वान् प्रकाशवानित्युपास्ते। सोऽस्मिन् लोके प्रकाशवान् भवति। न केवलमैहिकमेव। य एतं चतुष्कलं ब्रह्मणः पादमेवं प्रकाशवानित्युपास्ते । स प्रकाशवतो ह वैकुण्ठादीन् लोकान् जयति प्राप्नोति॥ ३॥ **इति पञ्चमः खण्डः॥ ५॥**

स ऋषभः स्वयमेकं ब्रह्मणः पादमुपदिश्य ते तवाग्निर्देवतारूपो ब्रह्मणः एकं पादं वक्तेत्युक्त्वा जगाम। स सत्यकामो ह श्वोभूते परेद्युः नित्यकर्म कृत्वा गा अभिप्रस्थापयाञ्चकाराऽचार्यकुलं प्रति । ताः शनैश्चरन्त्यः आचार्यकुलाभिमुखाः प्रस्थिताः। यत्र यस्मिन् देशे सायं बभूवुः प्राप्तास्तत्र गा उपरुध्य अग्निमुपसमाधाय समिधमग्नावाधायाग्नेः पश्चात् स्वयं प्राङ्मुखः सन् अग्निमुपोपविवेश ऋषभवचो ध्यायन् ॥ १॥

तमग्निः प्रत्यक्षः सन्नभ्युवाद सत्यकामा ३ इति। तमसौ सत्यकामो भगव इति प्रतिश्रावितवान्॥ २॥

हे सोम्य ते तव ब्रह्मणः पादं सङ्कर्षणाख्यं पुनः चतुष्कलोपेतं ब्रवाणीति । ब्रवीत्वित्युक्तस्तस्मै होवाच । पृथिव्यन्तरिक्षद्युसमुद्रस्था-

स्तदाख्या वासुदेवाद्याः भगवतः सङ्कर्षणस्य कला इत्यर्थः । तस्य रहस्यं नामाऽह – **एष इति ॥** अन्तवान्न भवतीत्यनन्तवानित्यर्थः । शेषं पूर्ववत् ॥ ३ ॥ ४ ॥ **॥ इति षष्ठः खण्डः ॥ ६ ॥**

सोऽग्निर्हंसो हंसरूपश्चतुर्मुखस्ते ब्रह्मणः एकं पादं वक्तेत्युक्त्वा जगाम । स हेत्यादि पूर्ववत् ॥ १ ॥ २ ॥

ब्रह्मणः पादं प्रद्युम्नाख्यम् अग्निसूर्यचन्द्रविद्युत्सु स्थितास्तन्नामानो वासुदेवाद्याः प्रद्युम्नस्य कला इत्यर्थः ॥ ३ ॥ ४ ॥

**इति सप्तमः खण्डः ॥ ७ ॥**

(१)स हंसो मद्गुर्जलवायसरूपो वरुणस्ते पादं वक्तेत्युक्त्वा जगाम ॥ १ ॥ २ ॥

ब्रह्मणः पादमनिरुद्धाख्यं प्राणचक्षुःश्रोत्रमनःस्थास्तन्नामानश्चत्वारो वासुदेवाद्याः कलाः अनिरुद्धस्य । अन्यत् पूर्ववत् ॥ ३ ॥ ४ ॥ **इति अष्टमः खण्डः ॥ ८ ॥**

स एवं विद्वान् सन् प्राप हाऽऽचार्यकुलम् । तं प्राप्तं सत्यकाममाचार्योऽभ्युवाद । सत्यकामा ३ इति । भगव इति प्रतिश्रावितवान् सत्यकामः ॥ १ ॥

हे सोम्य त्वं ब्रह्मविदिव, वै स्पष्टं भासि । नु वितर्के । कोऽनु त्वाऽनुशशास ? देवो वा मनुष्यो वेत्युक्त इतरे मनुष्येभ्योऽन्ये देवा मामनुशशासुरिति ह प्रतिजज्ञे । कोऽन्यो भगवच्छिष्यं मां मनुष्यः सन्ननुशासितुमुत्सहेतेत्यभिप्रायः ॥ २ ॥

यद्यपि देवेभ्यः श्रुतं तथाऽपि भगवानेव मे मम कामे शुभार्थं ब्रूयाद्

१. 'सः' इत्येतद् मातृकासु न दृश्यते । पत्र.सं १८६, १३९

ब्रवीतु । कुतः ? हि यस्मादाचार्यादेव विदिता विद्या साधिष्ठं साधुतमत्वं प्रापयति प्राप्नोतीति भगवद्दृशेभ्यो भगवत्समेभ्यः श्रुतम् । मया त्वाचार्यतया भगवानेव स्वीकृतो न ते देवाः । किन्तु कृपया स्वयमेवाऽगत्योपदिदिशुः । एवमुक्ते तस्मै सत्यकामायैतदेव वक्ष्यमाणमेवोवाच । अत्र देवेभ्यः श्रवणेन किञ्चन वीयाय नापगतं न काचिद्धानिरभूदित्यर्थः ॥ ३ ॥

॥ इति नवमः खण्डः ॥

## उपनिषत् (खण्डः-१०)

*उपकोसलोपाख्यानम्*

**उपकोसलो हवै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादश वर्षाण्यग्नीन् परिचचार स ह स्मान्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मैव न समावर्तयति ॥ १ ॥**

**तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन् परि चचारीन्मा त्वाऽग्नयः परिप्रावोचन् प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे ॥ २ ॥**

*अग्निभिःकृतः मुख्यप्राणपरब्रह्मोपदेशः*

**स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति स होवाच बहव इमेऽस्मिन्[१] पुरुषे कामा नानात्यया व्याधिभिः परिपूर्णोऽस्मि[२] नाशिष्यामीति ॥ ३ ॥**

**अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः [३]पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः ॥ ४ ॥**

१.'बहवो ह्यस्मिन्' इति हृ. २.'प्रतिपूर्णोऽस्मि' क.प्र.पाठः । ३. 'परि चचारीत्' इति क्वचित् पाठः

प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ॥ ५ ॥ १० ॥

## भाष्यम्

प्राणो ब्रह्म बलरूपं ब्रह्म । कमानन्दरूपम् । खं ज्ञानरूपम् ।

'अपरब्रह्म[१] स प्राणः साक्षाद् यो बलदेवता ॥

ज्ञानानन्दात्मकं पूर्णं परं ब्रह्म स्वयं हरिः ।

नैजानन्दबलोद्रेकः कमित्युक्तो मनीषिभिः ॥

बलज्ञानसमाहारः पूर्णः खमिति शब्दितः[२] ।

तदात्मकः परो विष्णुराकाश इति कीर्तितः ।

एवं प्राणस्तथाऽऽकाशो ब्रह्मणी द्वे प्रकीर्तिते ॥' इति च ।

प्राणशब्दस्य वायुरर्थः प्रसिद्धः । कखयोर्भिन्नार्थत्वशङ्कया [३] कं च तु खं च न विजानामीत्याह । अत एवैक्याभिप्रायेण यद्वाव कं तदेव खं यदेव खं तदेव कमित्यूचुः ॥१० ॥

## पदार्थकौमुदी

### भाष्यार्थः

अत्र पुनराख्यायिकापुरःसरं परापरब्रह्मविद्यामुत्क्रान्तमार्गं च निरूपयति – **उपकोसल इत्यादिना खण्डषट्केन** ॥ तत्र ''प्राणो ब्रह्म'' इत्यादौ प्राणाद्यनुवादेन ब्रह्मत्वं विधीयत इति प्रतीतिनिरासाय तदनूद्य

१.'अपरं ब्रह्म' क. २.'पूर्णं खमिति शब्दितम्' ह. ३.'भिन्नवस्तुत्वाशङ्कया' ह.

व्याचष्टे– **प्राण इति** ।। अत्र ''प्राणो ब्रह्म कं ब्रह्म'' इत्यादिकं नैकविषयं प्राणस्य विज्ञेयत्वोक्तेः । कखयोरविज्ञेयत्ववचनात् । ''प्राणं च हास्मै तदाकाशं चोचुः'' इत्युपसंहारविरोधाच्चेति भावेन भिन्नविषयतां प्रमाणेनैव दर्शयति– **अपरमिति** ।। ब्रह्मशब्दस्याप्यमुख्यार्थत्वमुपपद्यते विरोध इति भावः । परब्रह्मप्राप्तेरपरब्रह्माधीनत्वादादौ तन्निरूपणम् । नन्वपरब्रह्मणोऽपि ज्ञानानन्दात्मकत्वात् कथं कं च खं च परब्रह्म । अपरब्रह्मणो बलरूपत्वे परब्रह्मणस्तदभावप्रसङ्गश्चेत्यतः कखशब्दौ व्याचष्टे– **नैजेति** ।। अपराधीनेत्यर्थः । पूर्ण इत्यस्याप्ययमेवार्थः । अतिशयद्योतकत्वान्न बलांशे पुनरुक्तता । प्राचीनव्याख्यानं त्वसाधारणपदार्थमादायेत्यवधेयम् । वाक्यार्थमाह – **तदात्मक इति** ।। विष्णुः कमित्युक्त इति खमिति शब्दित इति च वर्तते ।

ननु ''प्राणं च हास्मै तदाकाशं चोचुः'' इति कखयोराकाशत्वोक्तेः कथं विष्णुत्वमुच्यत इत्यत आह – **आकाश इति** ।। प्रसिद्धाकाशे कत्वानुपपत्तेरिति भावः । नच कं खाभिन्नं खं चाऽकाशमिति नानुपपत्तिः । उक्तार्थाविवक्षायां कखयोरभेदस्यैवानुपपत्तेः । ''खं ब्रह्म''इति ब्रह्मशब्दानुपपत्तेश्च । ''प्राणं च'' इति वाक्यं किञ्चित् पूरयन् व्याचष्टे – **एवमिति** ।।

विजानाम्यहं यत् प्राणो ब्रह्मेत्युक्तौ निमित्तमाह – **प्राणशब्दस्येति** ।। अतो ''विजानाम्यहं यत् प्राणो ब्रह्म''इत्याह । ननु यथा प्राणशब्दस्य वायुरर्थः प्रसिद्धस्तथा कखशब्दयोरपि सुखज्ञानार्थत्वं प्रसिद्धमेव । ततश्च ''कं च खं च न विजानामि'' इति कथमुक्तमित्यत आह– **कखयोरिति** ।। न कखशब्दयोरर्थापरिज्ञानेन ''कं च खं च न विजानामि'' इत्याह । किन्तु भिन्नार्थत्वशङ्कयैवेत्यत्रोत्तरवाक्यमवष्टम्भकमाह – **अत एवेति** ।। अन्यथा कखशब्दार्थस्यैव निरूपणीयत्वेन तयोर्ग्रक्योक्ति-

रसज्ञता स्यादिति भावः । ऊचुरग्नयः ॥

## ॥ ततश्चायं खण्डार्थः ॥

उपकोसलो नामतः । कमलायनस्यापत्यं कामलायनः । सत्यकामे जाबाले पूर्वोक्ते । ब्रह्मचर्यमुद्दिश्योवास । स तत्र गुरुकुले तस्याऽ-चार्यस्याग्नीन् द्वादशवर्षाणि परिचचार । स ह स्माऽचार्योऽन्या-नन्तेवासिनश्छात्रान् स्वाध्यायं ग्राहयित्वा सम्यगावर्तयंस्तमुपकोसल-मेकमेव न समावर्तयति । स्महेत्याश्चर्या महतां चित्तवृत्तिरित्याह ॥ १ ॥

तमाचार्यमाचार्यजायोवाच । ब्रह्मचारी तप्तश्चीर्णतपा जातः । कथं कुशलं यथा तथाऽग्नीन् परि च चारीत् पर्यचरत् । त्वमिमं नोपदिष्टवानेव । त्वा तवाग्नयोऽप्यनेन सेविताः सन्तो मा परिप्रावोचन् । इतः परं वा प्रब्रूह्यस्मा इति । एवं जायोक्तोऽपि सत्यकामस्तस्मा उपकोसलायाप्रोच्यैव प्रवासाञ्चक्रे प्रोषितवान् ॥ २ ॥

स होपकोसलो व्याधिना मानसेन दुःखेनानशितुमनशनं कर्तुं दध्रे मनः । तमनशनमनस्कमाचार्यजायोवाच । हे ब्रह्मचारिन्नशान भुङ्क्ष्व । किन्नु कस्मात् कारणान्नाश्नासीति । एवमुक्तः स होपकोसलो होवाच । अस्मिन् पुरुषेनानात्ययाः नानागतयः कामाः बहवोऽतः कामिताऽ-प्राप्तिनिमित्तव्याधिभिः प्रतिपूर्णोऽस्मि । अतो नाशिष्यामीत्युक्त्वा ब्रह्मचारिणि तूष्णीम्भूते ॥ ३ ॥

अथ हाग्नयः कारुण्याविष्टाः सन्तस्त्रयोऽपि समूदिरे परस्परमूचुः । तप्तो ब्रह्मचारी यतः कुशलं यथा भवति तथा नोऽस्मान् परि च चारीत् । हन्तेदानीमस्मै ब्रह्मचारिणे वयं सर्वे प्रब्रवाम परापरब्रह्मविद्यामित्येवं प्रतिज्ञाय तस्मै होचुः ॥ ४ ॥

प्राणो ब्रह्म बलरूपं ब्रह्मेत्यपरब्रह्मोपदेशः । कम् अपराधीनबला-नन्दरूपं ब्रह्म । खं तादृग्बलज्ञानरूपं ब्रह्मेति परब्रह्मोपदेशः । एवमुक्तः स

उपकोसल उवाच ह । यदुक्तं भवद्भिः प्राणो ब्रह्मेति तदहं विजानामि । प्राणशब्दस्य वायुरर्थ इति प्रसिद्धत्वात् । कखयोर्भिन्नार्थत्वशङ्कया कं च, खं च तु विशेषाकारेण न विजानामीति ॥ अत एवैक्याभिप्रायेण ते होचुः । ''यद्वाव कं तदेव खं यदेव खं तदेव कम्'' इति । श्रुतिः स्वयमाह– **प्राणं चेति** ॥ तेऽग्नयस्तदा सम्भूयोपदेशकालेऽस्मा उपकोसलाय प्राणं मुख्यप्राणाख्यम् अपरं ब्रह्म चाऽकाशं च पूर्तेराकाशनामकं विष्ण्वाख्यं परं ब्रह्म चोचुः । कं च खमित्युक्तं खं चाऽकाशमित्यनूद्यत इति न दोष इति ॥ ५ ॥

**॥ इति दशमः खण्डः ॥**

## उपनिषत् (खण्डः-११)

*गार्हपत्याग्निना पृथिव्यादिस्थभगवदुपदेशः*

**अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्व-मायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ ११ ॥**

## उपनिषत् (खण्डः-१२)

*अन्वाहार्यपचनाग्निना जलादिस्थभगवदुपदेशः*

**अथ हैनमन्वाहार्यपचनोऽनुशशासाऽपो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ १२ ॥

## उपनिषत् (खण्डः-१३)

*आहवनीयाग्निना प्राणादिस्थभगवदुपदेशः*

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥
स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यापरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ १३ ॥

### भाष्यम् -

'पृथुत्वात् पृथिवी विष्णुरग्निश्चाप्यङ्गनेतृतः ।
अन्नमत्तृत्वतो नित्यमादित्यश्चाऽदिरूपतः ॥
आप आपालनाच्चैव देशनाद्दिश एव च ।
अनन्यराजो नक्षत्रमानन्दत्वाच्च चन्द्रमाः ॥
प्राणोऽसौ बलरूपत्वादाकाशः पूर्तिहेतुतः ।
द्यौः प्रकाशस्वरूपत्वाद्वेदनाद् विद्युदेव च ॥
यः सोमसूर्यविद्युत्सु[१] तत्तन्नामा हरिः परः ।

१.'सूर्यसोमविद्युत्सु' ह.

**अहेयत्वादहंनामा गार्हपत्यादिसंस्थितः ॥' इति तत्त्वसंहितायाम् ।**

*'सोऽहमस्मि' इति वाक्यस्य जीवब्रह्मैक्यपरत्वनिरासः*

**जीवैक्यपक्षे आदित्ये पुरुषश्चन्द्रमसि विद्युतीति भेदव्यपदेशो न युज्यते । 'पृथिव्यग्निरन्नमादित्यः' 'आदित्ये पुरुषः' इत्यादिना आदित्यादिशब्दवाच्यौ प्रथमार्थः सप्तम्यर्थश्च द्वौ प्रतीयेते । अतो नैक्यमुच्यते । स एवाहमस्मीत्यन्तर्यामिणोः सर्वविशेषाभाव-ज्ञापनार्थम्[१] । पूर्वं सोऽहमस्मीत्यभेदे तात्पर्याधिक्यज्ञापनाय ।**

**'अहमस्म्यादिकाः शब्दा अन्तर्यामिणि मुख्यतः ॥**
**तत्सम्बन्धाज्जीवगाश्च तस्माद् वेदगता हरौ ।**
**अस्माच्छब्दोदितोऽन्तःस्थ आत्मा व्याप्तो जनार्दनः ।**
**अग्रयो द्विविधं विष्णुमवोचन्नुपकोसले ॥' इति सामसंहितायाम् ।**

**नास्यापरपुरुषाः क्षीयन्ते भृत्यवानेव भवति । लोकी भगवल्लोकी भवति ॥१३ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

एवमग्निभिः सम्भूयोक्तां परापरब्रह्मविद्यां निरूप्येदानीं पृथक्-पृथगुक्तां परब्रह्मविद्यामेव निरूपयति – **अथेत्यादिना खण्डत्रयेण ॥** तत्र ''पृथिव्यग्निरन्नमादित्यः इति ममैताश्चतस्रस्तनवः'' तत् ''य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि गार्हपत्योऽग्निः यश्च गार्हपत्योऽग्निः स एवाहमादित्ये पुरुषोऽस्मि'' । एवम् ''आपो दिशश्चन्द्रमा नक्षत्राणि'' इत्यादिकं व्याख्येयमिति व्याख्यानमसत् । ब्रह्मेत्यस्यानुवृत्तिसम्भवे

---

१. 'ज्ञापनार्थः' क.

''ममैतास्तनवः'' इत्यश्रुतकल्पनायोगात् । अन्यथोपनिषदोऽब्रह्म-विद्यात्वापातात् । नच पृथिव्यादीनां जडानां वा गार्हपत्यादितनुत्वे किञ्चिन्मानम् । अस्ति च तेषां ब्रह्मत्वे सम्यङ् मानमित्याशयेनाऽगमेनैव तद्व्याचष्टे – **पृथुत्वादिति** ॥ विस्तीर्णत्वात् । विष्णुरिति सर्वत्रानुवर्तते । चापिशब्दावितरेतरसमुच्चये । अङ्गं शरीरमप्रधानं जगद्वा । आदिरूपतः कारणरूपत्वादादौ विद्यमानस्वरूपत्वाद्वेत्यर्थः । आदिशब्दाद् भवार्थे त्यप् । आपश्च आपालनादेव । दिशश्च देशनादेव । नतु तत्तदभेदेनेत्ये-वार्थः । न विद्यते स्वस्मादन्यो राजेत्यनन्यराजो यतस्ततः । चन्द्रमाश्च । पूर्तिहेतुतो व्याप्तिहेतुतः । वेदनादेव । ''य एष आदित्ये'' ''य एष चन्द्रमसि'' ''य एष विद्युति'' इति वाक्यत्रयं गार्हपत्यादेरादित्यादे-श्चैक्यमत्रोच्यत इति व्याख्याननिरासाय व्याचष्टे – **य इति** ॥ ''स एव'' इति शेषः । किमेवमन्तर्याम्यैक्यपरत्वग्रहेण ? गार्हपत्यादेर्जीवस्याऽदि-त्यादिजीवैक्यमेवोच्यत इति किं न स्यादित्यत आह – **जीवैक्येति** । जीवैक्यपक्षे गार्हपत्यादिजीवानाम् आदित्यादिजीवानां चैक्यपक्षे । यद्युक्तरीत्या जीवैक्यमत्र विवक्षितं स्यात् तर्हि ''य एष आदित्यः पुरुषः'' इत्यादिप्रथमानिर्देशः स्यात् । नत्वादित्य इत्यादिसप्तमीनिर्देशः । तेनाऽदित्यादिस्थपुरुषैक्यलाभेऽपि नाऽदित्याद्यैक्यं लभ्यते । आदित्या-दिशब्दानां च तत्तन्मण्डलपरत्वाङ्गीकारे वृथा मुख्यार्थत्याग इति भावः ।

[१]यद्वा ''आदित्ये पुरुषः'' इत्याद्युक्तब्रह्मणो जीवैक्यपक्षे । यच्चोक्तं ''पृथिव्यग्निरन्नमादित्यः'' ''आपो दिशो नक्षत्राणि चन्द्रमाः'' इत्यादावुक्ता एवाऽदित्यचन्द्रविद्युतो ''य एष आदित्ये'' इत्यादिनोत्तर-वाक्ये कथ्यन्त इति तदसदिति भावेनाऽह – **पृथिवीति** ॥ सप्तम्यर्थ एकः प्रथमार्थश्चैक इति द्वौ प्रतीयेते । तस्मान्न पूर्ववाक्योक्त एवात्रोक्त इति

(१) 'यद्वा' इति वाक्यं क्वचिन्न दृश्यते ।

भावः । यद्वा तर्हि ''पृथिव्यग्निरन्नमादित्यः'' इत्यादिकं [१]ब्रह्मपर-मित्ययुक्तम् । तत्राऽदित्यचन्द्रमोविद्युच्छब्दानां श्रवणात् । तेषां चोत्तरवाक्ये जीवपरत्वात् । नचैकस्मिन्नेव प्रकरणे ज्ञापकं विनैकेनैव शब्देन भिन्नार्थग्रहणं युक्तमित्यत आह – **पृथिवीति** ॥ यत एवं भिन्न-विभक्तिनिर्दिष्टत्वं ज्ञापकमस्ति अतोऽत्र प्रकरणे पूर्वोत्तरादित्यशब्देन नैकं वस्तूच्यत इत्यर्थः । किञ्च, विशिष्टजीवैक्यं त्वत्पक्षेऽपि नास्ति । लक्षणया चैतन्यैक्याङ्गीकारस्त्वगतिका गतिरिति भावेनोपसंहरति – **अत इति** ॥ एवं बाधकसद्भावात् ''सोऽहमस्मि'' इति वाक्येन न जीवैक्य-मुच्यत इत्यर्थः ।

किञ्च, चैतन्यैक्यमपि ''सोऽहमस्मि''इति पूर्ववाक्येनैव बोधितमिति ''स एवाहमस्मि''इति व्यर्थम् । नहि यद् येनाभिन्नं तत् तेन भिन्नमिति सम्भवतीति भावेन स्वपक्षे तं दोषमुद्धरति – **स एवेति** ॥ सत्यपि धर्मविदुरयोरैक्येऽस्त्येव विशेषः परस्परगताशेषाननुसन्धानरूपः । तत्र ''सोऽहमस्मि''इति गार्हपत्याद्यन्तर्यामिणः सूर्याद्यन्तर्याम्यैक्योक्तौ धर्म-विदुरादिसाधारण्यशङ्कायां तन्निरासाय ''स एवाहमस्मि'' इति साव-धारणोक्त्योक्तसर्वविशेषविनिर्मुक्तमेवैक्यं बोध्यत इत्यर्थः । तर्हि ''स एवाहमस्मि'' इति सावधारणैक्योक्त्यैव सर्वविशेषविनिर्मुक्ताभेदसिद्धेः ''सोऽहमस्मि''इति पूर्वं व्यर्थमित्यत आह – **पूर्वमिति** ॥ अन्तर्याम्य-भेदेऽन्तर्यामिण्यहमादिशब्दप्रवृत्तिं स्मारयति – **अहमिति** ॥ प्रसिद्धि-विरोध इत्यत आह – **तत्सम्बन्धादिति** ॥ समाकर्षाधिकरणन्यायेनेति भावः । तस्माद् वेदगता अहमस्म्यादिकाः शब्दाः हरावन्तर्यामिरूप एव वर्तन्ते । मुख्यासम्भव एवामुख्यस्य ग्राह्यत्वादिति भावः ।

---

१. 'इत्यादिकं परं' इति मुद्रितपुस्तके ।

एतेन ''प्राणो ब्रह्म कम्''इति विद्यां ''पृथिव्यग्निरन्नमादित्यः'' इत्यादिविद्यां चोक्त्वोत्तरखण्डेऽग्निभिः ''उपकोसलैषा सोम्य तेऽस्मद्विद्या चाऽत्मविद्या च'' इत्युक्तत्वेनाऽद्या ब्रह्मविद्या द्वितीयाऽग्निविद्यैवेति युक्तमित्यपि निरस्तम् । अस्मद्विद्येत्यस्यान्तर्यामिविद्येत्यर्थोपपत्तेः । एवं तर्ह्यात्मविद्येति पृथगुक्तिविरोधः । अन्तर्यामिणोऽप्यात्मत्वादित्यत आह – **अस्मच्छब्दोदित इति** ।। जनार्दन इति द्विविधम् । उपकोसल इति तादर्थ्ये सप्तमी । किञ्च ''पृथिव्यग्निः'' इत्यादिविद्यामुक्त्वा ''अपहते पापकृत्याम्'' इत्यादिना तज्ज्ञानान्मोक्षः श्रूयते । नह्यग्निज्ञानान्मोक्ष उपपद्यते । नन्वपहतपापकृत्यत्वादीनां मुख्यानां संसारिण्यसम्भवेऽपि ''नास्यापरपुरुषाः क्षीयन्ते'' इत्युक्तं भृत्यवत्त्वं सम्भवत्येवेत्यतस्तदपि मुक्तज्ञापकतयैवानूद्य व्याचष्टे – **नास्येति** ।। ''द्वौ नञौ'' इति न्यायसाम्येन ''भृत्यवानेव''इत्युक्तम् । नतु कदाचिदभृत्यः । संसारिणस्तु कदाचिदभृत्यत्वदर्शनान्न नियम इति भावः । स्वर्गादिलोकित्वं संसारिणोऽपीत्यतस्तदपि मुक्तज्ञापकतया व्याचष्टे – **लोकीति** ।। मुख्यासम्भव एवामुख्याश्रयणमिति भावः ।।

## ततश्चायं खण्डत्रयार्थः

अथ सम्भूयोपदेशानन्तरमेनमुपकोसलं गार्हपत्योऽनुशशास । किमिति ? पृथिव्यग्निरन्नमादित्य इति । ''कं ब्रह्म''इत्यतोऽनुवृत्तस्य ब्रह्मेत्यस्य सर्वत्रान्वयः । पृथुत्वादिना पृथिव्यादिनामकं ब्रह्मेत्यर्थः । एवं व्याप्तात्मविद्यामुक्त्वा स्वान्तर्यामिविद्यामाह – **य इति** ।। आदित्ये य एष पुरुषः पूर्णषड्गुणो भगवान् दृश्यते दिव्यदृष्ट्या सोऽहमहेयत्वादहंनामा गार्हपत्यस्थोऽस्मि । आदित्यस्थस्य मदन्तर्यामिणश्च न विदुरधर्मादिवदभेदः । किन्तु न कोऽपि विशेष इति भावेनाऽह – **स एवेति** ।। १ ।।

उपासकस्य फलमाह – **स इति** ॥ योऽधिकारी एतं व्याप्तमन्तर्यामिणं च विष्णुं विद्वानुपास्ते स पापकृत्यामपहते । लोकी भगवल्लोकीभवति । अत एव सर्वमायुरेति । ज्योक् सर्वज्ञः सन् जीवति । अस्योपासकस्यापरपुरुषाः भृत्याः न क्षीयन्ते । भृत्यवानेव भवति । भृत्याशासनमेवाऽह – **उपेति** ॥ यः एतमेवं विद्वानुपास्ते तं वयं सर्वे अस्मिंश्चामुष्मिंश्च लोके उपभुञ्जामः उपजीवाम इति । एवमुत्तरखण्ड-द्वयमपि व्याख्येयम् ॥ **इति एकादश–द्वादश–त्रयोदशखण्डाः ॥ ११ ॥ १२ ॥ १३ ॥**

## उपनिषत् (खण्डः- १४)

*उपकोसलमुखे ब्रह्मवर्चः*

**ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या चाऽचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याऽचार्यस्तमाचार्योऽभ्युवादोपकोसला ३ इति ॥ १ ॥**

**भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वाऽनुशशासेति को नु माऽनुशिष्याद् भोइतीहावेव निह्नुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ॥ २ ॥**

*चक्षुरन्तःस्थभगवदुपासनम्*

इदमिति ह प्रतिजज्ञ लोकान् वाव किल सोम्य तेऽवोचन्नहं तु ते तद् वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥ ३ ॥ १४ ॥

## भाष्यम्

**इह च अव च[१] इहावे । इहेति मनुष्यलोकस्था उच्यन्ते अवेति पातालस्थाः[२] । मानुषासुरौ भगवन्तं निह्नुत एव न वक्तुं समर्थौ । अतो देवा एव मामनुशशासुरित्यर्थः । ईदृशा इति वर्णतो ज्वालावर्णा इति । अन्यादृशाश्च करशिरश्चरणादिमन्तः । चन्द्रादिसर्वनामवत्त्वात् । 'यो देवानां नामधा एक एव' इति श्रुतेर्विष्णोरेव सर्वनामानि ॥ १४ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''को नु माऽनुशिष्याद् भो इतीहावेव निह्नुतः'' इति वाक्यस्य को नु माऽनुशिष्यात् त्वयि प्रोषित इत्यपनिह्नुत इवेति व्याख्यानमसत् । गुरुं प्रति सोल्लुण्ठवचनायोगादिति भावेन वाक्यभेदमङ्गीकृत्येहावेवेति पाठमनुसृत्य ''इहावे'' इत्यत्र विग्रहं दर्शयति – **इह चेति** ॥ इहापेति शाखान्तर-पाठस्याप्ययमेवार्थः । पदार्थमाह – **इहेति** ॥ वाक्यार्थमाह – **मानुषेति** ॥ पूर्वं बहुवचनप्रयोगेऽपि अत्र द्विवचनप्रयोगो जात्यभिप्रायेण । निह्नुत इति द्विवचनश्रवणात् । भगवन्तमिध्याहारः । वशब्दार्थः – **एवेति** ॥ तथाच ''को नु माऽनुशिष्यात्''इत्यस्य को वा मनुष्यो वाऽसुरो वा मामनुशिष्यात् । न कोऽपीत्यर्थ इति भावः । तर्हि ''को नु त्वाऽनु-शशास'' इत्यस्य किमुत्तरं जातमित्यतः परिशेषसिद्धमर्थमाह – **अत इति** ॥ के ते देवा इत्याकाङ्क्षायां ''इमे नूनम्''इत्यादिकं प्राप्तिमिति भावेन ईदृशा अन्यादृशा इति पदार्थावाह – **ईदृशा इतीति** ॥ ईदृशा इत्यस्य परिदृश्यमानभूताग्निवद् वर्णतो ज्वालावर्णा इत्यर्थ इति शेषः ।

१.'अवं च' ह. २.'पाताळस्थाः' ह.

अन्यादृशाः भूताग्निविलक्षणा इति पदार्थमभिप्रेत्य वैलक्षण्यमेवोक्तम्– **करेति** । एतेनेमेऽग्नयो मया परिचरिता उक्तवन्तो नूनम् । यत् स्वां दृष्ट्वा वेपमाना इवेदृशा दृश्यन्ते । पूर्वमन्यादृशाः सन्त इति व्याख्यान-मसदित्युक्तं भवति । उपकोसलेन स्वगुरुं प्रति निश्चितार्थस्यैव वक्तव्यत्वेनानुभवचौर्यायोगात् । अग्नीनां सत्यकामादुत्तमत्वेन तच्छिष्य-मुपदिश्यापि वेपमानत्वासम्भवाच्च । तथाचोक्तम् – **ऋषिभ्यस्तूत्तमा देवा इति** ॥

''पृथिव्यग्निरन्नमादित्यः'' इत्यादीनि नामानि विष्णोरेवेत्यत्र युक्तिमाह – **चन्द्रादीति** ॥ विष्णोरेवात्रोक्ताग्निपृथिव्यादिसर्वनामानि । अत्र चन्द्रादित्यविद्युच्छब्दानां देवतावाचकानां श्रवणात् । विष्णो-श्चन्द्रादिसर्वदेवतानामवत्त्वात् । ''यो देवानाम्'' इति श्रुतेरित्यर्थः । यद्यपि ''नामानि सर्वाणि' इति श्रुतेरेवोदाहरणं युक्तम् । तथाऽपि युक्तिकथनार्थमेवमुक्तम् । आदित्यशब्दस्याऽदिमत्त्वेऽपि मध्यवाक्य-स्थचन्द्रशब्दग्रहणं पूर्वोत्तरसङ्ग्रहाभिप्रायेण । पृथिव्यादिनाम्नां देवता-वाचकत्वविवादाभिप्रायेणेदम् । यद्वा पृथिव्यादिसर्वनामानि विष्णो-रेवेत्यत्र श्रुतिमेवाऽह – **चन्द्रादीति** ॥ तथाच विष्णोरेव पृथिव्यादिसर्व-नामानीति प्रतिज्ञा । तत्र हेतुः – **श्रुतेश्चन्द्रादिसर्वनामवत्त्वात्** । सर्व-नामवत्त्वावगमादिति योजना ॥ चतुर्दशः खण्डः ॥

## ततश्चायं खण्डार्थः

एवं सम्भूय प्रत्येकं चोपदिश्य ते होचुः । हे सोम्योपकोसल ते तुभ्यमेषाऽस्मद्विद्याऽन्तर्यामिविद्याऽऽत्मविद्या सर्वगतात्मविद्या चो-

पदिष्टा। एषा तु ज्ञेयैव। नतु[1] त्वयोपास्या। अत आचार्य एव ते तव गतिं गम्यत इति गतिरुपास्यं मार्गं गम्यं च वक्तेति। आजगाम हास्याऽचार्यः। तमाचार्योऽभ्युवाद। उपकोसला३ इति। "भगवः" इति ह प्रतिशुश्रावोपकोसलः। हे सोम्य ते मुखं ब्रह्मविदो मुखमिव सुप्रसन्नं भाति। को नु त्वाऽनुशशास ? नुर्वितर्के[2]। देवो वाऽन्यो वा इत्युक्त आह[3]– भो मा मां को नु मनुष्योऽसुरो वाऽनुशिष्यात् ? न कोऽपि। कुतः इह चाव चेहावे। इहेति मनुष्यलोकस्थ उच्यते। अवेति पातालस्थः। "मानुषासुरौ भगवन्तं निह्नुत एव न वक्तुं समर्थौ। अतो देवा एव मामनुशशासुरित्यर्थः[4]"। के ते देवा इत्यत आह – **इम इति**॥ ईदृशाः वर्णतः परिदृश्यमानाग्निवत् ज्वालावर्णाः अन्यादृशाः करशिरश्चरणादिमन्तः इमेऽध्यक्षाः नूनं निश्चयेन मामनुशशासुः। वेदपुरुषः स्पष्टं तदुपदेष्टॄनाह – **इतीति**॥ इत्यनेन प्रकारेण हाऽचार्यसमीपे अग्नीन् स्वात्मोपदेष्टॄनभ्यूद उपकोसलः। एवमुक्त आचार्यो हे सोम्य तेऽग्नयः किल किन्ववोचन्नित्युवाच॥ १-२॥

"इदमिति ह प्रतिजज्ञे" उपकोसलः। अग्निभिरुक्तमनूदितवानित्यर्थः। एवमुक्तः सत्यकामो हे सोम्य तेऽग्नयो लोकान् सर्वाधारान् प्राणसर्वगतान्तर्यामिरूपानेवावश्य वेद्यान् किलावोचन्। ते तु त्वया ज्ञेया एव। नोपास्याः। न वा गम्याः। अहं तु ते तव तद्वक्ष्यामि यदुपास्यं येन पथा यद् गम्यं च। वक्ष्यमाणं स्तौति – **यथेति**॥ एवंविदि वक्ष्यमाणापरोक्षज्ञानिनि। ब्रवीतु भगवानित्युक्तस्तस्मै होवाच॥ ३॥

**॥ इति चतुर्दशः खण्डः ॥**

---

१. 'न त्वयोपास्या' इति मातृकासु ।१९३,१५३ । २.'नु वितर्के' इति मुद्रितपुस्तके। ३. 'देवो वाऽन्यो वेत्युक्तमाह' इति मुद्रितपुस्तकस्थपाठः प्रामादिकः। ४.'अनुशासुः' इति मुद्रितपुस्तकस्थः पाठः।

## उपनिषत् (खण्डः- १५)

*चक्षुरन्तःस्थभगवद्विद्या*

य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृत-मभयमेतद् ब्रह्मैतस्मिन्न किञ्चन श्लिष्यति तद् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ॥ १ ॥

*चक्षुरन्तःस्थभगवन्नामानि*

एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥

एष उ एव वामनिरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥

एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥

*अर्चिरादिमार्गः*

अथ यदु चैवास्मिंच्छव्यं कर्म कुर्वन्ति यदु च नार्चिषमेवा-भिसम्भवन्ति[१] अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासाꣳस्तान् मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन खलु प्रतिपद्यमाना इमं मानवमावर्तं नाऽवर्तन्ते नाऽवर्तन्ते ॥ ५ ॥
॥ १५ ॥

---

१.'अभिसंविशन्ति'

## भाष्यम्

असङ्गभगवत्स्थानत्वाच्चक्षुषोऽसङ्गत्वमुच्यते ।

'यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुषु ।

तस्मै नमो भगवते वामनाय परात्मने ॥' इति च महाकौर्मे[१] ।

इमं मानवमावर्तं नाऽवर्तन्ते । मानवा यत्राऽवर्तन्ते स मानवावर्तः । तं मानवावर्तं प्रति नाऽवर्तन्ते ।

'चक्षुःस्थं वामनं वेद स पुनर्नैव जायते ।

मुक्तो दुस्तरसंसाराद् वामनं प्राप्नुतेऽचिरात् ॥' इति च ॥१५ ॥

## पदार्थकौमुदी

### भाष्यार्थः

ननु "अन्तर उपपत्तेः"इत्युक्तन्यायेनाक्षिस्थस्य विष्णुत्वात् "एतस्मिन्न किञ्चन शिष्यति"इत्युक्तमसङ्गत्वं तस्यैव । ततश्च "तद् यद्यप्यस्मिन् सर्पिर्वा"इति वाक्ये चक्षुषोऽसङ्गत्ववचनमसङ्गतमित्यत आह – **असङ्गेति** ॥ अनेन यस्मादेवं पुरुषोऽक्षिणि विद्यते तत्तस्मादस्मिंश्चक्षुषि यदि सर्पिर्वोदकं वा कश्चित्सिञ्चति तर्हि वर्त्मनी प्रत्येव गच्छति न चक्षुः स्पृशतीति वाक्यं व्याख्यातम् । उक्तमर्थं प्रमाणेन द्रढयति – **यत्स्थानत्वादिति** ॥ अनेन वामन एव चक्षुःस्थ इत्युक्तं भवति । "इमं मानवमावर्तं नाऽवर्तन्ते"इत्यस्य इमं मानवं मनुसम्बन्धिनमावर्तं संसारं नाऽवर्तन्त इत्यर्थ इत्यसत् । मनुसम्बन्धिसंसाराप्राप्तावप्यन्यसंसारप्रसक्तेरिति भावेनानूद्य व्याचष्टे – **इममिति** ॥ यत्र संसारे । अत्र आवर्तशब्दो यदि भावे घञन्तस्तदा गमकत्वाद् व्यधिकरणो बहुव्रीहिः ।

१. 'इति महाकौर्मे' क.

## उपनिषत् (खण्डः- १५)

*' चक्षुरन्तःस्थभगवद्विद्या*

य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृत-मभयमेतद् ब्रह्मैतस्मिन्न किञ्चन श्लिष्यति तद् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ॥ १ ॥

*चक्षुरन्तःस्थभगवन्नामानि*

एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥

एष उ एव वामनिरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥

एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥

*अर्चिरादिमार्गः*

अथ यदु चैवास्मिंच्छव्यं कर्म कुर्वन्ति यदु च नार्चिषमेवा-भिसम्भवन्ति[१] अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासाꣳस्तान् मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन खलु प्रतिपद्यमाना इमं मानवमावर्तं नाऽवर्तन्ते नाऽवर्तन्ते ॥ ५ ॥ ॥ १५ ॥

---

१. 'अभिसंविशन्ति'

### भाष्यम्

असङ्गभगवत्स्थानत्वाच्चक्षुषोऽसङ्गत्वमुच्यते ।

'यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुषु ।

तस्मै नमो भगवते वामनाय परात्मने ॥' इति च महाकौर्मे[१] ।

इमं मानवमावर्तं नाऽवर्तन्ते । मानवा यत्राऽवर्तन्ते स मानवावर्तः । तं मानवावर्तं प्रति नाऽवर्तन्ते ।

'चक्षुःस्थं वामनं वेद स पुनर्नैव जायते ।

मुक्तो दुस्तरसंसाराद् वामनं प्राप्नुतेऽचिरात् ॥' इति च ॥१५ ॥

### पदार्थकौमुदी

#### भाष्यार्थः

ननु "अन्तर उपपत्तेः"इत्युक्तन्यायेनाक्षिस्थस्य विष्णुत्वात् "एतस्मिन्न किञ्चन शिष्यति"इत्युक्तमसङ्गत्वं तस्यैव । ततश्च "तद् यद्यप्यस्मिन् सर्पिर्वा"इति वाक्ये चक्षुषोऽसङ्गत्ववचनमसङ्गतमित्यत आह – **असङ्गेति** ॥ अनेन यस्मादेवं पुरुषोऽक्षिणि विद्यते तत्तस्मादस्मिंश्चक्षुषि यदि सर्पिर्वोदकं वा कश्चित्सिञ्चति तर्हि वर्त्मनी प्रत्येव गच्छति न चक्षुः स्पृशतीति वाक्यं व्याख्यातम् । उक्तमर्थं प्रमाणेन द्रढयति – **यत्स्थानत्वादिति** ॥ अनेन वामन एव चक्षुःस्थ इत्युक्तं भवति । "इमं मानवमावर्तं नाऽवर्तन्ते"इत्यस्य इमं मानवं मनुसम्बन्धिनमावर्तं संसारं नाऽवर्तन्त इत्यर्थ इत्यसत् । मनुसम्बन्धिसंसाराप्राप्तावप्यन्यसंसारप्रसक्तेरिति भावेनानूद्य व्याचष्टे – **इममिति** ॥ यत्र संसारे । अत्र आवर्तशब्दो यदि भावे घञन्तस्तदा गमकत्वाद् व्यधिकरणो बहुव्रीहिः ।

१. 'इति महाकौर्मे' क.

यद्यधिकरणे घञन्तस्तदा षष्ठीतत्पुरुषः । उभयत्रापि समासे छान्दसो मुमागम इत्यवधेयम् ।, चक्षुःस्थभगवज्ज्ञानिनः सर्वथा संसारप्राप्त्यभावे प्रमाणं चाह– **चक्षुःस्थमिति** ॥

## ॥ ततश्चायं खण्डार्थः ॥

य एषोऽक्षिण्यन्तः[१] पुरुषो दृश्यते दिव्यदृष्ट्या एष आत्मा वामनाख्य इति होवाच । एतदमृतं स्वतो नित्यमुक्तम् अभयं स्वतो भयशून्यमेतद् ब्रह्म गुणपूर्णमेतस्मिन् भगवति न किमपि श्लिष्यति । असङ्गोऽसावित्यर्थः । यत्स्थानत्वाच्चक्षुषोऽप्यसङ्गत्वं किं तस्येति भावेन चक्षुषोऽसङ्गत्वमाह– **तद् यदीति** ॥ यद्यस्मादेवमसङ्गः पुरुषोऽक्षिणि विद्यते तत्तस्मादस्मिंश्चक्षुषि यदि सर्पिर्वोदकं वा कश्चित् सिञ्चति तर्हि वर्त्मनी प्रत्येव गच्छति । न चक्षुः स्पृशतीत्यर्थः ॥ १ ॥

एवं भगवतः स्थानशक्तिमभिधाय स्वरूपशक्तिं चाऽह – **एतमिति** ॥ एतं चाक्षुषं वामनाख्यं भगवन्तं संयद्वाम इत्याचक्षते विद्वांसः । कुतः? हि यस्मादेतं सर्वाणि वामानि सौन्दर्याण्यभिसंयन्ति प्रविशन्ति । तथोपासक-स्यानुरूपं फलमाह – **सर्वाणीति** ॥ एष एव चाक्षुषः पुरुषो मुख्यतो वामनिरित्युच्यते । कुतः ? यस्मादेष सर्वाणि वामानि रमादिगतसौन्द-र्याणि नयति प्रापयति । पूर्ववत् फलमाह– **सर्वाणीति** ॥ सर्वाणि स्वावर-गतानि ॥ २ ॥

एष एव चाक्षुषः पुरुषो भामनिरित्युच्यते । कुतः ? हि यस्मादेष सर्वेषु लोकेषु[२] भाति दीप्यते । सर्वेष्विति फलम् ॥ ३ ॥ ४ ॥

---

१. 'य एषोऽक्षणि' इति मुद्रितपुस्तकस्थः पाठः । २. 'लोकेषु' इति पदं मुद्रितपुस्तके न दृश्यते ।

एवमुपकोसलोपास्यं भगवद्रूपं निरूप्य तद्विद्याफलत्वेन समार्गब्रह्मप्राप्तिं चाक्षुषपुरुषवेत्तुर्महिमानं प्रकाशयन्निरूपयति – **अथेत्यादिना** ॥ अथेत्यर्थान्तरे । यदु च यद्यपि अस्मिन् ज्ञानिनि मृते शव्यं शवसम्बन्धि कर्म कुर्वन्त्येव तदीयाः, यदु च नैव कुर्वन्ति, तथाऽपि ते ज्ञानिनः सर्वथा स्वज्ञानप्रसन्नभगवत्सामर्थ्याद् हृदयाग्रप्रज्वलनप्रकाशितद्वारेण ब्रह्मनाड्या देहादुत्क्रान्ता अर्चिषमर्चिर्नामिकमूर्ध्वलोकं सम्भवन्त्येव प्राप्नुवन्त्येव । अत्राग्निर्ज्योतिरिरिति द्वेधैवार्चिषः इत्युक्तमनुसन्धेयम् । तत्र कञ्चन कालं स्थित्वा तेन पूजिताः अर्चिषोऽर्चिर्लोकादातिवाहिकाख्यवायुलोकं प्राप्य ततोऽहरभिमानिदेवतालोकं प्राप्नुवन्ति । अह्नः आपूर्यमाणपक्षं पूर्वपक्षाभिमानिदेवतालोकम् आपूर्यमाणपक्षाद् गच्छन् यान् षण्मासानुदङ्ङेत्यादित्यस्तान् मासानुत्तरायणाभिमानिदेवतालोकं मासेभ्यस्तेभ्यः संवत्सराभिमानिलोकं संवत्सरात् तटिद्वरुणप्रजापतिप्राप्तिद्वाराऽऽदित्यमादित्याच्चन्द्रमसं चन्द्रमसो वैश्वानरेन्द्रध्रुवद्वारा विद्युतं विद्युन्नाम्नीं भारतीं प्राप्नुवन्ति । ततस्तस्याः पुरुषो भर्ता मानवो मननान्मनुर्भगवांस्तस्यायं प्रियभृत्यो मुख्यवायुस्तं गच्छन्ति ।

सः वायुरेनान् स्वप्राप्तान् प्रतीकालम्बनान् कार्यं ब्रह्म अप्रतीकालम्बनान् परं ब्रह्म गमयति । ज्ञानिनो देवयानब्रह्मयानाख्यमार्गान्तरोक्तेः कथमेतदित्यत आह – **एष इति** ॥ देवपथो ब्रह्मपथ इत्येष एवोच्यते । मार्गान्तरं वा व्यावर्तयति – **एष इति** ॥ देवैरधिष्ठितः पन्था देवपथः ब्रह्मप्राप्तिहेतुः पन्थाः ब्रह्मपथः एष एव, नत्वन्योऽस्ति । एवं ब्रह्म प्राप्तस्य पुनः संसारप्राप्तिरस्ति किं ? नेत्याह – **एतेनेति** ॥ एतेन खलु मार्गेण परमपरं वा ब्रह्म प्रतिपद्यमानाः इमं मानवमावर्तं मानवा यत्राऽवर्तन्ते स मानवावर्तः संसारः तं मानवावर्तं नाऽवर्तन्त इत्यर्थः ॥ ५ ॥

**॥ इति पञ्चदशः खण्डः ॥**

## उपनिषत् (खण्डः-१६)

*यज्ञनामकवायुदेवस्य पादपूजा*

एष ह्वै यज्ञो योऽयं पवत एष यन्निद९सर्वं पुनाति यदेष यन्निद९ सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी ॥ १ ॥

तयोरन्यतरां मनसा स९स्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गा-ताऽन्यतरा९स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यपवदति ॥ २ ॥

अन्यतरामेव वर्तनी९ संस्कुर्वन्ति हीयतेऽन्यतरा स यथैकपाद् व्रजन् रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञ९ रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान् भवति ॥ ३ ॥

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यपवदत्युभे एव वर्तनी स९स्कुर्वन्ति न हीयतेऽन्यतरा ॥ ४ ॥

स यथोभयपाद् व्रजन् रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान् भवति ॥ ५ ॥ १६ ॥

### भाष्यम्

'यज्ञाभिमानी यज्ञाख्यो वायुर्यज्ञे प्रतिष्ठितः ।
ज्ञ शुद्धभाव इत्यस्माद् यन्नयं पावयेद् यतः ॥

**अतो वायुर्यज्ञनामा तत्पादौ वाङ्मनःस्थितौ ।**
**दक्षिणोऽस्य मनःसंस्थो ब्रह्मर्त्विक् तस्य पूजकः ॥**
**होत्राद्या वाचि संस्थस्य वामपादस्य पूजकाः ।**
**तस्मात् प्रातरनूवाकपरिधान्योर्यदन्तरा ॥**
**ब्रह्मा चेदुत्सृजेद् वाचं यज्ञपाल्लोपवद्[१] भवेत् ।**
**वाङ्मनःपादयज्ञाख्यप्रतिमो वायुरीरितः ।**
**ध्यायन् वायुं हरिं चैव ततो ब्रह्मा मुनिर्भवेत् ॥ १६ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''वायुर्वाव संवर्गः प्राणो ब्रह्म'' इत्यपरब्रह्मविद्योक्ता । तद्विषयं विद्यान्तरमाह – **एष हेत्यादिना** ॥ क्रियाकलापरूपत्वाद् यज्ञस्य ''एष हवै यज्ञो योऽयं पवते'' इति कथमुक्तमित्यत आह – **यज्ञेति** ॥ यज्ञाख्यत्वे निमित्तम् – **यज्ञाभिमानी यज्ञे प्रतिष्ठित इति** ॥ ''यदेष यन्निदं सर्वं पुनाति तस्मादेष एव यज्ञः'' इति यज्ञशब्दनिर्वचनरूपं वाक्यं व्याचष्टे – **यन्नयमिति** ॥ अस्तु य इत्यस्य यन् गच्छन्नित्यर्थः । यातेर्गत्यर्थत्वप्रसिद्धेः । ज्ञ इत्यस्य पावनाख्यशुद्धभावः कथमर्थ इत्यतो धातुं पठति – **ज्ञेति** ॥ धातोरिति शेषः । धातोर्ज्ञशब्दः पावनार्थोऽवगम्यते यत इत्यर्थः । ''तस्य मनश्च वाक् च वर्तनी'' इत्येतद् वाङ्मनसयोर्मार्गत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे – **तत्पादाविति** ॥ ''स यथैकपात्'' इति ''उयुभयपात्''इति च दृष्टान्तबलादिति भावः । कः पादः कुत्र स्थित इत्यतस्तद्दर्शयन्नेव ''तयोरन्यतरां मनसा संस्करोति ब्रह्म'' इत्येतद्

१. 'लोककृत्' ह.

व्याचष्टे – **दक्षिण इति** ॥

''वाचा होताऽध्वर्युरुद्गाताऽन्यतराम्'' इत्येतद् व्याचष्टे – **होत्राद्या इति** ॥ तर्हि स यत्रोपाकृत इत्यारभ्य ''हीयतेन्यतरा'' इत्यन्तवाक्येन वायुपादलोपः कथमुच्यत इत्यत आह – **तस्मादिति** ॥ मौनेन पूजकत्वादित्यर्थः । यदन्तरा तन्मध्ये । ननु वायुपादमुपक्रम्य यज्ञपादस्य लोपकथनम[1]सङ्गतमित्यत आह – **वागिति** ॥ प्रतिमापादलोपे देवता-पादलोपोपचार इति भावः । अथ ''यत्रोपाकृते'' इत्यादेस्तात्पर्यमाह – **ध्यायन्निति** ॥ ध्यायन्नेव हरिं चेत्यनेनास्या विद्यायाः शास्त्रदृष्ट्या भगवत्परत्वमुक्तं भवति ॥ खं० ॥ १६ ॥

## ततश्चायं खण्डार्थः

योऽयं पवते मुख्यवायुरेष यज्ञो यज्ञनामको यज्ञाभिमानी यज्ञे स्थितः । हवा इति श्रुत्यादिप्रसिद्धिं दर्शयति । वायौ यज्ञशब्दं निर्वक्तुं वायुस्वभावं निरूपयति – **एष इति** ॥ एष वायुर्यन् गच्छन्निदं योग्यं सर्वं पुनाति शुद्धं करोति । किं तत इत्यत आह – **यदिति** ॥ यद् यस्माद् एषः यन्निदं सर्वं पुनाति तस्मादेष एव यज्ञो यज्ञाख्यो मुख्यतः यज्ञमूर्तेर्वायोः पादावस्थितिस्थानमाह – **तस्येति** ॥ तस्य वायोः वर्तनी वर्तते गच्छत्याभ्यामिति वर्तनी पादौ मनश्च वाक्च ऋत्विजां मनोवाक्संस्थौ । तत्र दक्षिणो मनस्थो वामो वाक्संस्थ[2] इति ज्ञेयम् ॥ १ ॥

तयोः पूजकानाह – **तयोरिति** ॥ तयोः पादयोर्मध्येऽन्यतरां वर्तनिं दक्षिणं पादं ब्रह्मा ब्रह्माख्यऋत्विक् मनसा मनोव्यापारेण मौनेनैव

---

१. 'लोपकत्वकथनम्' इति मातृकायाम् । पत्र सं १९६ । २. 'वाक्स्थः' इति मातृकायाम् । पत्र सं. १९६ ।

संस्करोति पूजयति । संस्कर[१] इति पाठे पूजक इत्यर्थः । होताऽध्वर्युरुद्गाता चेति त्रयोऽन्यतरां वर्तनिं वामपादं वाचा मन्त्रोच्चारणेनैव संस्कुर्वन्ति । ब्रह्मणः कदा मौनं तद्भङ्गे च किमित्यत आह – **स इति** ॥ एवं मौनेन वायुपूजकत्वात् स ब्रह्मा यत्र यदा प्रातरनुवाके शस्त्रे उपाकृते उपक्रान्ते परिधानीयायाः कर्मसमापिकाया ऋचो जपादिति यावत् । पुरा पूर्वं व्यपवदति वाचमुत्सृजेत् ॥ २ ॥

होत्राद्यास्तु अन्यतरामेव वर्तनिं वाचा संस्कुर्वन्ति । तदाऽन्यतरा वर्तनिः दक्षिणः पादो हीयते । यज्ञपादस्य लुप्तत्वात् । यज्ञपादहान्या भवमनर्थं सदृष्टान्तमाह – **स इति** ॥ सः वक्ष्यमाणो दृष्टान्तो यथा एकपात् पुरुषो व्रजन् रिष्यति यथा वैकेन चक्रेण वर्तमानो रथो रिष्यति । एवमस्य यजमानस्य यज्ञो रिष्यति नश्यति । यज्ञं रिष्यन्तमनु यजमानोऽपि रिष्यति । यज्ञनाशेऽपि यजमानस्याध्यक्षत्वात् कथमेतदित्यत आह– **स इति** ॥३॥

यस्मादेवं ब्रह्मणो मौनपरित्यागेऽनर्थोऽथ तस्माद् यत्र यदा प्रातरनुवाके उपाकृते परिधानीयायाः पूर्वं ब्रह्म न व्यपवदति । तदोभे एव वर्तनी संस्कुर्वन्ति ऋत्विजः । एवं च न हीयतेऽन्यतरा ॥ ४ ॥

किं तत इत्यतः सदृष्टान्तं ततो भवं पुरुषार्थमाह– **स यथेति** ॥ व्याख्यातप्रायम् ॥ ५ ॥ **इति षोडशः खण्डः** ॥

## उपनिषत् (खण्डः-१७)

*व्याहृतित्रयस्य महिमा*

**प्रजापतिर्लोकानभ्यतपत् तेषां तप्यमानानाꣳ रसान् प्राबृहद्[१] अग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥ १ ॥**

---

१. संस्कार इति मुद्रित पुस्तकस्थः पाठः । २. 'प्रावृहत्'

स एतास्तिस्रो देवता अभ्यतपत् तासां तप्यमानानाꣳ रसान् प्राबृहदग्नेर्ऋचो वायोर्यजूꣳषि सामान्यादित्यात् ॥ २ ॥

स एतां त्रयीं विद्यामभ्यतपत् तस्यास्तप्यमानाया रसान् प्राबृहद् भूरित्यृग्भ्यो भुव इति यजुर्भ्यः स्वरिति सामभ्यः ॥ ३ ॥

*ऋत्विजां कर्मभङ्गे व्याहृतिहोमः प्रायश्चित्तम्*

तद् यद्यृक्तो रिष्येद् भूः स्वाहेति गार्हपत्ये जुहुयाद् ऋचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टिꣳ सन्दधाति ॥४॥

अथ यदि यजुष्टो रिष्येद् भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद् यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टिꣳ सन्दधाति ॥ ५ ॥

अथ यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात् साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टिꣳ सन्दधाति ॥ ६ ॥

तद् यथा लवणेन सुवर्णꣳ सन्दध्यात् सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणा ॥ ७ ॥

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टिꣳ सन्दधाति भेषजकृतो हवा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति ॥ ८ ॥

एष हवा उदक्प्रवणो यज्ञो यत्रैवंविद् ब्रह्मा भवत्येवंविदꣳ हवा एषा ब्रह्माणमनुगाथा यतो यत आवर्तते तत्तद् गच्छति ॥

मानवो ब्रह्मैवैकर्त्विक् कुरूनश्वाभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वाꣳश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं

कुर्वीत नानेवंविदं नानेवंविदम् ॥ ९ ॥ १७ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि चतुर्थोऽध्यायः ॥ ४ ॥

भाष्यम्

'अग्निर्नासिक्यवायुश्च सूर्यो लोकरसास्त्रयः ।
अग्ने रसस्तु ऋग्वेदमानी ब्रह्मा प्रकीर्तितः ॥
नासिक्यवायोस्तु रसो यजुर्वेदात्मको हरः ।
सामवेदाभिमानी तु वायुः सूर्यरसः स्मृतः ॥
वराहसिंहकपिलास्तेषां भूरादिनामकाः ।
व्याहृतीभिस्ततो जुह्वन् ब्रह्मैवंविद् विरिष्टितः ।
सर्वान् स ऋत्विजो रक्षेद् ब्रह्मैवंवित् ततो भवेत् ॥' इति च ।

उदक्प्रवणः ऊर्ध्वप्रवणः ऊर्ध्वलोकानुसारी । यज्ञस्य दुरिष्ट्या यतो यतः स्थानादावर्तते तत्तत् स्थानमेवंविदा ब्रह्मणा गच्छति । तद् ब्रह्मैवैकर्त्विक् । कुरून् कर्तॄन् यजमानादीनभिरक्षति । अश्वा आशुज्ञानी । 'वा गतिगन्धनयोः' इति धातोः । गतिशब्दश्चावगतौ भवति ।

'दीर्घबिन्दुविसर्गादीनां लोपो वा' इति सूत्रादाशुर्वैवाश्वा ॥ १७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छान्दोग्योपनिषद्भाष्ये चतुर्थोऽध्यायः ॥

पदार्थकौमुदी

भाष्यार्थः

अत्र प्रमादाद् ब्रह्माद्यृत्विजां मौनादिनियमभङ्गे प्रायश्चित्तं व्याहृति-

होमरूपं [१]व्याहृतिमहिमाभिधानपुरःसरमाह – **प्रजापतिरित्यादिना** ॥ अप्रतिपत्तिविप्रतिपत्तिनिरासाय ''अग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः'' इति वाक्यं प्रमाणेनैव व्याचष्टे – **अग्निरिति** ॥ सूर्यश्चेत्येते त्रयः। प्रधानवायुग्रहणे ''वायोर्यजूंषि''इत्युक्तमनुपपन्नमिति भावः । ''अग्ने-र्ऋचः'' इत्यादिवाक्यं व्याचष्टे – **अग्नेरिति** ॥ ''भूरित्यृग्भ्यः'' इत्यादि व्याचष्टे – **वराहेति** ॥ तेषां रसा इत्यनुवर्तते । ''तद्यद्दक्तः'' इत्यादि-पूर्वशेषतात्पर्यमाह – **व्याहृतीभिरिति** ॥ ततो व्याहृतीनां भगवन्नाम-त्वात् । ''उदक् प्रवणो यज्ञः'' इत्यत्र यज्ञस्योदीचीदिक्प्रवणत्वमुच्यत इति प्रतीतिनिरासाय तदनूद्य व्याचष्टे – **उदगिति** ॥ प्रावण्यस्य चेतनधर्मत्वेन यज्ञस्य तदपि कथमित्यत आह – **ऊर्ध्वेति** ॥ ''यतो यत आवर्तते तत् तद्गच्छति'' इत्येतद् व्याहृतिपरिहारायावृत्तौ गमने च निमित्तं दर्शयन् व्याचष्टे – **यज्ञस्येति** ॥ स्थानाद् यज्ञकरणेन प्राप्तुं प्रसक्तादिति शेषः । ''ब्रह्मैवैकर्त्विक्'' ''कुरूनश्वाभिरक्षति'' इत्येतत्कुरूनित्यस्य देशविशेषपरत्वप्रतीतिं निवारयन् सङ्गतत्वेन व्याचष्टे – **तदिति** ॥ तत् तस्मादेवंविदो ब्रह्मण एवाऽवृत्तस्थानप्रापणसमर्थत्वादित्यर्थः । एक एव ब्रह्माख्यर्त्विक् । कर्तुरेकत्वाद् बहुवचनं कथमित्यत उक्तम् – **यज-मानादीनिति** ॥ वाक्यशेषे तथा श्रवणादिति भावः । योद्धुमारूढा अश्वा वडवा यथाऽभिरक्षतीत्यसत् । बह्वश्रुतकल्पनापत्तेः । एवं सति रक्षतीत्यनन्तरमेवास्य वक्तव्यत्वाच्च । अतो ब्रह्मण एवेदं विशेषणमिति भावेन तदनूद्य व्याचष्टे – **अश्वेति** ॥ बाधकवशाद् रूढित्याग इति भावः । आशु ज्ञानी झडिति यज्ञभङ्गानुसन्धानवानित्यर्थः । तदेवोप-पादयन्नश्वेत्यस्य ज्ञानित्वार्थत्वे धातुं पठति – **वेति** ॥ वातेर्गति-

---

१. 'तन्महिमाभिधानपुरस्सरम्' इति मातृकायाम् । पत्र सं १९६,१४६

गन्धनार्थत्वेऽपि ज्ञानीति कथं व्याख्यानमित्यत आह – **गतिशब्द-श्चेति** ॥ तथाऽप्याशु वाति गच्छति अवगच्छतीत्याशुवेति स्यान्न त्वश्वेति । दीर्घोकारयोर्लोपविधायकाभावादित्यत आह – **दीर्घेति** ॥ आदिपदेन स्वरादिग्रहणम् ॥ खं० ॥ १७ ॥

## ततश्चायं खण्डार्थः

प्रजापतिर्भगवान् लोकान् पृथिव्यन्तरिक्षद्युसञ्ज्ञकांस्तदभिमानि-देवानभ्यतपद् आलोचितवान् । इम एव रसाः किं ततोऽन्य इति संशयमाहार्य विचारितवानित्यर्थः । इम एव रसा इति प्राप्ते तेषां लोकानां तप्यमानानामालोच्यमानानां सकाशाद् । रसान् वरान् प्राबृहद् उद्बबर्ह । कस्माल्लोकात् कं रसत्वेन निश्चितवानित्यत अह – **अग्निमिति** ॥ पृथिव्या धरादेव्या रसं प्राबृहदित्यादिसम्बन्धः । निष्कृष्य ज्ञातवानिति यावत् । कस्माल्लोकात् कं रसत्वेन निश्चितवानित्यत आह– **अग्निमिति** ॥ पृथिव्या धरादेव्या रसं प्राबृहद् इत्यादिसम्बन्धः । वायुं नासिक्यम् ॥ १ ॥

ततः स प्रजापतिरेतास्तिस्रो देवताः पूर्ववदभ्यतपत् । तत्राप्येत एव रसा इति प्राप्ते तासां तप्यमानानां सकाशाद् रसान् प्राबृहत् । तदेवाऽह – **अग्नेरिति** ॥ अग्नेर्ऋचो ऋग्वेदमानिनं ब्रह्माणम् । वायोर्नासिक्यात् । यजूंषि यजुर्वेदात्मकं हरम् । आदित्यात् सामानि सामवेदाभिमानिनं वायुं रसं प्राबृहदिति सम्बन्धः ॥ २ ॥

ततः स प्रजापतिरेतां त्रयीं विद्यां वेदाभिमानिदेवताः पूर्ववदभ्यतपत् । तस्या इत्यादि पूर्ववत् । ऋग्भ्यस्तदभिमानिब्रह्मणो भूरितिनामकं वराहं, यजुर्भ्यस्तदात्मकाद्धराद् भुव इति नामकं नृसिंहं, सामभ्यस्तदात्मकाद् वायोः स्वरिति नामकं कपिलं रसं प्राबृहत् । नित्यज्ञानस्याप्येवमभितपनं क्रीडयेति प्रागेवोक्तम् ॥ ३ ॥

यदर्थमेतदुक्तं तदाह – **तदिति** ॥ तत्तस्मात् । यद् यदि ऋक्तो ऋङ्निमित्तं रिष्येद् यज्ञः क्षतं प्राप्नुयात् तदा ब्रह्मा भूरिति नामकं वराहमुद्दिश्य ''भूः स्वाहा'' इति मन्त्रेण गार्हपत्ये जुहुयात् । सा तत्र प्रायश्चित्तिः । तत् तदा ऋचां तदभिमानिचतुर्मुखस्य सकाशाद् रसेन कोऽर्थः ? ऋचां सकाशाद् वीर्येण बलवता वराहेण तत्प्रसादेन यज्ञस्यर्चां विरिष्टिं ऋङ्निमित्तं क्षतं सन्दधाति ब्रह्मा । एवमुत्तरवाक्ययोरपि योजना ॥ ४ ॥

अथेत्यर्थान्तरम् । यजुषां वीर्येण नृसिंहप्रसादेन साम्नां वीर्येण कपिलप्रसादेन ॥ ५ ॥ ६ ॥

यज्ञस्य विरिष्टिसन्धानमेव सदृष्टान्तमाह – **तद्यथेति** ॥ तत् निदर्शनं यथा । लवणेन क्षारेण टङ्कणादिना सुवर्णमशक्यसन्धानं सन्दध्यात् स्वर्णकारः । यथा चाशक्यसन्धानं रजतं सुवर्णेन सन्दध्यात् । यथा चाशक्यसन्धानं त्रपु रजतेन । यथा त्रपुणा तादृशं सीसम् । सीसेन तादृशं लोहम् । लोहेन दारु, दारु चर्मणा चर्मबन्धनेन सन्दध्यात् ॥ ७ ॥

एवमेषां लोकानां पृथिव्यादीनामासां देवतानामग्न्यादीनामस्यास्त्रयीविद्यायाः ब्रह्मादीनामिति यावत् । सकाशाद् वीर्येण श्रेष्ठेन भूरादिनामकेन भगवता तत्प्रसादेन यज्ञस्य विरिष्टिं सन्दधाति ब्रह्मा । ब्रह्मणः सामर्थ्यमाह – **भेषजेति** ॥ यत्र यज्ञे एवंविद् ब्रह्मा भवत्येष यज्ञो भेषजेन चिकित्सकेन कृतो ह्वै ॥ ८ ॥

यत्र यज्ञे एवंविद् ब्रह्मा भवत्येष यज्ञः उदक्प्रवणः ऊर्ध्वलोकानुसारी ह्वै । एवंविदो ब्रह्मण उक्तसामर्थ्यसत्त्वे गाथां प्रमाणयति – **एवंविदमिति** ॥ एवंविदं ब्रह्माणम् अन्वनुसृत्यैषा वक्ष्यमाणा गाथा प्रवर्तते । तामेव पठति – **यत इति** ॥ यज्ञस्य दुरिष्ट्या यतो यतः स्थानात् । यज्ञकरणेन प्राप्तुं

प्रसक्तादावर्तते मानवः[१] तत्तत्स्थानमेवंविदा ब्रह्मणा गच्छति मानवो भगवद्भक्तो यजमानः । तत् तस्मादश्वा आशुज्ञानी ब्रह्मैक एवर्त्विक् कुरून् कर्तॄन् यजमानादीनभिरक्षति । तां गाथां वेदपुरुषो विवृणोति – **एवंविदिति** ॥ उपसंहरति – **तस्मादिति** ॥ ९ ॥

**॥ इति सप्तदशः खण्डः ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य
च्छन्दोगोपनिषद्भाष्यस्य टीकायां
श्रीमद्वेदव्यासतीर्थपूज्यपादशिष्यवेदेशभिक्षुविरचितायां पदार्थकौमुद्यां
चतुर्थोऽध्यायः ॥

---

१. 'मानवः' इति पदं मुद्रितपुस्तके न दृश्यते ।

## अथ पञ्चमाध्यायस्य प्रथमः खण्डः

### उपनिषत्

*इन्द्रियाभिमानिनां मुख्यप्राणाधीनत्वनिरूपणम्*

॥ॐ॥ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥

यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग् वाव वसिष्ठः ॥ २ ॥

यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्च चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥

यो ह वै सम्पदं वेद सꣳहास्मै कामाः सम्पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव सम्पत् ॥ ४ ॥

यो ह वा आयतनं वेदाऽयतनꣳ ह स्वानां भवति मनो ह वा आयतनम् ॥ ५ ॥

### भाष्यम्

'यः श्रेष्ठं ज्येष्ठमखिलदेवानां[१] वायुमञ्जसा ।
वेद स स्वसमानानां ज्येष्ठः श्रेष्ठो विमुक्तिगः ॥
समीपे वसतां श्रेष्ठो वसिष्ठस्यैव वेदनात् ।
एकस्थाने स्थितिस्तु स्यात् प्रतिष्ठाज्ञस्य चेच्छतः ॥
सम्पद्धेतुः सम्पदः स्युर्गृहं चाऽयतनं विदः ।

१. 'श्रेष्ठज्येष्ठमखिलदेवानां' ह.

## पदार्थकौमुदी

### भाष्यार्थः

**देवोत्तमाय प्राणाय पञ्चरूपाय विष्णवे।**
**वैश्वानराय देवाय नमो भगवते सदा॥**

एवं परापरब्रह्मविद्याः पूर्वाध्याये निरूपिताः। अत्र पुनस्तद्विषयमेव विद्यान्तरं निरूपयिष्यन् मुमुक्षोरपरब्रह्मवायुप्रसादस्य सर्वथाऽपेक्षितत्वा-दादौ तद्विषयां विद्यामाह – **यो हवा इत्यादिखण्डद्वयेन**॥ ''यो ह वै'' इत्यादिवाक्ये प्राणस्य तद्वेत्तुश्चोक्तं ज्येष्ठत्वादिकं किमपेक्षयेति न ज्ञायत इत्यतस्तत् प्रमाणेनैव व्याचष्टे – **य इति**॥ श्रेष्ठं गुणतः ज्येष्ठं वयसा निर्धारणे षष्ठ्यौ। योग्यतया स्वसमानानां ज्ञानोत्तरशुभाननुष्ठानादिना ह्रसितानन्दानां वेत्तुर्मनुष्यत्वविवक्षायामिदम्। देवत्वविवक्षायामिन्द्र-कामादिवत् किञ्चित् साम्यं बोध्यम्। अनेन श्रुतौ ''स्वानाम्''इति वक्ष्यमाणमत्र सम्बध्यत इत्युक्तं भवति। ''यो ह वै वसिष्ठं वेद'' इति वाक्यं वेत्तुर्वसिष्ठत्वप्रतीतिनिरासाय व्याचष्टे – **समीप इति**॥ वसिष्ठ इत्यस्यार्थः – **वसतां श्रेष्ठ इति**॥ दूरे वसतां श्रैष्ठ्यं न शोभावहमिति ''समीपे'' इत्युक्तम्। ''यो ह वै प्रतिष्ठां वेद'' इति वाक्यमेकस्यैव युगपद् विरुद्धं लोकद्वयावस्थानं कथमुच्यत इत्यतो व्याचष्टे– **एकेति**॥ इदं विपरीतं फलम् इत्याशङ्कानिरासाय विशेषवाची तुशब्दः। तमेव व्यनक्ति – **इच्छत इति**॥ यथेच्छायामपीष्टस्थानेऽस्माकं स्थितिर्न भवति न तथा तस्येत्यर्थः। ''यो ह वै सम्पदं वेद'' इति वाक्यं व्याचष्टे – **सम्पद्वेत्तुरिति**॥ ''यो ह वा आयतनं वेद'' इति वाक्योक्तं स्वकीयाश्रयत्वं फलमुपलक्षणमिति भावेनाऽह – **गृहं चेति**॥ गृहमिष्टं प्रासादादि। चशब्दाच्छ्रुत्युक्तसमुच्चयः।

*उपनिषत्*

अथ ह प्राणा अहꣳश्रेयसि व्यूदिरेऽहꣳ श्रेयानस्म्यहꣳ श्रेयानस्मीति ॥ ६ ॥

ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति तान् होवाच यस्मिन् व उत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥

सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथाऽकला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक् ॥ ८ ॥

चक्षुर्होच्चक्राम तत् संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥ ९ ॥

श्रोत्रꣳ होच्चक्राम तत् संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम तत् संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥

अथ ह प्राण उच्चिक्रमिषन् स यथा सुहयः पड्वीशशङ्कून् सङ्खिदेदेवमितरान् प्राणान् समखिदत् तꣳ हाभिसमेत्योचु-र्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥ १२ ॥

अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति ॥ १३ ॥

अथ हैनꣳ श्रोत्रमुवाच यदहꣳ सम्पदस्मि त्वं तत् सम्पदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ॥ १४ ॥

न वै वाचो न चक्षूꣳषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाऽचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥ १५ ॥ १ ॥

भाष्यम्

ज्येष्ठः श्रेष्ठो वसिष्ठश्च सम्पदायतनं तथा ॥
वायुरेव महांस्तस्य प्रसादादग्निरेव तु ।
उपचारतो वसिष्ठः[१] स्यात् प्रतिष्ठैवं रविस्ततः ।
सम्पदिन्द्रस्तथैवोक्तो रुद्र आयतनं तथा ॥' इति प्रभावे[२] ।
'सर्वेन्द्रियाणां व्यापारान् प्राण एव करोत्ययम् ।
इन्द्रियस्थः पृथक् चासौ शक्तोऽपि स्वयमेव तु ॥

*इन्द्रियनियामकतया मुख्यप्राणस्याऽवश्यकता*

षन्मासात् पूर्वबालानां[३] केवलप्राणतो[४] भवेत् ।
व्यापार्यं मनसा सर्वमतः पश्चादसंस्मृतिः ॥

---

१. 'उपचारवसिष्ठः' ह. २. 'प्राभवे' ह. ३. 'पूर्वं बालानां' क. ४. केवलं प्राणतः' क.

**तुरीयायामवस्थायां प्राणादेव विबोधनम् ।**
**तथाऽपि संस्मृतिस्तत्र प्राणवश्यतया भवेत् ॥**
**प्राणस्य वश्यता नाम तद्भक्त्या स्यात् प्रसादतः[१] ।**
**प्राणे वश्ये मनो वश्यमिन्द्रियाणि च सर्वशः ॥' इति च ।**

## पदार्थकौमुदी

### भाष्यार्थः

प्रागुक्तो ज्येष्ठः श्रेष्ठो वायुश्चेदवान्तरः कथं [२] तज्ज्ञानान्मोक्ष इत्यत आह – **ज्येष्ठः श्रेष्ठ इति** ॥ महान् वायुरेवेति सम्बन्धः । "यदहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसि" इत्यारभ्य "आयतनमसि" इत्यन्त-वाक्यतात्पर्यमाह – **वसिष्ठश्चेति** ॥ चशब्दः प्रतिष्ठासमुच्चयार्थः । वायुरेव मुख्यत इति शेषः । तर्हि "वाग् वाव वसिष्ठः चक्षुर्वाव प्रतिष्ठा" इत्यादिविरोध इत्यतस्तदभिप्रायमाह – **तस्येति** ॥ "तस्य प्रसादात्" इत्यस्य परामर्शार्थ एवंशब्दः । ततः उपचारतः । एतेन वागादिशब्दा जडेन्द्रियपरा इति व्याख्यानमपास्तम् । तेषां कलहानुपपत्तेः। "अनो[३] हवै नाम प्रत्यक्षम्" इत्येतत् प्रत्यक्षं प्रत्यक्षविषयः इत्यन्यथाप्रतीति-निरासाय सप्रमाणकं व्याचष्टे – **सर्वेति** ॥ किं राजादिवद् बहिष्ठरूपेण ? नेत्याह – **इन्द्रियस्थ इति** ॥ पृथक् सर्वेन्द्रियस्थः । तर्हि पृथक् स्थितस्तद्व्यापारकरणेऽसमर्थः किम् ? नेत्याह – **पृथक् चेति** ॥ तर्हि कस्मादिन्द्रियस्थ इत्यत उक्तम् – **स्वयमेवेति** ॥ स्वेच्छानुसारेणै-

---

१. 'भक्त्या स्यात् तत्प्रसादतः' क. २. 'ज्ञानात्' इति मुद्रितपुस्तकस्थः पाठः । ३. 'अतो' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

वेन्द्रियस्थ इति सम्बन्धः। तुशब्दो भगवदिच्छानुसारिताविशेषज्ञापनार्थः।

ननु वायुः किमन्याधिष्ठितेन्द्रियस्थः उत तदनधिष्ठितेन्द्रियस्थो वा। नाऽद्यः। प्राणवैयर्थ्यात्। न द्वितीयः। देवतान्तरवैयर्थ्यापातादित्यतः प्रथमपक्षमभ्युपेत्य प्राणस्येतरव्यापारव्यतिरेकेऽपि कर्तृत्वमाह – **षण्मासादिति** ॥ सत्स्वपीतरदेवेषु केवलं प्राणतस्तद्व्यापारनिरपेक्षप्राणत इत्यर्थः। षण्मासात् पूर्वं बालानां प्राणादेव सर्वेन्द्रियबोधस्ततः परमग्न्यादिभिरपीति भावः। तदपि कुत इत्यत आह – **अत इति** ॥ अतः षण्मासात् पूर्वं रुद्रादेर्मनःप्रभृत्यनियामकत्वादेव खलु तदानीमनुभूतस्य पश्चादसंस्मृतिः। अन्यथा पूर्वानुभूतपदार्थस्मरणापात इत्यर्थः। अत एव ''यथा बाला अमनसः'' इत्याद्युक्तम्। अन्यथा ''नह्यमनाः पुमांस्तिष्ठति''इति श्रुतिविरोधोऽन्येन्द्रियव्यापारयोगः संसारानुपपत्तिश्च।

अत्र विप्रतिपन्नं प्रति स्थलान्तरे प्राणस्येतरनिरपेक्षकर्तृत्वं समर्थयते– **तुरीयायामिति** ॥ मोक्षावस्थायामित्यर्थः। इन्द्रियाणामेवाभावेन तदन्यव्यापाराभावादिति भावः। मोक्षावस्थायां प्राणादेव स्वरूपेन्द्रियनियामकाद् बोधश्चेत् संसारेऽनुभूतस्य तदानीं स्मृतिर्न स्यात्। पूर्वं मनआदिप्रवर्तकानां तदा स्वाभिमन्यमानाभावेनाप्रवर्तकत्वादित्यत आह – **तथाऽपीति** ॥ तत्र तुरीयावस्थायामितरदेवव्यापाराभावेऽपि प्राणस्य वश्यतया संसारस्मृतिर्घटत इत्यर्थः। प्राणस्य भगवदेकवशत्वात् कथमन्यवशतेत्यत आह – **प्राणस्येति** ॥ नतु बलादित्यर्थः। ननु प्राणस्य वश्यत्वेऽपीतरेन्द्रियदेवानामवश्यत्वे तदनुभावितपदार्थानां कथं स्मृत्युपपत्तिरित्यत आह– **प्राण इति** ॥ अन्यथा मुक्तेरेवानुपपत्तिरिति भावः ॥

॥ **प्रथमः खण्डः** ॥

### ततश्चायं खण्डार्थः

प्राणज्ञानमवश्यं सम्पाद्यमिति भावेन तज्ज्ञानिनः फलमाह – **यो ह वा इति** ।। परस्परविशेषणसमुच्चये चशब्दौ । योऽधिकार्यखिलदेवेभ्यो वयसा ज्येष्ठं गुणतः श्रेष्ठं च वेद सः मुक्तः सन् स्वसमानानां मध्ये ज्येष्ठः श्रेष्ठश्च भवति । ह वा इति श्रुत्यादिप्रसिद्धिमाह । ज्येष्ठः श्रेष्ठश्च क इत्यत आह – **प्राण इति** ।। मुख्यप्राणः ।। १ ।।

यो ह वै वसिष्ठं वेद सः मुक्तः सन् स्वानां स्वकीयानां मध्ये वसिष्ठो वसतामुत्तमो भवति । कोऽसौ वसिष्ठ इत्यत आह – **वागिति** ।। वागग्निः ।। २ ।।

यो ह वै प्रतिष्ठां वेद सोऽस्मिन्नमुष्मिंश्च लोके प्रतितिष्ठति इच्छायाम् । का प्रतिष्ठा ? चक्षुरेव । तदभिमानी सूर्यः ।। ३ ।।

यो ह वै सम्पदं वेदास्मै दैवाः मानुषाश्च कामाः काम्याः सम्पद्यन्ते । इहामुत्र सम्पदः स्युरिति भावः । श्रोत्रं तदभिमानी इन्द्रः ।। ४ ।।

यो ह वा आयतनं वेद सः स्वानामायतनमाश्रयो भवति । उपलक्षणमेतत् । आयतनवांश्च भवतीत्यपि ग्राह्यम् । मनो रुद्रः ।। ५ ।।

प्राणस्य ज्येष्ठत्वं श्रेष्ठत्वं चोक्तम् । तत्कुत इत्यतो मीमांसया समर्थितत्वादिति भावेनाऽख्यायिकामारभते – **अथेति** ।। प्राणाः पूर्वोक्ताः वायुपुरस्सराः देवाः अहं श्रेयसि व्यूदिरे विवादं कृतवन्तः । अहं श्रेयसीत्युक्तमेव विशदमाह – **अहमिति** ।। **६** ।।

ते विवदमानाः प्राणाः प्रजापतिं नारायणं स्वपितरमेत्योचुः । तथाचोक्तं बृहद्भाष्ये–

''विवदन्तोऽखिला देवा ययुर्नारायणं प्रभुं ।

अहं श्रेयानहं श्रेयानिति वायुपुरःसराः ॥'' इति। किमूचुः ? हे भगवन् नोऽस्माकं मध्ये कः श्रेष्ठः इति। तान् प्राणान् होवाच प्रजापतिः। वो युष्माकं मध्ये यस्मिन्नुत्क्रान्ते इदं शरीरं विरिञ्चशरीरं पापिष्ठतरमिव शवरूपं दृश्येत स वः श्रेष्ठ इति॥ ७॥

एवमुक्ते तत्परीक्षणाय तेषां मध्ये सा पूर्वोक्ता वागग्निरुच्चक्राम। तदुत्क्रमणेऽपि शरीरं न पपातेति ग्राह्यम्। सोत्क्रान्ता वाक् संवत्सरपर्यन्तं प्रोष्य प्रवासं कृत्वा शरीरस्थानितरान् प्राणान् पर्येत्योवाच। मदृते जीवितुं कथमशकतेति। ते शरीरस्थाः प्राणा होचुः। यथाऽकलाः मूकाः अवदन्तोऽपि प्राणादिना प्राणनादि कुर्वाणाः जीवन्ति एवमजीविष्यामेति[1]। एवमुक्ता वाक् नाहं श्रेष्ठेति निश्चित्य तस्मिंश्छरीरे प्रविवेश ह॥ ८॥

एवं ''चक्षुर्होच्चक्राम'' इत्यादिकमपि व्याख्येयम्॥ ९॥ १०॥

यथा बालाः षण्मासात् पूर्वं बालाः अमनसः प्राणेतरमनोभिमानि-रुद्रादिव्यापृतमनःशून्याः॥ ११॥

अथैवं सर्वेषामश्रैष्ठ्यावधारणानन्तरं प्राणो मुख्यप्राणः उच्चक्रमिषन्नु-त्क्रान्तुमिच्छन् सदृष्टान्तो यथा लोके सुहयः शोभनाश्वः पड्वीशशङ्कून् पट्टुभूतस्य हयस्येशाः नियामकाः बन्धका इति यावत्। पड्वीशाश्च ते शङ्कवश्चेति तथोक्तास्तान् पादबन्धनकीलानिति यावत्। परीक्ष-णायाऽरूढेन कशया हतः सङ्खिन्देत् समुत्पाटयेदेवमितरान् प्राणान् समखिदत्। समुत्पाटितवान्। ते प्राणाः सञ्चलिताः[2] सन्तः स्वस्वस्थाने स्थातुमशक्ताः तं मुख्यप्राणम् अभिसमेत्योचुः। हे भगवन्नेधि आस्व

---

१. 'एवमजीविष्म' इति मुद्रितपुस्तकस्थः पाठः। २. 'संवलिताः' इति मातृका-याम्। प.सं. २०३। 'सञ्चालिताः' इति मुद्रितपुस्तके।

(अभिवृद्धो भव) त्वं नोऽस्माकं मध्ये श्रेष्ठोऽसि । अस्माद् देहान्मोत्क्रमीरिति ॥ १२ ॥

तर्हि तस्य मे यूयं बलिं पूजां कुरुतेत्युक्तस्तथेत्यूचुरिति ग्राह्यम् । तत्प्रकारं वक्तुमारभते – **अथेति** ॥ एनं मुख्यप्राणं प्रति वागुवाच । अहं वसिष्ठाऽस्मि वसतामुत्तमाऽस्मीति यत् त्वं तद्वसिष्ठोऽसि । त्वमेव मयि स्थित्वा मदीयवसिष्ठत्वनियामक इत्यर्थः । एवमुत्तरत्रापि ॥ १३ ॥ १४ ॥

वागादीनां वसिष्ठत्वादिकं प्राणाधीनमित्यत्र नियामकमाह – **न वा इति** ॥ यस्माद् वागादीनि करणानि वाच इति नैवाऽचक्षते विद्वांसः एवं चक्षूंषीति नैवाऽचक्षते । श्रोत्राणीति नैवाऽचक्षते । मनांसीति वा नैवाऽ-चक्षते । किं तर्हि ? प्राण इत्येवाऽचक्षते । तस्मात् प्राणा एवैतानि सर्वाणि भवन्ति । सर्वेन्द्रियदेवेषु स्थित्वा तत्तन्नियामको भवतीत्यर्थः ॥ १५ ॥

**॥ इति प्रथमः खण्डः ॥**

## उपनिषत् (खण्डः - २)

*अस्माभिरद्यमानं सर्वं मुख्यप्राणस्यान्नसमर्पणमेव*

**स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किञ्चनानन्नं भवतीति ॥ १ ॥**

### भाष्यम्

**अक्षेषु प्रति प्रति स्थितत्वादनः प्रत्यक्षम् ।**

*रुद्रस्यैव मुख्यतया सर्वभोक्तृत्ववर्णनम्*

**'प्राणविज्ञानयोग्यस्तु रुद्रो मुख्यतया स्मृतः ।**

**तस्मात् स सर्वभोक्ता स्यात् तदन्येषां स्वयोग्यतः ॥' इति च ॥**

### भाष्यार्थः

**अक्षेष्विति ॥** शास्त्रैकवेद्यस्य प्रत्यक्षाविषयत्वादिति भावः । प्रादि-समासोऽयं नाव्ययीभावः । अन्यथा प्रत्यक्षस्येति षष्ठी न श्रूयेत ।

''न हवा एवंविदि किञ्चनानन्नं भवति''इत्यनेनोक्तं प्राणवेत्तुः सर्वात्तृत्वं मुख्यतः यस्य कस्यचिदिति प्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे – **प्राणेति ॥**

## उपनिषत्

*भोजनपूर्वोत्तरयोरापोशनं प्राणदेवस्य वस्त्रसमर्पणम्*

**स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति ॥ २ ॥**

### भाष्यम्

**'सिद्धमेवान्नवस्त्राद्यं विष्णोः स्वातन्त्र्यतः सदा ।**
**स्वार्थं समर्पयेद् विष्णौ यथा प्राणे सुराः पुरा ॥'**

**इति कर्मानुपूर्व्याम् ।**

**'प्राणस्य वस्त्रबुद्ध्या तु भोजनोभयतः पिबन् ।**
**स्वर्गे मुक्तौ तथा दिव्यवस्त्रलाभी भवत्यलम् ॥' इति प्रभञ्जने ।**

### भाष्यार्थः

ननु यदिदं प्राणायान्नं वासश्च देवैर्दीयते तत्प्राणस्य पूर्वं विद्यमानं न वा ।

नाऽद्यः । तदीयस्यैव तस्मै प्रार्पणायोगात् । न द्वितीयः । प्राणस्य देवपरतन्त्रत्वापातादित्यतः सदृष्टान्तमाद्यपक्षदोषमेव परिहरति – **सिद्ध-मेवेति** ॥ यथा स्वातन्त्र्यतः कारणाद् विष्णोः सदा सिद्धमेवान्नवस्त्राद्यं स्वार्थं स्वप्रयोजनसिध्यर्थं विष्णौ समर्पयेल्लोकस्तथा सुराः पुरा प्राणस्य सिद्धमेवान्नं वस्त्रं च प्राणे समर्पयन्निति योजना । ''लम्भुको ह वासो भवति''इत्यादिना भोजनपूर्वोत्तरापोशनमात्रस्यैहिकवस्त्रप्राप्तिमात्रं फल-मुच्यत इति प्रतीतिनिरासाय तत्तात्पर्यं स्मृत्यैवाऽह – **प्राणस्येति** ॥

## उपनिषत्

*प्राणतत्त्वज्ञानस्य मोक्षसाधनत्वनिरूपणम्*

**तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैय्याघ्रपद्यायोक्त्वोवाच यद्यप्येतच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ३ ॥**

## भाष्यम्

**'योग्यस्य प्राणविद्यायां[१] स्थाणोरपि हि तच्छ्रुतेः ।**
**पलाशाद्यं भवेदत्र परतो मुक्तिरेव च ।**
**विष्णोर्ज्ञानमनुप्राप्य भवेन्नास्त्यत्र संशयः ॥'**

**इति प्राणसंहितायाम् ।**

*भाष्यार्थः*

''यद्यप्येतच्छुष्काय स्थाणवे ब्रूयात्'' इत्यादिवाक्यं यस्य कस्यापि स्थाणोः प्राणविद्याश्रवणे पलाशादिभावप्रतीतिं तन्मात्रफलत्वप्रतीतिं च

---

१. 'प्राणविद्यायाः' ह.

निवारयन् प्रमाणेनैव व्याचष्टे – **योग्यस्येति** ।। योग्यस्यैव तच्छ्रुतेः तस्याः विद्यायाः श्रवणात् । किमु योग्यस्य जङ्गमस्येति कैमुत्यार्थोऽपिशब्दः । तर्हि ''तमेवं विद्वान्''इति श्रुतिविरोध इत्यत आह – **विष्णोरिति** ।। पूर्वेण सम्बन्धः ।

## उपनिषत्

*मन्थहोमेन महत्त्वप्राप्तिकथनम्*

**अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ।। ४ ।।**

**वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ।। ५ ।।**

## भाष्यम्

**'ज्येष्ठश्रेष्ठादिकैर्हुत्वा प्राणायात्र परत्र च ।**
**ज्येष्ठः श्रेष्ठः समानेभ्यो भवेन्नात्र विचारणा ।।'** इति च ।

## भाष्यार्थः

''ज्येष्ठाय श्रेष्ठाय स्वाहा''इत्यादिना होममुक्त्वा ''स मा ज्यैष्ठ्यं श्रैष्ठ्यम्'' इत्यादिप्रार्थनाद्धोमस्य ज्यैष्ठ्यश्रैष्ठ्यप्राप्तिः फलमुच्यते । तत्तु सर्वेभ्य इत्यैहिकमेवेति च प्रतीतिं निवारयन् प्रमाणेनैव व्याचष्टे – **ज्येष्ठेति** ।। मन्त्रैरिति शेषः । ''प्राणाय'' इति वागाद्युपलक्षणम् ।

नाऽद्यः । तदीयस्यैव तस्मै प्रार्पणायोगात् । न द्वितीयः । प्राणस्य देवपरतन्त्रत्वापातादित्यतः सदृष्टान्तमाद्यपक्षदोषमेव परिहरति – **सिद्ध-मेवेति** ॥ यथा स्वातन्त्र्यतः कारणाद् विष्णोः सदा सिद्धमेवान्नवस्त्राद्यं स्वार्थं स्वप्रयोजनसिध्यर्थं विष्णौ समर्पयेल्लोकस्तथा सुराः पुरा प्राणस्य सिद्धमेवान्नं वस्त्रं च प्राणे समर्पयन्निति योजना । ''लम्भुको ह वासो भवति''इत्यादिना भोजनपूर्वोत्तरापोशनमात्रस्यैहिकवस्त्रप्राप्तिमात्रं फल-मुच्यत इति प्रतीतिनिरासाय तत्तात्पर्यं स्मृत्यैवाऽह – **प्राणस्येति** ॥

## उपनिषत्

*प्राणतत्त्वज्ञानस्य मोक्षसाधनत्वनिरूपणम्*

**तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैय्याघ्रपद्यायोक्त्वोवाच यद्यप्येतच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ३ ॥**

## भाष्यम्

**'योग्यस्य प्राणविद्यायां[१] स्थाणोरपि हि तच्छ्रुतेः ।**
**पलाशाद्यं भवेदत्र परतो मुक्तिरेव च ।**
**विष्णोर्ज्ञानमनुप्राप्य भवेन्नास्त्यत्र संशयः ॥'**

**इति प्राणसंहितायाम् ।**

*भाष्यार्थः*

''यद्यप्येतच्छुष्काय स्थाणवे ब्रूयात्'' इत्यादिवाक्यं यस्य कस्यापि स्थाणोः प्राणविद्याश्रवणे पलाशादिभावप्रतीतिं तन्मात्रफलत्वप्रतीतिं च

१. 'प्राणविद्यायाः' ह.

निवारयन् प्रमाणेनैव व्याचष्टे – **योग्यस्येति** ॥ योग्यस्यैव तच्छ्रुतेः तस्याः विद्यायाः श्रवणात् । किमु योग्यस्य जङ्गमस्येति कैमुत्यार्थोऽपिशब्दः । तर्हि ''तमेवं विद्वान्''इति श्रुतिविरोध इत्यत आह – **विष्णोरिति** ॥ पूर्वेण सम्बन्धः ।

## उपनिषत्

*मन्थहोमेन महत्त्वप्राप्तिकथनम्*

**अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ४ ॥**

**वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ५ ॥**

## भाष्यम्

**'ज्येष्ठश्रेष्ठादिकैर्हुत्वा प्राणायात्र परत्र च ।**
**ज्येष्ठः श्रेष्ठः समानेभ्यो भवेन्नात्र विचारणा ॥'** इति च ।

## भाष्यार्थः

''ज्येष्ठाय श्रेष्ठाय स्वाहा''इत्यादिना होममुक्त्वा ''स मा ज्यैष्ठ्यं श्रैष्ठ्यम्'' इत्यादिप्रार्थनाद्धोमस्य ज्यैष्ठ्यश्रैष्ठ्यप्राप्तिः फलमुच्यते । तत्तु सर्वेभ्य इत्यैहिकमेवेति च प्रतीतिं निवारयन् प्रमाणेनैव व्याचष्टे – **ज्येष्ठे-ति** ॥ मन्त्रैरिति शेषः । ''प्राणाय'' इति वागाद्युपलक्षणम् ।

''महज्ज्रिगमिषेत्'' इत्युपक्रमवाक्योक्तं महत्त्वमपि दृष्टादृष्टरूपमेवेति बोध्यम् ।

## उपनिषत्

**अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपत्यमो नामास्यमा हि ते सर्वमिद९ँ स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः स मा ज्यैष्ठ्य९ँ श्रैष्ठ्य९ँ राज्यमाधिपत्यं [१]गमयत्यहमेवेद९ँ सर्वमसानीति ॥६॥**

**अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठ९ँ सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति निर्णिज्य क९ँसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् ॥ ७ ॥ तदेष श्लोकः –**

**यदा कर्मसु काम्येषु स्त्रिय९ँ स्वप्नेऽभिपश्यति ।**

**समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने तस्मिन् स्वप्ननिदर्शन इति ॥ ८ ॥ २ ॥**

## भाष्यम्

सवितुर्जगत्प्रसवितुर्विष्णोः सकाशाद् वयं भोजनं रक्षां सर्वभोगांश्च वृणीमहे । भगस्य समग्रैश्वर्यादिसर्वगुणस्वरूपस्य विष्णोः ।

पुरुषं तुरं वायुं श्रेष्ठं सर्वधातॄणामुत्तमं च धीमहि ।

---

१. 'गमयतु' इति ह्. पाठे ।

**'नारायणीयं तं वायुं चिन्तयित्वोत्तमोत्तमम् ।**
**जगत्प्रसवितुर्विष्णोः सकाशाद् भोगमाप्नुमः ॥' इति च ॥१-२ ॥**

**भाष्यार्थः**

ननु प्राणदेवताकं यागमुपक्रम्य कथं सावित्रमन्त्रविनियोग-कथनमित्यतः प्राणमादित्यं चैकीकृत्येदं प्रवृत्तम् । ततश्च पूर्वोत्तरार्धयोः समानाधिकरणैव योजनेत्यन्ये । तदसदिति भावेन ऋचं व्याचष्टे – **सवितुरिति** ॥ ''भोजनम्'' इत्यनूद्य ''रक्षां सर्वभोगांश्च'' इति व्याख्यानम् । भुज पालनाभ्यवहारयोरिति धातोः । अभ्यवहारवाचिना च भोजनशब्देन सर्वभोगोपलक्षणमिति भावः । तद्धेतुत्वेन द्वितीयार्धं व्याचष्टे – **भगस्येति** ॥ ''ऐश्वर्यस्य समग्रस्य''इति वचनेन भगशब्दस्य षड्-गुणार्थत्वे परिच्छिन्नत्वशङ्कापरिहाराय ''सर्वगुणस्वरूपस्य'' इत्युक्तम् । विशेषणसमुच्चयार्थश्चशब्दः । धीमहीति यत् तस्मादिति योज्यम् । परोक्त एवार्थः किं न स्यादित्यतो ऋगर्थं प्रमाणेन द्रढयति – **नारायणीय-मिति** ॥ द्वितीयः खण्डः ॥

**ततश्चायं खण्डार्थः**

स मुख्यप्राणः उवाच । नालं श्रेष्ठोऽसीत्युक्तिमात्रेण किंनाम किं मेऽन्नं भविष्यतीति । एवमुक्ताः देवाः आश्वभ्यः आशकुनिभ्यः श्वपक्षिपर्यन्त-प्राणिभिर्यत्किञ्चिदिदं योग्यमन्नमद्यते तत्तेऽन्नमित्यूचुः । देवैर्दत्तमन्नं पूर्वमतदीयं किं नेत्याह – **तद्वा इति** ॥ तदेतदनस्य मुख्यप्राणस्यैवान्नं कुत इत्यत आह – **अन इति** ॥ अनो मुख्यप्राण एव प्रत्यक्षं अक्षेषु प्रति प्रति स्थितत्वात् । एवं प्राणवेत्तुः फलमाह – **नेति** ॥ एवमुक्तरीत्या प्राणस्य सर्वभोक्तृत्वविदि किञ्चनानन्नं न भविष्यति । सर्वमेवास्यान्नं भवति । रुद्रस्यैवेदं मुख्यम् । अन्येषां यथायोग्यम् ॥ १ ॥

एवं सिद्धान्तः सहोवाच। किं मे वासो भविष्यतीति। सर्वप्राणिभिः पीयमाना आप इति होचुः। अत्र नियामकमाह श्रुतिः – **तस्मादिति**॥ अपां प्राणवस्त्रत्वादेवं हि एतदन्नमशिष्यन्तो भोक्ष्यमाणाः भुक्तवन्तश्च विद्वासः श्रोत्रियाः ब्राह्मणाः भोजनात् पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति परिधानं कुर्वन्ति। प्राणस्य वस्त्रबुद्ध्या भोजनोभयतः पिबतः फलमाह – **लम्भुक इति**॥ वासो दिव्यवाससो लम्भुको लब्धा भवति। तथाऽनग्नो ह भवति। इहामुत्र दिव्यवस्त्रैरन्तर्बहिः प्रावरणवान् भवति॥ २॥

इयं प्राणविद्या परम्परागता चेत्याह – **तदिति**॥ तदेतत् प्राणविज्ञानं सत्यकामो जाबालो गोश्रुतये नाम्ना वैयाघ्रपद्याय व्याघ्रपदः पुत्रायोक्त्वा फलं चोवाच। एतत्प्राणविज्ञानं शुष्कायापि स्थाणवे यदि ब्रूयात् तदा सः स्थाणुर्योग्यश्चेदस्मिंच्छुष्केऽपि स्थाणौ शाखाः जायेरन्नेव। पलाशानि प्ररोहेयुरिति॥ ३॥

इदानीं योऽधिकारी स्वस्य दृष्टादृष्टं महत्त्वमिच्छेत् तस्य कर्तव्यं प्रकृतप्राणादिदेवताकमेव होमं वक्तुं प्रारभते – **अथेति**॥ योऽधिकारी यदि महद् दृष्टादृष्टं महत्त्वं जिगमिषेत् प्राप्तुमिच्छेत् तर्हि सोऽमावास्यायां दीक्षित्वा पक्षपर्यन्तं पयोव्रताद्यनुष्ठाय पुनः पौर्णमास्यां रात्रौ सर्वौषधस्य सर्वौषधीनां व्रीहियवादीनां दशधान्यानां मन्थं पिष्टं दधिमधुनोर्दधि-मधुभ्यामुपमथ्य सम्मिश्र्य "ज्येष्ठाय श्रेष्ठायस्वाहा" इति मन्त्रेणाग्ना-वाज्यस्याऽज्यं तत्संस्कृतं मन्थं हुत्वा स्रुवलग्नमाज्यं मन्थे होम्ये पिष्टे। सम्पातं पातनं यथा तथाऽवनयेत्। एवमन्यत्॥ ४॥ ५॥

होमावशिष्टं मन्थविनियोगमाह – **अथेति**॥ अथ होमानन्तरं होमावशिष्टं मन्थं प्रतिसृप्याग्नावीषदुपसृप्याञ्जलावाधाय जपति जपेत्। यज्ञदेवतां प्राणमिति शेषः। त्वम् अमोनामाऽसि। कुतः ? सर्वमिदं जगत् ते तवामा मानं परिमितं न भवेदित्यर्थः। ते त्वया सहितं वर्तत इति वा। सः

मुख्यप्राणो ज्येष्ठो वयसा श्रेष्ठो गुणतः राजा रञ्जकोऽधिपतिराधिक्येन पालको यस्मात् तस्मात् सः मा मां ज्यैष्ठ्यं श्रैष्ठ्यं राज्यमाधिपत्यं गमयतु प्रापयतु । अहमेवेदं सर्वमसानि । इदं सर्वं योग्यं मदधीनं करिष्यामीत्यर्थः । इति जपतीति सम्बन्धः ॥ ६ ॥

अथैवं प्राणजपानन्तरं होमावशिष्टं मन्थं ग्रासचतुष्टयं कृत्वैतया वक्ष्यमाणया ऋचा पच्छः पादशः आचामति आचामेन्मन्थम् । तदेव विशदमाह – **तत्सवितुरिति** ॥ तत्सवितुरिति पादेन प्रथमं ग्रासमाचामेत् । वयमिति पादेन द्वितीयं ग्रासमाचामेत् । तुरमिति पादेन सर्वं निःशेषं पिबति पिबेत् ।

कंसं कांस्यं चमसं वौदुम्बरमयं मन्थपात्रं निर्णिज्य प्रक्षाल्याग्नेः पश्चाच्चर्मणि वा स्थण्डिले वा केवलायां वा भूमौ वाचंयमो यतवागप्रसाहः[१] स्त्रीरहितः संविशति संविशेत् । सः यजमानो यदि स्वप्नेषु स्त्रियं पश्येत् तदा समृद्धं ममेदं कर्मेति विद्यात् ।

अत्रैव श्लोकमाह – **तदिति** ॥ तत्तत्रोक्तार्थे एषः वक्ष्यमाणः श्लोको भवति । तं पठति – **यदेति** ॥ काम्येषु कर्मसु क्रियमाणेषु यदा स्वप्नेषु स्त्रियं पश्यति तत्र तर्हि तस्मिन् स्वप्नाख्ये निदर्शने जाते समृद्धिं जानीयादित्यर्थः । द्विरुक्तिः प्रामाणिकत्वज्ञापनार्था ॥ ७-८ ॥

॥ **इति द्वितीयखण्डः** ॥

## उपनिषत् (खण्डः-३)

*देवयानपितृयाणमार्गनिरूपणम्*

**श्वेतकेतुर्हाऽरुणेयः पञ्चालानाꣳ समितिमेयाय तꣳ ह प्रवाहणो**

---

१. 'अप्रसः' इति क्वचित् । प.सं. २०५, १५२.

जैबलिरुवाच कुमारानु त्वाऽशिषत्[१] पितेत्यनु हि भगव इति ॥ १ ॥

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्तन्ता ३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना ३ इति न भगव इति ॥ २ ॥

वेत्थ यथाऽसौ लोको न सम्पूर्यता ३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति ॥ ३ ॥

अथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथꣳ सोऽनुशिष्टो ब्रुवीतेति स हाऽयस्तः पितुरर्धमेयाय तꣳ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥४॥ पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् तेषां नैकं च नाशकं विवक्तुमिति स होवाच यथा मा त्वं [२]ततैतानवदो यथाऽहमेषां नैकं च न वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥ ५ ॥

स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हाञ्चकार स ह प्रातः सभाग उदेयाय तꣳ होवाच मानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्री बभूव ॥ ६ ॥

---

१. 'अनुशिषत्' इति क्वचित्। २. 'तात' ह.

तꣳह चिरं वसेत्याज्ञापयाञ्चकार तꣳ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तु पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥३ ॥

## उपनिषत् (खण्डः-४)

### *पञ्चाग्निविद्या*

असौ वाव लोको गौतमाग्निस्तस्याऽदित्य एव समिद् रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गाः ॥ १ ॥
तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥ २ ॥ ४ ॥

## उपनिषत् (खण्डः- ५ )

पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चि-रशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गाः ॥ १ ॥
तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुतेर्वर्षः सम्भवति ॥ २ ॥ ५॥

## उपनिषत् (खण्डः- ६ )

पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विष्फुलिङ्गाः ॥ १ ॥
तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳ सम्भवति ॥ २ ॥ ६ ॥

जैबलिरुवाच कुमारानु त्वाऽशिषत्[१] पितेत्यनु हि भगव इति ॥ १ ॥

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्तन्ता ३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना ३ इति न भगव इति ॥ २ ॥

वेत्थ यथाऽसौ लोको न सम्पूर्यता ३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति ॥ ३ ॥

अथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथꣳ सोऽनुशिष्टो ब्रुवीतेति स हाऽयस्तः पितुरर्धमेयाय तꣳ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥४॥ पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् तेषां नैकं च नाशकं विवक्तुमिति स होवाच यथा मा त्वं [२]ततैतानवदो यथाऽहमेषां नैकं च न वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥ ५ ॥

स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हाञ्चकार स ह प्रातः सभाग उदेयाय तꣳ होवाच मानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्री बभूव ॥ ६ ॥

---

१. 'अनुशिषत्' इति क्वचित्। २. 'तात' इ.

तꣳह चिरं वसेत्याज्ञापयाञ्चकार तꣳ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तु पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥३ ॥

## उपनिषत् (खण्डः-४)

*पञ्चाग्निविद्या*

असौ वाव लोको गौतमाग्निस्तस्याऽदित्य एव समिद् रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गाः ॥ १ ॥
तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥ २ ॥ ४ ॥

## उपनिषत् (खण्डः- ५ )

पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चि-रशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गाः ॥ १ ॥
तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुतेर्वर्षः सम्भवति ॥ २ ॥ ५॥

## उपनिषत् (खण्डः- ६ )

पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विष्फुलिङ्गाः ॥ १ ॥
तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳ सम्भवति ॥ २ ॥ ६ ॥

## उपनिषत् (खण्डः- ७ )

पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् प्राणो धूमो जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति ॥ २ ॥ ७ ॥

## उपनिषत् (खण्डः- ८ )

योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद् यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति ॥ २ ॥ ८ ॥

## उपनिषत् (खण्डः- ९ )

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा मासानन्तः शयित्वा यावद्वाऽथ जायते ॥ १ ॥

स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥ २ ॥ ९ ॥

## भाष्यम्

*नारायणादिपञ्चभगवद्रूपाण्येव पञ्चाग्नयः*

'नारायणादयः पञ्च क्रमात् पञ्चाग्नयः स्मृताः ।

अदनादङ्गनेतृत्वा[१]न्नितरामचलत्वतः ॥
समेधनात् समिद् विष्णुर्धूत्काराद् धूम उच्यते ।
अरञ्चितत्वादर्चिश्च सोऽङ्गारोऽङ्गरतेरपि ॥
विविधं स्फुरणाच्चैव विष्फुलिङ्ग इतीरितः ।
पुनर्नारायणाद्यात्मा प्रत्येकं पञ्चरूपवान् ॥
आदित्यः स तथाऽऽदानाद् रश्मिः स रतिरूपतः[२] ।
तमसाऽहननीयत्वादहश्चन्द्रः परं सुखम्[३] ॥
अनन्यराजो नक्षत्रं वायुर्ज्ञानायुरूपतः ।
अभ्रमभ्भरणाद्विष्णुर्विद्युद् विद्योतनादपि ॥
अशनादशनिश्चैव [४]निह्लादाद्ध्रादुनिस्तथा ।
संवत्सरो वासनाच्च स आकाशः प्रकाशनात् ॥
रात्रिश्च रतिदानात् स दिशतीति दिशः स्मृतः ।
अवान्तरं दिशेद् यस्मादवान्तरदिगुच्यते ॥
वचनाद्वाक् तथा प्राणस्त्वननाच्चक्षुरुच्यते ।
दर्शनाच्छ्रवणाच्छ्रोत्रं जिह्वा वै होमतः स्मृतः ॥
उपस्थितेरुपस्थः स उपमन्त्रकृदेव सः ।
योनिर्युनक्ति यस्मात् स सर्वान्तःकृच्च[५] नन्दनः ॥
असौ लोकः प्रकाशत्वात् प्राणस्थत्वाच्च केशवः ।

---

१. 'अगनेतृत्वात्' क. २. 'रश्मी रतिशरूपतः' क. ३. 'परः सुखम्' क.
४. 'निर्ह्लादात्' ह. ५. 'स चान्तःकृच्च' ह.

## उपनिषत् (खण्डः- ७ )

पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् प्राणो धूमो जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति ॥ २ ॥ ७ ॥

## उपनिषत् (खण्डः- ८ )

योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद् यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति ॥ २ ॥ ८ ॥

## उपनिषत् (खण्डः- ९ )

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा मासानन्तः शयित्वा यावद्वाऽथ जायते ॥ १ ॥

स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥ २ ॥ ९ ॥

### भाष्यम्

*नारायणादिपञ्चभगवद्रूपाण्येव पञ्चाग्नयः*

'नारायणादयः पञ्च क्रमात् पञ्चाग्नयः स्मृताः ।

अदनादङ्गनेतृत्वा[१]न्नितरामचलत्वतः ॥
समेधनात् समिद् विष्णुर्धूत्काराद् धूम उच्यते ।
अरश्चितत्वादर्चिश्च सोऽङ्गारोऽङ्गरतेरपि ॥
विविधं स्फुरणाच्चैव विष्फुलिङ्ग इतीरितः ।
पुनर्नारायणाद्यात्मा प्रत्येकं पञ्चरूपवान् ॥
आदित्यः स तथाऽऽदानाद् रश्मिः स रतिरूपतः[२] ।
तमसाऽहननीयत्वादहश्चन्द्रः परं सुखम्[३] ॥
अनन्यराजो नक्षत्रं वायुर्ज्ञानायुरूपतः ।
अभ्रमभ्भरणाद्विष्णुर्विद्युद् विद्योतनादपि ॥
अशनादशनिश्चैव [४]निह्लादाद्ध्रादुनिस्तथा ।
संवत्सरो वासनाच्च स आकाशः प्रकाशनात् ॥
रात्रिश्च रतिदानात् स दिशतीति दिशः स्मृतः ।
अवान्तरं दिशेद् यस्मादवान्तरदिगुच्यते ॥
वचनाद्वाक् तथा प्राणस्त्वननाच्चक्षुरुच्यते ।
दर्शनाच्छ्रवणाच्छ्रोत्रं जिह्वा वै होमतः स्मृतः ॥
उपस्थितेरुपस्थः स उपमन्त्रकृदेव सः ।
योनिर्युनक्ति यस्मात् स सर्वान्तःकृच्च[५] नन्दनः ॥
असौ लोकः प्रकाशत्वात् प्राणस्थत्वाच्च केशवः ।

---

१. 'अगनेतृत्वात्' क. २. 'रश्मी रतिशरूपतः' क. ३. 'परः सुखम्' क.
४. 'निर्ह्लादात्' ह. ५. 'स चान्तःकृच्च' ह.

**पर्जन्यो जनको यस्मात् पृथिवी प्रथितत्वतः ।**

**पुरुषः पुरु यस्मात् स योषा जोष्यो यतोऽखिलैः ॥'** इति **सामसंहितायाम् ।**

**भाष्यार्थः**

एवमपरब्रह्मप्राणविषया विद्या निरूपिता । इदानीं वैराग्यजननाय परब्रह्मविषयां पञ्चाग्निविद्यां धूमार्चिरादिमार्गं चाऽख्यायिकापुरःसरं निरूपयति– **श्वेतकेतुरित्यादिना खण्डाष्टकेन ॥** ''असौ वाव लोको गौतमाग्निः''इत्यादिना स्वर्गादेरग्नित्वकल्पनोच्यत इत्यसत् । तथा सत्यब्रह्मविद्याप्रसङ्गात् । तथाकल्पनायाः मिथ्याज्ञानत्वेनानर्थहेतुत्वाच्च । ''तद्य इत्थं विदुः''इत्यादिना पञ्चाग्निविद्यावेत्तॄणामर्चिरादिमार्गा-पुनरावृत्तिफलकथनविरोधाच्चेति भावेन तां विद्यां भगवत्परतयैव प्रमाणेनैव व्याचष्टे– **नारायणादय इत्यादिना ॥** द्युपर्जन्यधरापुंस्त्रीरूपाः पञ्चाग्नयः क्रमान्नारायणादय एव स्मृता इत्यर्थः । तर्हि नारायणादिषु अग्निशब्दः कथम् ? तस्यान्यत्र रूढत्वादिति चेत्, स्वर्गादावपि कथम् ? होमाधि-करणत्वगुणयोगेनेति चेत् । गौण्यपेक्षया योगस्य प्रबलत्वादिति भावेनाग्निशब्दस्य नारायणादिषु योगं दर्शयति– **अदनादिति ॥** पूर्वेणान्वयः । अदनादत्तृत्वात् । अत्तेः कर्तरि निप्रत्ययो दस्य गः । स्वतो न गच्छति न प्रवर्तते यद्विश्वं तस्य प्रवर्तकत्वादित्यर्थः । अगशब्दोप-पदान्नयतेः कर्तरि डिप्रत्ययः । उपपदाकारलोपश्च । नितरां न गच्छति न चलतीति चाग्निरित्यर्थः । नञुपपदाद् गमेः कर्तरि डः । नीत्युपसर्गः । अकारलोपश्चेति भावः । अनेन ''असौ वाव लोको गौतमाग्निः पर्जन्यो वाव गौतमाग्निः''इत्यादिवाक्यपञ्चकं व्याख्यातम् ।

इदानीं प्रत्यग्निसमिद्धूमार्चिरङ्गारविष्फुलिङ्गा इति पञ्चोक्ताः । तदपि

पूर्ववत् प्रसिद्धार्थमिति प्रतीतिनिरासायाऽऽह– **समेधनादित्यादिना** ॥ समेधनात् सम्यग्वर्धनात् सर्वोत्तमत्वादिति यावत् । धूत्काराच्छतॄणां कम्पनात् । धूञ् कम्पन इति धातुः । अरमलं चितत्वात् पूजितत्वात् । अङ्गरतेः जीवदेहे रतेः "अङ्गमङ्गी समादाय" इति प्रयोगात् । स्वाङ्ग-रतेर्वा । विविधं ज्ञानिनां स्फुरणात् । नारायणाद्यात्मा विष्णुः प्रत्येकं पुनः पञ्चरूपवान् । समेधनात् समिदित्युच्यत इत्यादिरूपा योजना ।

तर्ह्यादित्य एव समिदित्यादिसामानाधिकरण्यं कथमित्यतः प्रथमाग्नौ श्रुतानादित्यरश्म्यहश्चन्द्रनक्षत्रशब्दान्निर्वक्ति– **आदित्य इति** ॥ आदानादायुरादेः । रतिसुखरूपत्वतः । रतिरलम्बुद्धिः । तमसाऽज्ञानेना-हननीयत्वात् नित्यास्पृष्टाज्ञानत्वादित्यर्थः । [१]चदनाच्चन्द्रः । अस्य क्षत्रमन्यन्नास्तीति नक्षत्रमित्यर्थः । बहुरूपत्वाद् बहुवचनमिति भावः ।

इदानीं द्वितीयाग्नौ श्रुतान् वाय्वभ्रविद्युदशनिह्रादुनिशब्दान्निर्वक्ति– **वायुरित्यादिना** ॥ ज्ञानादायुष्ट्वाच्च वायुः । अपां भरणादित्यर्थः । अशनात् सर्वस्य भक्षणात् । निर्ह्रादान्नितरां हर्षणात् । तृतीयाग्नौ श्रुतान् संवत्सराकाशरात्रिदिगवान्तरदिक्शब्दान्निर्वक्ति–**संवत्सर इत्यादिना** ॥ चशब्दः सम्यगित्यस्य रमणादित्यस्य च समुच्चयार्थः । सम्यग्वासनाद् रमणाच्चेत्यर्थः । सम्यग् वत्सान् रमयतीत्यर्थान्तरसमुच्चयो वा । आ इत्यस्यार्थः – **प्रेति** ॥ रं रमणं राति[२] ददाति इति रात्रिः । दिशति परतत्त्वमादिशति । अवान्तरमपरतत्त्वम् । चतुर्थाग्नौ श्रुतान् वाक्प्राण-जिह्वाचक्षुःश्रोत्रशब्दान्निर्वक्ति– **वचनादिति** ॥ अननात् प्रणयनात् ।

---

१. 'चन्दनात्' इति क्वचित् । प.सं. २०६,१५३ । २. 'त्राति' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

होमतो होमाधिकरणत्वात्। होमकर्तृत्वाद्वा। "हु दानादानयोः[(१)]" इति धातुः। पञ्चमाग्नौ श्रुतोपस्थादिशब्दपञ्चकं व्याचष्टे– **उपस्थितेरित्यादिना** ॥ सर्वजीवानां हृद्गत्वेन समीपस्थितेरित्यर्थः। "यदुपमन्त्रयते" इत्यस्यार्थः – **उपमन्त्रकृदेवेति** ॥ युनक्ति संयोजयति। "यदन्तः-करोति" इत्यस्यार्थः – **सर्वान्तःकृदिति** ॥ "नारायणादयः पञ्च क्रमात् पञ्चाग्नयः स्मृताः" इत्युक्तम्। पञ्चाग्निषु श्रुतानसौलोकपर्जन्यपृथिवी-पुरुषयोषाशब्दान्निर्वक्ति – **असाविति** ॥ प्राणस्थत्वात् प्रकाशत्वाच्चेति वैपरीत्येन योज्यम्। असुर्मुख्यप्राणस्तस्य[(२)] सप्तमी असाविति। तस्यार्थः – **प्राण इति** ॥ सप्तम्या अनन्वयशङ्कापरिहाराय "प्राणस्थत्वात्" इत्युक्तम्। जोष्यः सेव्यः। जुषी प्रीतिसेवनयोरिति धातोः।

**॥ ततश्चायं खण्डसप्तकार्थः ॥**

श्वेतकेतुर्नामतोऽरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेयो ह पित्राऽनुशिष्टः स्वापाण्डित्यख्यापनाय पञ्चालानां पञ्चालदेशाधिपतीनां समितिं परिषदं प्रत्याजगाम। तं श्वेतकेतुं प्रवाहणो जैबलि[(३)]-स्तस्याहङ्कारशान्त्यर्थम् उवाच ह। हे कुमार तव पिता त्वा त्वाम् अन्वशिषद् अन्वशिक्षयत्किमिति शेषः। हे भगवः अनुहि अन्वशिषद्धीति श्वेतकेतुः ॥ १ ॥

एवमुक्ते प्रवाहणः पृच्छति – **वेत्थेति** ॥ प्रजाः इतो लोकाल्लोकान्तरं प्रयन्त्यो यदधिकृत्य यं मार्गमधिकृत्य ब्रह्मलोकं चन्द्रलोकं वा प्रति प्रयान्ति

---

१. 'हु दानादनयोः' इति मातृकागतः पाठः। प.सं. २०७,१५४. २. 'तच्छब्दस्य' इति मातृकागतः पाठः। प.सं. २०७,१५४। ३. 'जैबिलिः' इति मातृकागतः पाठः। प.सं. २०८,१५४।

तं मार्गं वेत्थ किमिति । एवं पृष्टः श्वेतकेतुर्न वेद्मि भगव इति होवाच ॥ द्वितीयं पृच्छति – **वेत्थेति** ॥ पुनरावृत्तिमच्चन्द्रलोकं गताः प्रजाः यथा येन मार्गेणेमं लोकं पुनरावर्तन्त इति वेत्थ किमिति । किं गतेनैव मार्गेण पुनरागमनमन्यथा वेति भावः । न भगव इति श्वेतकेतुः । तृतीयं पृच्छति – **वेत्थ पथोरिति** ॥ पथोरित्यस्य विवरणम् – **देवयानस्य पितृयाणस्य चेति** ॥ व्यावर्तनाः इतरेतरव्यावृत्तीर्वेत्थ किम् ? यत्साधनसाध्यत्वेन देवयानपितृयाणयोरितरेतरव्यावृत्तिस्तत्साधनं वेत्थ किमित्याशयः । अन्यथा प्रथमप्रश्नेन गतार्थत्वप्रसङ्गात् । वाजसनेयकविरोधाच्च । न भगव इति होवाच श्वेतकेतुः ॥ २ ॥

चतुर्थं पृच्छति – **वेत्थ यथेति** ॥ पुनःपुनः प्रयद्भिरप्यसौ लोकः पर-लोको यथा येन हेतुना न सम्पूर्यते तं वेत्थ किमिति । न भगव इति श्वेत-केतुः । पञ्चमं पृच्छति – **वेत्थ यथेति** ॥ यथा येन क्रमेण प्रकारेण च पञ्चम्यामाहुतौ हुतायामापः पुरुषवचसो भवन्ति । अद्भिः सम्परिष्वक्तो जीवो लब्धदेहः पुरुषनामवान् भवति । किं तं क्रमं प्रकारं च वेत्थेति । नैव भगव इति होवाच । अवधारणेनातःपरं प्रश्नं व्यावर्तयति ॥ ३ ॥

अथ तर्हि एवमज्ञः सन् किं नु कस्मान्नु अनुशिष्टोऽस्मीत्यवोचथाः । यो हीमानि मया पृष्टान्यर्थजातानि न विद्यात् कथं स विद्वाननुशिष्टोऽस्मीति ब्रुवीतेति[१] प्रवाहणः । एवं सः श्वेतकेतुरायस्तः प्रवाहणेनाऽयासितः निरु-त्तरितः, अप्रतिष्ठित इति यावत् । स्वपितुरर्धं स्थानमेयाय । गत्वा तं पितरमुवाच । अननुशिष्य सम्यग्विद्योपदेशमकृत्वैव किल मा मां प्रति भगवानब्रवीदनु त्वाशिषम् त्वामन्वाशिषमिति ॥ ४ ॥

यतः पञ्चसङ्ख्याकान् प्रश्नान् प्रष्टव्यार्थान् राजन्यबन्धुः क्षत्रियाभासः

---

१. 'ब्रवीत' इति मातृकायाम् । प.सं. २०८,१५५ ।

मा माम् अप्राक्षीत् । राजश्रेष्ठस्यापि कोपादियमुक्तिः । तेषां प्रश्नानां मध्ये एकं च नैकमपि प्रश्नं विवक्तुम् अर्थविशेषेण निर्णेतुं नाशकमिति । कतमे ते प्रश्ना इत्युक्तः प्रश्नवाक्यान्युदाजहारेति ग्राह्यम् । एवमुक्तः स पिता पुत्रक्रोधमुपशमयन्नुवाच । हे तात ! त्वं यथैतान् प्रश्नान् मा मां प्रत्यवदस्तथाऽहमेषां प्रश्नानां मध्ये एकमपि यथा यथावन्न वेद न जानामि । कुतः? यद्यहमिमान् प्रश्नानवेदिष्यं तर्हि कथं ते प्रियाय नावक्ष्यमिति । यदहं किञ्च वेद सर्वमहं तुभ्यमवोचम् । यदि राजपृष्ट-विद्येच्छा तर्हि राजानं प्रत्येहि । तत्र गत्वा ब्रह्मचर्यं वत्स्याव इति पित्रोक्तो भवानेव गच्छत्वित्याहेति ग्राह्यम् । वाजसनेयके तथाश्रवणात् ।। ५ ।।

स एवं पुत्रोक्तो गोत्रतो गौतमो राज्ञोऽर्धं स्थानमेयाय । तस्मै प्राप्ताय गौतमायार्हां पूजां चकार राजा । सः गौतमः कृतातिथ्य उषित्वा परेद्युः प्रातःकाले राजनि सभागे सभां गते सति उदेयाय ह । सभागः सभाग्य इति वा । तमागतं गौतमं प्रत्युवाच राजा । हे भगवन् पूजार्ह गौतम ! मानुषस्य वित्तस्य वरं हिरण्यादिविषयं वरं वृणीथा इति । एवमुक्तः स गौतमो होवाच । हे राजन् ! मानुषं वित्तं तवैवास्तु । त्वं कुमारस्य मत्पुत्रस्यान्ते समीपे यामेव वाचं प्रश्नरूपामभाषथास्तमेव मे ब्रूहीति ।। ६ ।।

सः राजा स्वपृष्टस्य गोप्यत्वात् कृच्छ्रीबभूव । स कृच्छ्रीभूतोऽ-प्रत्याख्येयं ब्राह्मणं मन्वानस्तं गौतमं चिरं वसेत्याज्ञापयाञ्चकार ह । चिरवासाज्ञापने निमित्तं वदन् राजा तं होवाच । हे गौतम मां प्रति यथाऽवदस्तामेव मे ब्रूहीति । तथैवाहं करिष्ये त्वयि चिरोषित इत्यर्थः । ''नासंवत्सरवासिने'' इति श्रुतेरिति भावः । वक्ष्यमाणां विद्यां स्तौति– **यथेति** ।। इयं वक्ष्यमाणाविद्या । प्राक् तदेव विवृणोति– **त्वत्तु पुरेति** ।। त्वत्त एव पुरा ब्राह्मणान् यथा यथावन्न गच्छति न गतवती । क्षत्रस्यैवासाधारणविद्येयमिति भावः । कुत इत्यतस्तत्र क्षत्रगामिविद्या-

फलमेव हेतुमाह– **तस्मादिति** ॥ तस्माद् विद्यायाः क्षत्रमात्रनिष्ठत्वादेव खलु एतद्विद्यानुष्ठानेन सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनं प्रशास्तृत्वमभूदित्युक्त्वा तस्मै होवाच विद्यां राजा ॥ ७ ॥

**॥ इति तृतीयखण्डः ॥**

इतरप्रश्नोत्तराणां पञ्चमप्रश्नोत्तरसापेक्षत्वादादौ तस्योत्तरं वक्तुं वैराग्यार्थं जीवस्याऽगतिं निरूपयन् पञ्चाग्निविद्यामाह– **असावित्यादिना** ॥ हे गौतम! असौ मुख्यप्राणे स्थितो लोकः प्रकाशरूपो द्युलोकस्थो नारायण एवाग्निरदनादिकर्तृत्वात् । अयं द्युलोकस्थो नारायणः पुनर्नारायणाद्यात्मकत्वेन पञ्चरूपः । तस्य द्युलोकस्थनारायणाख्याग्नेरादानादादित्यनामाऽऽदित्यस्थो नारायण एव । समेधनात् समिदित्युक्तः समित्स्थानीयः, रश्मयो रतिशरूपतो रश्मिनामा तदन्तर्गतो वासुदेवः, धूत्काराद् धूम इत्युक्तो धूमस्थानीयः, अहननीयत्वादहर्नामा तत्स्थः सङ्कर्षणः, अरञ्चितत्वादर्चिरित्युक्तोऽर्चिःस्थानीयः, सुखरूपत्वाच्चन्द्रनामा तत्स्थः प्रद्युम्नः, अङ्गरतेरङ्गार इत्युक्तोऽङ्गारस्थानीयः, अनन्यराजत्वान्नक्षत्रनामकोऽनिरुद्धः, विष्फुलिङ्गो विविधं स्फुरणात् तथोक्तस्तत्स्थानीयः ॥ १ ॥

तस्मिन् द्युस्थे नारायणाख्ये एतस्मिन्नुक्तसमिदादिविशिष्टेऽग्नौ देवाः द्युलोकाधिपतयः श्रद्धां श्रद्धयेष्टवन्तम् उत्क्रान्तं यजमानं जुह्वति । अत्र श्रद्धाशब्दोऽजहल्लक्षणया श्रद्धयाऽद्भिश्च विशिष्टं जीवमाह ॥ तेन यजमानोत्क्रान्तिकाल एवापः श्रद्धावत्सहागता इति सिद्ध्यति । अन्यथा अपामप्राप्तत्वे । "इति तु पञ्चम्यामाहुतावापः" इत्यनुवादानुपपत्तेः । तथाच सूत्रम्– **"प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः"**(ब्र.सू. ३-१-५) इति । एवं द्युलोके देवैर्निक्षिप्तो यजमानः स्वपुण्यावसाने मर्त्यलोकोन्मुखस्तस्या आहुतेः सकाशात् सोमो राजा सम्भवति ।

सोमलोकान्तर्गतो भवति ॥ २ ॥

**॥ इति चतुर्थः खण्डः ॥**

पर्जन्यस्तन्नामा तत्स्थो वासुदेवोऽग्निः सोऽपि पूर्ववत् पञ्चरूपः । तस्य वाय्वभ्रविद्युदशनिह्रादुनिनामकास्तत्तदन्तर्गताः[(१)] नारायणादयः समिदादिस्थानीया इत्यर्थः । तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं तदन्तर्गतं यजमानं जुह्वति । तस्या आहुतेर्वर्षो वृष्ट्यन्तर्गतो भवति ॥ १-२ ॥

**॥ इति पञ्चमः खण्डः ॥**

पृथिवी तन्नामा तत्स्थः सङ्कर्षणोऽग्निः तस्याः अग्निस्थानीयायाः पृथिव्याः संवत्सराकाशरात्रिदिगवान्तरदिङ्नामानः तत्स्थाः नारायणादयः समिदादि-स्थानीया इत्यर्थः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः वर्षं वर्षान्तर्गतं जीवं जुह्वति । तस्या आहुतेरन्नमन्नान्तर्गतः सम्भवति ॥ २ ॥

**॥ इति षष्ठः खण्डः ॥**

पुरुषस्तन्नामा तत्स्थः प्रद्युम्नोऽग्निः तस्य वाक्प्राणजिह्वाचक्षुःश्रोत्रस्थाः तन्नामानो नारायणादयः समिदादिस्थानीया इत्यर्थः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नमन्नान्तर्गतं जीवं जुह्वति । तस्या आहुते रेतस्तदन्तर्गतः सम्भवति ॥ २ ॥

**॥ इति सप्तमः खण्डः ॥**

योषा तत्स्थस्तन्नामाऽनिरुद्धोऽग्निः तस्याः अग्निरूपाया योषित उपस्थादिनामानस्तदन्तर्गताश्च नारायणादयः समिदादयः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः रेतः तदन्तर्गतं जीवं जुह्वति । तस्या आहुतेः

---

१. 'तदन्तर्गताः' इति मुद्रितपुस्तके ।

गर्भो गर्भस्थः सम्भवति ॥ २ ॥

**॥ इति अष्टमः खण्डः ॥**

किं तत इत्यतः पञ्चमप्रश्नस्योत्तरं जातमित्याह– **इति त्विति ॥** इत्येवं पञ्चम्यामाहुतौ हुतायामापो जीवेन मरणकाले सहाऽगताः भूतानीति यावत्। पुरुषवचसो भवन्ति। तैर्लब्धदेहो जीवः पुरुषनामवान् भवतीत्यर्थः। एवं वैराग्यार्थमागमनं निरूप्य गर्भवासादिदुःखं च निरूपयति– **स इति ॥** स उल्बेन जरायुणाऽऽवृतो गर्भस्थो जीवो दश वा मासान् यावत्स्थातव्यं तावद्वाऽन्तर्मातुः कुक्षौ शयित्वाऽथ जायते ॥ १ ॥

स जातो जीवो यावदायुषं जीवति। अथ यदा म्रियते तदा तं प्रेतं दिष्टं सादृष्टमितो लोकादग्नय एव हरन्ति। प्रकृतहोतारो देवाः। अग्निं विशिनष्टि– **यत इति ॥** यत एव द्युपर्जन्यवृष्ट्याख्याग्नेः सकाशाद् भूलोकमितः प्राप्तस्तत्र च यतः पुरुषयोषाग्नेः सम्भूतस्तस्मा एवाग्नये हरन्तीत्यर्थः ॥ २ ॥

**॥ इति नवमः खण्डः ॥**

## उपनिषत् (खण्डः- १० )

*ज्ञानिनां देवयानेन ब्रह्मप्राप्तिः*

**तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ् एति मासाꣳस्तान् ॥ १ ॥**

**मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्था इति ॥ २ ॥**

*काम्यकर्मिणां पितृयाणेन स्वर्गप्राप्तिः*

अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद् रात्रिꣳ रात्रेरपरपक्षमपरपक्षाद् यान् षड् दक्षिणैति मासाꣳस्तान्नैते[1] संवत्सरमभिप्राप्नुवन्ति ॥ ३ ॥

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद् देवानामन्नं तं देवा भक्षयन्ति ॥ ४ ॥

तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेत-माकाशमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥

अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्ते ततो वै खलु दुर्निष्प्रपतनं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥ ६ ॥

तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ॥ ७ ॥

अथैतयोः पथोर्नैकतरेण[2] च न तानीमानि क्षुद्रमिश्राण्यसकृ-दावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयꣳ इमे

---

१. 'मासांस्तानेति' इत्येव ह.पाठः । २. 'पथोर्न कतरेण' इति क्वचित् पाठः ।

स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः ॥ ८ ॥

स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन् ब्रह्महा च ।
एते पतन्ति चत्वारः पञ्चमश्चाऽचरꣳस्तु तैरिति ॥ ९ ॥

अथ ह य एतानेवं पञ्चाग्नीन् वेद न स ह तैरप्याचरन् पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥ १० ॥

## भाष्यम्

'अभ्रधूमादिभावस्तु जीवस्याभ्रादिसंस्थितिः ।
अभ्रादिमानिरूपं तु ज्ञानप्राप्यं[१] यतो भवेत् ॥' इति च ॥

परम् अस्य जन्यमिति पर्जन्यः ।

'पञ्च पञ्च स्वरूपेण सूर्यादौ संस्थितो हरिः ।
स्वर्गादौ चापि तन्नामा तद्योगान्नामिनः परे ॥' इति च ॥३-१० ॥

## भाष्यार्थः

''धूमो भूत्वाऽभ्रं भवति''इत्यादिसामानाधिकरण्यश्रुतेः कर्मिणो धूमादिदेवतैक्यं तत्पदप्राप्तिर्वा कथ्यत इत्याशङ्कां प्रमाणेनैव वारयति– **अभ्रेति** ॥ अभ्रादिसंस्थितिः । अभ्रादिषु प्रविश्य तद्गतौ गतिः तत्स्थितौ स्थितिरित्यादिरूपतत्स्वाभाव्यापत्तिरेव नत्वैक्यं तत्पदप्राप्तिर्वेत्यर्थः । तथा चोक्तम् – **तत्स्वाभाव्यापत्तिरुपपत्तेरिति** ॥(ब्र.सू. ३-१-२३) कुत एवम् ? मुख्ये बाधकाभावात् । अन्यस्यान्यभावायोगेनैक्यायोगेऽपि

१. 'ज्ञानिप्राप्यं' इति क.

तत्पदप्राप्त्युपपत्तेरित्यत आह– **अभ्रेति** ॥ रूपशब्दो धर्मवचनः । तथाचाभ्रादिमानित्वं तत्पदप्राप्तिरिति यावत् । तद्योग्यैरेव ज्ञानप्राप्यं कर्मिणस्तु न ज्ञानमिति भावः ।

''पर्जन्यो जनको यस्मात्''इत्युक्तम् । तत्र जनकत्वं कथं पर्जन्यशब्दार्थ इत्यतस्तं स्वयं निर्वक्ति– **परमिति** ॥ परमुत्तमम् । चतुर्मुखाख्यं वस्तु अस्य सकाशाज्जन्यमिति पर्जन्यः । तथाच जनकः परस्येति लब्धार्थोक्तिः । अन्येषां शब्दानां प्रमाण एव स्पष्टार्थत्वाद् वाजसनेयकपञ्चाग्निविद्याभाष्ये [१]कृतव्युत्पादनत्वाच्च न व्युत्पादनं कृतम् । ''तस्याऽदित्य एव समित्'' इत्यादौ श्रुता आदित्यादिपञ्चविंशतिशब्दा असौलोकादिपञ्चशब्दाश्च योगेनैव भगवत्परतया व्याख्याताः । तत्र रूढार्थपरित्यागेन योगार्थाङ्गीकारः कुत इत्यतो रूढार्थोऽपि भगवानेवेत्याह – **पञ्चेति** ॥ स्वर्गादौ संस्थितः । चशब्दोऽवधारणे । हरिरेव तन्नामा आदित्यादिनामा ॥ खं १० ॥

### ततश्चायं खण्डार्थः

इदानीं प्रथमतृतीयप्रश्नयोरुत्तरमाह– **तदिति** ॥ तत्तस्मात् काम्यकर्मणो गमनागमनहेतुत्वात् तत्र विरक्ता ये इत्थं पञ्चाग्निविद्योक्तरीत्या भगवन्तं विदुः । ये चेमेऽरण्ये मनोहरप्रदेशे श्रद्धातप इत्युपासते । श्रद्धातपःप्रभृतिनिवृत्तकर्मानुतिष्ठन्ति । ये ज्ञानप्रधानाः ये च कर्मप्रधाना इति यावत् । तेऽर्चिषमभिसम्भवन्ति प्राप्नुवन्तीत्यादि देवयानः पन्था इत्यन्तं व्याख्यातं चतुर्थे ॥ १ ॥ २ ॥

एवं देवयानं ससाधनं निरूप्य पितृयाणं ससाधनं निरूपयति– **अथेति** ॥

१. 'कृतव्युत्पादनाच्च' इति मुद्रितपुस्तके ।

काम्यकर्मिणो ग्रामे इष्टापूर्ते । यजनखाते दत्तं दानं, इतिशब्दः प्रभृत्यर्थः । पितृश्राद्धादिकमुपासते आतिष्ठन्ति ते धूमं धूमदेवतालोकमभिसम्भवन्ति प्राप्नुवन्ति । धूमाद् रात्रिं रात्र्यभिमानिदेवताम् । रात्रेरपरपक्षं कृष्णपक्षाभिमानिदेवताम् अपरपक्षाद् यान् षण्मासान् दक्षिणा, दक्षिणतः एत्याऽदित्यस्तान्मासान् दक्षिणायनदेवतालोकं प्राप्नुवन्ति । ततः संवत्सरागमनं निषेधति– **नैत इति** ।। ३ ।।

तर्हि ततः क्व गच्छन्तीत्यत आह– **मासेभ्य इति** ।। मासेभ्यो दक्षिणायनसञ्ज्ञकेभ्यः पितृलोकं, पितृलोकादाकाशं विनायकलोकम्, आकाशाच्चन्द्रमसं प्राप्नुवन्ति । [१]काम्यकर्मिगम्यं चन्द्रमसमेव विशिनष्टि– **एष इति** ।। एषः चन्द्रः सोमो राजा सोमलताभिमानीत्यर्थः । तदेव देवानामन्नम् अतस्तं चन्द्रं देवा भक्षयन्ति । लताभिमानित्वेनेयमुक्तिः । अन्नविवक्षया तदिति नपुंसकप्रयोगः ।। ४ ।।

''वेत्थ यथाऽसौ लोको न सम्पूर्यते'' इति प्रश्नस्योत्तरमाह– **तस्मिन्निति** ।। तस्मिंश्चन्द्रलोके कर्मिणो यावत्सम्पातमुषित्वाऽथ कर्मक्षये एतमेवाध्वानं पुनरावर्तन्ते । इदानीं ''वेत्थ यथा पुनरावर्तन्ते'' इत्यस्योत्तरं वदन्नेतमेवेत्युक्तं विवृणोति– **यथेति** ।। यथा येन मार्गेण स्वयमितं चन्द्रलोकं प्रति प्राप्तं तेनैवाध्वना पुनरावर्तन्त इत्यर्थः । गतेनैव मार्गेणाऽगमनेऽतिक्लेशेन[२] न स्वर्ग इति वैराग्यं स्यादित्यतो मार्गान्तरं निरूपयति– **आकाशमित्यादिना** ।। चन्द्रलोकादागच्छन् आकाशमाप्नोति । आकाशाद् वायुमाप्नोति वायुस्थो भूत्वा धूमस्थो भवतीत्यर्थः[३] ।। ५ ।।

---

१. 'काम्यकर्मगम्यं' इति मातृकागतः पाठः । प.सं. २११. २.'अनतिक्लेशेन' इति मुद्रितपुस्तके । ३. 'भवतीत्याद्यर्थः' इति मुद्रितपुस्तके ।

प्रवर्षति वर्षान्तर्गतो भवति । ते कर्मिणः इह लोके केचिद् व्रीहियवाः, केचिदोषधिवनस्पतयः, केचित् तिलमाषाः । इतिशब्दोऽन्योपलक्षणार्थः । जायन्तेऽन्याधिष्ठिते व्रीह्यादिशरीरे प्रविशन्ति । नतु तदभिमानिनः । तथाचोक्तम्– ''अन्याधिष्ठिते पूर्ववदभिलापात्''(ब्र.सू. ३-१-२५) इति । अतो व्रीह्यादिभावानन्तरं खलु दुर्निष्प्रपतनं नितरां दुष्टपतनं भवति वै । तदेव विशदमाह– **य इति** ।। यो यः पुरुषो ह्यन्नमत्ति यच्च रेतः सिञ्चति तद्भूय एव भवति । तमेवानुप्रविशति ।। ६ ।।

तत्ततस्तत्र कर्मिषु ये रमणीयचरणाः साधुयज्ञादिमन्तस्ते इह भूमौ रमणीयां योनिमापद्येरन् । आपद्येरन्निति यत् तच्चाभ्याशः कालसामीप्ये-नेत्यर्थः । ''स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात् पूर्वमेव तु । मातुःशरीर-माप्नोति'' इति वचनात् । ''रमणीयां योनिम्'' इत्युक्तं विशदमाह– **ब्राह्मणयोनिमित्यादिना** ।। अथेत्यादिकं समानम् । कपूयचरणाः असाधुयज्ञादिमन्तः ।। ७ ।।

नन्वस्तु ये विद्यामार्गाः कर्ममार्गा वा तेषामुक्तरीत्या ब्रह्मचन्द्रप्राप्तिः । येषां तदुभयमपि नास्ति तेषां का गतिरित्यत आह– **अथेति** ।। एतयो-रुक्तयोः पथोर्विद्याकर्ममार्गयोर्मध्ये यान्येकतरेणापि पथा न गच्छन्ति तानीमानि क्षुद्रमिश्राणि अल्पानि सुखदुःखमिश्राणि असकृदावर्तीनि सदागत्यादिमन्ति जायस्व म्रियस्व पुनःपुनर्जायन्ते म्रियन्ते च । इत्येतत्स्वर्गापवर्गयोरन्यत् तृतीयं स्थानमित्यर्थः । ततश्च ''यथाऽसौ लोको न सम्पूर्यते'' इति प्रश्नोत्तरं जातमित्याह– **तेनेति** ।। केषाञ्चित् तत्र गमनाभावात्, गतानामपि पुनरावृत्तेरसौ लोको न सम्पूर्यत इत्यर्थः । यदर्थं गत्यादिनिरूपणं तदाह– **तस्मादिति** ।। यस्मादेवं ज्ञानमार्गादन्यत्र गतागतादिक्लेशस्तस्मात् तत्र जुगुप्सेत विरक्तो भवेदित्यर्थः ।

पञ्चाग्निविद्यावेत्तुः पातकिसंसर्गदोषाभावं[१] फलं वक्तुं तत्संसर्गस्य दोषत्वे श्लोकं प्रमाणयति– **तदिति** ॥ तत्त्राभिप्रेते पातकिसंसर्गस्य तत्सदृशदोषित्वे एषः वक्ष्यमाणः श्लोको भवति । तमेव पठति– **स्तेन इति** ॥ इत्येते चत्वारः पतन्ति । पञ्चमश्च तैः सहाऽचरन्[२] पतति ॥८- ९ ॥

किं तत इत्यत आह– **अथेति** ॥ य एतानेवं पञ्चाग्नीन् वेद स तैश्चतुर्भिः पातकिभिः सहाऽचरन्नपि पाप्मना न लिप्यते । न केवलमेतावत् । य एवं वेद स शुद्धः पूतः अन्तर्बहिश्च शुद्धः, स्वयं शुद्धः पावयत्यन्यानिति पूत इति वा । निवृत्तपुण्यसाध्यो लोकः प्राप्यो यस्यासौ पुण्यलोको भवति । तथाचोक्तम् –

''द्विपर्जन्यधरा पुंस्त्रीसंस्थितं पञ्चरूपिणम् ।
नारायणं वासुदेवं तथा सङ्कर्षणं प्रभुम् ॥
प्रद्युम्नं चानिरुद्धं च क्रमाद् ध्यायंस्तु सर्वदा ।
पञ्चाग्निविन्नाम भवेत् स याति परमं पदम् ।
नास्य संसर्गदोषोऽस्ति कदाचन भविष्यति ॥'' इति ॥ १० ॥

**॥ इति दशमः खण्डः ॥ १० ॥**

## उपनिषत् (खण्डः-११)

*वैश्वानरविद्याज्ञातारो दुर्लभाः*

**प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला**

---

१. 'पापिसंसर्गदोषाभावं' इति मातृकायाम् । प.सं. २१३, १५८ । २. 'सह चरन्' इति मुद्रितपुस्तके ।

य इमे महाश्रोत्रियाः समेत्य मीमांसाञ्चक्रुः को न आत्मा किं ब्रह्मेति ॥ १ ॥

ते ह सम्पादयाञ्चक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ २ ॥

स ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥

तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ ४ ॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्नि-र्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद् भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥

ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेदात्मानमेवेमं वैश्वानरꣳ सम्प्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥

तान् होवाच प्रातर्वः प्रतिवक्ताऽस्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच ॥ ७ ॥ ११ ॥

भाष्यम्

'प्रत्यब्दयज्ञकृत् सम्यङ् महाशालः प्रकीर्तितः ।

**वेदवेदार्थवित् सम्यङ् महाश्रोत्रिय उच्यते ॥**

**भाष्यार्थः**

एवं परब्रह्मविषया पञ्चाग्निविद्योक्ता । इदानीं तद्विषयामेव वैश्वानरविद्यामाख्यायिकयाऽऽह– **प्राचीनशाल इत्यादिखण्डचतुर्दशकेन** ॥ महाशालो विस्तीर्णगृहवान् । महाश्रोत्रियः छन्दःपाठमात्रवानिति प्रतीतिनिरासाय प्रमाणेनैव तद् व्याचष्टे– **प्रत्यब्देति** ॥

**ततश्चायं खण्डार्थः**

प्राचीनशालो नामतः, उपमन्योरपत्यमौपमन्यव इत्येकः । सत्ययज्ञो नामतः, पुलुषस्यापत्यं पौलुषिरित्यपरः । इन्द्रद्युम्नो नामतः, भल्लवेरपत्यं भाल्लवेय इत्यपरः[१] । जनो नामतः, शर्कराक्षस्यापत्यं शार्कराक्ष्य इत्येकः । बुडिलो नामतः, अश्वतराश्वस्यापत्यमाश्वतराश्विरित्यपरः । ते हैते पञ्च महाशालाः सम्यक् प्रत्यब्दयज्ञकृतो महाश्रोत्रियाः सम्यग्वेदवेदार्थविदः समेत्य मिलित्वा मीमांसां विचारं चक्रुः । नोऽस्माकमुपास्यः आत्मा वैश्वानराख्यः किंलक्षणकः? ब्रह्म च तदाख्यं किमिति ॥ १ ॥

एवमात्मसु परस्परं विचारेणापि विशेषनिर्णयमलभमानास्ते विशेषनिर्णयार्थमुद्दालकं सम्पादयाञ्चक्रुः । सम्पादनप्रकारमेवाऽऽह– **उद्दालक इति** ॥ हे भगवन्तः उद्दालको नामतः, अरुणस्यापत्यमारुणिः सम्प्रतीदानीमस्मदभिमतमात्मानं वैश्वानरम् अध्येत्यधिकं जानाति । तं हाभ्यागच्छामेत्युक्त्वा तमुद्दालकं प्रत्याजग्मुः ॥ २ ॥

तदा सः उद्दालकस्तदागमनप्रयोजनं बुध्वा सम्पादयाञ्चकारैतेषामन्यमुपदेष्टारम् । स्वयमेव कुतो नोक्तमित्यत आह– **प्रक्ष्यन्तीति** ॥

---

१. 'इत्यन्यः' इति मुद्रितपुस्तके ।

महाशालत्वादिगुणाः मां प्रक्ष्यन्ति । तेभ्यो वक्तुं सर्वमेव तत्पृष्टं न प्रतिपत्स्ये हन्ताहमन्यमेषामनुशासकमनुशासानीति विचिन्त्य ।। ३ ।।

तान् होवाच ।। हे भगवन्तोऽश्वपतिर्नामतः कैकेयः केकयदेशाधिपतिः **सम्प्रतीममात्मानं वैश्वानरमध्येति । तं हाभ्यागच्छामेति । एवमुक्तास्ते तमश्वपतिं प्रत्याजग्मुर्ह** ।। ४ ।।

**तेभ्यो ह प्राप्तेभ्यो ब्राह्मणेभ्यः पृथक् पृथग्** अर्हाणि अर्हणानि **कारयाञ्चकार । स राजा परेद्युः प्रातः सञ्जिहानः** शयनीयादुत्तिष्ठन्नुवाच । युष्मदागमने किं कारणम् ? न तावत् स्तेनादिभयम् । तेषां मद्राष्ट्रेऽ-भावादित्याह– **नेति** ।। कदर्योऽदाता सति विभवे यथाकालमाचारहीनो वा । स्वैर्यभावे स्वैरिणी कुतः ? धनार्थिनश्चेद् दास्यामीत्याह– **यक्ष्यमाण इति** ।। हे भगवन्तोऽहं यक्ष्यमाणोऽस्मि वै । तत्र यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद् भगवद्भ्यो दास्यामि । वसन्तु भगवन्तः । इत्युवाचेति सम्बन्धः ।। ५ ।।

एवमुक्तास्ते होचुः । येनैवेहार्थेन ज्ञानादिरूपेण साधितेनेति शेषः । पुरुषश्चरेद् गच्छेन्मोक्षादिकं तमेव वदेद् भवदादिः । यद्वा, येनैवेहार्थेन प्रयोजनेन साधितेनाऽगतः पुरुषश्चरेत् परावृत्त्य स्वग्रामादिकं गच्छेत् तदेव वदेदित्यर्थः । तर्हि किं भवदागमने प्रयोजनमित्यत आह– **आत्मानमिति** ।। ६ ।।

तान् होवाच राजा प्रातर्वः प्रतिवक्ताऽस्मीति । ते षड् ब्राह्मणाः समित्पाणयः परेद्युः पूर्वाह्णे राजानं प्रतिचक्रमिरे । तान् हाऽनुपनीय शिष्यतयोपगमनमकारयित्वैवैतद्वक्ष्यमाणमुवाच । ब्राह्मणानां क्षत्रियादुत्त-मत्वात् ।। ७ ।।

**।। इति एकादशः खण्डः ।।**

## उपनिषत् (खण्डः-१२)

*वैश्वानरस्य शिरो द्युनामकमिति निरूपणम्*

**औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥**

**अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वनरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद् यन्मां नाऽगमिष्य इति ॥२॥१२॥**

### भाष्यम्

**क्रीडात्मकत्वाद् द्व्याख्यं च[१] सुतेजाश्चातितेजसा ।**
**स्वर्गाधारं शिरो विष्णोः ...... ॥**

### भाष्यार्थः

वैश्वानरशब्दश्रवणादग्निरत्रोच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तां विद्यां विष्णुपरतया व्याचष्टे– **क्रीडात्मकत्वादित्यादिना** ॥ वैश्वानरस्य द्युत्वादिना कल्पनोच्यत इति प्रतीतिनिरासाय तावद् ''औपमन्यव'' इति खण्डतात्पर्यमाह– **क्रीडेति** ॥ ''दिवु क्रीडा'' इत्यादि धातोः । ''स्वर्गाधारम्'' इति व्याख्यत्वे निमित्तान्तरम् ।

### ततश्चायं खण्डार्थः

हे औपमन्यव त्वमात्मानं वैश्वानरं कं किन्नामकमुपास्स इति । हे

---

१. द्यौश्चैव ह.पाठः ।

भगवो भगवन् राजन् दिवमेव क्रीडात्मकत्वाद् द्व्याख्यं स्वर्गाधारमेवाऽ-त्मानं वैश्वानरम् उपास्स इति होवाच । वक्ष्यमाणविशेषव्यावृत्त्यर्थ एव-शब्दः । तत्र स्वयं विशेषमाह– **एष इति** ॥ यमात्मानं वैश्वानरं त्वमुपास्से एषः द्युस्थो वैश्वानरो विश्वनरसम्बन्धित्वाद् वैश्वानराख्यः । आत्मा भगवान् सुतेजाः अतितेजसा सुतेजोनामकः यत्तवास्ति तत्तदुपासनाफलमेवेत्याह– **तस्मादिति** ॥ द्युस्थवैश्वानरोपासकत्वात् तव कुले स्वर्गप्राप्त्यर्थं सोमरूपं द्रव्यं सुतं प्रसुतम् आसुतम् । सवनत्रयकथनमेतत् । दृश्यतेऽतीव कर्मिण-स्त्वत्कुलीना इत्यर्थः । सुतं प्रसुतमासुतं पुत्रपौत्रतत्पुत्रा इति वा ॥ १ ॥

अन्नमत्सि दीप्ताग्निः सन् प्रियं पश्यसि । एवमन्यस्यापि वैश्वानरज्ञानिनः फलमाह– **अत्तीति** ॥ योऽधिकारी एतमात्मानं वैश्वानरं विष्णुमुपास्ते सोऽप्यन्नमत्ति प्रियं पश्यति । अस्योपासकस्य कुले ब्रह्मवर्चसं भवति । विशेषान्तरमाह– **मूर्धेति** ॥ एषः द्युस्थो द्युनामकः सुतेजोनामकश्चाऽऽत्मनो वैश्वानरस्य मूर्धैवेति होवाच । किमेतज्ज्ञानेन ? यावन्मया ज्ञातं तावदेवालमित्यत आह– **मूर्धेति** ॥ यद्यदि मां प्रति त्वं नाऽगमिष्यस्तर्हि ते मूर्धोपास्य वैश्वानरमूर्धापरिज्ञानापराधेन व्यपतिष्यत् । इतिशब्दः औपमन्यवोपदेशसमाप्त्यर्थः ॥ २ ॥

**॥ इति द्वादशः खण्डः ॥**

## उपनिषत् (खण्डः - १३)

*वैश्वानरस्य चक्षुरादित्यनामकमिति निरूपणम्*

**अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव बहु विश्वरूपं कुले**

दृश्यते ॥ १ ॥

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेव-मात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽ-भविष्यो यन्मां नाऽगमिष्य इति ॥ २ ॥ १३ ॥

भाष्यम्

......... .... सर्वरूपातिदर्शनात् ॥

चक्षुस्तु विश्वरूपाख्यमादानादायुषामपि ।
आदित्याख्यं च सूर्यस्याप्याश्रयं सर्वदा स्मृतम् ॥

भाष्यार्थः

''सत्ययज्ञम्''इति खण्डतात्पर्यमाह– **सर्वेति** ॥ विष्णोश्चक्षुः सर्वरूपातिदर्शनाद् विश्वरूपाख्यमादित्याख्यं चेत्यन्वयः । आदित्याख्यत्वे निमित्तान्तरमाह– **सूर्यस्यापीति** ॥

ततश्चायं खण्डार्थः

अथौपमन्यवोपदेशानन्तरं सत्ययज्ञं पौलुषिं प्रत्युवाचेत्यादिकं समानम् । प्राचीनयोग्य अनादियोग्यतावान् । आदित्यमेवाऽदानादादित्यनामक-मादित्यस्थमेव । सर्वरूपातिदर्शनाद् विश्वरूपाख्यः । बहुविश्वरूपमित्युक्तं विशदमाह ॥ १ ॥

**प्रवृत्त इति** ॥ चक्षुस्तु चक्षुरेव ॥ २ ॥

॥ इति त्रयोदशः खण्डः ॥

भगवो भगवन् राजन् दिवमेव क्रीडात्मकत्वाद् द्व्याख्यं स्वर्गाधारमेवाऽ-त्मानं वैश्वानरम् उपास्स इति होवाच । वक्ष्यमाणविशेषव्यावृत्त्यर्थ एव-शब्दः । तत्र स्वयं विशेषमाह– **एष इति** ॥ यमात्मानं वैश्वानरं त्वमुपास्से एषः द्युस्थो वैश्वानरो विश्वनरसम्बन्धित्वाद् वैश्वानराख्यः । आत्मा भगवान् सुतेजाः अतितेजसा सुतेजोनामकः यत्तवास्ति तत्तदुपासनाफलमेवेत्याह– **तस्मादिति** ॥ द्युस्थवैश्वानरोपासकत्वात् तव कुले स्वर्गप्राप्त्यर्थं सोमरूपं द्रव्यं सुतं प्रसुतम् आसुतम् । सवनत्रयकथनमेतत् । दृश्यतेऽतीव कर्मिण-स्त्वत्कुलीना इत्यर्थः । सुतं प्रसुतमासुतं पुत्रपौत्रतत्पुत्रा इति वा ॥ १ ॥

अन्नमत्सि दीप्ताग्निः सन् प्रियं पश्यसि । एवमन्यस्यापि वैश्वानरज्ञानिनः फलमाह– **अत्तीति** ॥ योऽधिकारी एतमात्मानं वैश्वानरं विष्णुमुपास्ते सोऽप्यन्नमत्ति प्रियं पश्यति । अस्योपासकस्य कुले ब्रह्मवर्चसं भवति । विशेषान्तरमाह– **मूर्धेति** ॥ एषः द्युस्थो द्युनामकः सुतेजोनामकश्चाऽत्मनो वैश्वानरस्य मूर्धैवेति होवाच । किमेतज्ज्ञानेन ? यावन्मया ज्ञातं तावदेवालमित्यत आह– **मूर्धेति** ॥ यद्यदि मां प्रति त्वं नाऽगमिष्यस्तर्हि ते मूर्धोपास्य वैश्वानरमूर्धापरिज्ञानापराधेन व्यपतिष्यत् । इतिशब्दः औपमन्यवोपदेशसमाप्त्यर्थः ॥ २ ॥

**॥ इति द्वादशः खण्डः ॥**

## उपनिषत् (खण्डः - १३)

*वैश्वानरस्य चक्षुरादित्यनामकमिति निरूपणम्*

**अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव बहु विश्वरूपं कुले**

दृश्यते ॥ १ ॥

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेव-मात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽ-भविष्यो यन्मां नाऽगमिष्य इति ॥ २ ॥ १३ ॥

भाष्यम्

......... .... सर्वरूपातिदर्शनात् ॥

चक्षुस्तु विश्वरूपाख्यमादानादायुषामपि ।
आदित्याख्यं च सूर्यस्याप्याश्रयं सर्वदा स्मृतम् ॥

भाष्यार्थः

''सत्ययज्ञम्''इति खण्डतात्पर्यमाह– सर्वेति ॥ विष्णोश्चक्षुः सर्वरूपातिदर्शनाद् विश्वरूपाख्यमादित्याख्यं चेत्यन्वयः । आदित्याख्यत्वे निमित्तान्तरमाह– सूर्यस्यापीति ॥

ततश्चायं खण्डार्थः

अथौपमन्यवोपदेशानन्तरं सत्ययज्ञं पौलुषिं प्रत्युवाचेत्यादिकं समानम्। प्राचीनयोग्य अनादियोग्यतावान् । आदित्यमेवाऽदानादादित्यनामक-मादित्यस्थमेव। सर्वरूपातिदर्शनाद् विश्वरूपाख्यः। बहुविश्वरूपमित्युक्तं विशदमाह॥ १ ॥

प्रवृत्त इति ॥ चक्षुस्तु चक्षुरेव ॥ २ ॥

॥ इति त्रयोदशः खण्डः ॥

## उपनिषत् (खण्डः - १४)

*वैश्वानरस्य प्राणो वायुनामक इति निरूपणम्*

**अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वां पृथग् वलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥**

**अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद् यन्मां नाऽगमिष्य इति ॥ २ ॥ १४ ॥**

### भाष्यम्

**वाय्वादिप्राणशक्यं न यत्तत्कर्ता हरेर्यतः ।**
**प्राणस्तेन पृथग्वर्त्मा वायुर्ज्ञानायुरूपतः ॥**
**वायोरप्याश्रयो नित्यं ......... .... ।**

### भाष्यार्थः

''इन्द्रद्युम्नं भाल्लवेयम्''इति खण्डतात्पर्यमाह– **वाय्वादीति** ॥ हरेः प्राणो यतो वाय्वादिप्राणशक्यं यन्न भवति तत्कर्ता तेन पृथग्वर्त्मा वायुश्चेति सम्बन्धः । वायुनामकत्वे निमित्तान्तरम्– **वायोरपीति** ॥

### ततश्चायं खण्डार्थः

वैयाघ्रपद्य व्याघ्रपाद्गोत्रापत्य वायुं वायुस्थं ज्ञानायुरूपतो

वायुनामानमेव । पृथग्वर्त्मा पृथग् विलक्षणो वर्त्म मार्गो यस्यासौ तथोक्तः । वाय्वादिप्राणशक्यं यन्न तत्कर्तृत्वात् । पृथग्बलयो विलक्षण-पूजासाधनानि पृथग् रथश्रेणयो विलक्षणरथपङ्क्तयः ।। १ ।।

प्राणः प्राणवायुः ।। २ ।।

॥ इति चतुर्दशः खण्डः ॥

उपनिषत् (खण्डः -१५)

*वैश्वानरस्य शरीरमध्यभाग आकाशनामक इति निरूपणम्*

**अथ होवाच जनꣳ शार्कराक्ष्यꣳ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं बहुलोऽसि प्रजया च धनेन च ।। १ ।।**

**अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्दोहस्त्वेष आत्मन इति होवाच सन्दोहस्ते व्यशीर्यद् यन्मां नाऽगमिष्य इति ।। २ ।। १५ ।।**

भाष्यम्

**..... ..... ... बहुत्वाद् बहुलः स्मृतः ।**
**आकाशनामा चाऽदीप्तेर्मध्यदेहो रमापतेः ।।**

भाष्यार्थः

''जनं शार्कराक्ष्यम्''इति खण्डतात्पर्यमाह– **बहुत्वादिति** ।।

**ततश्चायं खण्डार्थः**

आकाशमाकाशस्तमादीप्तेराकाशनामकमेव । बहुत्वाद् बहुलः । प्रजया च धनेन च । बहुलः प्रभूतोऽसि ॥ १ ॥

सन्दोहो मध्यदेहः ॥ २ ॥

**॥ इति पञ्चदशः खण्डः ॥**

## उपनिषत् (खण्डः - १६)

*वैश्वानरस्य कटिप्रदेशोऽम्नामक इति निरूपणम्*

**अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं रयिमान् पुष्टिमानसि ॥ १ ॥**

**अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते वस्तिस्त्वेष आत्मन इति होवाच वस्तिस्ते व्यभेत्स्यद् यन्मां नाऽगमिष्य इति ॥ २ ॥**

**॥ १६ ॥**

**भाष्यम्**

व्याप्तत्वादाप इत्युक्तो रयी रतिकरत्वतः ।
वस्तिराकाशवाय्वोश्च तावाधारौ प्रकीर्तितौ ॥

**भाष्यार्थः**

''बुडिलमाश्वतराश्विम्''इति खण्डतात्पर्यमाह– व्याप्तत्वादिति ॥ रमापतेर्वस्तिः कटिप्रदेशः । मध्यदेहवस्त्योराकाशाम्नामकत्वे निमित्ता-

न्तरमाह– **आकाशेति** ॥ आकाशवारिणोः ।

**ततश्चायं खण्डार्थः**

आप एव व्याप्तत्वादम्नामकमप्स्थमेव । रयिः रतिकरत्वतः । रयिमान् धनवान् ॥ १ ॥

वस्तिः कटिप्रदेशः ॥ २ ॥

**॥ इति षोडशः खण्डः ॥**

## उपनिषत् (खण्डः -१७)

*वैश्वानरपादयोः पृथिवीनामकत्वकथनम्*

**अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥**

**अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नाऽगमिष्य इति ॥ २ ॥ १७ ॥**

भाष्यम्

प्रथनात् पृथिवीनामा[१] प्रतिष्ठा च प्रतिष्ठितेः ।
पादौ भगवतो विष्णोः पृथिव्याश्रय एव च ॥

१. 'पृथिवी नाम्ना' ह.

**उत्तमानां हि पादेन सर्वं रूपं हि कथ्यते ।**
**विष्णोः पदमिति ह्यस्मात् प्रथितिर्वैदिकी स्मृता ॥**

**भाष्यार्थः**

''उद्दालकमारुणिम्''इति खण्डतात्पर्यमाह– **प्रथनादिति** ॥ ''पृथिवीनामा''इत्यादौ द्विवचनं ग्राह्यम् । एकवचनप्रयोगस्तु श्रुत्यनुसारात् । पृथिवीनामकत्वे निमित्तान्तरम्– **पृथिवीति** ॥ एवेत्यभेदव्यावृत्तिः ।

ननु विष्णोः पादस्य ''तद्विष्णोः परमं पदं दिवीव चक्षुराततम्'' इत्याततत्वश्रवणात् कथं पृथिव्याश्रयत्वेन पृथिवीमात्रस्थत्वोक्तिरित्यत आह– **उत्तमानामिति** ॥ हि यस्मात् पादशब्देनोत्तमानां सर्वं रूपं कथ्यते । न पादमात्रमस्माद् विष्णोः पदमिति वैदिकी प्रथितिः स्मृता । तथाच श्रुतेः स्वरूपव्याप्तत्वपरत्वात् पादस्य पृथिवीस्थत्वेन तद्विरोध इति भावः । [१]यद्वा, ननु ''स्थूलभुग् वैश्वानरः प्रथमः पादः''इति श्रुत्यन्तरे पादशब्दस्य समग्रवैश्वानररूपे प्रयुक्तत्वादत्र पृथिव्येव पादौ इति एकावयवे प्रयोगः कथमित्यत आह – **उत्तमानां हीति** ॥ तत्कुत इत्यतस्तत्पर्यायशब्दप्रयोगादित्याह – **विष्णोः पदमिति** ॥ तथाच श्रुत्यन्तरस्थपादशब्दस्य सर्वरूपवाचित्वादत्रत्यस्य प्रसिद्धचरणवाचित्वान्न तद्विरोध इति भावः ।

**ततश्चायं खण्डार्थः**

पृथिवीमेव प्रथनात् पृथिवीनामकं पृथिव्याधारमेव । प्रतिष्ठा प्रतिस्थितेः ॥ १ ॥

---

१. 'यद्वा' इत्यारभ्य 'इति भावः' इत्यन्तभागो मातृकासु न दृश्यते । प.सं. २१४, १५८ ।

व्यम्लास्येतां भज्येयाताम् ॥ २ ॥

॥ इति सप्तदशः खण्डः ॥

## उपनिषत् (खण्डः - १८)

*हृत्कमले वैश्वानरः*

तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

तस्य हवा एतस्याऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्दोहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥ १८ ॥

## उपनिषत् (खण्डः -१९)

*'प्राणाय स्वाहा' इत्याहुतेः फलनिरूपणम्*

तद्यद् भक्तं प्रथममागच्छेत् तद्धोमीयँ स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति ॥१॥

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चाऽदित्यश्चाधितिष्ठतस्तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ १९ ॥

### भाष्यम्

**प्राणश्चक्षुस्तथाऽऽदित्य इत्येका देवता स्मृता ।**
**पूर्वद्वारपतिर्विष्णोः ........... ...... ॥**

### भाष्यार्थः

''तद्यद्भक्तम्''इति खण्डे प्राणाहुतितृप्यतयोक्तानां प्राणचक्षु-रादित्यानां भेदे ''अथ योऽस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदित्यः'' इति देवसुषिविद्योक्तविरोध इत्यत आह– **प्राण इति** ॥ अत एवोत्तरत्र ''द्यौश्चाऽदित्यश्च'' इति आदित्यस्यैवानुवाद इति भावः ।

### ततश्चायं खण्डद्वयार्थः

एवं प्रत्येकमुपदिश्य तान् ब्राह्मणान् होवाच । एते वै खलु यूयमिम-मात्मानं वैश्वानरं पृथगिव विद्वांसोऽन्नमत्थ । भगवदङ्गानां भेदाभावादिवशब्दः । इदानीं समग्रात्मोपासकस्य फलमाह– **यस्त्विति** ॥ यस्त्वधिकारी एतमात्मानं वैश्वानरं भगवन्तमन्तःप्रादेशमात्रं तावन्मात्र-परिमाणकम् । तथाचोक्तम्– **''हृद्यपेक्षया तु मनुष्याधिकारत्वात्''** (ब्र.सू. १-३-२५) इति । अभि अभितो वि विगतं मानं मर्यादा यस्य तमभिविमानं सर्वगतम् । ''मानं ज्ञानं लयश्चेति मर्यादा चेति कथ्यते'' इति वचनात् । एवं वक्ष्यमाणरीत्योपास्ते सः सर्वेषु लोकेषु स्थितेषु सर्वेषु भूतेषु तदन्तर्गतेषु सर्वेष्वात्मसु अन्नमत्ति । देवतापेक्षयैतत् ॥ १ ॥

भगवदङ्गानामुक्तं नामधेयं सर्वथा मनसि धार्यमित्याशयेन तदनुवदन् समग्रं वैश्वानरमुपदिशति– **तस्येति** ॥ प्रकृतवैश्वानरे होमं वक्तुं तदपेक्षितमाह– **उर एवेति** ॥ वेदाद्यभिमानिदेवतास्तस्योरःप्रभृतिषु तिष्ठन्तीत्यर्थः ॥ २ ॥ **इति अष्टादशः खण्डः ॥ १८ ॥**

होमशेषमेव वक्ति– **तदिति** ॥ तत् तदा भोजनवेलायां यद् भक्तमन्नं प्रथममागच्छेदास्यं प्रति तद्धोमीयं होमद्रव्यं सः भोक्ता यामाहुतिं प्रथमां जुहुयात् तां जुहुयात् "प्राणाय स्वाहा" इति अनेन मन्त्रेण आहुति-तृप्यानाह– **प्राण इत्यादिना** ॥ प्राणश्चक्षुरादित्य इत्येकैव देवता । द्यौर्वायुपत्नी तृप्यति । दिवि तृप्यन्त्यां यत्किञ्च ज्ञानरूपमानन्दरूपं च ब्रह्म द्यौश्चाऽदित्यश्चाधिष्ठितः । हृदये पूर्वद्वारपत्वेन तद् ब्रह्म तृप्यति । एषां प्रियत्वात् । किं तत इत्यत आह – **तस्येति** ॥ तस्य ब्रह्मणः तृप्तिमनु यजमानः प्रजादिभिः तृप्यति ॥ १-२ ॥

**॥ इति एकोनविंशः खण्डः ॥**

## उपनिषत् (खण्डः - २०)

*'व्यानाय स्वाहा' इत्याहुतेः फलनिरूपणम्*

**अथ यां द्वितीयां जुहुयात् तां जुहुयाद् व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥**

**व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्चन्द्रमाश्चाधितिष्ठन्ति तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २० ॥**

### भाष्यम्

....... व्यानः श्रोत्रं च चन्द्रमाः ॥

दक्षिणद्वारपस्त्वेकः ....... ॥

## भाष्यार्थः

व्यानाहुतितृप्यतयोक्तानां व्यानश्रोत्रचन्द्रमसां भेदे ''अथ योऽस्य दक्षिणः सुषिः स व्यानः तच्छ्रोत्रं स चन्द्रमाः'' इति प्रागुक्तविरोधश्चन्द्रमस एवानुवादायोगश्चेत्यत आह– **व्यान इति** ॥

## ततश्चायं खण्डार्थः

एवमुत्तरखण्डचतुष्टयं नेयम्। दिशास्तन्नाम्नी वायुपत्नी। अधितिष्ठति। दक्षिणद्वारपत्वेन॥ १-२॥

**॥ इति विंशः खण्डः ॥**

## उपनिषत् (खण्डः -२१)

*'अपानाय स्वाहा' इत्याहुतेः फलवर्णनम्*

**अथ यां तृतीयां जुहुयात् तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥**

**अपाने तृप्यति वाक् तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २१ ॥**

## भाष्यम्

........ ........वागपानोऽग्निरेव च ।
पश्चिमद्वारपोऽप्येकः ..... ....... ॥

## भाष्यार्थः

अपानाहुतितृप्यतयोक्तानामपानवागग्नीनां भेदे ''अथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वाक् सोऽग्निः'' इत्युक्तविरोधोऽग्नेरेवानु-वादायोगश्चेत्यत आह– **वागिति** ॥

**॥ ततश्चायं खण्डार्थः ॥**

पृथिवी श्रीः । अधितिष्ठतः पश्चिमद्वारपत्वेन ॥

**॥ इति एकविंशः खण्डः ॥**

**उपनिषत् (खण्डः- २२)**

*'समानाय स्वाहा' इत्याहुतेः फलवर्णनम्*

**अथ यां चतुर्थीं जुहुयात् तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥**

**समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत् तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २२ ॥**

भाष्यम्

.......... समानो मन एव च ।

इन्द्र इत्येक एवोक्त उत्तरद्वाररक्षकः ॥

**भाष्यार्थः**

समानाहुतितृप्यतयोक्तानां समानमनःपर्जन्यानां भेदे ''अथ योऽस्योदङ्सुषिः स समानस्तन्मनः स पर्जन्यः'' इति प्रागुक्तविरोधोऽ-

नुवादानुपपत्तिश्चेत्यत आह– **समान इति** ॥ मन एवेत्येवशब्दश्च-शब्दार्थः । इन्द्र इत्यनेन सम्बध्यते । इन्द्र इति पर्जन्यशब्दव्याख्यानम् । ''पर्जन्यो मघवांश्चैव पुरुहूतः पुरन्दरः'' इत्यभिधानात् । अतिनीचस्य द्वारपत्वोक्त्याऽविशेषादतिशयालाभाच्चेति[१] भावः ।

**ततश्चायं खण्डार्थः**

पर्जन्यः इन्द्रः । विद्युद् वायुपत्नी । अधितिष्ठतः उत्तरद्वारपत्वेन ॥

**॥ इति द्वाविंशः खण्डः ॥**

## उपनिषत् (खण्डः - २३)

*'उदानाय स्वाहा' इत्याहुतेः फलवर्णनम्*

**अथ यां पञ्चमीं जुहुयात् तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥**

**उदाने तृप्यति वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाऽकाशश्चाधितिष्ठतस्तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २३ ॥**

### भाष्यम्

**उदानो वायुरित्येक ऊर्ध्वद्वाराधिपश्च सः ॥**

**स एवाऽकाशनामा च लक्ष्म्याविष्टो विशेषतः ।**

१. 'द्वारपत्वोक्त्या विशेषालाभाच्च' इति मातृकासु । प.सं. २१४, १५९, ८५ ।

पृथिवीनामिका श्रीस्तु द्यौर्दिशो विद्युदेव च ॥
वायुपत्नी समुद्दिष्टा तत्तद्वाराधिपाश्च ते ।
अधितिष्ठन्ति ते सर्वे नारायणमनामयम् ॥
यद्विष्णुर्ज्ञानरूपत्वात् किमानन्दस्वरूपतः[१] ।
एतेषु तृप्तेषु हरिस्तृप्यत्येषां प्रियो ह्यसौ ॥

*वैश्वानरोपासकानां नानावर्गनिरूपणम्*

सूर्यप्रसादात्तु नराः पूर्वद्वारेण केशवम् ।
प्राप्नुवन्त्यथ सोमस्य प्रसादात् पितरस्तथा ॥
द्वारेण दक्षिणेनैव गन्धर्वाः पश्चिमेन तु ।
अग्निप्रसादाद् ऋषय उत्तरेणेन्द्रसंश्रयात् ।
शिवाद्या वायुमाश्रित्य यान्त्यूर्ध्वेण हरिं सुराः ॥
वैश्वानराख्यविष्णोस्तु सम्यग्ज्ञानेन सर्वशः ।

**भाष्यार्थः**

उदानाहुतितृप्यतयोक्तयोरुदानवाय्वोर्भेदशङ्कायां तावदाह– **उदान इति** ॥ आकाशस्यापि भेदशङ्कामपाकरोति– **स एवेति** ॥ अन्यथा ''अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशः'' इत्युक्त-विरोधोऽनुवादायोगश्चेति भावः । ननु वायोरेवाऽकाशनामकत्वे ''वायुश्चाऽकाशश्च'' इति पृथगुक्तिरनुपपन्नेत्यत आह– **लक्ष्म्याविष्ट इति** ॥ रूपान्तरस्यापि लक्ष्म्याविष्टत्वाद् ''विशेषतः'' इत्युक्तम् । एवं च

---

१. 'आनन्दिस्वरूपतः' ह.

केवलो वायुर्वायुशब्देनोच्यत इति न पृथगुक्तिरनुपपन्नेति भावः । ''वायुश्चाऽकाशश्च'' इति वाक्यविचारप्रसङ्गात् ।

''द्यौश्चाऽदित्यश्च'' ''दिशश्च चन्द्रमाश्च'' ''पृथिवी चाग्निश्च'' ''विद्युच्च पर्जन्यश्च''इत्युक्तानां द्युदिक्पृथिवीविद्युच्छब्दानामभिधेय-माह–**पृथिवीति** ॥ तुशब्दोऽवधारणे । वायुपत्न्येव । नन्वेवं ''आदित्ये तृप्यति द्यौस्तृप्यति'' इत्यादिनाऽऽदित्यादितृप्तौ कथं द्व्यादीनां तृप्त्यु-क्तिः । अन्यतृप्तावन्यतृप्तेः कारणविशेषमन्तरेणासम्भवादित्यत आह – **तत्तदिति** ॥ ते पृथिव्यादिनामकाश्च । तत्र पृथिवीनामिका श्रीः पश्चिमद्वारपा, वायुपत्नी तु पूर्वदक्षिणोत्तरद्वारपेति विवेकः । नन्वादि-त्यादीनां पृथिव्यादीनां च द्वारपत्वं नात्र श्रुतावुक्तमित्यत आह– **अधितिष्ठिन्तीति** ॥ तस्मादधितिष्ठन्तीत्युक्तिरिति शेषः । अनामयम् आमयोपलक्षितदोषशून्यमिति नारायणशब्दव्याख्यानम् । ननु श्रुतौ यत् किं चेति श्रवणात् कथं नारायणमित्युक्तमित्यतो यत्-किंशब्दावपि भग-वत्परतया व्याचष्टे– **यदिति** ॥ चशब्दो विशेषणसमुच्चायक इति भावः । ''तत्तृप्यति''इति वाक्यपञ्चकं व्याचष्टे– **एतेष्विति** ॥ कथमन्यतृप्ताव-न्यतृप्तिरित्यत आह– **एषामिति** ॥

''तस्यानुतृप्तिं तृप्यति प्रजया पशुभिः'' इत्यादिवाक्यपञ्चकेनो-पासकस्यैहिकमेव फलमुच्यते । न केवलमेतावत् । मौक्तं चास्ति । ''प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् वेद'' इत्युक्तेरिति भावेन तत्र विशेषमाह– **सूर्येति** ॥ अनेन नराः पूर्वद्वारपोपासका इत्यादिविशेषो ज्ञायते । हृदयस्थपूर्वद्वारपोपासनेन श्वेतद्वीपादिलोके पूर्वद्वारेण केशवं प्राप्नुवन्तीत्यादि ज्ञेयम् । किं सूर्यादिप्रसादेनैव हरिं यान्ति ? नेत्याह– **वैश्वानरेति** ॥

ततश्चायं खण्डार्थः

आकाशो वायुः अधितिष्ठतः ऊर्ध्वद्वारपत्वेन ॥

॥ इति त्रयोविंशः खण्डः ॥

## उपनिषत् (खण्डः - २४)

*ज्ञानपूर्वककर्मणः फलप्रदत्वनिरूपणम्*

अथ स य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत् स्यात् ॥ १ ॥

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥

तस्मादु हैवंविद् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद् वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः ॥ ४ ॥

यथेह क्षुधिता बाला मातरं पर्युपासते ।

एवं सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति

॥ ५ ॥ २४ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि पञ्चमोऽध्यायः ॥ ५ ॥

## भाष्यम्

वैश्वानरज्ञानयोग्याः साक्षादेव सुराः स्मृताः ।

तस्मात्तेषां फलं सर्वमन्येषां तु स्वयोग्यतः॥'

इति वैश्वानरविद्यायाम् ।

*वैश्वानरो विष्णुरेव*

'को न आत्मा किं ब्रह्म' 'सोऽयमात्मा चतुष्पात् ' ।

'स्थुलभुग् वैश्वानरः प्रथमः पादः' ।

ॐ 'वैश्वानरः साधारणशब्दविशेषात्' ॐ ।

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः'

इत्यादेश्च वैश्वानरो विष्णुरिति सिद्धम् ॥

'स वायुः स आकाशः' 'वायुश्चाऽकाशश्चाधितिष्ठतः ।' इति वचनाद्वायो रूपमन्याधिष्ठितमाकाशाख्यं वायोः स्वरूपमिति विज्ञायते ।

'आकाशनामा विघ्नेशो वायुश्चाऽकाशकः स्मृतः ।

आकाश इति लक्ष्मीश्च तथाऽऽकाशो हरिः स्वयम् ॥' इति शब्दनिर्णये ।

'सुतेजोविश्वरूपादिभेदेनाङ्गानि मापतेः ।

अभिन्नान्यपि कथ्यन्ते लोकदृष्टिविभेदतः' इति च ॥२४ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते

श्रीमच्छान्दोग्योपनिषद्भाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

भाष्यार्थः

नरादिसुरान्तानां सम्यग्ज्ञानं किमेकप्रकारम् ? नेत्याह– वैश्वानर-

**ज्ञानेति** ॥ अत्र ज्ञानमुपासनम् । साक्षान्मुख्यतः । तत्कुत इत्यत आह– **तस्मादिति** ॥ तस्मादेव फलं श्रुत्युक्तम् ।

एवं वैश्वानरविद्यायामेव वैश्वानरविद्याया भगवत्परतया व्याख्यातत्वाद् विष्णुरेव वैश्वानरः, न देवता भूतं चेत्युक्तम् । प्रकरणसमाख्याभ्यां चायं निश्चयो भवतीत्याह– **को न इति** ॥ ''को न आत्मा किं ब्रह्म'' इति विचारपूर्वकं वैश्वानरविद्याया आरभ्याधीत्वेन विष्णुप्रकरणत्वाच्च वैश्वानरो विष्णुरिति सिद्धम् । ''अनात्तत्वादनात्मानः'' इति वचनेन विष्णोरन्येषामात्मत्वाद्यसम्भवादित्यर्थः । माण्डूके ''स्थूलभुग् वैश्वानरः'' इति विष्णौ वैश्वानरशब्दप्रयोगात् । अत्रापि वैश्वानरो विष्णुरिति सिद्धम् । नच तत्रापि विष्णुः कुत इति वाच्यम् । ''सोऽयमात्मा'' इत्युपक्रमेऽन्यत्रासम्भव्यात्मशब्दश्रवणेनास्य विष्णुप्रकरणत्वादिति भावः। ''आत्मानं वैश्वानरम्'' इत्युक्तो वैश्वानरो विष्णुरेव । अग्नाविष्णोः साधारणस्यापि वैश्वानरशब्दस्य विष्णावेव प्रसिद्धात्मशब्देन विशेषणादिति सूत्रार्थः । आदिपदेन ''शीर्ष्णो द्यौः समवर्तत । चक्षोः सूर्यो अजायत । प्राणाद् वायुरजायत । पद्भ्यां भूमिः'' इत्यादिपुरुषसूक्तसमाख्याग्रहणम् । अत्रापि ''मूर्धैव सुतेजाः'' इत्यादिश्रवणात् । तथाचोक्तम्– **पुरुषविधमपि चैनमधीयत इति** ॥ ''वायुश्चाऽकाशश्चाधितिष्ठतः'' इत्युक्ताकाशो वायुरेवेत्युक्तम् । तच्छ्रौतार्थापत्त्या समर्थयते – **स वायुरिति** ॥ देवसुषिविद्यायां ''स उदानः स वायुः स आकाशः'' इत्यभेदवचनादाकाशस्तावद् वायुरेव । अत्र ''वायुश्चाऽकाशश्च''इति भेदवचनादाकाशाख्यं वायो रूपमन्याधिष्ठितं, वायुस्तु केवलं वायोः स्वरूपमिति विज्ञायत इत्यर्थः । लक्ष्म्याविष्टत्वेन वायुराकाश इत्युक्तम् । तत्र लक्ष्मीवाय्वोराकाशनामकत्वेऽभिधानमाह– **आकाशेति** ॥ ननु भगवदङ्गानां परस्परं भेदाभावादन्योन्यनामवत्त्वाच्च कथं ''मूर्धैव सुतेजाः'', ''चक्षुर्विश्वरूपः'' इत्यादिभेदेन व्यपदेश इत्यत उपासक-

दृष्ट्यनुसारेणेति स्मृत्याऽऽह– **सुतेज इति ॥**

**ततश्चायं खण्डार्थः**

एवं वैश्वानररूपं तद्विषयहोमप्रकारं च निरूप्य ज्ञानपूर्वहोम एवावश्यम्भावीति भावेन तदज्ञानेन होमेऽनर्थं तज्ज्ञानेन होमे फलं चाऽह– **स य इति ॥** सः प्रसिद्धो यः कश्चिदिदं वैश्वानरस्वरूपादिकमविद्वान् प्राणाग्निहोत्रं जुहोति । तस्य तदग्निहोत्राख्यं कर्म यथाऽङ्गारानपोह्य भस्मनि जुहुयान्मूर्खस्तादृक् स्यात् ॥ १ ॥

अथ योऽधिकारी । एतद्वैश्वानरस्वरूपम् एवम् उक्तरीत्या विद्वान् प्राणाग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु स्थितेषु सर्वेषु भूतेषु तदन्तर्गतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

ततः किमित्यतोऽनिष्टनिवृत्तिं फलमाह– **तदिति ॥** तन्निदर्शनं यथेषीकातूलं चाग्नौ प्रोतं प्रविष्टं प्रदूयेत परितप्तं भवेद् भस्मीभवेद् । एवं हास्य वैश्वानरज्ञानिनः सर्वे पाप्मानः प्रदूयन्ते विनश्यन्तीत्यर्थः । ज्ञानम-परोक्षं चेत् सर्वे पाप्मानोऽनारब्धाः । परोक्षं चेद् यथायोग्यम् । तस्मादु वैश्वानरज्ञानस्य सर्वपापक्षयहेतुत्वादेव हैवंवित् । यद्यपि चण्डालाय स्मरणायोग्यायापि स्वोच्छिष्टं प्रयच्छेत् तथाऽपि न तत् तस्य पापहेतुः । किन्तु तद्दत्तमुच्छिष्टमस्य चण्डालस्यान्तर्यामिणि वैश्वानरे आत्मन्येव हुतं स्यात् । वैश्वानरज्ञानपूर्वं कृतमग्निहोत्रं सर्वलोकस्थसर्वभूतान्तर्यामि-तृप्तिकरमित्येतच्छ्लोकेन द्रढयति– **तदिति ॥** सर्वाणि भूतान्यभीष्टा-पेक्षा(क्षी)णि ॥ ३-५ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य
श्रीमच्छन्दोगोपनिषद्भाष्यस्य टीकायां श्रीमद्वेदव्यासतीर्थपूज्य-
पादशिष्येण वेदेशभिक्षुणा विरचितायां पदार्थकौमुद्यां पञ्चमोऽध्यायः
समाप्तः ॥ ५ ॥

## अथ षष्ठाध्यायस्य प्रथमः खण्डः

### उपनिषत्

*श्वेतकेतुवृत्तान्तः*

ॐ श्वेतकेतुर्हाऽरुणेय आस तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥१ ॥

*श्वेतकेतोरहङ्कारपरिहारः*

स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तꣳ ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेश-मप्राक्ष्यः ॥ २ ॥

येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥

*भगवति विज्ञाते सर्वं विज्ञातप्रायमिति निरूपणम्*

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्याद् वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥४ ॥

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्याद् वाचाऽऽरम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् ॥ ५ ॥

यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद् वाचाऽऽरम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यमेवꣳ सोम्य स आदेशो भवतीति ॥ ६ ॥

**न वै नूनं [१]भगवंस्तस्य एतदवेदिषुर्यद्येतद्[२] अवेदिष्यन् कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेव मे तद् ब्रवीत्विति यथा सोम्येति होवाच ॥ ७ ॥ १ ॥**

## भाष्यम्

**'अधीत्यब्दद्वादशत्व् द्वादशाब्द इतीरितः ।**

**श्वेतकेतुर्भारते तु नोत्पत्तिद्वादशत्वतः ॥' इति वाक्यनिर्णये ।**

## पदार्थकौमुदी

### भाष्यार्थः

**॥ ॐ ॥ तस्मै नमो भगवते चिदचित्परमाय ते ॥**

**पुरुषोत्तमाय देवाय पूर्णानन्दैकरूपिणे ॥ १ ॥**

पूर्वं जीवजडात्मकात् प्रपञ्चात् परमार्थत एवात्यन्तभिन्नं निखिलगुणोदारं सर्वोत्तमं भगवन्तं जानतां मोक्षतदितरफलका उपास्तय उक्ताः । तत्र जीवेश्वरभेदविषये यः सन्दिग्धो विपर्यस्तो वा तं प्रति स भेदो युक्तिभिः साध्यतेऽनेन षष्ठप्रपाठकेन । तत्र तावच्छ्वेतकेतुं निमित्तीकृत्य जीवानां भगवता भेदं बोधयन् भेदबोधनस्याभेदप्रसक्तिं विनाऽयोगात् तत्पूर्वकं भेदं समर्थयते– **श्वेतकेतुरित्यादिना ॥**

ननु चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य एयायेत्यनुपपन्नम् । ''सर्वान् वेदान् श्वेतकेतुरधीत्य द्वादशाब्दकः । पितुः समीपमेयाय'' इत्यादौ भारतवाक्येऽध्ययनं समाप्य पुनरागतस्यापि श्वेतकेतोरुत्पत्त्यपेक्षयैव द्वादशाब्दत्वप्रतीतेरित्यतस्तदभिप्रायं प्रमाणेनैवाऽह– **अधीत्यब्देति ॥**

---

१. 'भगवन्तस्ते' इति हृषिकेशीये। २. 'यद्धचेतत्' क.

अध्ययनं समाप्य पुनरागतोऽपि श्वेतकेतुरधीत्यब्दानां द्वादशत्वाद् द्वादशाब्द इतीरितः । नोत्पत्त्यपेक्षयाऽब्दानां द्वादशत्वात् । अत एव द्वादशवर्ष उपेत्य चतुर्विंशतिवर्ष इत्युक्तम् ।

## भाष्यम्

*मृत्पिण्डादिदृष्टान्तानां प्रयोजनकथनम्*

'यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयाः ।
विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च ॥
यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा ।
प्राधान्याद् विष्णुविज्ञानाद् विज्ञातं स्याज्जगत् सदा ॥
अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु ।
ज्ञायते नखकृन्तन्या[१] यथा सर्वमयोमयम् ॥
किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् ।
अनन्याधीनविज्ञानादन्याधीनं तथैव च ।
मृदयोलोहनाम्नां हि ज्ञानात् साङ्केतिकं यथा ॥' इत्यादि सामसंहितायाम् ।

'स्वर्णं लोहमणिश्चैव पुरटं चाभिधीयते ' इति शब्दनिर्णये ।

## पदार्थकौमुदी

### भाष्यार्थः

आह– ''सर्वं खल्विदं ब्रह्म'' इति सर्वस्य प्रपञ्चस्य

१.'नखनिकृन्तन्या' ह.

ब्रह्मात्मकत्वोक्तौ कथमित्याशङ्कायां ''तज्जलानिति शान्त उपासीत'' इति । तज्जत्वात् तल्लत्वात् तदनत्वादिति यत् सर्वस्य ब्रह्मोपादानत्वं ब्रह्मण्यारोपितत्वरूपं प्रागुक्तं यत्पुनरेकस्मिन् विदुषि भुक्ते सर्वं जगत् तृप्यतीति सर्वभूतस्थात्मैक्यमुक्तं तदुभयं प्रपञ्चयितुमयं षष्ठाध्याय आरभ्यते । तत्र श्वेतकेतुं प्रत्युद्दालकेन ब्रह्मविज्ञानेन सर्वविज्ञानोक्तौ अन्यज्ञानेनान्यज्ञानस्य क्वाप्यदर्शनादित्यभिप्रायेण कथमिति श्वेतकेतु-नाऽऽक्षिप्ते कार्यस्योपादानानन्यत्वान्नानुपपत्तिरित्याशयवतोद्दालकेन मृत्पिण्डादिदृष्टान्ताः कथिताः । हे सोम्यैकेन मृत्पिण्डेन चरुकुण्डादि-कारणभूतेन विज्ञातेन सर्वमन्यन्मृन्मयं मृद्विकारजातं विज्ञातं स्यात् । कार्यस्य कारणानन्यत्वे इदं कारणम् अयमस्य विकार इति कथमित्यत उक्तम्– **वाचेति** ॥ वाचाऽऽरम्भणं वागारम्भणं वागालम्बनमिति यावत् । विकारः । नामधेयं नामैव नामधेयम् । स्वार्थे धेयप्रत्ययः । नामैव केवलम् । न विकारो नाम वस्त्वस्ति । परमार्थतो मृत्तिकेत्येव मृत्तिकैव तु सत्यं [१]वस्त्विति ।

तदसत् । ''सर्वं खल्विदम्'' इत्यस्य ''तस्मादु हैवंवित्''इत्यस्य चान्यथैव प्राग् याख्यातत्वात् । ब्रह्मज्ञानेन तदारोपितसर्वज्ञानं चा-युक्तम् । अधिष्ठानयाथात्म्यज्ञानेनाध्यस्तज्ञानस्य क्वाप्यनुपलब्धत्वात् । अतः सादृश्यप्राधान्याभ्यामेवैकविज्ञानेन सर्वविज्ञानमभिप्रेतम् । तत्राऽऽद्ये दृष्टान्तं वक्तुं ''यथा सोम्य''इत्यादिवाक्यत्रयम् । द्वितीये दृष्टान्ताभि-धानाय वाचाऽऽरम्भणवाक्यत्रयम् । नन्वेवं तर्हि दृष्टान्तत्रयोपादानं व्यर्थमिति चेत्, त्वत्पक्षेऽपि साम्यात् । दृढप्रतीत्यर्थमित्यस्यास्माकमपि साम्यात् । दार्ष्टान्तिकेऽनेकाभेदानुगमार्थमिति चेत् कार्यकारणयोर-

१. 'वस्त्वस्तीति' इति मुद्रिकपुस्तके ।

नन्यत्वस्यैकेनैव ज्ञापिततयाऽस्यापि वैयर्थ्याद् अप्रामाणिकत्वात् प्रमाणविरोधाच्चेति भावेन ''यथा सोम्य''इत्यादिदृष्टान्तवाक्यत्रयेऽपि विवक्षाविशेषं प्रमाणेनैवाऽह– **यथेति** ॥ एकमृत्पिण्डेत्यर्थः । सादृश्यादेव मृत्त्वादिसादृश्यमात्रात् । प्रतियोग्याद्याधिक्यं विनेत्यर्थः । तथाच सदृशमात्रज्ञानात् सदृशमात्रज्ञानं भवतीत्यत्र प्रथमदृष्टान्त इत्यर्थः । ''एवं सोम्य स आदेशो भवति'' इति दार्ष्टान्तिकवाक्यं व्याचष्टे– **तथेति** ॥ एवमुत्तरत्रापि । सादृश्यादेवेति सम्बन्धः । दृष्टान्तसमुच्चयार्थश्चशब्दः । विष्णौ सत्त्वेन ज्ञाते प्रामाणिकत्वसादृश्याज्जगदपि तथा विज्ञायत इत्यर्थः । स्वर्णस्य प्राधान्याल्लोहमयाः लोहत्वेन विज्ञायन्ते इत्यनुवर्तते । तथाच प्रधानभूतसदृशज्ञानाद् अप्रधानसदृशज्ञानं भवतीत्यत्रायं दृष्टान्त इत्यर्थः । ''प्राधान्याद् विष्णोः'' इति शेषः । ज्ञानानन्दादिरूपेण विष्णुविज्ञानाच्चेतनत्वसादृश्याज्जीवा अपि तथा विज्ञायन्ते ।

[1]ननु चेतनत्वहेतुना ईश्वरदृष्टान्तेन ज्ञानानन्दानुमानं न सम्भवन्ति । तथा सति तत एव हेतोः परिच्छिन्नानन्दानुमानापत्तेरिति चेत् । मैवम् । अबाधितविषय एवानुमानप्रवृत्तेर्नातिप्रसङ्ग इति भावः । तृतीयदृष्टान्ते विवक्षाविशेषमाह– **अत्यल्पेऽपीति** ॥ नखकृन्तन्या ज्ञातया सर्वमयोमयम् अयस्त्वेन ज्ञायेत । अनेन नखनिकृन्तनशब्दः कृष्णायसपिण्डोपलक्षक इत्यसदित्युक्तं भवति । ननु विष्णोर्बहुत्वाज्जगतश्चाल्पत्वान्नायं दृष्टान्तः प्रकृतोपयुक्त इत्यतोऽपिशब्दसूचितकैमुत्यमेव विशदयति– **किम्विति** ॥ ईदृशं ज्ञायत इति वक्तव्यमिति शेषः ।

---

१.'ननु' इत्यारभ्य 'मैवम्' इत्यन्तभागो मातृकायां न दृश्यते। प.सं. २२२, ८८।

''वाचाऽऽरम्भणम्''इत्यादिवाक्यत्रयं तात्पर्यतो व्याचष्टे– **अनन्येति** ॥ अनन्याधीनस्य विष्णोर्विज्ञानाद् अन्याधीनं विज्ञातफलं भवति । श्रौतमृत्तिकादिशब्दाः वैदिकशब्दमात्रोपलक्षका इति भावेन शब्दान्तरोपादानम् । नचेदं लोहमणिदृष्टान्तेन गतार्थम् । तत्र प्रधानाप्रधानयोः सादृश्यविवक्षायाः सत्त्वाद् अत्र पुनस्तदभावादिति । साङ्केतिकं यथा विज्ञातफलं भवति । ननु तथाऽपि वाचारम्भणवाक्यं त्रिवारं कस्मात् पठ्यते ? शब्दान्तरं दृष्टान्तीकर्तुमिति ब्रूमः । तर्हि संस्कृतशब्ददृष्टान्तत्रयमेकत्रैव वक्तव्यम् । मैवम् । तत्तदभिधेय-प्रसङ्गायातस्य तत्तदभिधानस्य तदैव वक्तव्यत्वात् । तथाऽपि प्रतिशब्दं दृष्टान्तीकरणेऽपर्यवसानप्रसक्तेरुपलक्षणत्वे त्वेकेनापि कृतत्वाच्छब्द-त्रयोपादानमनुपपन्नमिति चेत्, न ।

उक्तरीत्या मृत्पिण्डादिदृष्टान्तत्रयोपादानस्याऽवश्यकत्वे तत्तदभि-धेयप्रसङ्गायाततत्तदभिधानोपादानस्यादोषत्वात् । प्रमाणे तु विवेकार्थं वाक्यत्रयमेकीकृत्य व्याख्यातम् । लोहमणिशब्दः स्वर्णपरत्वेन व्याख्यातः । तत्राभिधानमाह– **स्वर्णमिति** ॥ स्वर्णमेवेति सम्बन्धः । इतिशब्दोऽध्याहार्यः[१]। [२]स्वर्णे लोहमणिशब्दो योगरूढ इति मन्तव्यम् । रूढिज्ञापकाभिधानस्यात्रोक्तत्वात् । ''मणिर्मुखं प्रधानं चेत्युत्तमस्य वचो भवेत्'' इत्यन्यत्रोक्त्या योगप्रतीतेः ।

## भाष्यम्

*मृत्पिण्डादिनिदर्शनानि नाद्वैतस्यानुकूलानि*

---

१.'अध्याहारार्थः' इति मुद्रितपुस्तके । २.'स्वर्णलोहमणिशब्दः' इति मुद्रितपुस्तके ।

**विकारत्वविवक्षायामेकपिण्डमणिशब्दा व्यर्थाः स्युः ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं "यथा सोम्य"इत्यादिकं स्वमते प्रमाणेनैव व्याख्याय परव्याख्यानं दूषयति – **विकारत्वेति** ॥ "यथा सोम्य"इत्यादिवाक्ये मृन्मयादीनां मृदादिविकारत्वविवक्षायामेकपिण्डमणिशब्दाः । उपलक्षणमेतत् । व्यर्थाः विगतार्थाः विरुद्धार्थाश्च स्युः । तथाहि । मृदा विज्ञातया मृन्मयं विज्ञातं स्यात् । लोहेन विज्ञातेन लोहमयं विज्ञातं स्यात् । कृष्णायसेन विज्ञातेन कृष्णायसं विज्ञातं स्यादित्येतावता पूर्णत्वेन त्रयाणामेकशब्दानां पिण्डमणिनखनिकृन्तनशब्दानां सर्वशब्दानां च विगतार्थत्वं स्यात् । सर्वमृन्मयादीनामेकमृत्पिण्डादिविकारत्वाभावाद् विरुद्धार्थत्वं च स्यात् । किञ्च कथं ब्रह्मणो जगदारोपाधिष्ठानत्वेऽयं दृष्टान्तः । नह्येकमपि मृन्मयमेकस्मिन्नपि मृत्पिण्डे आरोपितम् । कारणव्यतिरेकेण कार्यासत्त्वविवक्षायां मृन्मयस्य मृदात्मना सत्त्ववत् प्रपञ्चस्यापि ब्रह्मात्मना सत्त्वापातादिति । अस्माकं तु सादृश्यविवक्षायामेकसर्वशब्दौ तावत् सार्थकावेव । एकमृत्त्वस्यानुयोगिन्यपि सत्त्वान्न तत्सादृश्यप्रतियोगितावच्छेदकमिति पिण्डशब्दोपादानम् । प्रतियोगिप्राधान्यात्यल्पत्वज्ञापनार्थमेव मणिनखकृन्तनशब्दोपादानम् । "मणिर्मुखं प्रधानं च" इति वचनेन मणिशब्दस्य प्राधान्यवाचकत्वावगतेः । नखनिकृन्तनस्वरूपस्यात्यल्पत्वादिति ।

## भाष्यम्

**'मृत्तिकेति', 'लोहमणिरिति', [१]'कृष्णायसमिति' अत्र इतिशब्दा नामधेयशब्दाश्च व्यर्थाः स्युः । विकारमिथ्यात्वविवक्षायां मृत्तिकैव सत्यं लोह एव सत्यं कार्ष्णायसमेव[२] सत्यमित्येव स्यात् । न तु नामधेयादिशब्दाः ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं ''यथा सोम्य''इत्यादिवाक्यव्याख्यानं दूषयित्वा वाचारम्भणवाक्यत्रयव्याख्यानमपि दूषयति– **मृत्तिकेति** ॥ तदेव विवृणोति– **विकारेति** ॥ वाचारम्भणवाक्ये विकारमिथ्यात्वविवक्षायां कृतायां वाचारम्भणं विकारो मृत्तिकैव सत्यं वाचारम्भणं विकारो लोहमणिरेव सत्यं वाचारम्भणं विकारः कार्ष्णायसमेव सत्यमित्येव स्यात् । नतु नामधेयशब्दा इतिशब्दाश्च । ''नामधेयं नामैव केवलम्'' इति त्वया व्याख्यातत्वेन ''वाचारम्भणम्'' इत्यनेन पुनरुक्तत्वात् । मृत्तिकाशब्दस्य शब्दपदार्थकत्वमनङ्गीकृत्यार्थपदार्थकत्वाङ्गीकृताविति-शब्दस्याप्यनपेक्षणात् पदार्थविपर्यास एव ह्यत्रेतिशब्दः । अर्थान्तरा-सम्भवात् । स च शब्दप्रकरणे शब्दपदार्थकत्वं निवार्यार्थपदार्थकत्वं व्यवस्थापयति । यथा– नवेति विभाषेति । अर्थप्रकरणे तु शब्दपदार्थ-कत्वं, यथा– गौरित्ययमाहेति । अर्थशास्त्रं चेदम् । ततो विनैवेतिशब्देन प्रकरणादेव मृत्तिकाशब्दस्यार्थपदार्थकत्वे सिद्धे किमितिशब्देन ? अस्माकं तु शब्दपदार्थकत्वव्यवस्थापनार्थकत्वात् सार्थक एवेति भावः ।

---

१. 'कार्ष्णायसमिति' क. २.'कृष्णायसमेव' ह.)

### भाष्यम्

**न च वाचारम्भणमात्रमिति मात्रशब्दोऽस्ति । न चाऽरभ्यस्याऽरम्भणमिति युज्यते शब्दः । क्रिया ह्यारम्भणम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च कथमिदं वाक्यं विकारमिथ्यात्वपरम् ? मिथ्यात्ववाचिशब्दाभावात्। वाचारम्भणशब्दोऽस्तीति चेत् स किं मिथ्यात्वे रूढः ? किं वा यौगिकः ? नाऽद्यः । अभिधानाद्यभावात् । न द्वितीयः । अवयववृत्त्या मिथ्यात्वालाभात् । ननु यथा "अन्नमात्रं भुक्तम्" इत्युक्ते व्यञ्जनाभावो लभ्यते । तथा "वाचारम्भणमात्रम्" इत्युक्ते वस्तुतो नास्तीति लभ्यत एवेत्यत आह– **नचेति** ॥ स्यादेवं यदि मात्रशब्दः श्रूयेत । नचैवम् । ततश्चाश्रुतकल्पनमेव दोष इत्यर्थः । नचात्राब्भक्षो वायुभक्ष इत्यादिवदवधारणकल्पकं किञ्चिदस्तीति भावः ।

किञ्च, वाचा केवलमस्तीत्यारभ्यत इति योगमभिप्रेत्य वाचारम्भणं वागालम्बनमिति व्याख्यानमयुक्तम् । आरम्भणशब्दस्य ल्युडन्तत्वात्। ल्युटश्च कर्मणि विधानाभावात् । नच "कृत्यल्युटो बहुलम्" इति कर्मणि ल्युट् । प्रबलनियामकमन्तरेण बहुलग्रहणस्य व्याख्यातुमशक्यत्वादिति भावेनाऽऽह– **नचेति** ॥ आरभ्यं चेन्नारम्भणं, किं तर्हि तदित्यत आह– **क्रियेति** ॥ उत्पादनापरपर्यायारम्भणक्रियैवाऽरम्भणशब्देनोच्यते । ल्युटो भावे विधानस्य प्रसिद्धत्वादित्यर्थः । यद्यपि करणाधिकरणयोरपि ल्युड् विहितः । तथाऽपि तस्य प्रकृतानुपयोगादग्रहणम् ।

## भाष्यम्

*'अनादिः संस्कृतभाषा, इतरास्तु पश्चादागताः' इति निरूपणम्*

**अतो वाचा नाम्नामारम्भणं विकारो विविधाकारो विक्रियमाणः[१] । सत्यं नामधेयं सर्वदा विद्यमानं नामधेयं मृत्तिकेत्यादय इत्यर्थः । सत्त्वेन कालतस्ततं ज्ञायते विद्वद्भिरिति नित्यत्वेन प्रसिद्धमेव सत्यमित्यत्र विवक्षितम् । सङ्केतेन क्रियमाणानि ह्यन्यानि नामानि । अतो विकाररूपाणि । विकारशब्दस्य नियतपुल्लिङ्गत्वादारम्भणं विकार इति वेदाः प्रमाणमितिवद् युज्यते ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं वाचारम्भणवाक्यस्य परव्याख्यां दूषयित्वा स्वयं व्याचष्टे – **अत इति** ।। परव्याख्यानस्यानुपपन्नत्वादित्यर्थ इति सम्बन्धः । वाचा वागिन्द्रियेण नाम्नां संस्कृतातिरिक्तानाम् आरम्भणमुच्चारणं विकार इत्यनुवादेन विविधाकार इति व्याख्यानम् । ननु विविधाकारो विविधकरणम् । नच नाम्नामारम्भणं विविधकरणमित्यत उक्तम् – **विक्रियमाण इति** ।। विविधत्वेन क्रियमाण इत्यर्थः । नायं कारशब्दो भावसाधनः किन्तु कर्मसाधन इति भावः । ''नामधेयं मृत्तिकेत्येव सत्यम्'' इत्येतदन्वयं दर्शयन् व्याचष्टे– **सत्यमिति** ।। सत्यशब्दः कथं सर्वदा विद्यमानत्वार्थः ? तत्र तस्य योगरूढ्योरभावादिति चेत् । न ।

---

१. 'विकारो विक्रियमाणः' प्र.

''एतत्सत्यं ब्रह्मपुरम्'' इत्युत्तरत्र सत्यशब्दस्य नित्ये प्रयोगाद् रूढिसिद्धेः । योगोऽप्यस्तीत्याह – **सत्त्वेति** ॥ सत्यमित्यत्र सदित्यस्यार्थः – **सत्त्वेनेति** ॥ त् इत्यस्य **ततमिति** ॥ ततिः कालिकी विवक्षितेति भावेन ''कालतः'' इत्युक्तम् । यमित्यस्यार्थः – **ज्ञायत इति** ॥ ''विद्वद्भिः'' इति योग्यतया लब्धम् । अयमपि सच्छब्दार्थो वा । ''नित्यत्वेन प्रसिद्धम्'' इति निर्वचनलभ्यार्थोक्तिः ।

संस्कृतातिरिक्तनाम्नामारम्भणं विविधाकार इत्युक्तम् । तत्कुत इत्यत आह – **सङ्केतेनेति** ॥ हि यस्मात् संस्कृतातिरिक्तानि नामानि पुरुषमतिवै(श्व)रूप्यजन्मना सङ्केतेन क्रियमाणान्यतो विकाररूपाणि । विविधत्वेन क्रियमाणानि । ततश्चानित्यानीत्यर्थः । नन्वारम्भणं विकार इति कथं विशेषणविशेष्यभावः ? आरम्भणशब्दस्य नपुंसकलिङ्गत्वाद् विकारशब्दस्य च पुल्लिङ्गत्वादित्यत आह– **विकारशब्दस्येति** ॥ आरम्भणशब्दस्य भावविहितल्युडन्तस्य नियतनपुंसकलिङ्गत्वादिति शेषः । तथाभूतयोरपि विशेषणविशेष्यभावः क्व दृष्ट इत्यत उक्तम्– **वेदा इति** ॥

नन्वत्र प्रमाणशब्दो भावसाधनः करणसाधनो वा । नाऽद्यः । सामानाधिकरण्यानुपपत्तेः। न द्वितीयः । करणे विहितल्युडन्तस्य विशेष्यनिघ्नत्वेन प्रमाणशब्दस्यापि पुल्लिङ्गनिर्देशापत्तेरिति । मैवम् । भावसाधनत्वाभ्युपगमात् । सामानाधिकरण्यं तु भाक्तम् । अत एव सुधायां ''पिपीलिकालिपिश्चापि प्रमाणम्'' इति वाक्यव्याख्यानावसर एवमेवोक्तम् । ननु करणसाधनत्वेऽपि प्रमाणमिति सामान्येनोद्दिश्य वेदत्वविधानान्न दोष इति चेत् । तर्ह्यत्राप्यारम्भणमित्युद्दिश्य विकारत्वविधानमिति साम्यादिति ।

## भाष्यम्

*संस्कृतभाषातः इतरभाषाणां जननक्रमकथनम्*

**न च मृत्तिकादिनामविकारः साङ्केतिकं नाम[१]। प्राधान्यमेवात्र मृत्तिकादिनामवद् भगवतो विवक्षितम् । सृष्टिश्च प्राधान्यार्थमेवात्रोच्यते[२] ॥ १ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

नन्वस्त्वत्र साङ्केतिकसंस्कृतनाम्नां विकारत्वसत्यत्वे कथ्येते इति। तेन नेति शब्दवैयर्थ्यादिदोषः । तथाऽपि साङ्केतिकं नाम संस्कृतनामविकार इत्येव तात्पर्यं किं न स्यात् । एवं चास्य दृष्टान्तान्तरत्वेऽपि जगतो ब्रह्मविकारत्व एव दृष्टान्तो भविष्यतीत्यत आह– **नचेति** ॥ [३]मण्णुमाटीत्यादिसाङ्केतिकनाम्नः संस्कृतापभ्रष्टत्वेऽपि न संस्कृतोपादानकत्वम् । उभयोरप्याकाशोपादानकत्वात् । तयोः परस्परं भेदेनैवोपलम्भाच्चेति भावः। यदि वाचारम्भणदृष्टान्तेन ब्रह्मणो जगदुपादानत्वं न विवक्षितं तर्हि किं विवक्षितमित्यत आह– **प्राधान्यमेवेति** ॥ साङ्केतिकनामवज्जगतोऽप्राधान्यं चेत्यपि ग्राह्यम् । एवशब्दः परोक्तनिरासकः ।

अयमर्थः । उक्तं तावद्विकारत्वात् साङ्केतिकं नामानित्यं, संस्कृतं तु नित्यमिति । तेनानित्यत्वात् साङ्केतिकं नामाप्रधानम् । नित्यत्वात् संस्कृतं प्रधानमिति लभ्यते । एवं च तद्दृष्टान्तेन ब्रह्मजगतोः

१.'साङ्केतिकनाम' ह्. २.'प्राधान्यार्थमेवोच्यते' ह्. ३. 'मण्णुमातीति' इति मुद्रितपुस्तके

प्राधान्याप्राधान्ये एव विवक्षिते । ततश्च यथा प्राधान्यात् संस्कृत-ज्ञानमात्रेण साङ्केतिकं ज्ञातं भवति । तज्ज्ञानफलस्य विद्वद्व्यवहार-गोचरत्वादेरनेनैव सिद्धेः । तथा प्राधान्यात् भगवज्ज्ञानेनैवाप्रधानं देवताकर्मादिमिश्रं सकलमपि विश्वं ज्ञातं भवति । तज्ज्ञानफल-स्याप्यत्रैवान्तर्भावादिति । ननु यद्यत्र जगतो ब्रह्मविकारत्वं न विवक्षितं तर्ह्युत्तरत्र ''सदेव सोम्येदमग्र आसीत्'' इत्यादिसृष्टिकथनमसङ्गतं स्यात् । तद्धि जगतो ब्रह्मविकारित्वं प्रपञ्चयितुं प्रवृत्तमित्यत आह– **सृष्टिश्चेति** ॥ स्यादेवं यद्यत्र जगतो ब्रह्मविकारत्वं प्रपञ्चयितुं सृष्टिरुच्यते । नचैवम् । किं नाम ? यन्मृत्तिकादिनामवद्भगवतः प्राधान्यं विवक्षितं तत्कथमित्याशङ्कायां जगन्निमित्तकारणत्वादिना भगवतो जगत्प्राधान्यज्ञापनार्थमेव सृष्टिरत्रोच्यत इत्यर्थः ॥ प्रथमः खण्डः ॥

**॥ ततश्चायं खण्डार्थः ॥**

श्वेतकेतुर्नामतः, आरुणेयो अरुणस्य पौत्रोऽरुणायाः पुत्र इति वा । आस ह । तं प्रति पितोद्दालक उवाच ह किल । किमिति ? हे श्वेतकेतो वस ब्रह्मचर्यं वेदाध्ययनार्थं गुरुकुलवासं कुर्वित्यर्थः । कुतः ? हे सोम्याऽस्मत्कुलीनोऽननूच्य वेदाननधीत्य ब्रह्मबन्धुरिव नैव भवतीति हेतोः । ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणोऽसौ ब्रह्मबन्धुः । ब्राह्मण्यां ब्राह्मणाज्जातोऽसंस्कृतो वा ब्रह्मबन्धुः ॥ १ ॥

स पित्रोक्तः श्वेतकेतुर्द्वादशवर्षः सन्नुपेत्याऽचार्यकुलं द्वादशाब्दतः सर्वान् वेदानधीत्य महामनाः प्रायशो नास्मि मानुषः । देवो वा केशवांशो वेति स्वस्मिन्नतिमहत्त्वबुद्धिः । तत्र हेतुः – **अनूचानमानी** ॥ साङ्ग-वेदाध्ययनवानहमित्यभिमानवान् । अहमेव प्रज्ञाधिक इति मन्यमान इति यावत् । अत एव स्तब्धोऽविनीतो दर्पपूर्ण इति यावत् । चतुर्विंशतिवर्षः

सन्नेयाय पितुः सकाशम् । तं स्वात्माननुरूपं पुत्रं दृष्ट्वा पितोवाच । स्वातन्त्र्याभिमानिनस्तस्याहङ्कारशान्त्यर्थम् । हे सोम्य यद् यदा नु इदानीम् इदं महामनाः इत्थमहङ्कारवान् अनूचानमानी स्तब्धोऽसि । तर्हि कस्तेऽतिशयः प्राप्त उपाध्यायात् । यज्ञादिसमस्तकर्मविषयो देवता-विषयश्च सर्वोऽपि वेदः साङ्गोपाङ्गो मयाऽधीत इति चेत्, किं कर्मादिविषयवेदाभ्यासेन वृथा श्रान्तोऽसि । उतशब्दः किंशब्दार्थः । तं सर्ववेदप्रसिद्धम् आदिश्यत इत्यादेशं नारायणमाप्राक्ष्यः किम् ? प्रायो नारायणं देवं नैव त्वं पृष्टवानसि । कथं तस्मिन् ज्ञाते एवमहङ्कारः स्यादिति भावः ॥ २ ॥

तमादेशं विशिनष्टि – **येनेति** ॥ येन श्रुतेनाश्रुतमपि देवताकर्मादिकं श्रुतं भवति । येन मतेनामतमपि मतं भवति । येन विज्ञातेन ध्यातेनाविज्ञातमपि विज्ञातं भवति तमिति पूर्वेण सम्बन्धः । एवं पित्रोक्तेन श्वेतकेतुना हे भगवो भगवन् ! स आदेशो भगवज्ज्ञानेन देवताकर्मादिज्ञानं भवतीत्युपदेशः कथमेवोपपन्नो भवति ॥ ३ ॥

अन्यज्ञानेनान्यज्ञानस्य क्वाप्यदर्शनादित्याक्षिप्ते सादृश्यात् प्राधान्यात् कारणत्वाच्चैकविज्ञानेन सर्वविज्ञानोपपत्तेर्नानुपपत्तिरित्याशयवानुद्दालकः सादृश्यादेकविज्ञानेन सर्वविज्ञाने तावद् दृष्टान्तमाह – **यथेति** ॥ हे सोम्य यथैकेन मृत्पिण्डेन विज्ञातेन मृत्त्वादिना तत्सादृश्यात् सर्वं मृन्मयं विज्ञातं स्यात् । एवं सोम्य स आदेशो भवति । एकेन ब्रह्मणा सत्त्वादिना ज्ञातेन तत्सादृश्याज्जगदपि तथा विज्ञातं स्यादित्यर्थः । प्राधान्यादेकविज्ञानेन सर्वविज्ञाने मृत्पिण्डाभिधेयप्रसङ्गायातं तदभि-धानरूपं दृष्टान्तमाह – **वाचेति** ॥ यथा सोम्य तेन तद्विज्ञातं स्यादित्यनुवर्तनीयम् । वाचा वागिन्द्रियेण नाम्नां संस्कृताति-

रिक्तानां [१]मण्णुमाटीत्यादीनामारम्भणमुच्चारणम् । विकारो [२]विक्रियमाण अतोऽनित्यः । सत्यं सर्वदा विद्यमानं नामधेयं मृत्तिकेत्येवेत्यर्थः । तथाच यथा सोम्य नित्यत्वात् प्रधानभूतेन संस्कृत-नाम्ना विज्ञातेनानित्यत्वादप्रधानं साङ्केतिकं नाम विज्ञातं स्यात् । विज्ञातफलं स्यादिति यावत् । एवं सोम्य स आदेशो भवति । प्रधानभूतेन परमात्मना ज्ञातेनाप्रधानभूतं देवताकर्मादिमिश्रं जगद् विज्ञातं स्यात् । विज्ञातफलं स्यादिति भावः ॥ ४ ॥

एवं सदृशमात्रज्ञानात् सदृशान्तरज्ञानं भवतीत्यत्र दृष्टान्तमभिधाय प्रधानभूतसदृशज्ञानादप्रधानभूतसदृशज्ञानं भवतीत्यत्र दृष्टान्तमाह– **यथा सोम्येति** ॥ हे सोम्य ! यथैकेन लोहमणिना लोहप्रधानेन स्वर्णेन विज्ञातेन स्वर्णत्वेन लोहत्वेन वा । तत्सादृश्यात् सर्वं लोहमयं कटकमुकुटादिकं विज्ञातं स्यात् । एवं सोम्य स आदेशो भवति । एवमेकेन ब्रह्मणा विज्ञातेन ज्ञानानन्दादिना तत्सादृश्याज्जीवरूपमपि विज्ञातं स्यादित्यर्थः । प्राधान्यादेकविज्ञानेन सर्वविज्ञाने लोहमणि-लक्षणाभिधेयप्रसङ्गायातं तदभिधानरूपं दृष्टान्तं चाऽह– **वाचारम्भण-मिति** ॥ योजना पूर्ववत् ॥ ५ ॥

सादृश्यादेकविज्ञानेन सर्वविज्ञाने दृष्टान्तान्तरमाह– **यथेति** ॥ हे सोम्य यथाऽत्यल्पेनापि नखनिकृन्तनेन विज्ञातेन तत्सादृश्याद् बह्वपि सर्वं कार्ष्णायसं विज्ञातं स्यात् । एवं सोम्य स आदेशो भवति । किमु तदा बहुना विष्णुना विज्ञातेनेदृशमत्यल्पं जगद् विज्ञायत इति वक्तव्यमिति भावः । यद्वाऽयमपि सदृशमात्रज्ञानात् सदृशान्तरज्ञानं भवतीत्यत्र दृष्टान्तः । अभ्यासस्तात्पर्यार्थ इत्यन्यत्रोक्तम् । प्राधान्यादेकविज्ञानेन

---

१. 'मण्णुमातीति' इति मुद्रितपुस्तके २. 'विविधाक्रियमाणः' इति मातृकासु । प.सं. ९०, २२७.

सन्नेयाय पितुः सकाशम् । तं स्वात्माननुरूपं पुत्रं दृष्ट्वा पितोवाच । स्वातन्त्र्याभिमानिनस्तस्याहङ्कारशान्त्यर्थम् । हे सोम्य यद् यदा नु इदानीम् इदं महामनाः इत्थंमहङ्कारवान् अनूचानमानी स्तब्धोऽसि । तर्हि कस्तेऽतिशयः प्राप्त उपाध्यायात् । यज्ञादिसमस्तकर्मविषयो देवताविषयश्च सर्वोऽपि वेदः साङ्गोपाङ्गो मयाऽधीत इति चेत्, किं कर्मादिविषयवेदाभ्यासेन वृथा श्रान्तोऽसि । उतशब्दः किंशब्दार्थः । तं सर्ववेदप्रसिद्धम् आदिश्यत इत्यादेशं नारायणमाप्राक्ष्यः किम् ? प्रायो नारायणं देवं नैव त्वं पृष्टवानसि । कथं तस्मिन् ज्ञाते एवमहङ्कारः स्यादिति भावः ॥ २ ॥

तमादेशं विशिनष्टि – **येनेति** ॥ येन श्रुतेनाश्रुतमपि देवताकर्मादिकं श्रुतं भवति । येन मतेनामतमपि मतं भवति । येन विज्ञातेन ध्यातेनाविज्ञातमपि विज्ञातं भवति तमिति पूर्वेण सम्बन्धः । एवं पित्रोक्तेन श्वेतकेतुना हे भगवो भगवन् ! स आदेशो भगवज्ज्ञानेन देवताकर्मादिज्ञानं भवतीत्युपदेशः कथमेवोपपन्नो भवति ॥ ३ ॥

अन्यज्ञानेनान्यज्ञानस्य क्वाप्यदर्शनादित्याक्षिप्ते सादृश्यात् प्राधान्यात् कारणत्वाच्चैकविज्ञानेन सर्वविज्ञानोपपत्तेर्नानुपपत्तिरित्याशयवानुद्दालकः सादृश्यादेकविज्ञानेन सर्वविज्ञाने तावद् दृष्टान्तमाह – **यथेति** ॥ हे सोम्य यथैकेन मृत्पिण्डेन विज्ञातेन मृत्त्वादिना तत्सादृश्यात् सर्वं मृन्मयं विज्ञातं स्यात् । एवं सोम्य स आदेशो भवति । एकेन ब्रह्मणा सत्त्वादिना ज्ञातेन तत्सादृश्याज्जगदपि तथा विज्ञातं स्यादित्यर्थः । प्राधान्यादेकविज्ञानेन सर्वविज्ञाने मृत्पिण्डाभिधेयप्रसङ्गायातं तदभिधानरूपं दृष्टान्तमाह – **वाचेति** ॥ यथा सोम्य तेन तद्विज्ञातं स्यादित्यनुवर्तनीयम् । वाचा वागिन्द्रियेण नाम्नां संस्कृताति-

रिक्तानां [१]मण्णुमाटीत्यादीनामारम्भणमुच्चारणम् । विकारो [२]विक्रियमाण अतोऽनित्यः । सत्यं सर्वदा विद्यमानं नामधेयं मृत्तिकेत्येवेत्यर्थः । तथाच यथा सोम्य नित्यत्वात् प्रधानभूतेन संस्कृत-नाम्ना विज्ञातेनानित्यत्वादप्रधानं साङ्केतिकं नाम विज्ञातं स्यात् । विज्ञातफलं स्यादिति यावत् । एवं सोम्य स आदेशो भवति । प्रधानभूतेन परमात्मना ज्ञातेनाप्रधानभूतं देवताकर्मादिमिश्रं जगद् विज्ञातं स्यात् । विज्ञातफलं स्यादिति भावः ॥ ४ ॥

एवं सदृशमात्रज्ञानात् सदृशान्तरज्ञानं भवतीत्यत्र दृष्टान्तमभिधाय प्रधानभूतसदृशज्ञानादप्रधानभूतसदृशज्ञानं भवतीत्यत्र दृष्टान्तमाह– **यथा सोम्येति** ॥ हे सोम्य ! यथैकेन लोहमणिना लोहप्रधानेन स्वर्णेन विज्ञातेन स्वर्णत्वेन लोहत्वेन वा । तत्सादृश्यात् सर्वं लोहमयं कटकमुकुटादिकं विज्ञातं स्यात् । एवं सोम्य स आदेशो भवति । एवमेकेन ब्रह्मणा विज्ञातेन ज्ञानानन्दादिना तत्सादृश्याज्जीवरूपमपि विज्ञातं स्यादित्यर्थः । प्राधान्यादेकविज्ञानेन सर्वविज्ञाने लोहमणि-लक्षणाभिधेयप्रसङ्गायातं तदभिधानरूपं दृष्टान्तं चाऽह– **वाचारम्भण-मिति** ॥ योजना पूर्ववत् ॥ ५ ॥

सादृश्यादेकविज्ञानेन सर्वविज्ञाने दृष्टान्तान्तरमाह– **यथेति** ॥ हे सोम्य यथाऽत्यल्पेनापि नखनिकृन्तनेन विज्ञातेन तत्सादृश्याद् बह्वपि सर्वं कार्ष्णायसं विज्ञातं स्यात् । एवं सोम्य स आदेशो भवति । किमु तदा बहुना विष्णुना विज्ञातेनेदृशमत्यल्पं जगद् विज्ञायत इति वक्तव्यमिति भावः । यद्वाऽयमपि सदृशमात्रज्ञानात् सदृशान्तरज्ञानं भवतीत्यत्र दृष्टान्तः । अभ्यासस्तात्पर्यार्थ इत्यन्यत्रोक्तम् । प्राधान्यादेकविज्ञानेन

---

१.'मण्णुमातीति' इति मुद्रितपुस्तके २. 'विविधाक्रियमाणः' इति मातृकासु । प.सं. ९०, २२७.

सर्वविज्ञाने कार्ष्णायसरूपाभिधेयप्रसङ्गायातं तदभिधानरूपं दृष्टान्तमाह– **वाचारम्भणमिति** ॥ एवं हे सोम्य स आदेशो येनाश्रुतं श्रुतं भवतीत्युपदेशो भवतीत्यर्थः ॥ ६ ॥

इत्युपदिष्टः पुत्र आह– **न वा इति** ॥ भगवन्तः पूजार्हास्ते मम गुरवो नूनं निश्चितमेतत् त्वदुक्तं नैवावेदिषुः । कुतः ? ते यद्येतत्प्रमेयमवेदिष्यन् कथं मे मह्यं प्रियशिष्याय नावक्ष्यन् । इति तस्माद् भगवानेव मे मम यद् वाचारम्भणदृष्टान्तेन भगवतः प्राधान्यादिकमुक्तं तत्तु विशेषाकारेण ब्रवीत्विति पुत्रेणार्थितः पिता तथेति होवाच ॥ ७ ॥

**॥ इति प्रथमः खण्डः ॥**

## उपनिषत् (खण्डः-२)

*एकमेवाद्वितीयं ब्रह्म*

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत इति ॥ १ ॥**

**कुतस्तु खलु सोम्यैवꣳस्यादिति होवाच कथमसतः सज्जायेतेति सत् त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥**

*भगवतः सकाशादादिसृष्टिकथनम्*

**तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव [१]तदध्यापो जायन्ते ॥ ३ ॥**

**ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त**

१. 'तद्व्यापः' इति क्वचित् ।

**तस्माद् यत्र क च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदन्नाद्यं जायते ॥ ४ ॥ २ ॥**

## भाष्यम्

एकमेवाद्वितीयं स्वगतभेदवर्जितं समानवर्जितं च ।
'एकमेवाद्वितीयं तत् समाभ्यधिकवर्जनात्[१]।
स्वगतानां च भेदानामभावाद् ब्रह्म शाश्वतम् ॥' इति प्रवृत्ते ।
'भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः ।
समाधिकनिवृत्त्यर्थमद्वितीयपदं तथा ॥
भेदाभेदेऽप्येकशब्दो यतोऽवयविनि स्थितः ।
एकमेवेत्यतः प्राह नारायणमियं श्रुतिः ॥
समे द्वितीयशब्दः स्यादद्वितीयोऽसमत्वतः ।
साधिकः[२] कुत एव स्यादित्याह परमा श्रुतिः ॥' इति सामसंहितायाम् ।

## पदार्थकौमुदी

### भाष्यार्थः

प्राधान्यप्रतिपत्त्यर्थमेव सृष्टिमाह– **सदेवेति** ॥ यद्वा ''भगवांस्त्वेव मे तद् ब्रवीतु'' यत्कारणत्वादेकविज्ञानेन सर्वविज्ञानं भवतीत्युक्तम् । तत्कारणत्वमेव विशेषाकारेण ब्रवीत्विति पुत्रेण प्रार्थितः पिता तथेति होवाच । तदेव कारणत्वमाह– **सदेवेति** ॥

---

१. 'समाधिकविवर्जनात्' ह. २. 'अधिकः' ह.

अत्र "एकमेवाद्वितीयम्" इति वाक्यं शङ्करेणेत्थं व्याख्यातम् । स्वकार्यपतितमन्यन्नास्तीत्येकमेवोच्यते । मृद्व्यतिरेकेण मृदो यथाऽन्यद् घटाद्याकारेण परिणामयितृकुलालादिनिमित्तकारणं दृष्टम् । तथा सद्-व्यतिरेकेण सतः सहकारिकारणं द्वितीयं प्राप्तं प्रतिषिध्यते अद्वितीय-मिति नास्य द्वितीयं वस्त्वन्तरं विद्यत इति । तदसत् । अद्वितीयपदेनैव कार्यकारणमध्यपतितद्वितीयमात्रनिषेधसम्भवेन "एकमेव" इत्यस्य वैयर्थ्यात् । अत्र कश्चित् ।

"वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात् सजातीयो विजातीयः शिलादितः ।।
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निषिध्यते ।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ।।" इति ।

तदप्यसदिति भावेन स्वयं तावदनूद्य व्याचष्टे– **एकमेवेति** ।। एकमेवेत्यस्यार्थः – **स्वगतभेदवर्जितमिति** । स्वावयवगुणकर्मादिभेद-वर्जितमित्यर्थः । "अद्वितीयम्" इत्यस्य "समानवर्जितम्" इति । स्वकृतं व्याख्यानं प्रमाणेन द्रढयति – **एकमेवेति** ।। तच्छाश्वतं ब्रह्म स्वगतानां भेदानामभावादेकमेवेत्युच्यते । समाभ्यधिकवर्जनादद्वितीय-मित्युच्यत इति सम्बन्धः । अधिकवर्जनं कैमुत्यलब्धमिति स्फुटमनु-पदमेव । एतदेव प्रमाणान्तरेण विशदयति – **भेदाभेदेति** ।। अभेद-प्रतिपत्त्यर्थमेकशब्द इत्यादौ योज्यम् । "नारायणस्य स्वावयवादिना" इति शेषः । एवशब्दस्यार्थान्तरत्वे भेदाभेदनिरासकत्वानुपपत्तेः "अव-धारकः" इत्युक्तम् । नन्वेकमभिन्नमित्येकशब्देनैव भेदनिरासे भेदाभेद-स्यापि निवृत्तिलाभादवधारणं व्यर्थमित्यत आह– **भेदाभेदेऽपीति** ।। अवयविनि घटादौ भेदाभेदे विद्यमानेऽप्येकशब्दः स्थितो यतः ।

तस्याभेदमात्रबोधकत्वेन भेदनिरासकत्वासम्भवात् । अतस्तद्वदत्राप्येकमित्यनेन भेदाभेदप्रसक्तौ तन्निवृत्त्यर्थमेकमेवेत्याहेत्यर्थः । ''नारायणम्'' इत्यनेन श्रुतौ सच्छब्दो नारायणपर इत्युक्तं भवति । समाधिकनिवृत्त्यर्थमद्वितीयपदमित्ययुक्तम् । अद्वितीयपदेन द्वितीयमात्रनिषेधावगतेरित्यतस्तद् व्युत्पादयति– **सम इति** ॥ तथाचोक्तं महाभाष्ये– अस्य गोर्द्वितीयेन भाव्यमित्युक्ते सदृशो गौरेवोपादीयते नाश्व न गर्दभ इति । द्वितीयपदेन द्वितीयमात्रोक्तावद्वितीयशब्देनैव स्वेतरसर्वनिषेधसम्भवेन सजातीयनिषेधकैवशब्दादिवैयर्थ्यम् । तदवैयर्थ्याय द्वितीयशब्दस्य विजातीयपरत्वे सङ्कोचे चाग्र इत्यनेनाविरोधाय समद्वितीयपरत्वेनापि सङ्कोचः स्यादिति भावः । अस्तु तर्हि समराहित्यमेवाऽद्वितीयशब्दार्थो नाधिकराहित्यमित्यतः पदार्थस्तु स एव । अयंत्वार्थिकार्थ इति भावेनाऽह– **साधिक इति** ॥ अत एव प्राक् ''समानवर्जितम्'' इत्येवोक्तम् ।

## भाष्यम्

*अद्वितीयशब्दो नाद्वैतसाधकः*

**न च विजातीयभेदवर्जनं नाम कुत्रचित् प्रसिद्धम् । तत्प्रमाणाभावाच्च ।**

**'एक एवाद्वितीयो भगवांस्तत्सदृशपरो[१] नास्ति' इति च[२] । 'एको भगवांस्तत्सदृशपरौ न स्तः' इति च ।**

---

१. 'तत्सदृशः परः' हृ. २. 'इति च श्रुतिः' इति हृषिकेशीये.

## पदार्थकौमुदी

### भाष्यार्थः

एवं स्वयं व्याख्याय यदुक्तं विजातीयभेदवर्जनमद्वितीयशब्दार्थ इति तद्दूषयति– **नचेति** ॥ स्यादेवाद्वितीयपदं विजातीयभेदनिरास-कार्थकम् । यदि विजातीयभेदवर्जनं नाम कुत्रचित् प्रसिद्धं स्यात् । नह्यर्थस्यैवाप्रसिद्धौ[१] पदस्य तदर्थकत्वं युज्यते । व्युत्पत्तेरेवानुपपत्तेः । नच तत्प्रसिद्धम् । वृक्षस्य शिलादितो विजातीयाद् भिन्नत्वेऽपि तद्भेदवर्जनस्य कुत्राप्यभावात् । अन्यथा वृक्षस्य शिलादित्वप्राप्त्या भेदघटितविजातीयत्वस्यैवानुपपत्तेरिति भावः । ननु शशविषाणादेर-प्रसिद्धत्वेऽपि शशविषाणादिपदस्य तदर्थत्ववद् विजातीयभेद-वर्जनस्याप्रसिद्धत्वेऽप्यद्वितीयपदं तदर्थकं किं न स्यादिति चेन्न । यतः फलितमस्मन्मनोरथद्रुमेण । विजातीयभेदाभावस्याऽप्रामाणिकत्वे विजातीयभेदस्य प्रामाणिकत्वप्राप्तेः । दूषणान्तरमाह– **तत्प्रमाणेति** ॥ तत्तत्राद्वितीयशब्दस्य विजातिभेदराहित्यार्थत्वे । अस्ति शशविषाणा-दिशब्दस्य शशविषाणाद्यर्थत्वे प्रमाणम् । तेन तदुपस्थितेः । नचात्र तथाऽस्तीति भावः । श्रुतिविरोधाच्च न त्वदुक्तोऽद्वितीयशब्दार्थः । किन्त्वस्मदुक्त एवेति भावेन श्रुतिवाक्ये पठति– **एक इति** ॥ अद्वितीयपदस्यैव व्याख्यानमिदम् । ''श्रुतिश्च'' इति चशब्दान्वयः ।

### भाष्यम्

**विजातीयाभावे येनाश्रुतं श्रुतं भवतीत्यादि विशेषणं च व्यर्थम् ।**

---

१. 'न ह्यर्थस्याप्रसिद्धौ' इति मुद्रितपुस्तके ।

**यस्य कस्यचिज्ज्ञानं तज्ज्ञानमेव भवतीति । अज्ञानमपि ज्ञानमेव भवति । भेदाभावात् ।**

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च विजातीयस्यैवाभावाद् विजातीयभेदोऽपि नास्तीत्युच्यते ? अथवा विजातीयं किञ्चिदङ्गीकृत्य भेदमात्रं प्रतिक्षिप्यते ? नाऽद्यः । विजातीयाभावेऽपि तद्भेदस्य सम्भवात् । अन्यथा पारमार्थिकेऽनिर्वचनीये चासद्वैलक्षण्यासिद्ध्यापातात् । दूषणान्तरमाह– **विजातीयेति ॥** सति ब्रह्मविजातीये द्वितीये वस्तुनि तस्याश्रुतत्वादिविशेषणं भवेत् । तदभावे तद्विरुद्धार्थमित्यर्थः । द्वितीयं पक्षं दूषयति– **यस्येति॥** यदि विजातीयमङ्गीकृत्य तद्भेदमात्रं निरस्यते तर्हि घटादेर्ब्रह्मणश्च भेदाभावाद् यस्यकस्यचिद्घटादेर्ज्ञानमेव ब्रह्मज्ञानं भवतीति येन विज्ञातेनाविज्ञातं विज्ञातं स्यादिति विरुद्धार्थं स्यात् । नहि घटज्ञानेनान्यत् सर्वं विज्ञातं भवतीत्यर्थः । दूषणान्तरमाह– **अज्ञानमपीति ॥** विजातीयभेदस्यैवाभावे ज्ञानाज्ञानयोरपि भेदाभावादज्ञानमपि ज्ञानमेव स्यात् । ततश्चाविज्ञातं विज्ञातं स्यादित्युक्तिर्न स्यादिति भावः । यद्वा, विजातीयभेदाभावे जगदुपादानब्रह्मणोरपि भेदाभावादज्ञानमपि ज्ञानरूपं ब्रह्मैव स्यादित्यर्थः ।

### भाष्यम्

**न च मिथ्या सत्यमिति भेदः । तस्यैव विजातीयत्वप्राप्तेः । तद्भेदस्य मिथ्यात्वे तदभेदस्य सत्यत्वप्रसङ्गाच्च । मिथ्यासत्ययोरैक्ये**

**इदं मिथ्या इदं सत्यमिति[१] भेदाभावाज्जीवेशभेदादेरपि सत्य-त्वप्रसङ्गः । अतः परमार्थं ब्रह्मान्यन्मिथ्येत्यपि न युज्यते । अतः सजातीय[२] स्वगतभेदोऽधिकाख्यं विजातीयं चात्र निषिध्यते ।**

## पदार्थकौमुदी

### भाष्यार्थः

यदुक्तं यस्य कस्यचिज्ज्ञानमेव ब्रह्मज्ञानमिति तदयुक्तम् । घटादिकं मिथ्या, ब्रह्म तु सत्यमिति तयोर्भेदात् । अत एवाज्ञानमपि ब्रह्मैव स्यादित्यप्ययुक्तमित्यत आह– **नचेति** ॥ कुतो नेत्यत आह– **तस्यैवेति** ॥ यदि घटादेर्ब्रह्मणश्च मिथ्यात्वसत्यत्वाभ्यां भेदोऽङ्गीक्रियते तर्हि तस्यैव मिथ्याभूतस्य ब्रह्मभिन्नस्य घटादेरज्ञानस्य वा विजातीय-त्वप्राप्तेर्विजातीयभेदराहित्यमद्वितीयशब्दार्थ इति भग्नमित्यर्थः ।

स्यादेवं यदि मिथ्यासत्ययोर्भेदः सत्यः स्यात् । नचैवम् । किं नाम । सोऽपि मिथ्यैव । तथाच सत्यपि मिथ्याभूते विजातीयभेदे तस्यापि मिथ्यात्वादद्वितीयमिति तन्निषेधो युज्यत इत्यत आह– **तद्भेदस्येति** ॥ मिथ्यासत्ययोर्भेदस्य मिथ्यात्वे तदभेदस्य सत्यत्वं स्यात् । परस्परविरु-द्धयोरन्यतरनिषेधस्य अन्यतरविधिनान्तरीयकत्वात् । शुक्तौ शुक्ति-भेदस्य मिथ्यात्वे तदभेदस्य सत्यत्वदर्शनाच्च । तथाच घटादे-र्ब्रह्मत्वमज्ञानस्यापि ज्ञानत्वं स्यादिति साधूक्तमिति भावः । एतेन सजातीयभेदवर्जनमवधारणार्थ इत्येतदपि परास्तम् । नच सजातीय-भेदवर्जनं नाम कुत्रचित् प्रसिद्धम् । वृक्षस्य वृक्षान्तराद् भेदेऽपि

---

१. 'इदं सत्यमिदं मिथ्येति' क. २. 'सजातीयः स्वगत-' क.

तद्राहित्यस्य कुत्राप्यभावात् । अन्यथा वृक्षस्य वृक्षान्तरेणाभेदप्राप्त्या तद्भेदघटितसाजात्यस्यैवानुपपत्तेरित्यादिन्यायसाम्यात् । इदानीं सजातीयविजातीयस्वरूपमङ्गीकृत्य तद्भेदमात्रप्रतिक्षेपेऽतिप्रसङ्गान्तरमाह– **मिथ्येति ॥** जीवेशभेदादेरपि सत्यत्वप्रसङ्ग इत्युपलक्षणम् । ब्रह्मणोऽपि मिथ्यात्वप्रसङ्ग इत्यपि द्रष्टव्यम् । यदि मिथ्याभूतस्य सजातीयस्य विजातीयस्य सत्यभूतब्रह्मणश्चैक्यमङ्गीक्रियते । तदा सर्वं मिथ्यैव वा सत्यं वा स्यात् । नतु मिथ्यासत्यविवेकः । तथाचैकविधे तस्मिन्निदं सत्यमिदं मिथ्येति विवेकाभावाद् ब्रह्मणोऽपि मिथ्यात्वं जीवेशभेदादेरपि सत्यत्वं वा स्यादित्यर्थः । अत्र जीवेशेति सजातीयग्रहणम् । भेदादेरिति विजातीयग्रहणम् । किं तत इति चेत् । तथा सति ब्रह्मैकमेव परमार्थसत्यमन्यन्मिथ्येति सिद्धान्तोऽपि भग्नः स्यादित्याह– **अत इति ॥** ब्रह्मणोऽपि मिथ्यात्वस्य जीवेशभेदादेः सत्यत्वस्य चाङ्गीकारादित्यर्थः । किञ्च ''एकम्'' इति स्वगतभेदनिषेधोऽर्थ इत्यनुपपन्नम् । एकशब्दस्याभेदमात्रबोधकस्य भिन्नाभिन्ने घटादावपि सत्त्वेन भेदनिषेधकत्वाभावादित्युक्तत्वात् । एवशब्दसहितस्य स्वगतभेदनिषेधकत्वे तु सजातीयभेदनिषेधासिद्धिः । तन्निषेधकपदाभावात् । तस्मात् त्वदुक्तरीत्यैवार्थो वक्तव्य इति निर्बन्धश्चेत् तर्ह्यत्र वाक्येऽद्वितीयपदेन सदृशाख्यः सजातीयः एकमेवेत्यनेन स्वगतभेदोऽद्वितीयपदेनैवार्थादधिकाख्यं विजातीयं च निषिध्यत इत्येवार्थोऽस्त्विति भावेनोपसंहरति– **अत इति ॥** हीनस्य विजातीयस्य सत्त्वादधिकाख्यमित्युक्तम् । यद्यपि स्वगतभेद इत्यनन्तरं सजातीय इति वक्तव्यम् । तथाऽप्यत्र परकृताद्वितीयपदव्याख्यान-

निरासस्यैव प्रस्तुतत्वादद्वितीयपदप्रतिपाद्योक्तिरादौ । तदनन्तरमेकमेवेत्यस्य प्रतिपाद्योक्तिः । ततोऽद्वितीयपदार्थिकार्थोक्तिरित्यवगन्तव्यम् ।

### भाष्यम्

'सर्वोत्तमत्वात् सन्नामा हरिर्नारायणः प्रभुः ।
सोऽसृजत् प्रथमं देवीं तेजआख्यां श्रियं सतीम् ॥
तते[1] स्थितेन रूपेण साऽजैव हि यतः सदा ।
तेज इत्युच्यते तस्माज्जनेर्वा तत एव तु ॥
यदस्याः सृष्टिकृद्रूपं विद्याख्यं जायते हरेः ।
मन्वाख्यः प्राण एवास्या अन्नामा जायतेऽथ च [2] ॥
ब्राह्मणादिचतुर्वर्णस्ततश्चान्नाभिधो हरः ।
तेजःसंस्था च सा देवी प्राणोऽप्सु स्थित एव च ॥
ततस्तेजस एवाऽपो जायन्तेऽन्नस्थितो हरः ।
जायतेऽतोऽद्भ्य एवान्नं पृथिवी त्वन्नरूपिणी ॥' ॥२ ॥

### पदार्थकौमुदी

### भाष्यार्थः

एवं श्रोतुः श्रुत्योद्विग्नत्वनिरासायैकमेवाऽद्वितीयमिति वाक्यं व्याख्यायेदानीम् अप्रतिपत्तिविप्रतिपत्तिनिरासाय ''सदेव'' इत्यादिप्रकरणं प्रमाणेनैव व्याचष्टे– **सर्वोत्तमत्वादिति** ॥ ''सच्छब्दः उत्तमं ब्रूयात्'' इत्युक्तेः । सदित्यस्तितामात्रं सूक्ष्मं निर्विशेषं सर्वगतमेकं

---

१.'तत्र' ह. २. 'जायते हरेः' ह.

निरञ्जनं नित्यं निरवयवं यदवगम्यते सर्ववेदान्तेभ्य इति व्याख्यानमसत् । मात्रशब्दाश्रवणेनास्तितामात्रमिति व्याख्यानायोगात् । सूक्ष्मत्वादेः सच्छब्दार्थत्वे मानाभावात् । मात्रशब्देनासद्व्यावृत्तिलाभेऽपि स्थौल्यादिव्यावृत्तेरलाभात् । स्वरूपकथनमात्रपरत्वे तु सूक्ष्मत्वादेरेव विशेषत्वेन निर्विशेषत्वोक्तिव्याघातात् । सूक्ष्मत्वसर्वगतत्वयोर्विरोधाच्च । ऐश्वर्यानङ्गीकारात् । वेदान्तानामन्यथा तत्र तत्र व्याख्याततत्वाच्च । अतो निखिलगुणगणाढ्यमेव ब्रह्म सच्छब्दाभिधेयमिति भावेनोक्तम्– **नारायण इति** ॥ एवं ''तत्तेजोऽसृजत'' इति वाक्यस्थतच्छब्दपरामर्श्यप्रदर्शनाय सच्छब्दं व्याख्याय तद्वाक्यं व्याचष्टे– **स इति** ॥ अनेन सच्छब्दस्य निर्विशेषब्रह्मपरत्वे ''तदैक्षत तत्तेजोऽसृजत'' इत्यादिपरामर्शानुपपत्तिः । निर्विशेषस्य स्रष्टृत्वाद्ययोगात् । मायाशबलस्य सच्छब्दानुक्तत्वादिति सूचितं भवति । ''तेजआख्यां श्रियम्'' इत्यादिना तेजोऽबन्नशब्दाः भूतमात्रपरा इति व्याख्यानं निरस्तम् । ''तत्तेज ऐक्षत'', ''ता आप ऐक्षन्त'' इतीक्षणकर्तृत्वलिङ्गेन चेतनत्वावगमात् । नच ''कूलं पिपतिषति'' इत्यादिवदीक्षणमुपचरितमिति वाच्यम् । ''तदैक्षत'' इत्यस्याप्युपचरितत्वप्रसङ्गेन प्रधानस्यैव जगत्कारणत्वप्रसङ्गात् । अन्यथा प्रायपाठविरोधात् । अभिमान्यधिकरणन्यायेन तेजोऽबन्नशब्दानां देवतापरत्वाच्च । अस्ति चात्रापि ''इमास्तिस्रो देवताः'' इत्यादिबहुशो देवताश्रुत्यभ्यासः । तदिदं वक्ष्यति – **ईक्षणादिना चेतनत्वावगतेरिति** ॥

किञ्च भूतसृष्टिविवक्षायां ''आत्मन आकाशः'' इत्यादाविवाऽऽकाशाद्यारभ्यैव सृष्टिः कुतो नोक्ता ? आकाशवायुसर्गानन्तरं ''तत्तेजोऽसृजत'' इत्यर्थाङ्गीकारेऽश्रुतकल्पनापातात् । सृष्टिक्रमा-

विवक्षायां तेजोऽबन्नेष्वपि व्यत्यासोक्त्यापातात् । भूतविवक्षायां पञ्ची-करणस्यैव विवक्षणीयत्वेन त्रिवृत्करणविवक्षाया अप्ययोगात् । तस्माद् भगवतः प्रथमोत्पन्नत्वेनोच्यमानास्तेजआद्या लक्ष्म्यादय एव । तदिद-मुक्तम्– **प्रथममिति** ।। वक्ष्यति च प्राथम्याच्च तेजआद्या लक्ष्म्यादय इति सिद्धमिति ।। तर्ह्यत्र भूतमपि विवक्षितं न वा । विवक्षितमिति ब्रूमः । नच प्राथम्यरूपयुक्तिकथनविरोधः । प्रत्यक्षभूतेषु तेजसः प्राथम्याभिप्रायेण तदुपपत्तेः । अन्यथा महत्तत्वादेः सत्त्वेन ''आत्मन आकाशः'' इत्याकाशस्यापि प्राथम्यानुपपत्तेः । ईक्षणाद्युक्तिश्च ''सोमो वै राजा गन्धर्वेष्वासीत्'' इतिवदभिमानिविवक्षया भविष्यति । तथाचोक्तम्–

''अभिमन्यमानसहितास्त्रय एते अभिमानिनः ।
विष्णोर्जाताः क्रमेणैव पूर्वस्मादुत्तरोत्तम् ।।'' इति ।

ननु ''तेजआख्यां श्रियम्''इति कथम् ? तेजःशब्दस्य तत्र रूढेरभावादिति चेत्, न । द्योतमानत्वलक्षणतेजस्त्वस्य सत्त्वेन रूढेरनावश्यकत्वादिति भावेनोक्तम्– **देवीं** द्योतमानामिति ।। ''सदेव सोम्येदमग्र आसीत्'' इत्युक्तत्वेऽप्यस्याः प्रलये नाभावः शङ्कनीय इति भावेनोक्तम्– **सतीमिति** ।। अनादितो विद्यामानामित्यर्थः । नचैवं ब्रह्मणः सकाशात् सर्जनानुपपत्तिः । रूपान्तरेण सत्या अपि रूपान्तरेण सर्जनोपपत्तेः । नच तत्र मानाभावः । तेजःशब्दस्यैव तदव-गमकत्वादिति भावेन तं शब्दं तस्यां द्वेधा निर्वक्ति– **तत इति** ।। तते व्याप्ते नारायणे स्थितेन रूपेण यतः सा सदाऽजैव हि प्रसिद्धा तस्मात् सा तेज इत्युच्यत इत्यर्थः । अनेन ते स्थितेन रूपेण न जायत इति तेज इति व्याख्यातम् । तते व्याप्ते भगवति निमित्ते सत्येव

रूपविशेषेण जनेर्वा तेज इत्युच्यत इत्यर्थः । तदेव विवृणोति– **यदिति** ॥ "तेन रूपेण" इति शेषः । तेजोऽभिमानवान् ब्रह्मेति व्याख्यानं त्ववान्तराभिमानिविवक्षयेत्यवगन्तव्यम् ।

"तदपोऽसृजत" इत्येतद्व्याचष्टे– **मन्वाख्य इति** ॥ विद्याख्यं मन्वाख्य इति ग्रन्थान्तराविरोधायोक्तम् । तदर्थमेवाऽह– अथ प्राणोत्पत्त्यनन्तरं ब्राह्मणादिचतुर्वर्णाभिमानी ब्रह्मा चास्या जायत इति । वायुरेव ब्रह्मा भवितुमर्हतीति दर्शयितुं वायोः सृष्टिः प्रथममुक्ता ।

"वायुरेव यतो ब्रह्मपदं नियमतो व्रजेत् ।
सहैव जननेऽप्यस्मात् पूर्वं वायोर्जनिं वदेत् ।
कचित्तु ब्रह्मणः पूर्वं प्राधान्यात् तत्पदस्य च ॥" इति ब्रह्मतर्कवचनात् । प्राणस्यैव विशेषणमेतदित्यप्याहुः ।

"ता अन्नमसृजन्त" इत्येतद् व्याचष्टे– **ततश्चेति** ॥ जायत इत्यनुवर्तते । नन्वत्र तेजोऽबन्नशब्दानां देवतार्थत्वे "तस्माद् यत्र क्वच शोचति स्वेदते वा पुरुषस्तेजस एव तद्ध्यापो जायन्ते" इत्युक्तिरयुक्ता । नहि देवतयोः कार्यकारणभावे भूतयोः कार्यकारणभावोक्तिः प्रमाणमित्यतोऽभिमन्यमानसहितानामेवात्र विवक्षितत्वान्नानुपपत्तिरिति भावेनाऽह– **तेजःसंस्थेति** ॥ तेजस एव प्रसिद्धात् । घर्मादिरूपात् स्वेदादिरूपा आपो जायन्त इत्यर्थः । "तस्माद् यत्र क्वच वर्षति तदेव भूयिष्ठमन्नं भवति" इत्येतदपि घटयति – **अन्नस्थित इति** ॥ ननु श्रुत्यन्तरे "अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम्" इति ओषधीभ्योऽन्नसृष्टेरुक्तत्वेन कथमत्राद्भ्योऽन्नसृष्टिरुच्यत इत्यत आह– **पृथिवी त्विति** ॥ नात्रान्नशब्देन प्रसिद्धान्नमुच्यते । किन्तु पृथिव्येव । भूताधिकारत्वात् । "यत्कृष्णं तदन्नस्य" इति कृष्णरूपश्रवणात् ।

कार्ष्ण्यप्रचुरा च पृथिवी । नान्नस्य तथा विशेषः । ''पृथिवी वा अन्नम्'' इत्यादिशब्दान्तरादन्नशब्दस्य पृथिव्यां शक्तिमत्त्वाच्चेति भावः । तथा च सूत्रम्– **''पृथिव्यधिकाररूपशब्दान्तरादिभ्यः''** (ब्र.सू. २-३-१२) इति ॥ **द्वितीयः खण्डः** ॥

## ततश्चेयं खण्डस्याक्षरयोजना

हे सोम्य सदेव सर्वोत्तमत्वात् सन्नामकं नारायणाख्यं ब्रह्मैव इदमग्रे अस्याग्रे आसीत् । ननु नारायणावयवगुणकर्मादीनां सत्त्वात् कथं सदेवेत्युक्तमित्यत आह– **एकमेवेति** ॥ एकमभिन्नं स्वावयवादिना । एकमपि घटादिकमवयवभेदवदुपलब्धमत एवेत्युक्तम् । तथाऽपि रमादीनां तदा सत्त्वात् कथं ''सदेव'' इत्युक्तमित्यत आह– **अद्वितीयमिति** ॥ समानवर्जितम् अधिकवर्जितमिति किमु वक्तव्यमिति भावः । रमादीनां सर्वेषां नीचत्वमभिप्रेत्य ''सदेव'' इत्युक्तमिति तात्पर्यम् । स्वोक्तार्थदाढर्याय शून्यत्वादिपक्षं दूषयितुमनुवदति – **तदिति** ॥ तत्तत्र जगत्कारणे निरूपणीये । एके शून्यवादिनः । आहुर्ह प्रसिद्धम् । किमाहुः ? असदेवेदमग्र आसीत् । अत्रासच्छब्देन शून्यमुच्यते । ''एकमेव'' इति स्वकार्यपतितमन्यन्नास्तीत्येकमेवोच्यते । शून्यातिरेकेण शून्यस्य सहकारिकारणं द्वितीयं प्रतिषिध्यते – **अद्वितीयमिति** ॥ विप्रतिपत्त्यन्तरमाह– **तस्मादिति** ॥ तस्मादसतः सज्जगदुत्पद्यत इति ॥ १ ॥

एवमनूदितं पक्षं दूषयति – **कुत इति** ॥ तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । हे सोम्य एवमसदासीदिति कुत एव स्यात् ? न कुतोऽपि । व्याहतेः । प्रामाणाभावाच्चेति होवाच । विप्रतिपत्त्यन्तरं दूषयति– **कथमिति** ॥ कथमसतः सदुत्पद्येत । अदृष्टत्वादसतः कारणत्वानुपपत्तेरिति भावः ।

''इति होवाच'' इति सम्बन्धः । एवं पूर्वपक्षमुन्मथ्य स्वपक्ष-सिद्धिमुपसंहरति– **सत् त्वेवेति** ।। तुशब्दस्तस्मादित्यर्थे । तस्मात् ''सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'' इति सिद्धमित्यर्थः ।। २ ।।

तस्य प्रलयवर्तिनः सदाख्यब्रह्मणः सृष्टिकाले प्राप्ते कर्तव्यव्यापारमाह– **तदिति** ।। तत् सदाख्यं ब्रह्मैक्षत विचारमकरोत् । किमिति ? अहं बहु स्यां जगन्नियामकतया बहुरूपः[१] स्याम् । तदर्थं प्रजायेय सृज्यं प्रजनयेयमिति । तदित्थं विचिन्त्य तेजोऽसृजत । तेजोनामकरमासहितं तदभिमन्यमानं तेजोभूतमसृजतेत्यर्थः । तत्तेजो रमारूपमैक्षत । अहमपि बहुरूपं स्यां तदर्थं जगदुत्पादयामीति । इत्थं विचिन्त्य तत्तेजोऽपोऽसृजत । अम्नामकप्राणसहितं तदभिमन्यमान-मबाख्यं भूतमसृजतेत्यर्थः । अपां तेजःकार्यत्वे प्रमाणमाह– **तस्मा-दिति** ।। यस्मादादावाप एव तेजसो जायन्ते तस्मादेवाद्यापि पुरुषः यत्र क्व च देशे काले वा शोचति रोदिति । स्वेदते वा स्विद्यते वा तेजस एव । ताश्च ता आपश्चेति तदापो जायन्त इति हि प्रसिद्धम् । अन्वयव्यतिरेकसिद्धत्वात् ।। ३ ।।

एवं तेजःसृष्टास्ता आप ऐक्षन्त तदभिमानी मुख्यप्राणो व्यचिन्त-यत् । ''बह्व्य्'' इति पूर्ववत् । इत्थं विचिन्त्य ता आपोऽन्नमसृजन्त । अन्ननामकरुद्रसहितं तदभिमन्यमानं पृथिव्याख्यं भूतमसृजन्तेत्यर्थः । पृथिव्या अप्कार्यत्वमुपपादयति – **तस्मादिति** ।। तस्मादन्नस्याप्-कार्यत्वादेव यत्र क्व च देशे काले वा वर्षति तत्तत्रैव भूयिष्ठमन्नम् अन्नाद्यं भवति । अन्यथासिद्धिं निरस्यति – **अद्भ्य एवेति** ।। तदन्नाद्यं

---

१. 'बहुरूपं' इति मुद्रितपुस्तके ।

प्रसिद्धान्नप्रभृतिपार्थिवमद्भ्य एव जायते नान्यस्मादित्यर्थः ॥ ४ ॥

॥ इति द्वितीयः खण्डः ॥

## उपनिषत् (खण्डः –३)

*नामरूपात्मकप्रपञ्चस्य सृष्टिकथनम्*

तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥

सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥

तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोद् यथा तु खलु[१] सोम्येमास्तिस्रो देवतास्त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ३ ॥ ३ ॥

### भाष्यम्

सृष्टेष्वेतेषु भगवानीक्षाञ्चक्रे स केशवः ।
जीवाख्येनैव रूपेण योऽनिरुद्ध इति स्मृतः ॥
तेन रूपेण लक्ष्म्यादीन् प्रविष्टो रूपनामनी ।
करिष्ये त्रिवृतश्चैतानेकैकं करवाणि च ॥
इति मत्वा प्रविश्याथ तेभ्य इन्द्रादिनामपि ।

---

१. 'यथा नु खलु' क.

**नामरूपाणि कृतवांस्तांश्चान्योन्यप्रवेशिनः ।**
**कृत्वाऽग्निसोमसूर्यादिष्वेतांस्त्रीन् विदधे[1] पुनः ॥३ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''सेयं देवता'' इत्यादि ''करवाणि'' इत्यन्तं वाक्यं प्रसिद्धजीव-रूपेणेति प्रतीतिं निवारयन् ससङ्गतिकं व्याचष्टे– **सृष्टेष्विति** ॥ ''सेयं देवता'' इत्यादि ''नामरूपे व्याकरोत्'' इत्यन्तं वाक्यं ससङ्गतिकं व्याचष्टे– **इति मत्त्वेति** ॥ तेभ्य इन्द्रादिनामिन्द्रादीनामिति शेषोक्तिः । ''तासां त्रिवृतं त्रिवृतमेकैकामकरोत्'' इत्येतद्व्याचष्टे – **तांश्चेति** ॥ ताँल्लक्ष्म्यादींश्चान्योन्यप्रवेशिनः कृतवानित्यनुवर्तते । यदग्नेरित्याद्युत्तर-प्रकरणं सङ्गमयितुमाह– **कृत्वेति** ॥ तांश्चान्योन्यप्रवेशिनः इत्यनुवर्तते । एताँल्लक्ष्म्यादीन् पुनर्विदधे पुनःप्रवेशितवान् ॥ तृतीयः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

एवमुत्पन्नानां तेजोऽबन्नानां सर्वभूतकारणत्वरूपमाहात्म्यमाह– **तेषामिति** ॥ तेषां प्रसिद्धानामेषां वक्ष्यमाणानां भूतानां त्रीण्येव खलु प्रागुक्ततेजोऽबन्नान्येव बीजानि कारणानि । एषामित्युक्तभूतान्ये-वाऽह– **अण्डजमिति** ॥ अण्डजं पक्ष्यादि, जीवजं जरायुजं मनुष्यादि, भुवमुद्भिद्य जायत इत्युद्भिज्जं वृक्षादि इत्येषामित्यन्वयः ॥ १ ॥

भूतसहिततेजोबन्नाख्यदेवतात्रयसृष्ट्यनन्तरं भगवद्व्यापारमाह– **सेयमिति** ॥ सेयं सदाख्यादेवतैक्षत । हन्तेत्यास्वादने । अहमिमाः पुरा

---

१. 'निदधे' ह.

प्रसिद्धान्नप्रभृतिपार्थिवमद्भ्य एव जायते नान्यस्मादित्यर्थः ॥ ४ ॥

॥ इति द्वितीयः खण्डः ॥

उपनिषत् (खण्डः –३)

*नामरूपात्मकप्रपञ्चस्य सृष्टिकथनम्*

तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥

सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥

तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोद् यथा तु खलु[१] सोम्येमास्तिस्रो देवतास्त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ३ ॥ ३ ॥

भाष्यम्

सृष्टेष्वेतेषु भगवानीक्षाञ्चक्रे स केशवः ।
जीवाख्येनैव रूपेण योऽनिरुद्ध इति स्मृतः ॥
तेन रूपेण लक्ष्म्यादीन् प्रविष्टो रूपनामनी ।
करिष्ये त्रिवृतश्चैतानेकैकं करवाणि च ॥
इति मत्वा प्रविश्याथ तेभ्य इन्द्रादिनामपि ।

---

१. 'यथा नु खलु' क.

**नामरूपाणि कृतवांस्तांश्चान्योन्यप्रवेशिनः ।**
**कृत्वाऽग्निसोमसूर्यादिष्वेतांस्त्रीन् विदधे[१] पुनः ॥३ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''सेयं देवता'' इत्यादि ''करवाणि'' इत्यन्तं वाक्यं प्रसिद्धजीव-रूपेणेति प्रतीतिं निवारयन् ससङ्गतिकं व्याचष्टे– **सृष्टेष्विति** ॥ ''सेयं देवता'' इत्यादि ''नामरूपे व्याकरोत्'' इत्यन्तं वाक्यं ससङ्गतिकं व्याचष्टे– **इति मत्त्वेति** ॥ तेभ्य इन्द्रादिनामिन्द्रादीनामिति शेषोक्तिः । ''तासां त्रिवृतं त्रिवृतमेकैकामकरोत्'' इत्येतद्व्याचष्टे – **तांश्चेति** ॥ ताँल्लक्ष्म्यादींश्चान्योन्यप्रवेशिनः कृतवानित्यनुवर्तते । यदग्नेरित्याद्युत्तर-प्रकरणं सङ्गमयितुमाह– **कृत्वेति** ॥ तांश्चान्योन्यप्रवेशिनः इत्यनुवर्तते । एताँल्लक्ष्म्यादीन् पुनर्विदधे पुनःप्रवेशितवान् ॥ तृतीयः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

एवमुत्पन्नानां तेजोऽबन्नानां सर्वभूतकारणत्वरूपमाहात्म्यमाह– **तेषामिति** ॥ तेषां प्रसिद्धानामेषां वक्ष्यमाणानां भूतानां त्रीण्येव खलु प्रागुक्ततेजोऽबन्नान्येव बीजानि कारणानि । एषामित्युक्तभूतान्ये-वाऽह– **अण्डजमिति** ॥ अण्डजं पक्ष्यादि, जीवजं जरायुजं मनुष्यादि, भुवमुद्भिद्य जायत इत्युद्भिज्जं वृक्षादि इत्येषामित्यन्वयः ॥ १ ॥

भूतसहिततेजोबन्नाख्यदेवतात्रयसृष्ट्यनन्तरं भगवद्व्यापारमाह– **सेयमिति** ॥ सेयं सदाख्यादेवतैक्षत । हन्तेत्यास्वादने । अहमिमाः पुरा

१. 'निदधे' ह.

गृष्टाः । तिस्रो देवताः तेजोबन्ननामकलक्ष्मीप्राणरुद्ररूपाः । अनेन जीवेन जीवनामकेनानिरुद्धाख्येनाऽत्मना स्वात्मानाऽन्तर्यामिरूपेणानुप्रविश्य नामरूपे व्याकरणवाणीत्यैक्षत ॥ २ ॥

विचारान्तरमाह– **तासामिति** ॥ तासां देवतानां मध्ये एकैकां त्रिवृतं त्रिवृतमन्योन्यप्रविष्टां करवाणीति चैक्षत । इति मत्वा सेयं देवतेमास्तिस्रो देवताः अनेन जीवेनाऽत्मनाऽनुप्रविश्य ताभ्यः इन्द्रादीनां नामरूपे व्याकरोत् व्याकृतवती । तासां देवतानां मध्ये एकैकां त्रिवृतं त्रिवृतमन्योन्यप्रविष्टां चाकरोत् । एवं ताः अन्योन्यप्रविष्टाः कृत्वाऽग्निसोमसूर्यादिषु पुनर्विदध इति वक्तव्यम् ॥

नन्वन्योन्यप्रविष्टानां तेजोबन्नाख्यदेवतानां पुनरग्न्यादिषु प्रवेशे एकैकत्र कार्यत्रयेण भाव्यम् । तत्कथमित्यतस्तद्वक्तुं प्रतिजानीते – **यथा त्विति** ॥ हे सोम्य इमास्तिस्रो देवताः एकैकाऽप्यग्न्यादौ त्रिवृत्त्रिवृद् यथैव भवति येन प्रकारेण भवति तन्मे विजानीहीति होवाच ॥ ३ ॥

**॥ इति तृतीयः खण्डः ॥**

## उपनिषत् (खण्डः - ४)

*सृष्टेः लक्ष्मीप्राणरुद्रद्वारा भगवदधीनत्वनिरूपणम्*

**यदग्ने रोहित९ रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत् कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥**

**यदादित्यस्य रोहित९ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्**

कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं[१] वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ २ ॥

यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं[२] वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥

यद् विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागाद् विद्युतो विद्युत्त्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥

एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ते ह्येभ्यो विदाञ्चक्रुः ॥ ५ ॥

यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद् विदाञ्चक्रुर्यदु शुक्लमिवाभूदित्यपाꣳरूपमिति तद् विदाञ्चक्रुर्यदु कृष्णमिवा-भूदित्यन्नस्य रूपमिति तद् विदाञ्चक्रुः ॥ ६ ॥

यद्वविज्ञातमिवाभूदित्येतासामेव देवतानाꣳ समास इति तद्विदाञ्चक्रुर्यथा तु खलु[३] सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥ ४ ॥

भाष्यम्

अतो यल्लोहितं रूपं श्रियस्तद्रूपसम्भवम् ।

---

१. 'आदित्यस्याऽदित्यत्वम्' ह. २. 'चन्द्रमसश्चन्द्रत्वम्' ह. ३. 'यथा नु खलु' क.

यच्छुक्लं वायुजं विद्यात् कृष्णं चैव शिवोद्भवम् ॥
तस्मादग्नेर्यदत्तृत्वमग्निनामप्रवर्तकम् ।
लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः ॥
मुख्यैवमाददानत्वमादित्यस्य तदुद्भवम् ।
अत आदित्यनामैषां नैवाऽदित्यस्य मुख्यतः ॥
यच्चन्द्राह्लादकत्वं च तत्तेषां चन्द्रता तथा ।
विद्युद्विद्योतनं चैषां[१] ततस्ते सर्वनामिनः ॥
तथैव सर्वरूपं च तद्रूपप्रतिबिम्बितम् ।
सर्वरूपाश्च ते तस्माल्लोहितादिक्रमेण तु ॥

## पदार्थकौमुदी

### भाष्यार्थः

इदानीं "यदग्ने रोहितं रूपम्" इत्यादि व्याचष्टे– **अत इति** ॥ लक्ष्म्यादीनामग्न्यादिषु प्रविष्टत्वादित्यर्थः । "अग्निसोमसूर्यादिषु" इत्येतदनुवर्तते । वायुजं वायुरूपजं शिवोद्भवं शिवरूपोद्भवम् । श्रौतसामानाधिकरण्यव्यपदेशस्तु "ब्राह्मणोऽस्य मुखमासीत्" इत्यादिवज्जन्यजनकभावाभिप्रायेणेति भावः । "अपागादग्नेरग्नित्वम्" इत्यसङ्गतं किमुच्यत इत्यतो मध्ये वक्तव्यमाह– **तस्मादिति** ॥ श्रीवायुशिवरूपजन्यरूपवत्त्वेन तदधीनत्वादग्नेरग्निनामप्रवर्तकं यदत्तृत्वं तल्लक्ष्म्यादिदेवतानामेव मुख्यमित्यर्थः । अतोऽग्निनाम तासामेव मुख्यमिति भावः । इदानीं "अपागादग्नेरग्नित्वम्" इत्येतद्व्याचष्टे–

---

१. 'तेषां' क.

**नैवेति** ॥ ततोऽग्निनामप्रवर्तकस्यात्तृत्वस्य तदाविष्टलक्ष्म्यादिष्वेव मुख्यत्वादग्नेरग्निताऽत्तृत्वलक्षणा मुख्या नैवेत्यर्थः । ततो लक्ष्म्यादेरित्यवधिनिरूपणं वा । अतोऽग्निनाम नाग्नौ मुख्यमिति भावः । "[1] अपागादादित्यस्याऽदित्यम्" इत्येतदप्येवं व्याख्येयमिति भावेनाऽह– **एवमिति** ॥ यथाऽग्नित्वमेवमादित्यस्याऽदित्यनामप्रवर्तकमाददानत्वमपि लक्ष्म्यादिदेवतानामेव मुख्यं नाऽदित्यस्येति योजना । कुत इत्यत आह– **आदित्यस्येति** ॥ यस्मादादित्यस्य तद् रूपं तदुद्भवं लक्ष्म्यादिदेवतारूपोद्भवं तत् तस्मादित्यर्थः । अस्त्वाददानत्वं लक्ष्म्यादीनामेव मुख्यं नाऽदित्यस्य, किं तत इत्यत आह– **अत इति** ॥ एषामेव मुख्यतो वर्तत इति सम्बन्धः । "अपागाच्चन्दाच्चन्द्रत्वम्" इत्येतत्तात्पर्यमाह– **यदिति** ॥ यथाऽऽददानत्वं तथा यच्चन्द्रस्याऽह्लादकत्वं चन्द्रता चन्द्रशब्दप्रवृत्तिनिमित्तं तत्तेषामेव मुख्यं, न चन्द्रस्य । तद्रूपोद्भूतरूपत्वेन तस्य तदधीनत्वात् । अतश्चन्द्रनामैषामेव । नैव चन्द्रस्य मुख्यत इत्यर्थः ।

"अपागाद् विद्युतो विद्युत्वम्" इत्येतत्तात्पर्यमाह– **विद्युदिति** ॥ विद्युतो विद्योतनं विद्योतकत्वमपि तेषामेव मुख्यं, न विद्युतः उक्तादेव हेतोः । अतो विद्युन्नामैषामेव । नैव विद्युतो मुख्यत इत्यर्थः । एतेन "वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्" इति वाक्यचतुष्टयमपि तात्पर्यतो व्याख्यातम् । नन्वेतावताऽग्न्यादिनामचतुष्टयमुख्यार्थत्वं लक्ष्म्यादीनां प्राप्तम् । तावता कोऽतिशयस्तेषामित्यत आह– **तत इति** ॥ तत्तद्देवताशब्दप्रवृत्तिनिमित्तस्य तेष्वेव मुख्यत्वात् ते सर्वदेवनाममुख्यवाच्या इत्यर्थः । तत्तद्देवताशब्द-

१. "अपागादादित्यादादित्यत्वम्" इति मातृकायाम् ।

प्रवृत्तिनिमित्तस्य तत्रैव मुख्यत्वं कुत इत्यत आह– **तथैवेति** ॥ यथाऽग्न्यादिरूपं तथैव सर्वदेवतारूपं च रोहितादिकं तद्रूपोत्पन्नं तस्मात् तत्तच्छब्दप्रवृत्तिनिमित्तं तेषामेवेत्यर्थः । एवं च श्रुतौ "यद्विद्युतो रोहितं रूपम्" इत्यादिकमुपलक्षणम् । "यन्मित्रस्य रोहितं रूपम्" इत्याद्यपि ग्राह्यम् । अत एवाग्न्यादिदेवताचतुष्टयोपादानम् । ततश्च यद् रोहितमिवाभूदिति तेजसस्तद्रूपमिति सामान्यतो विद्वत्सम्मतिकथनमपि नासङ्गतमिति भावः । स्यादेतत् । यद्यग्न्यादिसर्वदेवतारूपं तद्रूपोत्पन्नमित्येतदेव स्यात् । तदेव कुत इत्यत आह– **सर्वरूपा इति** ॥ चो यस्मादित्यर्थे । यस्मादग्न्यादिसर्वदेवतारूपं तद्रूपप्रतिबिम्बितं तस्मादेव ते अग्न्याद्याः सर्वे देवाः लोहितादिक्रमेण सर्वरूपवन्तः । अन्यथा तन्न स्यात् । स्वतो रूपशून्यत्वात् तेषामित्यर्थः ।

भाष्यम्

**अतोऽन्यनामधेयं तु वाचाऽऽरम्भणहेतुतः ।**
**साङ्केत्येन विकारः स्यात् त्रयाणामेव नित्यता ॥**
**यथा लक्ष्म्यादिकानां च नाम सङ्केततोऽन्यगम् ।**
**वाचाऽऽरम्भणहेतोस्तद् विकारो नैव मुख्यतः ॥**
**मुख्यं नाम त्रिरूपाणीत्याद्यं वेदोदितं परम् ।**
**अतस्तदेव सत्योक्तं मुख्यं सत्यमितीर्यते ॥**
**इन्द्रादिनामरूपाणि यथैव त्रिषु मुख्यतः ।**
**तदधीनत्वतस्तेषामेषामुच्चबलत्वतः ॥**
**शिवनामानि रूपाणि तथा वायोस्तु मुख्यतः ।**

**तदीयानि तथा लक्ष्म्यास्तदीयानि हरेस्तथा ॥**

**तस्मात् स एव सर्वेशः सर्वरूपः स एव च ।**

**सर्वनामा स एवैकः सर्वशक्तिस्तथैव च ।**

**अन्येषां यच्च रूपाद्यं तत् तस्मात् प्रतिबिम्बितम् ॥**

## पदार्थकौमुदी

### भाष्यार्थः

इदानीं ''वाचाऽऽरम्भणं विकारो नामधेयम्'' इत्येतत् स्पष्टं व्याचष्टे– **अत इति** ॥ अन्यवाचकत्वेन प्रसिद्धमप्यग्निरित्यादि-नामधेयमन्यत्र विकारोऽमुख्य एव । कुतः ? वाचारम्भणहेतुतः । अनेन ''वाचाऽऽरम्भणम्''इति हेत्वर्थगर्भमित्युक्तं भवति । तस्यैव विवरणम्– **साङ्केत्येनेति** ॥ वाचाऽऽरम्भणशब्दस्य साङ्केत्यपर्यायित्वस्य सुधायामुक्तत्वात् । तत्र हेतुः – **अत इति** ॥ अग्न्यादिशब्दप्रवृत्ति-निमित्तस्याग्नित्वादेर्लक्ष्म्यादावेव मुख्यत्वेनाग्न्यादिनाम्नां मुख्यतः तन्ना-मत्वादत्र सङ्केतितत्वमित्यर्थः । ''त्रीणि रूपाणीत्येव सत्यम्'' इत्यस्य तात्पर्यमाह– **त्रयाणामेवेति** ॥ नित्यता अग्न्यादिशब्दमुख्यार्थतेत्यर्थः। इदं च स्फुटीकरिष्यत्याचार्यः । वाचारम्भणवाक्यस्योक्तार्थे दृष्टान्त-व्युत्पादनपरतयाऽपि तदेव वाक्यं व्याचष्टे– **यथेति** ॥ यथा लोके लक्ष्म्यादिकानामेव नाम लक्ष्मीरित्यादिकं वाचारम्भणहेतोः । कोऽर्थः ? सङ्केततोऽन्यगं स्त्रीपुंसादिपिण्डगतं तत्तस्मात् सङ्केततोऽन्यगत्वात् तन्नाम तत्र विकार एव । न मुख्यतो वर्तते । तथाऽन्यनामधेयमिति पूर्वेण सम्बन्धः ।

ननु यद्यग्न्यादिनामधेयानामपि लक्ष्म्यादौ मुख्यत्वं तर्हि ''त्रीणि रूपाणीत्येव सत्यम्'' इति त्रीणि रूपाणीति नामधेयस्यैव मुख्यत्वोक्तिविरोध इत्यतस्तदभिप्रायमाह– **मुख्यमिति** ॥ ''त्रीणि रूपाणि'' इत्यस्य बहुशः [1]सत्त्वादाद्यमित्युक्तम् । ''त्रीणि रूपाणि'' इति वेदोदितं नाम परं मुख्यं देवतान्तरे सङ्केतं विना तत्रैव मुख्यत्वात् । यथा भगवति नारायणादि नाम । अतोऽग्न्यादिनाम्नामपि तत्रैव मुख्यत्वेऽपि तदेव त्रीणि रूपाणीत्यादिनामैव सत्योक्तं सत्यमित्युक्तमित्यर्थः ।

मिथ्यात्वशङ्काभावात् सत्यत्वोक्तिरसङ्गतेत्यत आह– **मुख्यमिति** ॥ तेभ्य इन्द्रादीनामपि । ''नामरूपाणि कृतवान्'' इत्यादिनेन्द्रादीनामग्न्यादीनां च सर्वेषां देवानां नामरूपाणि लक्ष्म्यादिष्वेव मुख्यानीत्युक्तम् । एवं [2]सति त्रयाणां साम्यप्रतीतावाह– **''इन्द्रादि'' इत्यादिना ''लक्ष्म्याः'' इत्यन्तेन** । तत्र हेतुः – **तदधीनत्वतस्तेषाम्** इन्द्रादीनामिति ॥ तत्रापि हेतुः – **एषां लक्ष्म्यादित्रयाणामिति** ॥ ''नामानि सर्वाणि यमाविशन्ति'', **''रूपोपन्यासाच्च''** (ब्र.सू. १-२-२३) इत्यादिविरोधपरिहारायाऽऽह– **तदीयानि हरेरिति** ॥ यस्मात् तदीयान्यपि नामरूपाणि हरेरेव मुख्यतः तस्मात् स एव सर्वरूपः । स एव सर्वनामा चोक्तः । तत्र हेतुः – **सर्वेश इति** ॥ तत्रापि हेतुः – **तथैव स एक एव सर्वशक्तिश्चेति** ॥ ननु ''स एव सर्वरूपः सर्वनामा च'' इत्यनुपपन्नम् । अन्येषामपि रूपादिमत्त्वादित्यत आह– **अन्येषामिति** ॥ तस्माद्धरिरूपादेः ।

१.'सत्त्वादित्याद्यम्' इति मुद्रितपुस्तके २. 'एवं सत्रतियाणां' इति हस्तलिखिते ।

## भाष्यम्

*सर्वस्य भगवदधीनत्वान्नाहङ्कृतिः कार्या*

एक एवाद्वितीयोऽसावतः सर्वोत्तमत्वतः ॥

मुख्यत्वादेव सन्नामा सत्ततिज्ञानरूपतः ।

सत्यमित्युच्यते विष्णुः स त्वं नासि कथञ्चन ॥

अतोऽनूचानमानी त्वं स्तब्धोऽसि कुत एव तु ।

त्वत्तोऽधिका अपीन्द्राद्यास्तदुच्चाश्च श्रियादयः ॥

सर्वोच्चो भगवान् विष्णुर्न स्तम्भोऽस्यापि हि क्वचित् ।

अतो न विद्वन्मानी स्या महानस्मीति वा मनः ॥

न ते स्यान्नैव च स्तम्भो ज्ञात्वा विष्णोर्बलं परम्[१] ।

न हि विष्णोर्बलं ज्ञात्वा स्तम्भहेतुः कथञ्चन ॥' इत्यादि सामसंहितायाम् ॥ ४ ॥

## पदार्थकौमुदी

### भाष्यार्थः

ननु देवो वा केशवांशो वेति मन्यमानं स्तब्धं श्वेतकेतुं प्रति तन्निरासाय ''सदेव सोम्य'' इत्यादिकमुपदिश्यते । कथमनेन तन्निरासो जात इत्यत आह– **एक एवेति** ॥ यत एक एवाद्वितीय इत्याद्युच्यते अतः ''स त्वं नासि कथञ्चन'' इति सम्बन्धः । ''सत्तति-ज्ञानरूपतः सत्यमित्युच्यते । स त्वं नासि कथञ्चन'' इति । तत्सत्यम् अतत्त्वमसि श्वेतकेतो इत्यस्यार्थः । यद्यपीदं वाक्यमुत्तर-

१. 'परं बलम्' क

नवप्रकरणीगतमेव । तथाऽपि ''स य एषोऽणिमैतदात्म्यम्'' इत्यादि-वाक्यमत्रापि ग्राह्यमित्यनेन अवगम्यते । ततश्च किमित्यत आह– **अत इति** ॥ नन्वेवं तर्हि '' सदेव सोम्येदमग्र आसीत्'', ''एकमेवा-द्वितीयम्'', ''स एषोऽणिमैततदात्म्यम्'' इत्यादिकमेवालम् । तेजोऽबन्नसृष्टिस्तेभ्य इन्द्रादीनां नामरूपसृष्टिश्च किमर्थमुच्यते ? स्तम्भनिरासानुपयोगादित्यत आह– **त्वत्तोऽधिका इत्यादिना** ॥ ''श्रियादयः'' इत्यादिपदेन वाय्वादिग्रहणम् । महानस्मीति वा मनस्ते तव न स्यात् ॥ **चतुर्थः खण्डः** ॥

## ततश्चेयं खण्डस्याक्षरयोजना

प्रतिज्ञातमाह– **यदग्नेरित्यादिना** ॥ अग्नेर्यद् रोहितं लोहितं रूपं तत्तेजसो रूपं तेजोनामकश्रीरूपसम्भवं विद्यात् । अग्नेर्यच्छुक्लं रूपं तदपां रूपं वायुरूपजन्यं विद्यात् । अग्नेर्यत्कृष्णं रूपं तदन्नस्य रूपं शिवरूपोद्भवं विद्यादित्यर्थः । एवं तेजोबन्नाधीनत्वादग्नेरग्नित्वमग्निनाम-प्रवृत्तिनिमित्तभूतमत्तृत्वरूपमग्नेरपागात् मुख्यतो नास्ति । किन्तु लक्ष्म्यादीनामेव मुख्यतोऽस्ति । ततश्चाग्नेरग्निरिति नामधेयं वाचारम्भणं साङ्केतिकम् । लक्ष्म्यादीनामेवान्यत्र व्यवहारार्थं समाकृष्टमिति यावत् । अतो विकारोऽमुख्यमित्यर्थः । यथा प्रसिद्धस्त्रीपुंसपिण्डे लक्ष्म्यादिनाम वाचारम्भणं साङ्केतिकम् अतो विकारोऽमुख्यं तथैवेत्यपि योज्यम् । तर्हि क्व तन्मुख्यमित्यत आह– **त्रीणीति** ॥ अग्निरिति नामधेयं त्रयाणामेव सत्यं मुख्यमित्यध्याहारेणाऽदौ योज्यम् । तर्हि देवतान्तरे प्रयुज्यमानं त्रयाणां नामधेयं किमित्यपेक्षायामुक्तम्– **त्रीणीति** ॥ त्रयाणां त्रीणि रूपाणीत्येव नामधेयं सत्यं परं मुख्यमित्यर्थः । ''त्रीणि रूपाणीति नामधेयम्'' इत्यनेन तेजोबन्नानीति नामधेयानि वा । तथाभूतमेव वा

नामधेयं विवक्षितमिति ॥ १ ॥

एवमुत्तरत्रापि । आदित्यत्वमाददानत्वम् ॥ २ ॥

चन्द्रत्वमाह्लादकत्वम् ॥ ३ ॥

विद्युत्त्वं विद्योतकत्वम् । उपलक्षणमेतत् । ''यन्मित्रस्य रोहितं रूपम्'' इत्याद्यपि ग्राह्यम् ॥ ४ ॥

येन ''अश्रुतं श्रुतं भवति'' इत्यारभ्य ''यदग्ने रोहितं रूपम्'' इत्यन्तमुक्तं विद्वत्सम्मत्या द्रढयति– **एतद्ध स्मेति** ॥ पूर्वे महाशालाः सम्यक् प्रत्यब्दयज्ञकृतः । महाश्रोत्रियाः सम्यक् वेदवेदार्थविदः । एतद् ब्रह्मज्ञानेन सर्वं विज्ञातं भवतीत्युक्तं प्रमेयं विद्वांसः एतद्वक्ष्यमाणमाहुः । हस्मेति वृत्तान्तद्योतकम् । किमाहुः ? नोऽस्माकमद्यास्मद्गुरूपदेश-प्राप्त्यनन्तरं कश्चन ब्रह्मातिरिक्तं किमपि अश्रुतममतमविज्ञातं नोदाहरिष्यति । अस्माभिर्ब्रह्मश्रवणमननविज्ञानैः सर्वश्रवणमननविज्ञा-नफलस्य लब्धत्वात् । इत्याहुरिति सम्बन्धः । एभ्यः सदेवेत्युक्तप्रकारेण विदितभगवत्प्राधान्येभ्यः पूर्वेभ्यो विद्वद्भ्योऽन्ये विद्वांसः विदाञ्चक्रु-र्विदितवन्तः ॥ ५ ॥

किमिति ? यदेवाग्न्यादाविति परिदृश्यमानप्रकारेण किञ्चिद् रोहित-मभूत् तत्तेजसो रूपं श्रियो रूपसम्भवमित्यनेन प्रकारेण तदस्मदुक्तमेव विदाञ्चक्रुः । एवमुत्तरत्रापि ॥ ६ ॥

यदपि रूपमिति दृश्यमानप्रकारेणाविज्ञातमिव किञ्चिद्रोहितत्वा-दिना विशेषतो गृह्यमाणमभूत् तदप्येतासामेव तेजोऽबन्ननामकानां देवतानां समासः सङ्कोचः । तदपि समासेन तेजोऽबन्ननामकदेवता-त्रयरूपजन्यमित्यर्थः । एवम् अधिदैवतं तेजोबन्ननामकानां देवतानां त्रिवृत्करणप्रकारमभिधायाध्यात्ममपि तं वक्तुं प्रतिजानीते– **यथेति** ॥ हे

सोम्येमास्तिस्रो देवताः पुरुषं शरीरं प्राप्य यथा नु खलु येनैव प्रकारेणैकैका त्रिवृत्त्रिवृद् भवति तन्मे विजानीहीति होवाच ॥ ७ ॥

॥ इति चतुर्थः खण्डः ॥

## उपनिषत् (खण्डः -५)

*लक्ष्मीप्राणरुद्राः तेजोप्पृथिव्यश्च अन्योन्यांशयुक्ता इति निरूपणम्*

**अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति यो मध्यमस्तन्मा॑ऽसं योऽणिष्ठस्तन्मनः ॥ १ ॥**

**आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥ २ ॥**

**तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ॥ ३ ॥**

**अन्नमय॑ऽ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥**

॥ ५ ॥

### भाष्यम्

*मांसादिशब्दैरभिमानिदेवता एव विवक्षिताः*

देवता एव मांसादिशब्दवाच्याः । तत्र प्रवेशात् । अदृश्यमानाश्चोपजीव्यत्वात् । न च दुःखं तासाम् । ऐश्वर्यात् । तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृत् इति प्रस्तुतत्वात् ।

## पदार्थकौमुदी

### भाष्यार्थः

नन्वथापीदं प्रकरणं देवतापरतया व्याख्यातुं न युक्तम् । "यो मध्यमस्तन्मांसम्" इति मांसादिशब्दश्रवणात् । तेषां च प्रसिद्ध-मांसादिवाचित्वादित्यत आह– **देवता एवेति** ॥ तेजोऽबन्नाख्या एव देवता मांसादिशब्दवाच्या इत्यर्थः । "एकैका त्रिवृत्त्रिवृद् भवति" इत्युक्तत्वात् । तर्हि पुरीषादिशब्दवाच्या इत्येव वक्तव्यम् । सत्यं, तथाऽपि तस्य श्रुतितोऽमाङ्गलिकत्वात् त्यागः । नचैवं वाक्यशेषे मनःप्राणवाचामेवान्नमयत्वाद्युक्तिविरोधः। तत्र तेषां मुख्याभिमानोक्तेः। अत एव हि मयट्प्रत्ययः । साधारणाभिमानस्तु रुद्रादीनां पुरीषादा-वप्यविरुद्धः । देवतानां मांसादिशब्दवाच्यत्वं कुत इत्यत आह– **तत्रे-ति** ॥ मांसादौ देवतानां नियामकतया प्रवेशात् । नियम्यवाचक-शब्दानां नियामके वृत्तेरित्यर्थः । नन्वथाप्यन्नादयो न देवता इति निश्चयो युज्यते । "अन्नस्याश्यमानस्यापां पीयमानानाम्" इत्युक्ति-विरोधादित्यत आह– **अश्यमानाश्चेति** ॥ देवता एवोपजीव्यत्वाद-श्यमानाश्चेत्यर्थः । अन्यथा "तेजसोऽश्यमानस्य" इत्यस्य प्रसिद्ध-तेजस्यप्यसम्भवादिति भावः । नन्वश्यमानान्तर्गतानां देवतानां तदशने दुःखप्रसङ्गः । नहि दह्यमानगेहान्तर्गतस्य न दाह इति युक्तमित्यत आह– **नचेति** ॥ कुत इत्यत आह– **ऐश्वर्यादिति** ॥ दह्यमान-गेहान्तस्थस्याप्यग्निस्तम्भनशक्तिमतो दाहाभाववत् तासामघटितघटक-सामर्थ्याद् दुःखाभावोपपत्तिरित्यर्थः । किमेवमन्नादीनां देवतात्व-ग्रहेण ? प्रसिद्धान्नादिकमेव किं न स्यादित्यत आह– **तिस्र इति** ॥ इति देवतानां प्रस्तुतत्वात् प्रसिद्धार्थत्वे तद्विरोध इत्यर्थः ।

### भाष्यम्

*उपनिषदुक्तो जीवः परमात्मैव*

**'जीव इति भगवतोऽनिरुद्धस्याऽख्या ' इति च श्रुतिः[१] ।**

**'प्राणस्य प्राणश्चक्षुषश्चक्षुर्जीवस्य जीवः[२] प्रधानस्य प्रधानं भगवांश्चतुर्मूर्तिः' इति च ।**

**'प्राणाधारो हरेर्नान्यो[३] जीवशब्दस्ततो हरौ ।**
**संसारिणो जीवता तु जननाद्धानतस्तथा[४] ॥' इति च ।**

## पदार्थकौमुदी

### भाष्यार्थः

किञ्चास्मिन् प्रकरणेऽन्नादिशब्दैः प्रसिद्धान्नादिमात्राङ्गीकारे ''इमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य'' इति वाक्यमप्ययुक्तं स्यादिति भावेन तावज्जीवशब्दस्य परमात्मवाचित्वे श्रुतिमप्याह– **जीव इति** ॥ ''श्रुतिश्च'' इति सम्बन्धः । प्रागुदाहृतस्मृतिसंमुच्चयार्थश्च-शब्दः । किमनिरुद्धस्य जीवाभेदेन जीवाख्या न किं तर्हि जीवस्य जीवत्वप्रदत्वेनेति भावेन तत्र श्रुतिमाह– **प्राणस्येति** ॥ प्राणत्वादिप्रद इत्यर्थः । [५] मूर्तिविवेको वचनान्तरादवगन्तव्यः । जीवशब्दप्रवृत्ति-निमित्तप्राणधारकत्वस्य हरावेव सत्त्वादसावेव जीवशब्दवाच्य इति स्मृत्याऽऽह– **प्राणाधार इति** ॥ अनिच्छतोऽपि मरणदर्शनादिति भावः । तर्हि संसारिणि जीवशब्दप्रवृत्तिः कथमित्यत आह– **संसारिण**

---

१.'इति च श्रुतिश्च' ह. २.'जीवं' ह. ३.'हरिर्नान्यः' क. ४. ''वानतेस्तथा' ह.
५.. 'मूर्तिविवेकी' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

इति ॥ जननात् जीः । [१]जनेर्डप्रत्यय इति भावः । वानतो लोकान्तरगमनाद् वः । गत्यर्थाद्वातेः कप्रत्यय इति भावः ।

## भाष्यम्

**जीवशब्देन संसारिविवक्षायां तत् तेज ऐक्षतेत्यादिना तेषामेव चेतनत्वावगतेर्नामरूपव्याकरणे जीवान्तरानुप्रवेशो नापेक्षितः ।**

**'प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः ।**
**त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥' इति ।**

**'यावद् बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ।**
**यथोभयेषां[२] त इमेह लोका बलिं हरन्तोऽन्नमदन्त्यमूढाः ।**
**त्वं नः स चक्षुः परिदेहि शक्ता देव क्रियार्थे यदनुग्रहेण ॥'**
**इति तत्त्वानां प्रार्थनानन्तरं भगवत एव तेषु प्रवेशोक्तेर्भागवते ।**

## पदार्थकौमुदी

### भाष्यार्थः

अस्तु जीवशब्दस्य परमात्मनि शक्तिस्तथाऽप्यत्र तद्विवक्षा कुतः ? संसारिविवक्षैव किं न स्यादित्यत आह– **जीवशब्देनेति** ॥ आदिपदेन ''ता आप ऐक्षन्त इमास्तिस्रो देवताः '' इत्यस्य ग्रहणम् । तेषामेव 'इमास्तिस्रः'' इत्युक्तानामेव ।

इदमुक्तं भवति । यदि ''इमास्तिस्रः'' इत्युक्तानि तेजोबन्नान्य-चेतनानि स्युस्तदा तेषां चेतनानधिष्ठितानां कार्याक्षमत्वान्नामरूप-

---

१. 'जनेर्डी प्रत्ययः' इति मुद्रितपुस्तके। २. 'तथोभयेषाम्' ह.

व्याकरणार्थं तत्र संसारिजीवानुप्रवेशोऽपेक्षितः स्यात् । नचैवम् । तेषामेवेक्षणलिङ्गेन देवताश्रुत्या च चेतनत्वावगमात् । नहि चेतने चेतनान्तरप्रवेशोऽपेक्षितः । अतो नात्र जीवशब्दः संसारिवाचीति । एवं तर्हि भगवदनुप्रवेशोऽपि तत्र व्यर्थः स्यादिति चेन्न । चेतनानामपि स्वतःप्रवृत्त्यसामर्थ्येनेश्वरप्रवेशसार्थक्यादिति भावेन तत्र प्रमाणमाह– **प्रसुप्तेति** ॥ प्रसुप्तलोकतन्त्राणामनाविर्भूतलोकसृष्टिशक्तीनां गतिं स्थितिम् ।

''शब्दाद्याः नभआद्याश्च मनोयुक्तेन्द्रियाणि च ।

अहङ्कारो महांश्चैव त्रयोविंशतिको गणः ।'' ''युगपदाविशत्'' इति भागवते च भगवत एव तेषु स्वतःप्रवृत्त्यसमर्थेषु तत्त्वेषु प्रवेशोक्तेर्नेश्वरप्रवेशो व्यर्थ इत्यर्थः । ननु त्रयोविंशतितत्त्वान्यप्यचेतनानि किं न स्युः । तेषां स्वतःप्रवृत्तिशून्यत्वेन भगवत्प्रवेशसार्थक्यसम्भवा-दित्यत उक्तम्– **यावद् बलिमित्यादि तत्त्वानां प्रार्थनानन्तरमिति** ॥ नह्यचेतनानां प्रार्थनमुपपद्यत इति भावः । हे अज वयं यत्र स्थित्वा काले कालान्तरे यावद् यथा ते बलिं हराम वयं च यथाऽन्नमदाम अमूढास्त इमे लोका उभयेषां तवास्माकं च यथाबलिं हरन्तोऽन्नमदन्ति तादृशं स्वविहारतन्त्रं लोकसिसृक्षया त्वया सृष्टा अपि वयं न कर्तुं शक्नुम इति पूर्वेण सम्बन्धः । हे देव यदनुग्रहेण यदनुप्रवेशेनैव वयं क्रियार्थे शक्ताः स्वतोऽस्माकं प्रवृत्तिसामर्थ्याभावात् । स त्वं नो दिव्यदृष्टिं परिदेही-त्यर्थः ।

## भाष्यम्

**यतश्च स एव जीवेनाऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठतीति भगवत्येव जीवशब्दः प्रयुज्यते । न ह्यचेतनस्य**

**मोदमानत्वमस्ति । अतोऽन्तर्यामिरूप एव जीवशब्दः ।**

**'भोक्तुस्तु सुखदुःखानामन्तःस्थो जीवनामकः ।**

**बहिःस्थितस्तु सन्नामा भगवान् पुरुषोत्तमः ॥' इति तत्त्वविवेके ।**

**अग्नेरग्निरिति नाम मुख्यतो नास्ति । अग्निनामानि त्रीणि रूपाणीति नामधेयं सत्यमित्यादि ॥ ५ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''अनेन जीवेन'' इत्युक्तजीवशब्दस्य भगवत्परत्वे युक्त्यन्तरं चाऽह – **यतश्चेति ॥** इत्युत्तरवाक्ये यतः प्रयुज्यते अतश्चायं जीवशब्दो भगवत्पर इत्यर्थः । ननु तत्रापि जीवशब्दः परमात्मपर इति कुतः ? संसारिपर एव किं न स्यात् । ''पेपीयमानः'' इत्युक्तवृक्षशरीरे संसारिजीवप्रवेशस्यापेक्षितत्वादित्यत आह– **नहीति ॥** ''पेपीयमानो मोदमानः'' इति न तावद् वृक्षशरीरं निर्दिश्यते । अचेतनस्य मोदमानत्वाद्यनुपपत्तेः । मोदमानशब्दोक्तयोः सुखविषयानुभवयोश्चेतन-धर्मत्वप्रसिद्धेः । अन्तःकरणपरिणतत्वेऽपि चेतनस्वामिकत्वात् । अतः पेपीयमानो मोदमानस्तु संसार्येव । तथाच ''जीवेनाऽत्मनाऽनुप्रभूतः'' इत्युच्यमानः पुनः संसारिप्रवेशो व्यर्थः स्यात् । अतोऽत्र जीवशब्दस्य संसारिपरत्वानुपपत्तेः । परिशेषात् परमात्मपरत्वं निश्चीयत इति भावः । नन्वथापि ''अनेन जीवेन''इति ''स एष जीवेन'' इति जीवशब्दो न भगवत्परः । तस्यान्तःप्रवेशे बहिर्व्यापाराभावापत्तेरित्याशङ्कां परिहरन्नु-पसंहरति– **अत इति ॥** ततश्च सेयं देवता स एष इति परामृष्टस्य सन्नामकस्य बहिष्ठरूपस्य सत्त्वान्नानुपपत्तिरिति भावः । जीवनामक-

स्यान्तस्थत्वे सन्नामकस्य बहिष्ठत्वे च स्मृतिमाह– **भोक्तुरिति** ॥ ननु ''वाचाऽऽरम्भणं विकारो नामधेयम्'' इत्यस्य

''अतोऽन्यनामधेयं तु वाचारम्भण हेतुतः ।

साङ्केत्येन विकारः स्यात् ॥'' इति व्याख्यानमयुक्तम् । अन्येत्य-श्रुतकल्पनापत्तेरित्यतो ''विकारो नामधेयम्'' इत्येतावद् योजयति – **अग्नेरिति** ॥ ''नामधेयम्'' इत्यस्यार्थः – **नामेति** । धेयप्रत्यय-स्वार्थिकत्वस्य परस्यापि सम्मतेः । ''विकारः'' इत्यस्यार्थः – **मुख्यतो नास्तीति** ॥ ''अपागादग्नेः'' इत्यतोऽग्नेरित्यनुवर्तते । अतो नाश्रुत-कल्पना । अग्निरितीति योग्यतया लब्धमिति भावः । तथाऽपि ''त्रीणि रूपाणीत्येव सत्यम्'' इत्यस्य त्रयाणामेव नित्यतेति तात्पर्यवर्णनम-युक्तम् । श्रुतौ ''त्रीणि रूपाणि'' इति नामधेयस्यैव लक्ष्म्यादौ मुख्यत्वस्योक्तत्वेनाग्निशब्दमुख्यत्वस्यानुक्तत्वादित्यतः किञ्चिदध्या-हारेण तद्वाक्यं योजयति– **अग्निनामानीति** ॥ अग्निनामानि त्रीणि रूपाणीति नामधेयं च सत्यम् । त्रयाणामेव मुख्यमित्यादि योज्यमित्यर्थः । नाग्निरिति नामैव मुख्यं किन्तु सर्वमपीति ज्ञापनाय बहुवचनम् । आदिपदेनाऽदित्यस्याऽदित्य इति नाम मुख्यतो नास्ति । आदित्यनामानि त्रीणि रूपाणीति नामधेयं च सत्यमित्यादि-वाक्यान्तरव्याख्यानसङ्ग्रहः । ततश्च स्मृतौ त्रयाणामिति श्रौतशेषोक्तिः। अग्न्यादिनामानि तेषामेव मुख्यानीत्युक्ते तेषां तच्छब्दमुख्यार्थत्वं लब्धमेवेति भावः ॥ **पञ्चमः खण्डः** ॥

## ततश्चेयं खण्डस्याक्षरयोजना

प्रतिज्ञातमाह – **अन्नमित्यादिना** ॥ अन्नं प्रसिद्धान्नगतं शिवादिरूपं

पुरुषेणाशितं उपजीवितं त्रेधा विधीयते । कथम् ? तस्यान्नगतस्य शिवादेः यः स्थविष्ठो धातुः स्थूलतमधात्वन्तर्गतं रूपं तत्पुरीषं पुरीषनामकं भवति । तत्र प्रवेशात् । यो मध्यमो धातुर्यन्मध्यमधात्वन्तर्गतं रूपं तन्मांसं मांसनामकं भवति । तत्र प्रवेशात् । योऽणिष्ठः सूक्ष्मतमो धातुर्यत्सूक्ष्मतमधात्वन्तर्गतं रूपं तन्मनो मनोनामकम् । तत्र प्रवेशात् ॥ १ ॥

एवमुत्तरत्रापि योज्यम् ॥ २ ॥ ३ ॥

नैतासां देवतानां पुरीषमांसादौ साम्येनाभिमानः, किन्तु प्राधान्येन मनःप्राणादावेवेत्याह– **अन्नमयं हीति ॥** हे सोम्य मनोऽन्नमयं प्राधान्येनान्ननामकरुद्राद्यभिमन्यमानम् । हीति प्रमाणप्रसिद्धिमाह । प्राण आपोमयः प्राधान्येनाम्नामकवाय्वाद्यभिमन्यमानः । वाक् तेजोमयी प्राधान्येन तेजोनामकरमाद्यभिमन्यमाना । इति पित्रोपदिष्टेन श्वेतकेतुना ''अन्नमयं हि''इत्येतदेव तत्त्वं भूय एव स्पष्टं दृष्टान्तेन मा मां भगवान् विज्ञापयत्विति प्रार्थितः पिता ''तथा सोम्य''इति होवाच ॥ ४ ॥

**॥ इति पञ्चमः खण्डः ॥**

## उपनिषत् (खण्डः-६)

*वाक्प्राणमनांसि लक्ष्मीप्राणरुद्रायत्तानि*

**दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत् सर्पिर्भवति ॥ १ ॥**

**एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥**

**अपाꣳ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ॥ ३ ॥**

**तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग् भवति ॥ ४ ॥**

**अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ५ ॥ ॥ ६ ॥**

### ततश्चेयं खण्डस्याक्षरयोजना

यथा खलु दध्नो मथ्यमानस्य योऽणिमा भावभवित्रोरभेदेन सूक्ष्मभागो नवनीतरूपः स ऊर्ध्वः सन् सर्वापेक्षया श्रेष्ठः सन् समुदीषति सम्यगुदयसम्भावनाविषयो भवति। तत्सर्पिर्भवति॥ १ ॥

एवमेव खलु सोम्यान्नस्यान्नस्थस्य शिवादेरश्यमानस्योपजीव्य-मानस्य योऽणिमा सूक्ष्मभागस्तदन्तर्गतं रूपं स ऊर्ध्वः समुदीषति। तन्मनो भवति। मनः प्रविष्टं भवति॥ २ ॥ एवमन्यत्॥ ३ ॥ ४ ॥

उपसंहरति– **अन्नमयं हीति** ॥ तस्मादित्युपस्कर्तव्यम्। इत्युपदिष्टेन श्वेतकेतुना "अन्नमयं हि सोम्य मनः" इत्यादिकं ममैवानुभवारूढं कुर्वित्याशयेन "भूय एव"इति प्रार्थितः पिता "तथा सोम्येति होवाच" ॥ ५ ॥

॥ इति षष्ठः खण्डः ॥

### उपनिषत् (खण्ड-७)

*'अन्नाभिमानिदेवतायत्तं मनः' इत्येतदनुभववेद्यम्*

**षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माऽशीः काममपः**

पिबाऽपोमयः प्राणो न पिबतो विच्छेत्स्यत इति ॥ १ ॥

स ह पञ्चदशाहानि नाऽशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूꣳषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति ॥ २ ॥

तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात् तेन ततोऽपि न बहु दहेदेवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात् तयैतर्हि वेदान् नानुभवस्यशानाथ मे विज्ञास्यसीति ॥ ३ ॥

स हाऽशाथ हैनमुपससाद तꣳह यत्किञ्च पप्रच्छ सर्वꣳ ह प्रतिपेदे ॥ ४ ॥

तꣳह होवाच यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्रज्वलयेत् तेन ततोऽपि बहु दहेत् ॥ ५ ॥

एवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत् साऽन्नेनोपसमाहिता प्राज्वालीत् तयैतर्हि वेदाननुभवस्यन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥ ७ ॥

## ततश्चेयं खण्डस्याक्षरयोजना

हे सोम्य पुरुषो जीवः षोडशकलः षोडशकलादेवताः यस्यासौ तथोक्तः । कलादेवताश्चान्यत्रोक्ताः । तन्मध्ये मनश्चैका कला । तत्र मनसोऽन्नमयत्वं प्रत्यक्षीकर्तुमिच्छसि चेत् तर्हि पञ्चदशसङ्ख्याकान्यहानि

माशीरशनं मा कार्षीः । काममिच्छातोऽपः पिब । कुतः ? यस्मादपो न पिबतः प्राणो विच्छेत्स्यते विच्छेदमापत्स्यते । तदपि कुतः ? यस्माद् ''आपोमयः प्राणः'' इत्युवाच ॥ १ ॥

स हैवं श्रुत्वा मनसोऽन्नमयत्वमनुभवारूढं कर्तुमिच्छन् पञ्चदशाहानि नाऽश अशनं न कृतवान् । अपः पीतवांश्च । अथ षोडशेऽहनि एनं पितरमुपससाद उपगम्योवाच । किं ब्रवीमि भो इति । इतर आह । ऋचः सोम्य यजूंषि सामान्यधीष्वेति । एवं पित्रोक्तः स होवाच । भो भगवन् मा माम् ऋगादीनि नैव प्रतिभान्ति मे मनसि नैव दृश्यन्ते । कुतो वदामीत्यर्थः ॥ २ ॥

तं पितोवाच । शृणु तत्र कारणम् । यथा सोम्य महतोऽग्नेरभ्याहितस्य क्रमादेकैकाङ्गारेणापचितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात् । तेन तावदेव खद्योतपरिमितमेव वस्तु दहेत् । ततः तत्परिमाणादीषदपि बहु न दहेत् । तृणादिसहकारिविरहात् । एवं सोम्य ते तव षोडशानां कलानां मध्ये एका कला प्राणरूपाऽतिशिष्टा स्यात् । इतराः शान्ताः ततस्तया खद्योतमात्राङ्गारतुल्यकलयैतर्हीदानीं चलस्येव केवलं नतु मनसा वेदादनुभवसि । अन्नाख्यसहकारिविरहात् । ततः कुतो वदसि । एवमन्नव्यतिरेके मनोव्यापारव्यतिरेकमुक्त्वा तदन्वये तदन्वयमाह– **अशानेति** ॥ भुङ्क्ष्व तावत् । अथ भोजनानन्तरं मे मम सकाशाद् यच्छ्रुतं तत्सर्वं विजिज्ञास्यसीत्युवाच ॥ ३ ॥

एवमुक्तः स पुत्रो हाऽश भुक्तवान् ह । अथैनं पितरमुपससाद ह । तमुपागतं पुत्रं यत्किञ्च पप्रच्छ पिता तत्सर्वम् ऋगादि प्रतिपेदे ह मनसा वाचा चोवाच पुत्रः ॥ ४ ॥

तं होवाच पुनः पिता । यथा सोम्य महतोऽभ्याहितस्याग्नेरेकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्रज्वलयेत् । तेन ततोऽपि बहु दहेत् । सहकारिलाभात् ॥ ५ ॥

एवं सोम्य ते तव षोडशानां कलानां मध्ये एका कलाऽतिशिष्टाऽभूत् । साऽन्नेनोपसमाहिता प्राज्वालीत् तयाऽन्नोपचितया कलयैतर्हीदानीं वेदाननुभवसि मनसा वाचा च वदसि । एवं व्यावृत्त्यनुवृत्तिभ्यामन्नमयत्वं मनसः सिद्धमित्युपसंहरति– **अन्नमयं हि सोम्य मन इति** ॥ तस्मादिति ग्राह्यम् । यथैतन्मनसोऽन्नमयत्वमन्वयव्यतिरेकेण सिद्धं तथा प्राणवाचोरप्यप्तेजोमयत्वं प्रतिपत्तव्यमित्याशयेनाऽह – **आपोमय इति** ॥ अत्र ''स एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्माऽतत्त्वमसि श्वेतकेतो'' इति वाक्यं ग्राह्यम् । स्तम्भनिरासोपयोगात् । व्याख्यानं तु भविष्यति । इति पित्रोपदिष्टोऽयं श्वेतकेतुर्ह विगलिताभेदमोहो यदुपदिष्टं भगवत्प्राधान्यादिकं तद्धा अबाधितं विजज्ञौ बुबोधेति श्रुतिवाक्यम् । अस्येति कर्तरि षष्ठी । इतिशब्दः समाप्त्यर्थः । सर्वस्यापि विद्यार्थस्य प्रामाणिकत्वावधारणार्थं द्विर्वचनम् । अत्र तदेष श्लोकः ।

''पञ्चेन्द्रियस्य पुरुषस्य यदेव स्यादनावृतम् ।
तदस्य प्रज्ञा स्रवति दृतेः पात्रादिवोदकम् ।
दृतेः पादादिवोदकम् ॥''इति काचित्कः पाठः । तस्यायमर्थः । तत्तत्र मनसोऽन्नमयत्वे अयं श्लोको भवति । तमुदाहरति– **पञ्चेन्द्रियस्येति** ॥ चक्षुरादिपञ्चेन्द्रियवतोऽपि पुरुषस्य मनो यदेव यदैवानावृतम् अन्नेनेति शेषः । तथाचान्नावृतं न स्यात् । तत्तदाऽस्य प्रज्ञा स्रवति । किमिव । दृतेः पादादुदकमिवेति ॥ ६ ॥

**॥ इति सप्तमः खण्डः ॥**

## उपनिषत् (खण्डः - ८)

*सुषुप्तिजाग्रदवस्थयोर्जीवः परमात्माधीन इति निरूपणम्*

**उद्दालको हाऽरुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति ॥ १ ॥**

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽयतनमलब्ध्वा बन्धनमेवोपाश्रयत[1] एवमेव खलु सोम्यैतन्मनो दिशं दिशं पतित्वाऽन्यत्राऽयतनमलब्ध्वा प्राणोमेवोपाश्रयते[2] प्राणबन्धनꣳ हि सोम्य मन इति ॥२॥**

### भाष्यम्

स्वप्नान्तः[3] सुषुप्तिः ।

'स्वातन्त्र्यात् स्व इति प्रोक्तो विष्णुः सर्वेश्वरेश्वरः ।
तं प्राप्नोति मनोनामा संसारी स्वपितीत्यतः ॥' इति च ।

मननान्मनोनामा संसारी ।

### पदार्थकौमुदी

#### भाष्यार्थः

पूर्वं जीवेश्वरयोरत्यन्तभेदबोधनायासहायस्यैव भगवतस्तत्तेजोऽ-बन्नादिसमस्तजगन्निमित्तकारणत्वादिरूपं जीवेष्वसम्भाव्यमानं महन्मा-हात्म्यमुपवर्णितम् । तत्त्वागममात्रवेद्यम् । न पुनरनुभवसिद्धमित्यतो

१.०/ २. 'उपश्रयते' इति श. पाठः । ३.'स्वप्नस्यान्तः' क.

जागरे जीवस्य स्वातन्त्र्याभिमानात् स्वापे च तदभावात् तत्र जीवस्य भगवदाश्रयत्वमनुभवारूढं कर्तुम् उपक्रमते– **उद्दालको हेत्यादिना** ॥ यद्यत्र ''स्वप्नान्त उच्चावचमीयमानः'' इत्यादाविव स्वप्नान्तशब्देन स्वप्नाख्योऽन्तःस्थानं स्वप्नान्त इति स्वप्नावस्था गृह्येत तदा ''सता सोम्य तदा सम्पन्नो भवति'' इत्युत्तरवाक्यमयुक्तं स्यात् । स्वप्नावस्थायां परात्मप्रवेशाभावादित्यतः स्वप्नान्तशब्दं व्याचष्टे– **स्वप्नस्येति** ॥ अन्तोऽवसानम् । कः स्वप्नस्यान्त इत्यत उक्तम्– **सुषुप्तिरिति** ॥ स्वप्नानन्तरं सुषुप्तिस्तदनन्तरं जागरणमिति अवस्थाक्रममभिप्रेत्यैवमुक्तम् । सुषुप्त्यनन्तरं स्वप्नस्तदनन्तरं जागरणमित्यपि क्रमोऽस्ति । उक्तं च – ''सुप्तेरुत्थाने प्राज्ञाद् विभक्तो भवति विश्वः । स्वप्नादुत्थाने तैजसात्''इति । अनेन स्वप्नान्तं सुषुप्तमित्येतदपव्याख्यानमिति सूचयति । ''अशनापिपासे सोम्य विजानीहि'' इतिवदत्रापि स्वप्नान्तशब्देन सुषुप्त्यवस्थाया एव ग्राह्यत्वेन तद्ग्रहणस्यानुचितत्वात् ।

''स्वमपीतो भवति'' इत्यत्र जीवः स्वं स्वात्मभूतं ब्रह्मापीतो भवतीति ब्रह्मणि स्वात्मवाचिस्वशब्दप्रयोगादैक्यप्रतीतिं वारयितुं स्वशब्दार्थमाह– **स्वातन्त्र्यादिति** ॥ एवं पदार्थमुक्त्वा वाक्यार्थमाह– **तमिति** ॥ एतेनापीतिशब्देनैक्यमुच्यत इत्यपास्तम् । स्वमपीत इत्यत्र पूर्ववाक्यात् पुरुषशब्दोऽनुवर्तते । स च संसारिपर एव । मुक्तस्योपक्रमोपसंहारवाक्योक्तसुप्तिजागरावस्थानुपपत्तेरिति भावेनोक्तम् – **संसारीति** ॥ ''एतन्मनः'' इत्युपसंहाराविरोधाय ''मनोनामा'' इत्युक्तम् । तं प्राणनामानमित्यपि ग्राह्यम् । ननु जीवः सुप्तौ स्वमाप्नोतीति कुत इत्यतः सुषुप्ते स्वपितिशब्दप्रयोगादित्याह– **स्वपितीति** ॥ यतः स्वमपीतो भवत्यतः स्वपितीत्याचक्षते विद्वांस इत्यर्थः । अनेन

''तस्मादेनं स्वपितीत्याचक्षते'' इत्युक्तार्थम् । ननु ''मनोनामा संसारी'' ''प्राणनामा भगवान्'' इत्युक्तम् । तत्र तस्य रूढेरभावादित्यतो योगं दर्शयति– **मननादिति** ॥ प्राणनात् प्राणनामा भगवानित्यपि ग्राह्यम् । अनेन मनःप्राणशब्दाभ्यां तत्प्रविष्टौ जीवपरमात्मानौ लक्ष्येते इत्यपास्तम् । योगस्य लक्षणातो मुख्यत्वात् ।

## उपनिषत्

*जाग्रदवस्थायां जीवः परमात्माधीन इति प्रतिपादनम्*

**अशनायापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाऽप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳसोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ३ ॥**

**तस्य क्व मूलꣳ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनाऽपोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥**

**अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥**

**तस्य क्व मूलꣳ स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः**

**सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः यथा तु[१] खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥ ६ ॥**

## भाष्यम्

*परमात्मनो जगत्कर्तृत्वमेव, न तदुपादानत्वम्*

**'शुङ्गमित्यङ्कुरं प्रोक्तं तन्मूलं भगवान् हरिः ।**
**जगतो मूलमप्येष निमित्तं न विकारवान् ॥**
**बीजजीवो यथा मूलमङ्कुरस्याविकारतः ।**
**यथा पिता[२]पुत्रतन्वस्तद्देहो हि विकारवान् ।**
**एवं हरिर्मूलमपि न विकारः[३] कथञ्चन ॥' इति च ।**
**प्राथम्याच्च तेजआद्या लक्ष्म्यादय इति सिद्धम् ।**
**'तेजोऽभिमानिनी लक्ष्मीः प्राणस्त्वबभिमानवान् ।**
**अन्नाभिमानी रुद्रश्च तिस्रस्ता देवताः पुरा ॥' इति च ब्रह्माण्डे ।**

## पदार्थकौमुदी

### भाष्यार्थः

''तत्रैतच्छुङ्गमुत्पतितम्'' इत्यादौ उक्तस्य शुङ्गशब्दस्यार्थाप्रतीतेराह– **शुङ्गमिति** ॥ तर्हि कथमङ्कुरस्योत्तरत्राभिप्रेतानुमाने दृष्टान्तत्वम् ? तत्र साध्यानिश्चयादित्यत आह– **तन्मूलमिति** ॥ अङ्कुरं समूलं कार्यत्वात् । घटवदित्यनुमानात् परिशेषसहितात् तन्निश्चय इति

१. 'तु' इति पदं हृषिकेशीये नास्ति । २. 'पुत्रतन्वाः' क. ३. 'न विकारी' हृ.

भावः । श्रौतदार्ष्टान्तिकवाक्यसमुदायतात्पर्यमाह– **जगतो मूलमपीति** ॥ जगतोऽपीत्यन्वयः । अपिशब्देन दृष्टान्तसमुच्चयः । अत्र जगच्छब्देन शरीरान्नाप्तेजसां ग्रहणम् । तेषामेव श्रुत्युक्तत्वात् । शरीरादिमूलत्वं चान्नादिद्वारेति द्रष्टव्यम् । शरीरादिकं समूलं कार्यत्वाद् अङ्कुरवदिति सामान्यसिद्धिपरिशेषाभ्यामेतन्निश्चय इति भावः । अङ्कुरं जगच्च प्रति भगवतो मूलत्वमुपादानत्वमिति कश्चित् । तद्दूषयति– **जगत इति** ॥ अङ्कुरस्य जगतश्च मूलमप्येष निमित्तं कर्तैव । नतु विकारवानित्यर्थः । एतेनैतदपि परिहृतम् । यदि शरीरादेः समूलत्वं सोपादानत्वं सकारणकत्वं वा तर्हि अङ्कुरे साध्यस्य सिद्धत्वेन प्राचीनसाध्यवैकल्योद्धारोऽनुपपन्न इति । नन्वङ्कुराद्युपादाने बीजादावेव मूलशब्दप्रयोगो दृष्टः । नतु निमित्तकारणे इत्यतो दृष्टान्ताभ्यां तदेवोपपादयति – **बीजेति** ॥ पिता पितृजीवः पुत्रतन्वा अविकारतो मूलमिति सम्बन्धः । तर्हि किं तत्र विकारतो मूलमित्यत आह – **तद्देह इति** ॥ बीजजीवदेहो बीजम् । पितृदेहो रेतोरूपस्तद्धातुरित्यर्थः । अनेन ''सन्मूलाः'' इत्यस्य सत्परं ब्रह्म मूलम् उपादानं घटस्य मृदिव भुजङ्गस्य रज्जुरिव वा । यासां स्थावरजङ्गमात्मकानां ताः सन्मूला इति परकीयं व्याख्यानमपहस्तितं भवति । मूलशब्दो हि नोपादाने नियतः । किन्तु कारणमात्रवाची । तत्राऽगमान्तरानुसारेण बीजजीवो मूलमित्यादिव-न्निमित्तकारणपर एवावगम्यते ।

किञ्च घटस्य मृदिवेत्यप्यसङ्गतम् । त्वन्मते शुद्धब्रह्मण उपादानत्वा-भावात् । नच मायावच्छिन्नस्य ब्रह्मणो जगदुपादानत्वे आद्यो दृष्टान्तः । शुद्धब्रह्मणस्तदुपादानत्वे द्वितीय इति वाच्यम् । मायाया एव जगदुपादानत्वोपपत्तौ ब्रह्मणोऽपि तदुपादानत्वे मानाभावात् । श्रुतिस्तु

नास्तीत्युक्तमन्यत्र । भुजङ्गस्य रज्जुरिवेत्यप्यसत् । भुजङ्गस्य रज्ज्वध्या-साधिष्ठानत्वव्यवहारेऽपि तदुपादानत्वव्यवहाराभावात् ।

ननु "तस्य क्व मूलं स्यादन्यत्रान्नात्" इत्यादौ शरीरस्यान्नं तस्य चाऽपस्तासां च तेजोमूलत्वमित्युच्यते । तत्र मूलत्वमुपादानत्वमेव स्फुटम् । एवं च "तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः" इत्यत्रापि सतो जगदुपादानत्वमेवोच्यत इत्यावश्यकम् । अन्यथा प्राय-पाठविरोधादिति चेन्न । अन्नादीनां देवतात्वेन शरीरादिकं प्रत्युपादान-त्वाभावात् । तदेव कुत इति चेत् । "यथा तु खलु सोम्येमास्तिस्रो देवताः" इति देवताशब्दप्रयोगात् । हेत्वन्तरमाह– **प्राथम्यादिति ॥** चशब्दः प्रागुक्तदेवताश्रुतिसमुच्चयार्थः । यद्वा "तत्तेजोऽसृजत" इत्यादिवाक्यव्याख्यानरूपप्रागुदाहृतागमसमुच्चयार्थः । तत्रोक्तानामेवात्र कथनम् । प्राथम्यात् क्रमात् प्रथमोत्पन्नत्वादित्यर्थः ।

लक्ष्मीस्तु सिसृक्षुत्वविशेषं तत्साक्षाद् भगवदिच्छया प्राप्तैव सृष्टेत्युदिता ।

इदमुक्तं भवति । आदिसृष्टौ हि तेजआदिकं भगवता प्रथमोत्प-न्नत्वेनोच्यते । यद् यदादौ भगवता प्रथममुत्पन्नं तत्र तदुत्तममिति व्याप्तिः प्रमिता । ततः तेजोऽबन्नानि क्रमात् सर्वोत्तमानि भवेयुः । नच भगवदतिरिक्ते लक्ष्म्यादिकं विनाऽन्यत् सर्वोत्तममस्तीति लक्ष्म्यादि-कमेव तेजआदिकमिति । तेजआद्या लक्ष्म्यादय एव प्रथमोत्पन्ना इत्यत्र स्मृतिमप्याह – **तेज इति ॥** "सर्वेभ्यः पुरा सृष्टाः" इति शेषः ।

## भाष्यम्

**'यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति '**

**इति संसारिणो ब्रह्मप्राप्तिमुक्त्वा 'स यथा शकुनिः सूत्रेण प्रबद्धः' इति तस्योपपादनान्मनोनामा पुरुषः, प्राणनामा भगवान् ।**

**'सन्मूलाः सोम्येमाः सर्वाः प्रजाः[१] सदायतनाः सत्प्रतिष्ठाः' इत्युपसंहारात् ।**

**प्रजाशब्दश्च चेतनेष्वेव प्रसिद्धः ।**

**'प्रजानां सुखदुःखेन राजाऽऽप्नोति शुभाशुभम्' इत्यादेश्च ।**

## पदार्थकौमुदी

### भाष्यार्थः

''प्राणबन्धनं हि सोम्य मनः'' इत्यत्र मनोनामा संसारी प्राणनामा भगवान् कथ्यत इत्युक्तम् । तत्कुतः ? नच ''मननान्मन उद्दिष्टः'' इति ''प्राणः प्रणयनादेषः'' इति च स्मृतेरिति वाच्यम् । तावता तत्र तस्य शक्तत्वेऽप्यत्र तत्परत्वज्ञापकाभावादित्यत आह– **यत्रेति** ॥ नह्यन्यत् प्रतिज्ञाय दृष्टान्तमुक्त्वा दार्ष्टान्तिकेऽन्यदुच्यत इति सम्भवत्यतिप्रसङ्गादिति भावः । एवमुपक्रमानुगुण्यं दर्शयित्वा तत्रैवोपसंहारानुगुण्यमप्याह– **सन्मूला इति** ॥ उपसंहारवाक्ये प्रजाशब्दोक्तजीवानां सच्छब्दोक्तभगवदाश्रयत्वोक्तेरत्रापि मनःप्राणशब्दाभ्यां जीवेश्वरावेव ग्राह्यावित्यर्थः । यद्यपि मनोनामा पुरुषः प्राणनामा भगवानिति परस्यापि सम्मतम् । तथाऽपि शिष्यव्युत्पादनार्थमेतदुक्तम् । ननूपसंहारवाक्यस्थसच्छब्दानुरोधेन प्राणशब्दस्य भगवत्परत्वेऽपि प्रजाशब्दानुरोधेन मनःशब्दो न जीवपरोऽङ्गीकर्तुमुचितः । प्रजाशब्देन स्थावरजङ्गमात्मकानामचेतनानामेव ग्रहणात् । ''सन्मूलाः'' इति सन्नामके

१. 'सोम्येमाः प्रजाः' प्र.पाठः ।

ब्रह्मण्यारोपितत्वं हि प्रजानामुच्यते । नहि चेतनस्याऽरोपितत्वं सम्भवतीति चेत् न । किं प्रजाशब्दोक्तानां ब्रह्मण्यारोपितत्वोक्त्यन्यथानुपपत्त्यैव व्याख्यायते उत प्रजाशब्दस्यैवाचेतनेषु प्रसिद्ध्यनुरोधात् । नाऽद्यः । ''सन्मूलाः'' इत्यस्यान्यथैव व्याख्यातत्वात् । न द्वितीय इत्याह– **प्रजाशब्दश्चेति** ॥ तत्रैव प्रयोगं चाऽह– **प्रजानामिति** ॥ नचाचेतनस्य सुखदुःखे ।

### भाष्यम्

**'शरीरधातुकृत्त्वेन लक्ष्म्याद्याश्च मुमुक्षुणा ।**
**ध्येयास्तदीशितृत्वेन भगवान् पुरुषोत्तमः ॥' इति वचनादनुसन्धानकर्तव्यताज्ञापनार्थं तदुक्तं पुरस्तादित्युक्तम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

ननु ''यथा खलु सोम्य'' इत्यादि ''पुरस्तात्''इत्यन्तवाक्यं किमर्थम् ? प्राचीनोक्त्यैव ज्ञातुं शक्यत्वादित्यतः प्रमाणोदाहरणपुरःसरं तदभिप्रायमाह– **शरीरेति** ॥ चशब्दस्तुशब्दार्थः । भगवत्समुच्चयार्थो वा । चशब्देन भूतग्रहणे ''धातुकृत्त्वेन'' इत्यनन्वितम् । भूतानां शरीरधातुकर्तृत्वायोगात् । श्रुतौ देवताशब्दप्रयोगायोगश्च । इत्युक्तमिति ज्ञायत इति शेषः । तेन वचनादित्यस्यान्वयोपपत्तिः ।

### भाष्यम्

*मुक्तौ मरणावस्थायां च देवतानां लयक्रमकथनम्*

**मुक्तावुमा तु वागाख्या रुद्रं याति मनोऽभिधम् ।**
**वायुं याति शिवश्चापि वायुस्तेजोऽभिधां श्रियम् ॥**

**वायुमादाय सा देवी याति विष्णुं परात्परम् ।**
**द्वारमात्रा तु सा देवी वायुप्राप्यो जनार्दनः ।**
**मृतिकाले च मुक्तौ च पुरुषा वाचमाप्नुयुः ॥' इति सत्तत्वे ।**

## पदार्थकौमुदी

### भाष्यार्थः

''अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि'' इत्यत्र वागादिशब्दाः जडवागादिपरा इत्यसत् । ''परस्यां देवतायाम्'' इति सतः परदेवतात्वोक्त्या वागादीनां देवतामात्रत्वावगमात् । देवानां च मुक्तौ मरणे च मार्गप्रतिपादकमिदम् । ''**वाङ्मनसि दर्शनाच्छब्दाच्च**''(ब्र.सू. ४-२-१) । ''**तन्मनः प्राण उत्तरात्**'' (ब्र.सू. ४-२-३) । ''**सोऽध्यक्षे तदुपगमादिभ्यः**''(ब्र.सू. ४-२-४) इति सूत्रकारेण वागाद्यभिमानिदेवतानां मुक्तिकालेऽन्योन्यदेहलयस्यैतच्छुत्यवष्टम्भेन निर्णीतत्वात् । ''पुरुषं सोम्योपतापिनम्'' इत्युत्तरखण्डानुसारेणास्य मरणपरत्वावगतेश्चेति भावेन मुक्तिमरणोभयपरत्वेन प्रमाणेनैव तद्व्याचष्टे – **मुक्ताविति** ॥ मृतावित्यपि ग्राह्यम् । रुद्रं याति रुद्रेदेहलयं प्राप्नोति । रुद्रेण ग्रस्तव्यापारो भवतीति चार्थः । ''मनः प्राणः'' इत्यस्यार्थः – **वायुं याति शिवश्चेति** ॥ अपिशब्दस्योत्तरत्रान्वयः । अत्र मुक्तिपक्षे उमारुद्रवायुशब्दैर्वारुणीसुपर्णीशेषसुपर्णीहिरण्यगर्भाः कथ्यन्ते । ''प्राणस्तेजसि'' इत्यस्यार्थः – **वायुरिति** ॥ वायुरपीति सम्बन्धः । ''तेजः परस्यां देवतायाम्'' इत्यस्यार्थमाह – **वायुमिति** ॥

ननु ''प्राणस्तेजसि'' इति चतुर्मुखस्य रमायां देहलयो न वक्तुं युक्तः । तथा सति चतुर्मुखस्य पुनः संसारप्राप्तिप्रसङ्गात् । तथाचोक्तं

सूत्रकृता– **तदपीतेः संसारव्यपदेशात्** (ब्र.सू. ४-२-८) इति । कथं चैवं सति सूत्रकृता ''सोऽध्यक्षे''इति प्राणस्य परमात्मन्येव साक्षाल्लय उक्त इत्यतः ''प्राणस्तेजसि'' इत्यस्य तात्पर्यमाह– **द्वारमात्रेति** ॥ चतुर्मुखस्य तेजसि लयो नाम तत्प्राप्तिमात्रम् । न तत्र देहलयः । तस्य साक्षात्परमात्मनि लययोग्यत्वादिति भावः । प्राणत्वे त्वस्त्येव तेजसि लय इति विशेषद्योतनार्थस्तुशब्दः । एवं तर्हि उमादिव्यतिरिक्तानां देहलयाभावेन मोक्षाभावः । मरणकाले म्रियमाणानां भगवत्प्राप्त्यभावे ''प्राज्ञेनाऽत्मनाऽन्वारूढः'' इत्यादिविरोधश्चेत्यत आह– **मृतिकाले चेति** ॥ पुरुषाः म्रियमाणाः मुच्यमानाश्च ।

## उपनिषत् (खण्ड ८ - मन्त्र -७)

*अतत्त्वमसिवाक्यार्थः*

**स य एषोऽणिमैतदात्म्यमिद१९ सर्वं तत्सत्यं स आत्मा(ऽ) तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ७ ॥ ८ ॥**

## भाष्यम्

'योऽसौ नियमनाद् विष्णुः सारत्वात् स इति स्मृतः ।
अणिमा सूक्ष्मतो गम्य ऐतदात्म्यं च तद्वशम् ॥
परानन्दत्वतः सत्य[१] आत्मा पूर्णगुणत्वतः ।
सत्यतो नासि तत् त्वं हि माभूत् ते स्तब्धता ततः ॥

---

१. 'सत्यम्' प्र.पाठः ।

## पदार्थकौमुदी

### भाष्यार्थः

''स य एषोऽणिमा'' इत्यादिकं परेणैवं व्याख्यातम् । स यः सदाख्यः एष उक्त अणिमा अणुभावो जगतो मूलम् ऐतदात्म्यमेतत्सदात्मा यस्य सर्वस्य तदेतदात्मा तस्य भावः ऐतदात्म्यम् । एतेन सदाख्येनाऽत्मना आत्मवत् सर्वमिदं जगन्नान्योऽस्त्यस्याऽत्मा संसारीति यावत् । येन चाऽत्मनाऽऽत्मवत् सर्वं तदेव सदाख्यं कारणं सत्यं परमार्थसत् । अतः सदात्मा जगतः प्रत्यक्स्वरूपं सत्तत्वं याथात्म्यम् । आत्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि रूढत्वात् । अतस्तत् सत् त्वमसि भवसीति ।

तदिदमसत् । ''स एषः'' इत्यस्यानुवादपरत्वे तच्छब्दवैयर्थ्यात् । अणोरेव जगन्मूलत्वेनाणुभावस्य जगन्मूलत्वाभावाच्च । यथाश्रुतेनैवोपपत्तौ जगतो मूलमित्यध्याहारायोगाच्चेति भावेन ''स यः'' इत्यादिकं प्रमाणेनैव यथावद्व्याचष्टे – **योऽसाविति** ॥ ''नामानि सर्वाणि यमाविशन्ति'' इति श्रुतेः ''स यः'' इत्यादिकं भगवन्नामैवेति भावेन तन्निर्वचनमिदम् । यमयतीति व्युत्पत्त्या नियमनादसौ विष्णुर्य इति स्मृतः, सर्वस्येष्ट इति ह्येष इति ग्राह्यम् । सूक्ष्मतो गम्यः । सूक्ष्मज्ञानविषयः । अणीयसा सूक्ष्मेण ज्ञानेन मीयत इत्यणिमा । ''ऐतदात्म्यम्'' इत्यस्यैतेन सदाख्येनेति तात्पर्यवर्णनमयुक्तम् । सन्निहितरूपत्वादेषः आदानादिकर्तृत्वादात्मैष चासावात्मा चैतदात्मा । स एव चैतदात्म्यमपरोक्षत्वादिदं पूर्णत्वात् सर्वमिति पदसमन्वयेनास्याप्यन्यार्थत्वोपपत्तेः वाक्यान्वयपक्षमङ्गीकृत्याऽऽह – **ऐतदात्म्यमिति** ॥ ''ऐतदात्म्यम्'' इत्यनुवादेन ''तद्वशम्'' इति व्याख्यानम् ।

अयमाशयः । एतत्सदात्मा यस्येत्येवास्तु व्याख्यानम् । आत्मशब्दस्तु स्वामिवाची । भावप्रत्ययस्तु परस्यापि व्यर्थः । तेनैतत्स्वामिकं तद्वशमित्यर्थः सिद्ध्यति । अथवा, एष चासावात्मा चैतदात्मा । "विचित्रा हि तद्धितगतिः" इति वचनादेतदात्मन इदमित्यर्थे तद्धितोऽयमित्युक्तं भवति । वैयर्थ्यादर्थान्तरग्रहणस्य ज्यायस्त्वात् । एवं च नेदं वाक्यं त्वदुक्तरीत्या जीवेश्वराभेदपरमिति । तदेव सत्यमित्यप्यसत् । अश्रुतैवकारकल्पनाप्रसङ्गात् । सर्वस्यापि परमार्थसत्त्वस्य व्यवस्थापितत्वाच्चेति भावेन "तत्सत्यम्" इत्येतद्व्याचष्टे – **परेति** ॥ ततत्वात् तदित्यपि ग्राह्यम् । किञ्च, स आत्मा तत्त्वं याथात्म्यमिति व्याख्याने "तत्सत्यम्"इत्यनेन पुनरुक्तिः । तत्त्वमित्येतदनावर्त्य सोऽणिमैवाऽत्मा जीव इत्यैक्यार्थत्वाङ्गीकारे त्वैतदात्म्यमित्युक्तत्वादिदं व्यर्थमिति भावेनाऽह – **आत्मेति** ॥ सादनाच्च स इत्युक्त इत्यपि ग्राह्यम् । "तत्त्वमसि" इत्यैक्यमुच्यत इत्यसत् । "ऐतदात्म्यम्" इत्यादिना गतार्थत्वप्रसङ्गात् । पदसमन्वयेनास्यापि भगवन्नामत्वोपपत्तेश्च । वाक्यान्वयश्रद्धायामपि अतत् त्वमसीति पदच्छेदेन भेदपरत्वस्यैवावगतेश्चेति भावेनातत्त्वमिति तत्त्वमित्युभयथाऽपि पदच्छेदमभ्युपेत्य व्याचष्टे– **सत्यत इति** ॥ अनेन हे श्वेतकेतो तत्त्वं तत्त्वतः त्वम् अतत् तदन्यद् वस्त्वसीति व्याख्यातं भवति । अतत्त्वमसीति पदच्छेदेन भेदपरत्वाङ्गीकारेऽपि भेदो मिथ्यैवेत्यप्यत एव परास्तम् । उपदेशस्य प्रयोजनमाह– **मा भूदिति** ॥ यदि तव ब्रह्मत्वं स्यात् तर्हि तज्ज्ञानेनाविनीतत्वलक्षणा स्तब्धता कर्तुं शक्येत । तदेव नास्ति । तस्मात् स्तब्धता ते मा भूदित्यर्थः ।

## भाष्यम्

**असुराः स्तब्धतां याता ब्रह्माहमिति मानिनः ।**
**असत्यं जगदित्याहुः सिद्धोऽहं बलवानिति ॥**
**अनीश्वरं[१] जगच्चाऽहुरप्रतिष्ठं तथैव च ।**
**चेतनैकत्वविषयान् वेदानाहुश्च सर्वशः ॥**
**कुतर्कपरमा नित्यं न सहन्ते गुणान् हरेः ।**
**शास्त्रतत्त्वमविज्ञाय ब्रूयुर्देवेषु[२] चैकताम् ॥**
**यान्ति चैव तमो घोरं परमात्मविनिन्दकाः ।**

## पदार्थकौमुदी

### भाष्यार्थः

अन्यथा तवाप्यसुरत्वप्राप्तिरिति भावेनासुरपक्षमनुवदति – **असुरा इति** ॥ सुखदुःखादिरूपस्य जगतः सत्यत्वे कथं तेषां ब्रह्माहमित्यभिमान इत्यत उक्तम् – **असत्यमिति** ॥ प्रत्यक्षादिप्रमाणेन जगतः सत्यत्वावगमात् कथमेवमाहुरित्यत उक्तम् – **सिद्धोऽहमिति** ॥ सिद्धोऽहम् अतो मद्वचनमेव सत्यम् । तद्विरोधात् प्रत्यक्षादिकमप्रमाणमिति भावः । प्रमाणसिद्धपदार्थापलापिनो राजादिशङ्का वा कथं नास्तीत्यत उक्तम् – **बलवानितीति** ॥ ननु भेदप्रतिपादकान् वेदान् पश्यन्तः कथमेवमाहुरित्यत आह – **चेतनेति** ॥ विमतानि शरीराणि देवदत्तस्यैव भोगायतनानि इत्यादिकुतर्कपरमाः । अथापि ''यः सर्वज्ञः''इत्यादिश्रुतसार्वज्ञादिगुणविशिष्टेन ब्रह्मणा कथमैक्यं ब्रूयुरित्यत आह – **न सहन्त इति** ॥ अत्रापि, ब्रह्म निर्गुणम् । अद्रव्यत्वात् । गुणवदिति

---

१.'जगत् प्राहुः' क. २.'वेदेषु' क.

कुतर्कपरमा इति सम्बध्यते । तत्त्वमसीत्यादिवेदार्थस्यैवैक्यस्य कथना (वेदना)त् कथमयमसुरपक्ष इत्यत आह– **शास्त्रेति** ।। एकतां प्रतिपाद्याम् । तेषां फलमाह– **यान्ति चेति** ।।

## भाष्यम्

**आलम्ब्य तन्मतं न त्वमेकत्वं विद्धि विष्णुना ।।**
**एकत्वाभावतो**[१] **नैव भवेथाश्च महामनाः ।**
**तन्निष्ठा हि प्रजा यस्मात् तत्प्रतिष्ठाश्च मोक्षगाः ।।**
**तन्मूलाश्च यतस्तासां तद्भावः**[२] **कुत एव तु ।। ८ ।।**

## पदार्थकौमुदी

### भाष्यार्थः

किं तत इत्यत आह– **आलम्ब्येति** ।। एवं स्तब्धतां निरस्य महामनस्त्वं च निरस्यति– **एकत्वाभावत इति** ।। एकत्वाभावे "सन्मूलाः" इत्यत्रैवोक्तां युक्तिमाह– **तन्निष्ठा हीति** ।। एतेन सदायतनाः सत्प्रतिष्ठाः इत्यनयोः पुनरुक्तिः परिहृता भवति ।। **अष्टमः खण्डः** ।।

### ततश्चेयं खण्डस्याक्षरयोजना

उद्दालको ह किलाऽरुणिः श्वेतकेतुं पुत्रमुवाच । किमिति ? स्वप्नस्यान्तःसुषुप्तिः तं स्वप्नान्तं सुषुप्तिस्वरूपं मे मम सकाशाद् विजानीहीति । ननु कः सुषुप्तौ विशेषः ? येन तज्ज्ञातव्यमित्यत आह– **यत्रेति** ।। यत्र काले । एष चासौ पुरुषश्चेत्येतत्पुरुषो जीवः स्वपिति तदा सता परमात्मना सम्पन्नः सङ्गतो भवति । "यत्रायं

१. 'एकताभावतः' प्र.पाठः । २. 'सद्भावः' प्र.पाठः।

पुरुषः'' इति शाखान्तरपाठः । किं तत्र मानमित्यतः सुप्ते स्वपिति-शब्दप्रयोग एवेति वक्तुमुक्तमेव विशदमाह – **स्वमिति** ॥ तदा प्रस्वापकाले स्वं स्वतन्त्रं भगवन्तमपीतो भवति अविज्ञेयत्वेन प्राप्तः प्रविष्टो भवति । एष पुरुष इति वर्तते । सुषुप्तौ जीवस्य भगवत्प्राप्तिसद्भावे प्रमाणमाह – **तस्मादिति** ॥ हि यस्मात् स्वमपीतो भवति तस्मादेवैनं सुषुप्तं स्वपितीत्याचक्षते विद्वांसः । अन्यथा तन्न स्यात् । स्वपितिशब्दप्रयोगादेव सुषुप्तस्य स्वनामकभगवत्प्राप्तिरवगम्यत इत्यर्थः । मुक्तिपक्षे तु स्वप्नस्यान्तो मुक्तिः । स्वप्नशब्देन जीवन्मुक्तिस्वरूपायाः सन्ध्यावस्थायाः ग्रहणात् । सन्ध्यं तृतीयं स्वप्नस्थानमित्यत्र तथा निर्णीतत्वात् । तं स्वप्नान्तं मुक्तिं मे विजानीहि । यत्रैतत्पुरुषो मुक्त-जीवः । स्वपिति नाम मुक्तो भवति । तदा सता सङ्गतो भवति । तत्र प्रमाणं वक्तुं तदेव विशदमाह – **स्वमिति** ॥ तदा मुक्तौ स्वं स्वतन्त्रं भगवन्तं संसारिभिरविज्ञेयत्वेन प्राप्तः प्रविष्टो भवति मुक्तजीवः । मुक्तस्य भगवत्प्राप्तौ स्वपितिशब्दमेव प्रमाणमाह – **तस्मादिति** ॥ योजना पूर्ववदेव ॥ १ ॥

एवं जागरस्वप्नयोः संसारे वा शरीरेन्द्रियमनसामितस्ततो विक्षेपेण-श्रान्तस्य जीवस्य श्रमापनोदनाय सुप्तौ मुक्तौ वा परमेश्वराश्रयणमभि-धाय तत्र दृष्टान्तमाह – **स यथेति** ॥ स वक्ष्यमाणो दृष्टान्तः यथा । शकुनिः पक्षी शकुनिघातकस्य हस्तगतेन सूत्रेण प्रबद्धः दिशं दिशं बन्धनमोक्षार्थी सन् प्रतिदिशं पतित्वाऽन्यत्र बन्धनादायतनमाश्रयं विश्रमणायालब्ध्वाऽप्राप्य बन्धनमेवोपश्रयते एवमेव खलु हे सोम्यै-तन्मनः पूर्वप्रकृतो मननान्मनोनामा जीवः स्वप्नजागरणयोः संसारे वा दिशंदिशं पतित्वा प्राणादन्यत्राऽयतनमलब्ध्वा प्राणमेव प्राणनात्

प्राणनामकं परमात्मानमेवोपश्रयते । दृष्टान्ते बन्धनमेवोपश्रयत[१] इत्युक्तत्वादत्रापि प्राणस्य बन्धनत्वमुपपादयति– **प्राणेति** ॥ हि यस्मान्मनो जीवः प्राणबन्धनं प्राण एव बन्धनं बन्धको यस्य तत्तथोक्तं तस्मात् प्राणमेवोपश्रयत इत्यर्थः ॥ २ ॥

एवं सुप्तौ मुक्तौ च जीवस्य भगवदधीनत्वमभिधाय जाग्रदवस्थायामपि अशनापिपासयोः स्वरूपपर्यालोचनया जीवानां भगवदधीनत्वं प्रतिपादयितुं प्रस्तावयति – **अशनेति** ॥ हे सोम्याशितु-मिच्छाऽशनाया यालोपश्छान्दसः । अशनायेत्यपि क्वचित् पाठः । पातुमिच्छा पिपासा ते अशनपिपासे तयोः स्वरूपं विजानीहीत्युवाचेति सम्बन्धः । कस्तत्र विशेष इत्यत आह – **यत्रेति** ॥ यत्र यदैतत्पुरुषः संसार्यशिशिषति अशितुमिच्छति नाम तत्तदा तदशितमन्नं पीता आप एव तदभिमानी प्राण एवेति यावत् । नयन्ते रसवीर्यादिभावेन परिणम-यन्ते[२] । ''अन्नं रसादिरूपेण प्राणः परिणयत्यसौ'' इति वचनात् । अशितनेतृत्वमपां कुत इत्यतो अशनायाशब्दाभिधेयत्वादिति सदृष्टान्तमाह– **तद्यथेति** ॥ तद् वक्ष्यमाणं निदर्शनं यथा गां नयतीति गोनाय इत्युच्यते गोपालो, यथा वाऽश्वं नयतीत्यश्वनाय इत्युच्यतेऽ-श्वपालः, यथा च पुरुषान्नयतीति पुरुषनाय इत्युच्यते राजा सेनापतिर्वा एवं तत् तस्मादशितनेतृत्वादपस्तदभिमानिदेवतां प्राणम् अशनायेत्याचक्षते विद्वांसः । नन्वेतावता जीवस्याबभिमानि-प्राणाधीनत्वेऽपि भगवदधीनत्वं कुत इत्यत आह– **तत्रेति** ॥ तत्रैवं सति अद्भी रसादिभावेनाशितस्य जीर्णीभावे सति तद्रेतोद्धारा एतत्प्रत्यक्षसिद्धं

---

१. अत्रोपनिषदि 'उपाश्रयते' इति पाठो दृश्यते । परन्तु वेदेशीयाभिमतः पाठः 'उपश्रयते' इत्यवगम्यते । २. 'परिणामयन्ते' इति मुद्रितपुस्तके ।

शिशुशरीरमुत्पत्तिं सोम्य विजानीहि । शुङ्गमिति दृष्टान्तोक्तिः । वटबीजात् परिणताच्छुङ्गमङ्कुरमिवेत्यर्थः । किं तत इत्यत आह– **नेति** ॥ हे सोम्येदमुत्पतितं शरीररूपं कार्यममूलकर्तृकं न भविष्यतीति विजानीहि । अयमत्र प्रयोगः । इदं सकर्तृकं कार्यत्वादङ्कुरवदिति । नच दृष्टान्तः साध्यविकलः । घटादिदृष्टान्तेन तत्रापि सकर्तृकत्वानुमानात् । तर्हि घट एव दृष्टान्तत्वेनोपादीयताम् । न शरीरस्य सर्वात्मनाऽङ्कुर-साम्यमिति वस्तुस्थितिज्ञापनार्थम् । तथाच श्रुतिः –

''यथा वृक्षो वनस्पतिस्तथैव पुरुषो मृषा ।
तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥'' इत्यादिका ॥ ३ ॥

एवं शरीरस्य कार्यत्वेन कर्तृसामान्येऽनुमिते किं तदिति जिज्ञासायां परिशेषेणान्नमेवेति भावेन प्रसक्तप्रतिषेधं विधत्ते – **तस्येति** ॥ तस्य शरीरस्यान्नादन्यत्र क्व किं मूलं स्यात् । न किमपि । तस्मादन्नमेव परिशेषेण मूलमित्यर्थः । अत्रान्नमिति तदभिमानी रुद्रः । अन्नस्यापि कार्यत्वाच्छुङ्गवत् सकारणकत्वमनुमाय परिशेषेणाप्कारणकत्व-मनुमेयमेवेत्याह– **एवमेवेति** ॥ यथा शरीरे एवमेव खलु सोम्यान्नेन कार्येण शुङ्गेन दृष्टान्तेन कर्तृसामान्यमनुमाय परिशेषेणापो मूलमन्विच्छानुमातुमिच्छेत्यर्थः । आप इति तदभिमानी प्राणः । एवमेव हे सोम्याद्भिः कार्येण शुङ्गेन दृष्टान्तेन कर्तृसामान्यमनुमाय परिशेषेण तेजोमूलमन्विच्छ । तेज इति श्रीः । एवमेव हे सोम्य तेजसा कार्येण शुङ्गेन दृष्टान्तेन कर्तृसामान्यमनुमाय सत्परं ब्रह्ममूलमन्विच्छेत्यर्थः । तर्हि सतस्तेजोमात्रमूलत्वम् । न सर्वमूलत्वमित्याशङ्कां परि-हरन्नुपसंहरति– **सन्मूला इति** ॥ हे सोम्येमाः सर्वाः प्रजाः सत्परंब्रह्म मूलं कर्तृ यासां ताः सन्मूलाः । न केवलमेतावत् । किन्तु सत्परं

ब्रह्माऽयतनमाश्रयो यासां ताः सदायतनाश्च । न केवलमुक्तरीत्या जीवस्य संसार एव भगवदधीनत्वम् । किन्तु मोक्षेऽपीत्याह – **सत्प्रतिष्ठा इति** ॥ सत्परं ब्रह्म प्रतिष्ठा प्रतिस्थापकं मुक्तप्रजानां ताः सत्प्रतिष्ठा इत्यर्थः ॥ ४ ॥

एवमशनाया स्वरूपपर्यालोचनया जीवानां भगवदधीनत्वमुपपाद्य पिपासास्वरूपपर्यालोचनयाऽपि तदुपपादयति– **अथेति** ॥ योजना तु पूर्ववदेव । तत्तेज आचष्टे विद्वानुदन्येति । उदं नयतीति व्युत्पत्तेः । पूर्वमन्नकार्यस्य प्रक्रान्तत्वाच्छरीरेणान्नद्वारा सदनुमानम्, इह त्वप्-कार्यस्य प्रक्रान्तत्वात् तदुद्वारैवानुमानमित्यवधेयम् ॥ ५ ॥

ननु पूर्वोक्तास्तेजोऽबन्नाभिमानिदेवताः शरीरं प्राप्य कथं शरीरधातुं कुर्वन्तीत्यतस्तत्प्रागेवोक्तमनुसन्धेयमित्याह – **यथेति** ॥ हे सोम्येमा-स्तिस्रो देवतास्तेजोबन्नाभिमानिन्यो लक्ष्म्याद्याः पुरुषं शरीरिणं प्राप्य यथा तु येनैव प्रकारेणैकैका देवता त्रिवृत् त्रिवृद्भवति तत्पुरस्तादेवोक्तं भवति । ''अन्नमशितं त्रेधा विधीयते'' इत्यादिना । तदेवानुसन्धेयमिति भावः । किञ्च भगवतो मोक्षे देवैः प्राप्यत्वाच्च सिद्धं जीवानां तदधीनत्वमिति भावेन देवानां देहलयप्रकारमाह– **अस्येति** ॥ अस्य पुरुषस्य चतुर्मुखस्य प्रयतो मुच्यमानस्य सतश्चतुर्मुखमुक्तिकाले प्राप्ते इति यावत् । अत्र सर्वे देवा वाचि सम्पद्यन्ते इति वक्तव्यम् । वागभि-मानिन्युमा मनसि मनोभिमानिरुद्रे सम्पद्यते देहलयमाप्नोति । मनो रुद्रः प्राणे मुख्यवायौ सम्पद्यते । प्राणस्तेजसि लक्ष्म्यां सम्पद्यते । तेजः परस्यां देवतायां सम्पद्यते । ''हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः'' इति स्मृतेः । अथवा सर्वसाधारणमरणेऽपि जीवस्य भगवदधीनत्वं प्रतिपत्तव्य-मिति भावेन सति तत्त्वाभिमानिदेवताव्यापारे जीवस्य मरणानुपपत्ते-

स्तद्व्यापारोपरमप्रकारमाह– **अस्येति** ॥ अस्य पुरुषस्य प्रयतो म्रियमाणस्य या वाक् वागभिमानिन्युमा सा मनसि सम्पद्यते ग्रस्तव्यापारा भवति । इतरेन्द्रियदेवताः सजीवा वाचि सम्पद्यन्त इत्यादौ वक्तव्यम् । मनो रुद्रः प्राणे मुख्यप्राणे सम्पद्यते । प्राणस्तेजसि सम्पद्यते । तेजः परस्यां देवतायां सम्पद्यते ॥ ६ ॥

एवं सर्वात्मना जीवस्य भगवदधीनत्वान्न जीवस्य तदभिन्नत्वशङ्का कार्येत्युक्तम् । इतोऽपीत्याह– **स य इति** ॥ प्रकृतः परदेवताख्यो विष्णुः सारत्वात् स इत्युच्यते । यमनाद् ज्ञानरूपत्वाद् वा यः । सर्वस्येष्ट इति ह्येषः । अणीयसा सूक्ष्मेण ज्ञानेन मीयते विषयीक्रियत इत्यणिमा । मानानामणक इति वाऽणिमा । इदं सर्वं जगदैतदात्म्यम् एतदात्मवशम् । ततत्वात्तत् । परानन्दत्वतः साधुस्वरूपत्वाद् वा सत्यम् । सादनात् सः । पूर्णगुणत्वादात्मा । अतत्त्वमिति तत्त्वमिति च पदच्छेदः । एवं सति हे श्वेतकेतो तत्त्वं तत्त्वतः । त्वम् अतदसि तस्मादन्यद् वस्त्वसीत्यर्थः । इति पित्रोपदिष्टेन श्वेतकेतुना जीवानां भगवदाश्रयत्वं कथमुपपन्नम् । यतो न मत्तोऽन्योऽस्मिन् देहेऽस्ति । मया भेदेनानुपलभ्यमानत्वाद् इत्याशयेन भूय एव मा मां भगवान् विज्ञापयत्विति पृष्टे "तथा सोम्येति होवाच" पिता । त्वच्छङ्काया यथोत्तरं स्यात् तथा वक्ष्यामीत्याहेत्यर्थः ॥ ७ ॥

**॥ इति अष्टमः खण्डः ॥**

## उपनिषत् (खण्डः -९)

*जीवब्रह्मभेदविषये पुष्परसदृष्टान्तः*

**यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाᳪ रसानाᳪ समवहारमेकतां गमयन्ति ॥ १ ॥**

ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पत्स्यामह इति ॥ २ ॥

त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद् भवन्ति तत्तदा भवन्ति ॥ ३ ॥

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा(ऽ)-तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥ ९ ॥

भाष्यम्

यदि स्वतोऽन्यः परमो देहेऽस्मिन् संव्यवस्थितः ॥
न दृश्यते कुत इति भूयः पप्रच्छ पुत्रकः ।
अङ्गैरदृश्यमानोऽपि न भेदो नास्ति पुत्रक ॥
यथा पुष्परसा युक्ता अजानन्तोऽपि भेदिनः ।
अजानन्तोऽपि पुरुषास्तथा विष्णोर्हि भेदिनः ।

इति पित्रोपदिष्टः सन् पुत्रः पप्रच्छ तं पुनः ।
चेतनानामविज्ञानं कथमित्येव चिन्तयन् ॥
तं प्रत्याह ........... .... ॥ ९ ॥

पदार्थकौमुदी

भाष्यार्थः

भूय एव मा भगवान् विज्ञापयत्विति पुनः प्रश्नाभिप्रायः परेण

वर्णितः । यद्भवदुक्तमहन्यहनि सर्वाः प्रजाः सुषुप्ते सत्सम्पद्यन्त इति तत्सन्दिग्धम् । यतः सत्सम्पद्य न विदुः सत्सम्पन्ना वयमिति । अतो दृष्टान्तेन प्रत्यापयत्विंत्यर्थ इति । स न युक्तः । तथा सति ते यथा तत्र विवेकं लभन्ते मधुभावं प्राप्ता वयमित्येव वक्तव्यत्वापातात् । नदीसमुद्र-दृष्टान्तोक्तिवैयर्थ्याच्च । नच यथा लोके स्वकीये गृहे सुषुप्त उत्थाय ग्रामान्तरं गतो जानाति स्वगृहादागतोऽस्मीति एवं सत आगतोऽस्मीति जन्तूनां कस्माद् विज्ञानं न भवतीति पुनःप्रश्ने तत्कथनमिति वाच्यम् । तथा सति ताः समुद्रादागता न विदुरितो वयमागता इत्येव वक्तव्यत्वापातेन नदीनां समुद्रप्राप्तेः परस्परज्ञानस्य च कथनायोगात् । नानावृक्षरसा यथा तत्तद्वृक्षादागत्य न विदुरित आगतोऽस्मीत आगतोऽस्मीति पूर्वखण्ड एव तत्रापि दृष्टान्तस्योक्तप्रायत्वाच्चेति भावेन स्वयं पुनः प्रश्नाभिप्रायं प्रमाणेनैवाऽह– **यदीति** ॥ स्वतः स्वस्मात् मत्त इत्यर्थः । न दृश्यते भेदेनेति शेषः । न मत्तोऽन्योऽस्मिन् देहेऽस्ति । मया भेदेनानुपलभ्यमानत्वात् । योऽयमात्मनो भेदेन न पश्यति स ततो न भिद्यत इति व्याप्तेरिति भावः । किमत्र ज्ञानिभिरदृश्यमानत्वं हेतुरथवाऽज्ञानिभिः । नाऽद्यः । असिद्धेः । द्वितीये व्याप्तिभङ्गमाह – **अज्ञैरिति** ॥ कुत इत्यतस्तत्र ''यथा सोम्य मधु'' इति खण्डोक्त-व्यभिचारस्थानमाह– **यथेति** ॥ ''एवमेव खलु सोम्य'' इत्यादिदार्ष्टा-न्तिकवाक्यतात्पर्यमाह– **अजानन्तोऽपीति** ॥ इति ''भूय एव मा भगवान् विज्ञापयतु''इत्येतद् व्याचष्टे– **इति पित्रेति** ॥ पित्रोपदिष्टः सन्निति शेषोक्तिः । प्रश्नाभिप्रायमाह– **चेतनानामिति** ॥ भवत्वचेत-नानां नानावृक्षरसानां भेदापरिज्ञानं, मया तु चेतनत्वेन हेतुर्विशेष्यत इति भावः । तथा सोम्येति होवाचेत्यर्थः– **तं प्रत्याहेति** ॥ **नवमः खण्डः** ॥

## ततश्चेयं खण्डस्याक्षरयोजना

किमुवाचेत्यत आह – **यथा सोम्येत्यादि** ॥ हे सोम्य यथा मधुकृतो भ्रमराः मधु निस्तिष्ठन्ति निर्मिमते । कथं नानात्ययानां नानागतीनां परस्परविलक्षणानां वृक्षाणां रसानां समवहारं समूहमेकतां मिश्रतां गमयन्ति । ''रसान् समवहारम्'' इति पाठे रसानिति द्वितीया षष्ठ्यर्थे ॥ १ ॥

यथा च ते नानावृक्षरसास्तत्र मिश्रतायां विद्यमानमपि विवेकं परस्परभेदं न लभन्ते न जानन्ति । अमुष्य वृक्षस्याऽम्रस्याहं रसोऽस्म्ययं त्वन्यस्येति । तथा परोऽप्यमुष्य पनसस्याहं रसोऽस्म्ययं त्वन्यस्येति । एवमेव खलु सोम्येमाः सर्वाः प्रजाः जीवाः परमेश्वरशक्तिभिरेव स्वे स्वे शरीरे सति परमेश्वरे सम्पद्यते न मिश्रीभावं प्राप्य सति सम्पत्स्यामहे । उपलक्षणमेतत् । सम्पन्नाः सम्पद्यामहे इति न विदुः ॥ २ ॥

अज्ञानभवमनर्थमाह – **त इत्यादिना** ॥ इह लोके ते प्रसिद्धाः । व्याघ्रो वेत्यादि यद् यद्भवन्ति तत् तदा तस्मात् परमेश्वराश्रितत्वाज्ञानापराधाद् भवन्तीति । एतेन यो यमात्मनो भेदेन न पश्यति स ततो न भिद्यत इति व्याप्तेर्भङ्गो दर्शितो भवति ॥ ३ ॥

''स यः'' इत्याद्यभ्यासस्तात्पर्यद्योतनार्थः । ''आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'' इत्युक्तानां श्रवणादीनां नाग्निष्टोमादिवदेकवारेणैव फलप्राप्तिः । किन्त्वावृत्तिः कर्तव्येति ज्ञापनार्थं चायमसकृदुपदेशः । तथाचोक्तं सूत्रकृता – **आवृत्तिर-सकृदुपदेशादिति** (ब्र.सू. ४-१-१) ॥ इति पित्रोपदिष्टेन श्वेतकेतुना भवत्वचेतनानां नानावृक्षरसानां भेदापरिज्ञानम् । मया तु चेतनत्वेन हेतुर्विशेष्यत इत्यभिप्रायेण ''भूय एव मा भगवान् विज्ञापयतु'' इति पृष्टे पिता ''तथा

सोम्य''इति होवाच ॥ ४ ॥

॥ इति नवमः खण्डः ॥

उपनिषत् (खण्डः -१०)

*जीवब्रह्मभेदविषये नदीसमुद्रदृष्टान्तः*

**इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥**

**एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत् तदाभवन्ति ॥ २ ॥**

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत् सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १० ॥**

भाष्यम्

.... .... ... यथा नद्यश्चेतनाश्च समुद्रगाः ।

स्वं वारि[१] नैव जानन्ति प्रजास्तद्वत्प्रजालये ।

स्वतोऽन्योऽस्ति परो देह इति ज्ञायेत मे कथम् ।

---

१. 'स्ववारि' ह.

इति पृष्टः पुनः प्राह वृक्षदृष्टान्ततः पिता ॥ १० ॥

## पदार्थकौमुदी

### भाष्यार्थः

प्रश्नोत्तरत्वेन ''इमाः सोम्य नद्यः'' इति खण्डतात्पर्यमाह– **यथा नद्य इति** ॥ नदीशब्दस्य चेतनपरत्वमभिमान्यधिकरणन्यायसिद्धम् । च-शब्दोऽपिशब्दार्थः । नदीदेवतानामियमहमस्मीयमहमस्मीति न विदु-रित्युक्तस्वस्वरूपापरिज्ञानं कथमित्यत उक्तम्– **स्वं वारीति** ॥ सर्वस्यापि नदीजलस्य सामुद्रजलप्रवेशेन मिश्रीभावात् क्षीरनीरयोरिव स्वीयोदकभेदाज्ञानं युक्तमिति भावः । प्रजानामालयः आश्रयस्तस्मिन् प्रजालये परमेश्वरे स्थित्वाऽपि तमाश्रिताः स्म इति न विदुरिति शेषः । अनेन श्रुतौ दृष्टान्तवाक्यानुसारेण सत ,आगम्य न विदुरित्येतदुप-लक्षणपरमित्युक्तं भवति । एतेन चेतनत्वविशिष्टस्यापि हेतोरनैकान्त्य-मुक्तं भवति । दृष्टं लोके जले वीचीतरङ्गफेनबुद्बुदादय उत्थिताः पुनस्तद्भावं गताः विनष्टा इति । जीवास्तु तत्कारणभावं प्रत्यहं गच्छन्तोऽपि यन्मरणप्रलययोश्च न विनश्यन्तीत्येतद्भूय एव मा भगवान् विज्ञापयतु दृष्टान्तेनेति प्रश्नाभिप्रायवर्णनमयुक्तम् । जलवीचीतरङ्गा-दावुपादानोपादेयभावसत्त्वात् । प्रकृते च तदभावेन वैषम्यात् । ''पेपीयमानो मोदमानस्तिष्ठति'' इत्यन्तस्यैव कथञ्चिद् वक्तव्यत्वेनास्य यदैकां शाखां जीवो जहातीत्यादिवैयर्थ्याच्चेति भावेन भूय एवेति पुनः प्रश्नाभिप्रायं स्वयमाह – **स्वत इति** ॥ परः परमात्मा । स्वतोऽन्यो देहेऽस्तीति सत्यम् । तथाऽपि जीवस्य तदधीनत्वमिति शेषः ॥ **दशमः खण्डः** ॥

## ततश्चेयं खण्डस्याक्षरयोजना

किमुवाच – **इमाः सोमेत्यादि** ॥ हे सोम्येमाः प्रसिद्धाः गङ्गाद्याः नदीदेवताः प्राच्यः प्रागञ्चनात् प्राचीशब्दवाच्याः पुरस्तात् स्यन्दते स्रवन्ति । तथा प्रत्यगञ्चनात् प्रतीचीशब्दवाच्याः पश्चात् स्यन्दन्ते । एवमत्यन्तविलक्षणास्ता नद्यो मेघादिद्वारेण समुद्रादागत्य उत्पन्न-जलत्वात् समुद्रमेवापियन्ति । एवशब्दस्योत्तरत्रान्वयः । अविज्ञेयत्वेन प्राप्नुवन्ति । प्रविशन्तीति यावत् । तथाऽपि स समुद्रः समुद्र एव भवति । न नदीभावं प्राप्नोतीत्यर्थः । ''स एव समुद्रो भवति'' इति पूर्ववाक्यगतैवकारान्वयः । समुद्र एव समुद्रो भवति । न नद्य इत्यर्थः । ता नदीदेवताः यथा तत्र समुद्रे इयं गङ्गाऽहमस्मीयं तु यमुनाऽयं च समुद्र इत्येवमन्या अपि न विदुः । स्वं स्वं वारि नैव जानन्ति ॥ १ ॥

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सतः परमेश्वरादागम्योत्पद्यापि सत आगच्छामहे उत्पन्ना स्म इति न विदुः । एवं परमेश्वरे स्थित्वाऽपि तमाश्रिताः स्म इति न विदुः । ''त इह''इत्यादि पूर्ववत् । अनेन चेतनत्वविशिष्टस्यापि हेतोरनैकान्त्यमुक्तं भवति । इति पित्रोपदिष्टेन पुत्रेणास्तीश्वरः स्वतो भिन्नस्तथाऽपि जीवस्य तदधीनत्वं कुत इत्याशयवता ''भूय एव मा भगवान् विज्ञापयतु'' इति पृष्टे ''तथा सोम्येति होवाच'' पिता ॥ २- ३ ॥

॥ इति दशमः खण्डः ॥

## उपनिषत् (खण्डः-११)

*'जीवोऽस्वतन्त्रः' इत्यस्मिन् विषये वृक्षदृष्टान्तः*

**अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद् यो**

मध्येऽभ्याहन्याज्जीवन् स्रवेद् योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनाऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥

अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच ॥ २ ॥

जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत् सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ ११ ॥

### भाष्यम्

अभिमानिनोऽस्वतन्त्रत्वाद् भेदेन ज्ञायते तरौ ।
हरिः किमु मनुष्येषु शोषो ह्यस्यास्वतन्त्रतः ॥ ११ ॥

## पदार्थकौमुदी

### भाष्यार्थः

वृक्षदृष्टान्तोक्त्या कथमस्योत्तरं जातमित्यतस्तदभिप्रायमाह– **अभिमानिन इति** ॥ वृक्षजीवस्य भेदेन तन्नियामकत्वेन च । अनेन वृक्षजीवः केनचिन्नियम्योऽस्वतन्त्रत्वाद् रथादिवदित्यनुमानं सूचितम् । किमु मनुष्येष्विति कथं कैमुत्यमिति चेत् । मनुष्याणां बहुलं भग्नसङ्कल्पत्वेनास्वातन्त्र्यं प्रत्यक्षसिद्धम् । वृक्षजीवे त्वस्वातन्त्र्यं कार्यलिङ्गानुमेयमतो युक्तं कैमुत्यमित्याशयेनाऽह– **शोष इति** ॥ ''अस्य वृक्षजीवस्यानुपहतात्यक्तदेहेन मया भवितव्यमितीच्छायामप्यस्वातन्त्र्यादेव हि शरीरशोषछेदाद्यनिष्टं भवत्यन्यथा तन्न स्यादित्यर्थः ॥ खं० ॥११ ॥

## ततश्चेयं खण्डस्याक्षरयोजना

किमुवाच– **अस्येत्यादि** ॥ हे सोम्य महतो वृक्षस्य यो यः कश्चिद् यदि मूलेऽभ्याहन्यात् तदा जीवन् जीवेनानिरुद्धाख्येन परमेश्वरेणाऽधिष्ठितश्चेत् तदा स्रवेत् रसमेवोद्गिरेत् । नतु म्रियते । अङ्कुरमात्रस्याऽभ्याघातेऽवस्थानासम्भवान्महत इत्युक्तम् । एवं ''यो मध्येऽभ्याहन्यात्'' इत्यादिकमपि व्याख्येयम् । एवं स एषः वृक्षजीवोऽनेन प्रकृतेन जीवेनाऽत्मना परमात्मनाऽनुप्रभूतः प्राप्तोऽधिष्ठितदेहः पेपीयमानः पुनः पुनर्भृशं वा पिबन् मोदमानस्तिष्ठति ॥ १ ॥

एवं वृक्षजीवस्य सर्वदाऽनुपहतात्यक्तदेहेन सुखिनैव मया स्थातव्यमितीच्छायामपि कदाचिदेवेश्वरानुग्रहे सति विघातिषु बाह्यकारणेषु सत्स्वप्येवमवस्थानं भवतीत्युक्तम् । इदानीं कदाचिदीश्वरानुग्रहाभावे बाह्यकारणबलवत्त्वाभावेऽपि शरीरशोषाद्यनिष्टं भवत्येवेत्याह – **अस्येति** ॥ अस्य वृक्षजीवस्य यदैकां शाखां जीवः परमात्मा जहात्यथ तदा सा शुष्यति । यदा द्वितीयां शाखां जहाति तदा साऽपि शुष्यति । यदा तृतीयां जहाति तदा साऽपि शुष्यति । यदा सर्वं जहाति तदा सर्वोऽपि शुष्यति । यथाऽयं दृष्टान्तः एवमेव खलु सोम्य मानुषशरीरेऽपि जीवस्येश्वराधीनत्वं विद्धीति होवाच पिता ॥ २ ॥

तदेव विशदमाह– **जीवापेतमिति** ॥ जीवेन परमात्मनाऽपेतं त्यक्तम् । त्यक्तदेहमिति यावत् । इदं संसारिजातं म्रियते प्राणैर्वियुज्यते । तथाच स्मृतिः– ''ब्रह्मणा त्यक्तदेहस्तु मृत इत्युच्यते बुधैः'' इति । एवं भगवतोऽपि मरणं चेत्, को विशेषस्तस्येत्यत आह – **न जीव इति** ॥ जीवः परमात्मा तु कदाऽपि न म्रियत इत्येवमत्यन्तविलक्षणौ जीवपराविति शेषः । अत्र प्रकरणे जीवशब्देन परमात्मैवाभिहितः ।

"जीव इति भगवतोऽनिरुद्धस्याऽख्या" इति श्रुतेः। "विष्णुर्जीव इति प्रोक्तः सततं प्राणधारणात्" इत्यादिस्मृतेश्च। नहि संसारिणो मुख्यतः प्राणधारकत्वं युज्यत इत्यवगन्तव्यम्। इत्युपदिष्टेन पुत्रेण एवं जीवस्य सत्तादिप्रदः परमात्माऽत्रैव शरीरे जीवान्तर्वर्तमानो जीवेन कुतो न दृश्यते ? सौक्ष्म्यादिति चेत्। जीवस्य सूक्ष्मस्वात्मदर्शिनः सूक्ष्मदर्शन-शक्तिसद्भावादित्याशयेन पुनः पृष्टे पिताऽवोचत्॥ ३॥

**॥ इति एकादशः खण्डः॥ ११॥**

## उपनिषत् (खण्डः -१२)

*परमात्मनोऽप्रत्यक्षत्वविषये वटबीजदृष्टान्तः*

**न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति॥ १॥**

**तꣳ होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान् न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति॥ २॥**

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत् सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच॥ ३॥ १२॥**

## भाष्यम्

**ज्ञायते न कथं स्वस्मिन् सूक्ष्मे ज्ञाते परो हरिः ।**
**तत्रस्थ इति पृष्टः संस्तमाहोद्दालकः सुतम् ॥**
**वटबीजे यथा सूक्ष्मे महान्न्यग्रोधभावयुक् ।**
**न दृश्यतेऽभिमानी स एवं जीवगतो हरिः ॥ १२ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

कथं पुनरिदमत्यन्तस्थूलं पृथिव्यादिजगदत्यन्तसूक्ष्मात् सतो जायत इत्येतद् दृष्टान्तेन ''भूय एव मा भगवान् विज्ञापयतु''इति पृष्टे यथा सूक्ष्मधाना सामर्थ्यात् तत्परिणामो महान् न्यग्रोधस्तिष्ठत्येवं परमसूक्ष्म-परमात्मसामर्थ्यात् तत्परिणामोऽयं प्रपञ्च इत्युत्तरमुच्यत इति परकीय-प्रश्नोत्तराभिप्रायवर्णनमयुक्तम् । अस्यार्थस्याव्यवधानेन प्रागनुक्तत्वेन तत्र दृष्टान्ताकाङ्क्षायोगात् । सतः शुद्धस्य सौक्ष्म्यस्याप्यभावेन विशिष्टस्य तु सौक्ष्म्यवत् स्थौल्यस्यापि भावेन प्रश्नायोगाच्च । ''एतस्य वै सोम्यैषोऽणिम्नः'' इत्युक्ताणिमशब्दस्य धानापरत्वासम्भवेन परिहारा-योगाच्च । तथाहि । धानानां ''किमत्र पश्यसि''इति ''अण्व्य इवेमा धाना भगवः'' इति भावप्रत्ययरहितेन स्त्रीलिङ्गेन बहुवचनान्तेनेवशब्द-शिरस्केण चाणुशब्देन निर्दिष्टतया तद्विपरीताणिमशब्दानर्हत्वात् । ''न निभालयसे''इत्युक्तादृश्यत्वायोगाच्च । धानाया एव वटोपादानत्वेन धानाभेदनादिवैयर्थ्याच्चेति भावेन स्वयं प्रश्नाभिप्रायं तावदाह– **ज्ञायत इति ॥** सूक्ष्मे जीवे । एवं जीवस्य सत्तादिप्रदो हरिरत्रैव शरीरे जीवे वर्तते चेज्जीवेन कुतो न दृश्यते ? सूक्ष्मत्वादिति चेत्, जीवस्य सूक्ष्मस्वात्म-

दर्शिनः सूक्ष्मदर्शनशक्तिसद्भावादिति भावः ।

प्रश्नोत्तरत्वेन ''यं वै सोम्यैतमणिमानं न निभालयसे'' इति वाक्यतात्पर्यमाह– **वटबीज इति** ॥ अभिमानी बीजाभिमानी । स एव महावृक्षाभिमानीत्युक्तम् । महांश्चासौ न्यग्रोधश्च तस्मिन् भावयुगिति । अनेन ''एतस्य वै सोम्यैषोऽणिम्नः'' इति वाक्यमुक्तार्थम् । सूक्ष्मे वटबीजे दृश्यमाने यथा तदभिमानी न दृश्यतेऽतिसूक्ष्मत्वात् । एवं सूक्ष्मे जीवे दृश्यमानेऽपि जीवगतो हरिर्न दृश्यते । परमसूक्ष्मत्वादित्यर्थः । नन्वनेन ''यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्नः'' इत्युक्ताणिमशब्दो बीजजीवपरतया व्याख्यातः । तथा सति ''नहि धानापरमात्मनोरभेदोऽस्ति'' इत्युत्तरवाक्यविरोधः । अणिमशब्दस्य परमात्मपरत्वं विना तस्यायोगात् । ''अणिमशब्देन पर एवाभिहितः'' इति तत्त्वनिर्णयविरोधाच्चेति चेन्न ।

अयमभिप्रायो भाष्यकारस्य । अणिमशब्दो हि परेण धानापरो व्याख्यातः सर्वथा स न युक्तः । प्रागुक्तबहुबाधकसद्भावात् । किन्तु परमात्मपर एव । ''स एषोऽणिमा'' इत्यणिमशब्देन प्रकृतत्वात् । तत्रैव तच्छब्दस्य मुख्यत्वाच्च । अथवा जीवपर एवास्तु । धानापरत्वपक्षोक्तदोषाणामत्राभावात् । बहुबाधकवशेनाणिमशब्देनाप्रकृतस्यापि ''अस्य सोम्य महतो वृक्षस्य'' इत्यादिना प्रकृतस्य वृक्षजीवस्याणिमशब्देन ग्रहणोपपत्तेः । वृक्षाभिमानिन एव बीजाभिमानित्वात् । अत एव ''महान् न्यग्रोधभावयुक्'' इति बीजाभिमानिविशेषणमुक्तमिति ॥

॥ **द्वादशः खण्डः** ॥ १२ ॥

## ततश्चेयं खण्डस्याक्षरयोजना

किमवोचत्– **न्यग्रोधफलमित्यादि** ॥ हे सोम्यातो वृक्षान्न्यग्रोध-फलमाहरेत्युवाच पिता । आहृत्येदं न्यग्रोधफलमाहृतं भगवो भगवन्निति पुत्रः । इदं फलं भिन्धीति पिता । तद्भित्वा भिन्नं भगव इति पुत्रः । अत्र भिन्ने फले किं पश्यसीति पिता । अण्व्य इव सूक्ष्मा इवेमा धाना बीजानि पश्यामीति पुत्रः । हे अङ्ग आसां धानानां मध्ये एकां धानां भिन्धीति पिता । भित्त्वा भिन्ना भगव इति पुत्रः । अत्र भिन्नायां धानायां किं पश्यसीति पिता । न किञ्चन पश्यामि भगव इति पुत्रः ॥ १ ॥

एवमुक्तवन्तं तमुवाच पिता । यमेतमणिमानं भावभवित्रोरभेदात् । अतिसूक्ष्मं बीजजीवं न निभालयसे न पश्यसि । एतस्याणिम्नः सामर्थ्यादेवं परिदृश्यमानप्रकारेण महान्न्यग्रोधस्तिष्ठति । यद्वाऽणिम-शब्दः परमात् परः । नात्रान्यथात्वशङ्का कार्येत्याह – **श्रद्धत्स्व सोम्येति पिता** ॥ अत्र वृक्षः प्रपञ्चः। फलं शरीरम् । धाना जीवः । तत्र यथा सूक्ष्मवटबीजे दृश्यमानेऽपि यत्प्रभावाद् वटावस्थानं स बीजान्तर्गतो बीजजीवः परमात्मा वा यथा परमसूक्ष्मत्वान्न दृश्यते तथा जीवादपि सूक्ष्मत्वात् तदन्तर्गत इत्युक्तं भवति ॥ २ ॥

"स यः" इत्यादिकमुक्तार्थम् । इत्युपदिष्टेन श्वेतकेतुना । ननु वटावस्थानादिना कार्येणेश्वरसामर्थ्यं तावत् प्रत्यक्षमिव दृश्यते । एवं तत्सामर्थ्ये दृश्यमानेऽपि तस्यादर्शनमित्येतत् कथमहं विजानीया-मित्याशयवता "भूय एव मा भगवान् विज्ञापयतु" इति प्रार्थिते पिता "तथा सोम्येति होवाच" ॥ ३ ॥

॥ इति द्वादशः खण्डः ॥

## उपनिषत् (खण्डः - १३)

*'परमात्मनः कार्यं प्रत्यक्षम्' इति विषये लवणोदकदृष्टान्तः*

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तꣳ होवाच यद्दोषा लवणमुदकेऽवधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥ १ ॥

यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्त्यादाचामेति कथमिति लवणमित्यभिप्रास्यैतदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत् संवर्तते तꣳ होवाचात्र वाव किल सत् सोम्यैत-मणिमानं न निभालयसेऽत्रैव किलेति ॥ २ ॥

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत् सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १३ ॥

भाष्यम्

कथं दृश्येत तच्छक्तिः पृथक् तस्य ह्यदर्शने ।
इति भावयुतं प्राह पुत्रमुद्दालकः पुनः ॥
यथाऽप्सु लवणं व्याप्तं रसदृष्टौ न दृश्यते[१]।
एवं चेतनगो विष्णुस्तद्भिन्नोऽपि न दृश्यते ॥ १३ ॥

---

१. 'रसदृष्ट्यैव दृश्यते' ह.

## पदार्थकौमुदी

### भाष्यार्थः

यदि तत् सज्जगतो मूलं तर्हि कस्मान्नोपलभ्यत इत्येतद् दृष्टान्तेन विज्ञापयत्विति प्रश्नाभिप्रायवर्णनमयुक्तम् । त्वन्मते सन् घट इत्यादावप्यधिष्ठानसदर्थोपलब्धेरेवं प्रश्नायोगात् । परमसूक्ष्मत्वान्न दृश्यत इति पूर्वखण्ड एवोक्तत्वाच्चेति भावेन स्वयं प्रश्नाभिप्रायमाह – **कथमिति** ।। यदि हरिर्जीवात् पृथगेवोक्तरीत्या न दृश्येत तर्हि तस्यादर्शने तच्छक्तिः कथं दृश्येत ? दृश्यते च वटावस्थानादिनानाविधकार्येणेश्वरसामर्थ्यं तावत् प्रत्यक्षमिव । एवं तत्सामर्थ्ये दृश्यमाने तस्यादर्शनमित्येतत् कथमिति भावयुतमिति भावः । तदुत्तरत्वेन लवणरसदृष्टान्तकथनाभिप्रायमाह – **यथेति** ।। अप्सु व्याप्तमित्यन्वयः । यथाऽप्सु व्याप्तं लवणमत एव तद्भिन्नं तद्गुणरसदृष्टावपि न दृश्यते । एवं चेतनगस्तद्भिन्नो विष्णुस्तत्सामर्थ्ये दृश्यमानेऽपि न दृश्यत इत्यर्थः ।। त्रयोदशः खण्डः ।।

### ततश्चेयं खण्डस्याक्षरयोजना

।। **लवणमित्यादि** ।। हे अङ्गैतत्पिण्डरूपं लवणमुदके घटादिस्थेऽवधाय निक्षिप्य मा मां प्रातरुपसीदथाः उपागच्छेति पित्रोक्तः स ह तथा चकार । तद्ध तथा चकारेति क्वचित्पाठः । तत्र यथा पित्रोक्तं तत्तथा चकार पुत्र इत्यर्थः । तं होवाच पिता । हे अङ्ग दोषा रात्रौ यल्लवणमुदकेऽवधाः अवाधास्तदाहरेति । तत् लवणमुदके हस्तेनावमृश्य न विवेद पुत्रः । यथा विलीनमेवात्यन्तं विनष्टं वस्तु न विन्दति तथाऽङ्गास्योदकस्यान्तात् पूर्वदिगवस्थितादवयवादुद्धृत्यैक-देशमाचामेति पिता । आचान्तवन्तं कथं तिष्ठतीति पप्रच्छ पिता । लवणं लवणरसोपेतमित्याह पुत्रः । एवं मध्यादित्यादि व्याख्येयम् ।

अन्त्यात् पश्चिमदिगवस्थितात् । एतद् उदकमभिप्रास्य निरस्याथ मा माम् उपसीदथा इति पिता । तद्ध तथा चकार पुत्रः । तल्लवणं शश्वदुदक एव संवर्तते । नह्यपगतमिति श्रुतेः स्ववाक्यं तत् तद्ध तथा चकारेति वाक्यं शश्वदङ्ग तदाहरेत्याद्यनन्तरं संवर्तते । अनुवर्तनीयमिति वा । तं होवाच पिता । हे सोम्यात्र वावाऽत्रैवोदके सद् विद्यमानं लवणं तद्गुणे दृश्यमानेऽपि न निभालयसे । अत्रैव किलेति पुनर्वचनमादरार्थम् । इत्युवाचेति सम्बन्धः । यथेदं तथा सामर्थ्ये दृश्यमानेऽपि भगवान्न दृश्यत इति भावः ॥ १-२ ॥

इति पित्रोपदिष्टेन पुत्रेणैवंविधो हरिरविद्यापिहितनयनेनानेन केनोपायेन दृश्यते प्राप्यते चेति जिज्ञासावता भूय एवेति पृष्टे तथा सोम्येति होवाच पिता ॥ ३ ॥

॥ इति त्रयोदशः खण्डः ॥

## उपनिषत् (खण्डः - १४)

*गुरूपदेशादेव भगवत्प्राप्तिः*

**यथा सोम्य पुरुषं गन्धारभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्राध्मायीताभि-नद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥**

**तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाऽऽचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत इति ॥ २ ॥**

**स य एषोऽणिमैतदात्म्यमिदꣳसर्वं तत् सत्यꣳ स आत्माऽ-**

**तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १४ ॥**

## भाष्यम्

**कथं स ज्ञायते विष्णुर्भिन्न इत्यत्र चाब्रवीत् ।**
**यथैवान्योपदेशेन बद्धाक्षः स्वगृहं[1] व्रजेत् ।**
**तथाऽऽचार्योपदेशेन भिन्नमीशं व्रजेत् पुमान् ॥ १४ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

जगन्मूलसदुपलब्धौ क उपाय इति विज्ञापयत्विति परकीयप्रश्नाभिप्रायवर्णनमयुक्तम् । विवर्ताधिष्ठानस्य सतः सर्वप्रत्ययवेद्यत्वाङ्गीकारेणाऽऽचार्योपदेशानपेक्षणात् । किञ्चाऽऽचार्योपदेशस्य विशिष्टज्ञापकत्वे त्वप्रामाण्यम् । स्वरूपमात्रज्ञापकत्वे सिद्धार्थत्वम् । स्वरूपमात्रस्य पूर्वमेव सिद्धत्वादिति भावेन स्वयं प्रश्नाभिप्रायमाह– **कथमिति** ॥ कथं केनोपायेन . सः जीवगो भिन्नो विष्णुरविद्यापटलपिहितनयनेन कथं केनोपायेन दृश्यते प्राप्यते चेत्यर्थः । तदुत्तरत्वेन ''यथा सोम्य पुरुषम्'' इति खण्डतात्पर्यमाह– **यथेति** ॥ पूर्वं बद्धाक्षः अनन्तरं मुक्ताक्षबन्ध इत्यपि ग्राह्यम् । व्रजेत् जानीयाद् गच्छेच्च ॥ चतुर्दशः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

''हे सोम्य यथा पुरुषं धनिकं गन्धारेभ्यो गन्धारसञ्ज्ञिकेभ्यो जनपदेभ्योऽभिनद्धाक्षम् अक्षिणी बद्ध्वेति यावत् । आनीय तं

---

१. 'स्वं गृहं' ह.पाठः.

ततोऽनन्तरम् अतिजने जनरहितेऽरण्ये विसृजेच्चोरः । सः विसृष्टो यथा तत्रारण्ये प्राङ्वोदङ्वाऽधराङ् वा सर्वदिगभिमुखः प्राध्मायीत उच्चैः शब्दं कुर्यात् । किमिति ? अभिनद्धाक्षः आनीतोऽस्मि अभिनद्धाक्षो विसृष्टोऽस्मीति ॥ १ ॥

यथा सम्यक् तद्वाक्यं श्रुत्वा कश्चित् कृपावांस्तस्याभिहननं बन्धनं प्रमुच्य मुक्त्वा ब्रूयात् । एतां दिशमस्यां दिशि गन्धाराः सन्ति । अत एतां दिशं व्रजेति । सः तेनोपदिष्टाद् ग्रामान्निर्गत्यापरं ग्रामं पृच्छन् पण्डितः प्राज्ञो मेधावी स्मृतिमान् गन्धारानेवोपसम्पद्यते पश्यति प्राप्नोति च । एवमेव अनाद्यविद्यादिभिराच्छादितनिजज्ञानः पुरुषो जीवः संसारे पतितः परमेश्वरानुग्रहाज्जातजिज्ञासः आचार्यवान् गुरूपदेशं लब्ध्वेति यावत् । क्रमापन्नानि श्रवणादीनि साधनान्यनुष्ठाय स्वजन्मभूमिं भगवन्तं वेद पश्यति प्राप्नोतीति चेत्यर्थः । ननु यथाऽन्योपदेशेन बद्धाक्षः स्वगृहं पश्यति व्रजति च तथा पुमानाचार्योपदेशेन भिन्नमीशं पश्यति व्रजति चेत्य-नुपपन्नम् । दर्शनाव्यवहितोत्तरकालं भगवत्प्राप्तेरभावादित्यत आह – **तस्येति ॥** तस्यापरोक्षज्ञानिनः । तावदेव मोक्षाय चिरं क्षेपो यावन्न विमोक्ष्ये विमोक्ष्येत प्रतिबन्धेन प्रारब्धकर्मणा । यथा ज्ञानानन्तरमपि न मोक्षस्तथा कर्मक्षयानन्तरमपीति शङ्का मा भूदिति भावेनाऽह– **अथेति ॥** अथाऽरब्धपुण्यपापस्य भोगेन क्षपणादनु । ब्रह्म सम्पत्स्यत एव । अथशब्दो नियमसूचकश्च । इत्युवाचेति पूर्वखण्डस्थेनान्वयः ॥ २ ॥

इति पित्रोपदिष्टेनावगतं वृक्षशरीरे भगवदधीनत्वं जीवस्य मानुषशरीर एव तज्ज्ञापयेत्याशयवता ''भूय एव मा भगवान् विज्ञापयतु''इत्युक्तः पिता ''तथा सोम्येति होवाच'' ॥ ३ ॥

**॥ इति चतुर्दशः खण्डः ॥**

## उपनिषत् (खण्डः -१५)

*मनुष्यस्यास्वातन्त्र्यविषये मरणावस्थानिदर्शनम्*

**पुरुषꣳ सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥**

**अथ यदाऽस्य वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥ २ ॥**

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १५ ॥**

### भाष्यम्

**यथा पुंसोऽस्वतन्त्रत्वं तज्ज्ञापयतु मा भवान् ।**
**इत्युक्त आह ज्ञाने हि दृष्टैवास्यास्वतन्त्रता ॥ १५ ॥**

### पदार्थकौमुदी

### भाष्यार्थः

[१]ननु विद्वान् केन क्रमेण ब्रह्माऽप्नोतीति जिज्ञासायां तत्क्रमप्रदर्शनार्थं ''पुरुषं सोम्योपतापिनम्'' इत्याद्युच्यत इति व्याख्यानमसत् । ''अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते''

---

१. 'ननु' इति पदं मातृकायां न दृश्यते । प.सं. २५४.

इति प्रागेवोक्तत्वात् । पूर्ववदत्रापि तस्य ''वाङ् मनसि सम्पद्यते'' इत्यादि ''तेजः परस्यां देवतायाम्'' इत्यन्तेनैव पूर्तेः ''तस्य यावन्न वाङ्-मनसि सम्पद्यते'' इत्यादिना ज्ञाने जीवस्य पराधीनत्वोक्तिवैयर्थ्याच्च ।

''यदा प्राणान् ददातीशस्तदा चेतनकोऽखिलम् ।

जानाति ग्रस्तकरणस्तेन वेत्ति न किञ्चन ॥'' इति स्मृतिविरोधाच्चेति भावेन प्रश्नाभिप्रायमाह – **यथेति** ॥ अवगतं वृक्षशरीरे भगवदधीनत्वं, जीवस्य मानुषशरीर एव तज्ज्ञापयत्वित्यर्थः । तेन न सिद्धार्थत्वं प्रश्नस्य। तदुत्तरत्वेन ''पुरुषं सोम्य''इति खण्डतात्पर्यमाह – **ज्ञाने हीति** ॥ ज्ञानस्य वागादिव्यापारान्वयव्यतिरेकानुविधायित्वोक्तेरित्यर्थः ॥ पञ्च-दशः खण्डः ॥

## ततश्चेयं खण्डस्याक्षरयोजना

हे सोम्योपतापिनं रोगिणं पुरुषं ज्ञातयः पर्युपासते परित उपविशन्ति । किं कुर्वतः । हे देवदत्त त्वं मां जानासि मां जानासीति वदन्तः । एवमेभिरुक्ते स कदा जानाति कदा च न जानातीत्यत आह– **तस्येति** ॥ तस्य म्रियमाणस्य पुरुषस्य वाग् वागभिमानिन्युमा मनसि मनोभिमानिरुद्रे यावन्न सम्पद्यते ग्रस्तव्यापारा न भवति । मनश्च प्राणे न सम्पद्यते । प्राणस्तेजसि न सम्पद्यते । तेजः परस्यां देवतायां न सम्पद्यते । तावज्जानाति ॥ १ ॥

अथ यदाऽस्य वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां सम्पद्यते । अथ तदा न जानाति । एवं मानुषशरीर एव जीवस्य मरणकाले ज्ञात्यादिस्वरूपज्ञानेऽस्वातन्त्र्यं दृष्टमिति भावः ॥ २ ॥

इति पित्रोपदिष्टेन पुत्रेणैवं सर्वप्रेरकं महानुभावं भगवन्तं योऽत्यन्त-

भेदेन जानाति यश्च स एवाहमस्मीति । तयोः कीदृशं फलं भवतीति [१]जिज्ञासाया भूय एवेत्युक्तः पिता तथेति होवाच ॥ ३ ॥

**॥ इति पञ्चदशः खण्डः ॥ १५ ॥**

## उपनिषत् (खण्डः -१६)

*अभेदज्ञानस्यानर्थकारित्वे चोरदृष्टान्तः*

**पुरुषꣳ सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनाऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥ १ ॥**

**अथ स यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनाऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥ २ ॥**

**स यथा तत्र न दह्येत[२] एतदात्म्यमिदꣳ सर्वं तत् सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति तद्धास्य विजज्ञाविति ॥ ३ ॥ १६ ॥[३]**

**॥ इति श्रीमच्छान्दोग्योपनिषदि षष्ठोऽध्यायः ॥**

---

१.'जिज्ञासया' इति मुद्रितपुस्तके । २.'नादाह्येत' क. ३. अत्राध्यायान्ते वेदेशीयटीकानुसारेण उपनिषदि अधिकः पाठो दृश्यते – सर्वेषां खलु भूतानामात्मा सत्ये प्रतिष्ठितः । तेनाऽत्मानमन्तर्धाय न किञ्चित् पापमृच्छति । आत्मा सत्य आत्मा

## भाष्यम्

अभेदज्ञानिनां दोषः कीदृशः स्यादितीरिते ।
प्राह यस्मात् परस्वानां हर्ता राज्ञा निहन्यते ॥
किमु राज्ञोऽपहर्तैवं ब्रह्मस्तेनो निहन्यते [१] ।
सर्वेषां शास्तृ यद् ब्रह्म तत्स्वरूपतया स्मरन् ॥
ब्रह्मस्तेनो निहन्येत[२] तमस्यन्धे सदैव हि ।
दोषा ह्यज्ञानपूर्वास्तु बद्ध्वा पुरुषमीशितुः ।
विष्णोर्हर्तेति बाधन्ते चाभिमानकृतास्पदम् ॥

## पदार्थकौमुदी

### भाष्यार्थः

यदि वागादिलयक्रमेण मरिष्यतो मुमुक्षतश्च तुल्या सत्सम्पत्तिस्तर्हि[३] तत्र विद्वान् सम्पन्नो नाऽवर्तते आवर्तते त्वविद्वानित्यत्र किं कारणमिति जिज्ञासायां सत्यब्रह्मात्मत्वाभिसन्धित्यागात्यागौ[४] तत्र कारणमिति प्रदर्शनार्थं ''पुरुषं सोम्य''इत्यादि वाक्यं पठ्यत इत्यसत् । दूषयिष्यमाणत्वादिति भावेन प्रश्नाभिप्रायमाह– **अभेदेति** ॥

---

साक्षी सतां धर्मः प्रतापवान् । न स पापानि कुरुते यस्याऽत्मा भवति प्रियो जायत्येको म्रियत्येकोऽश्नात्येकः शुभाशुभम् ॥ इति ॥ तद्धास्य विजज्ञाविति विजज्ञाविति । तदेष श्लोकः –

सर्वभूतात्मभूतेभ्यः सम्यग् भूतानि पश्यतो देवा अपि मार्गे मुह्यन्ति पदज्ञानात् पदैषिणः इति । पदज्ञानात् पदैषिण इति ॥

१.'हि हन्यते' ह्.२. 'हि हन्यते' ह्. ३. 'तर्हि' इति पदं मुद्रितपुस्तके न दृश्यते । प.सं. २५४. ४. 'अभिसन्धित्यागौ' इति मातृकायाम् । प.सं. २५४.

दोषोऽनर्थः । भेदज्ञानिनां च कीदृशः पुरुषार्थः स्यादित्यपि ग्राह्यम् । तदुत्तरत्वेन ''पुरुषं सोम्य'' इति खण्डतात्पर्यमाह– **यस्मादिति** ॥ यदेत्यर्थः । राज्ञोऽपहर्त्रा सत्यपि राज्ञि राजाऽहमिति वदन्नित्यर्थः । स्वव्यतिरिक्तराजाभावोक्तेरिति भावः । यथा राजाऽपहर्तैवम् । श्रुतावपहर्त्रादिदृष्टान्तेनाभेदज्ञानिनः फलमुक्तम् । तत्तु न परस्वापहर्त्रादिदृष्टान्तेन ऐक्यज्ञानिनस्तत्साम्याभावात् । किं नाम ? राजापहर्त्रादिदृष्टान्तेनैव । ततश्च हत्याधिक्यं तस्य फलमित्यनेनोक्तं भवति । ननु कथमभेदज्ञानिनो ब्रह्मस्तेनत्वम् ? कुत्र वा स निहन्यत इत्यत आह – **सर्वेषामिति** ॥ शास्तृ शिक्षकम् । स्वस्वरूपव्यतिरेकेण ब्रह्मभावस्मरणाद् ब्रह्मस्तेन इत्यर्थः । ननु राजाऽहमिति दृढाभिमानमतदर्हं राजपुरुषा बाधन्ते । ब्रह्मस्तेनं के बाधन्त इत्यत आह– **दोषा हीति** ॥ दोषा इति तदभिमानिनो देवा वायुकिङ्कराः । मिथ्याज्ञानपूर्वा इत्यर्थः । वस्तुतः किमयं विष्णोरपहर्ता ? नेत्याह – **अभिमानेति** ॥ ब्रह्मैवाहमित्यभिमाने कृतास्पदमित्यर्थः ।

## भाष्यम्

**ततो विचारयन्त्येनं देवता हरिणा सह ॥**

**नाहं विष्णुर्न स्वतन्त्रो न च पूर्णगुणोऽस्म्यहम् ।**

**मम स्वामी हरिर्नित्यं स्वतन्त्रः पूर्णसद्गुणः[१] ॥**

**एवं दार्ढ्यं शपथवद्यदा कुर्यादयं तदा[२] ।**

**जीवन्नेव[३] न तापी स्यादन्तरानन्द[४] भोगतः ॥**

**तदा तेभ्यो मोचयित्वा हत्वा मिथ्याभिशंसिनः ।**

१.'पूर्णषड्गुणः' क. २.'सदा'क. ३.'जानन्नेव' क. ४.'अनन्तानन्त' क.

**स्वकीयं कुरुते विष्णुरन्यथा तैः सह प्रभुः ॥**

**तमस्यन्धे पातयति महाकारागृहोपमे ।**

**महान्धे वा पातयति हस्तच्छेदादिसम्मिते ॥**

**ततोऽधरे वा तद्योग्यं दृढाभेदं वधोपमे ।**

**तस्मादाचार्यतो ज्ञात्वा विष्णोर्भेदेन पूर्णताम् ।**

**उपासीत ततो मुक्तिं याति नास्त्यत्र संशयः ॥'**

**इत्यादि सामसंहितायाम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

''एवं स दह्यतेऽथ हन्यते'' इत्यन्तेनोक्तसाम्यं दार्ष्टान्तिके प्रदर्श्य ''स यदि तस्याकर्ता भवति'' इत्यारभ्य ''स यथा तत्र न दाह्येत'' इत्यन्तेनोक्तसाम्यमपि दार्ष्टान्तिके दर्शयति – **तत इति** ॥ तत इति बुद्धिस्थपरामर्शः । आनयनानन्तरमित्यर्थः । एनं भेदज्ञानिनम् । अपभ्रष्टैः ब्रह्मस्तेनत्वेन सूचितं विचारयन्ति । परशुतापादिना । इदं पूर्ववाक्येऽपि ग्राह्यम् । न केवलं तापाभावमात्रं, किं नाम ? यथा राजा शिक्षकेभ्यस्तं मोचयित्वा मृषावादिनः पिशुनान् हत्वा स्वकीयं कुरुते एवं विष्णुरपीत्याह– **तदेति** ॥ तेभ्योऽज्ञानादिदोषेभ्यः तमिति शेषः । मिथ्याभिशंसिनोऽपभ्रष्टदेवान् । अवश्यमेतदेव सम्पाद्यमिति भावेन विपक्षे बाधकं सूचयन्नुक्तं विशदयति– **अन्यथेति** ॥ अभेदज्ञानेतैः पूर्वाभेदज्ञानिभिः सह पातयति वायुकिङ्करैः ।

''महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम्'' इत्युक्तेरभेदज्ञान-तारतम्यानुसारेणेयं फलोक्तिः । ''एवमेव खलु सोम्याऽचार्यवान् पुरुषो

वेद'' इति वाक्यं स्थानान्तरस्थमपि सर्वत्र सम्बध्यत इति ज्ञापयितुमेतद्वाक्यतात्पर्यमाह– **तस्मादिति** ॥ जीवभेदेन ॥

**॥ इति षोडशः खण्डः ॥**

## भाष्यम्

*'स्वमपीतो भवति' इति श्रुतेरभेदपरत्वनिरासः*

**स्वयम्भूरिति विष्णुजत्वाद् विरिञ्च[1] उच्यते ।**
**न हि विरिञ्चादेव विरिञ्चो जातः ॥**
**'यो ब्रह्माणं विदधाति पूर्वम्' इत्यादिश्रुतेः ।**
**आत्मा भगवान् । ततो भूतत्वादात्मभूः ।**
**'दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्' इति वचनात् ।**
**अ इति विष्णुस्तज्जातत्वादजः 'अ इति ब्रह्म 'इत्यादिश्रुतेः ।**
**'वासुदेवात् परो नैव ब्रह्मशब्दोदितो भवेत् ' इत्यादेश्च ।**
**अतः स्वशब्दो विष्णावेव प्रसिद्धः । ततः 'स्वमपीतो भवति'इति युज्यते ।**

## पदार्थकौमुदी

### भाष्यार्थः

ननु ''स्वमपीतो भवति'' इत्यस्य विष्णुमाप्नोतीति व्याख्यानं न युज्यते । स्वशब्दस्य स्वात्मन्येव रूढत्वात् । विष्णौ च यौगिकत्वात् । योगाद् रूढेः प्राबल्यादित्यतः स्वशब्दस्य विष्णावेव रूढिं साधयितुमाह– **स्वयम्भूरितीति** ॥ इतिशब्देन [2]स्वयं स्वस्माद् भवतीति

---

१. 'विष्णुजत्वाद्धि विरिञ्च' ह. २. 'स्वयं स्वात् स्वतन्त्राद् भवति' इति मुद्रितपुस्तके ।

व्युत्पत्तेरित्यर्थः । ननु स्वयमेव भवतीति स्वयम्भूरिति किं न स्यात् । तेन न स्वयंशब्दो विष्णुवाचीति सिद्ध्यतीत्यत आह– **नहीति** ॥ आत्माश्रयप्रसङ्गादिति भावः । अथापि भवदुक्तार्थे किं नियामकम् ? व्युत्पत्त्यन्तरस्यापि सम्भवादित्यतो ब्रह्मणो विष्णुजत्वे तावत् प्रमाणमाह– **य इति** ॥ विदधाति करोति । किञ्चाऽत्मभूशब्दस्तावद् विरिञ्चवाचकः । स च तस्य विष्णुजत्वमेवाभिधत्ते । नतु स्वात्मोत्पन्नत्वम्, आत्माश्रयप्रसङ्गादेव । नापि जीवोत्पन्नत्वं श्रुतिविरोधात् । ततश्च तत्समाख्यानात् स्वयम्भूशब्दोऽप्युक्तार्थ एवेति भावेनाऽह– **आत्मेति** ॥

भूतत्वादुत्पन्नत्वात् । आत्मभूरिति विरिञ्च उच्यत इति सम्बन्धः । आत्मा भगवानिति कुत इत्यतस्तत्र स्मृतिमाह – **दत्तमिति** ॥ किञ्चाजशब्दस्तावद् विरिञ्चवाचीति प्रसिद्धम् । सोऽपि तस्य विष्णजत्वमेवाभिधत्ते । नतु न जायत इत्यज इत्यनुत्पत्तिम् । ''यो ब्रह्माणम्'' इति श्रुतिविरोधात् । ततस्तत्समाख्यानाच्च स्वयम्भूशब्द उक्तार्थ एवेति भावेनाऽह – **अ इतीति** ॥ अज इति विरिञ्च उच्यते । अशब्दस्य विष्णुवाचित्वे प्रमाणमाह– **अः इतीति** ॥ नन्वत्र ब्रह्माकारवाच्यं प्रतीयते न विष्णुरित्यतो ब्रह्मशब्दस्य विष्णुपरत्वे तस्यैवाकारवाच्यत्वप्राप्तिरिति भावेन ब्रह्मशब्दस्य तद्वाचित्वे स्मृतिमाह – **वासुदेवादिति** ॥ अस्त्वेवं स्वयम्भूरिति विष्णुजत्वाद् विरिञ्च उच्यत इति । किं तत इति चेत् । स्वयंशब्दस्य विष्णुवाचकत्वसिद्धौ तत्पर्यायस्वशब्दस्यापि विष्णुवाचकत्वसिद्धिरिति भावेनाऽह – **अत इति** ॥ मुख्यत इति शेषः । स्वशब्दस्य विष्णुरूढत्वसमर्थनमपि प्रकृतानुपयुक्तमित्यत आह – **तत इति** ॥ यतः स्वशब्दो विष्णावेव प्रसिद्धस्ततः ''स्वमपीतो भवति'' इत्यस्य विष्णु-

माप्नोतीति व्याख्यानं युज्यत इत्यर्थः ।

**भाष्यम्**

**अप्ययो नामाविज्ञेयत्वेन प्रवेशः ।**
**'अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यते ।**
**यथा नद्यः समुद्रे तु यथा विष्णुं लये प्रजाः ॥'**

**इति शब्दनिर्णये ।**

## पदार्थकौमुदी

### भाष्यार्थः

ननु स्वशब्दस्य विष्णुपरत्वेऽप्यपीतशब्देनैक्यमुच्यते । यावदुक्तं भवत्येकीभवतीति तावदपीतो भवतीति । अतो अपीतो भवतीत्यस्य आप्नोतीति व्याख्यानं न युज्यते । तथा सति इतो भवतीत्येव वक्तव्य-तयाऽपीत्यस्य वैयर्थ्यापत्तेरिति चेन्न । त्वन्मते स्वशब्दस्याप्यैक्य-परत्वेनास्य वैयर्थ्यापत्तेः । किञ्च किमपीतशब्दस्याखण्डवृत्तिमाश्रित्यै-क्यार्थत्वमुच्यते उतावयववृत्तिम् । नाऽद्यः । अपीत इत्यस्य भवतेश्चा-कर्मकत्वेन श्रुतद्वितीयायोगात् । अश्रुततृतीयाकल्पनाप्रसङ्गाच्च । द्वितीये तु नैक्यमस्माल्लभ्यत इत्याशयवानाह – **अप्यय इति ॥** यद्यप्यत्रापीति-नामेति वक्तव्यम् । तथाऽप्यप्यय इति तत्समानार्थकशब्दनिर्वचनं तदन्येषामदर्शनं ''अप्ययोऽयं समुद्दिष्टो न स्वरूपैकता क्वचित्'' इति श्रुतिसूचनार्थम् । अदर्शनमदर्शनविशिष्टा प्राप्तिरिति श्रौतपदार्थः । ''अविज्ञेयत्वेन प्राप्तिः'' इति शेषः । अपिरपिधाने वर्तते । अय पय गतौ । भावे क्विप् । ततश्चाविज्ञेयत्वेन तिरोधानेन गतिः प्राप्तिरप्ययशब्दार्थः । प्रवेशस्त्वर्थलब्धः । अपिहितस्य प्राप्तिः प्रवेशे सति सम्भवतीति

प्रलयेऽप्यप्ययशब्दस्यैतदेव निर्वचनम् । प्रध्वंसस्तु प्रमाणान्तरगम्यः । एवं च ''तमाप्नोति''इति प्रागुदाहृतवचनेऽविज्ञेयत्वेनेति पूरणीयमिति न दोष इति भावः । अनेनापीत इत्यस्याविज्ञेयत्वेन प्राप्तः प्रविष्ट इत्यर्थ उक्तो भवति । इणो गत्यर्थत्वान्निष्ठाप्रत्ययस्य कर्त्रर्थत्वात् । अत्र स्मृतिं चाऽह – **अविज्ञातमिति ॥** क्रियाविशेषणमेतत् । प्राप्तमिति शेषः । प्रविष्ट-मित्यर्थलभ्यम्[१] । समुद्रे समुद्रमपीता इत्युच्यन्ते । ''ताः समुद्रमेवा-पियन्ति'' इत्यादौ । एतेन ''समुद्रमपियन्ति''इत्यस्य समुद्रात्मनैकतां गच्छन्तीति व्याख्यानं प्रमाणविरुद्धमिति सूचितम् । प्रजा अपीता इत्युच्यन्ते ।

## भाष्यम्

**न च जीवस्य तद्भावोऽस्ति । उत्थितस्य सुप्तिसंसारयोः परामर्शदर्शनात् ।**

**'अहं विश्वं भुवनमभ्यभवाम् ।'**

**'आजन्ममरणं स्मृत्वा मुक्ता हर्षमवाप्नुयुः '**

**इति तद्भावस्यापरामर्शाच्च ।**

**'प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् ' इत्यादिश्रुतेश्च ।**

**'सुषुप्त्युत्क्रान्त्योर्भेदेन ' इति च भगवद्वचनम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च तिष्ठतु तावदयं शब्ददोषः । यदि जीवस्य ब्रह्मभावः स्यात् तदा

---

१. 'अर्थलब्धम्' इति मुद्रितपुस्तके ।

''स्वमपीतो भवति'' इति वाक्यं तदर्थकं स्यात् । नच सोऽस्ति । अतो बाधितार्थं स्यादिति भावेनाऽह– **नचेति ॥** तद्भावो ब्रह्मभावः । कुतो नेति चेत् । ''स्वमपीतो भवति'' इति वाक्यं तावत् सुप्तमुक्तोभयपरम् । ''स्वप्नान्तं मे सोम्य'' इत्युपक्रमात् । सुप्तिप्रकरणस्य मुक्तिपरतायाश्च **''स्वाप्ययसम्पत्त्योरन्यतरापेक्षम्''**(ब्र.सू. ४-४-१६)इति सूत्रकृता निर्णीतत्वात् । नचेदं सूत्रं वाजसनेयकसुप्तिप्रकरणनिर्णायकमिति वाच्यम् । तथा सति विश्वतोमुखत्वहानेः । नचैवं स्वप्नस्यान्तःसुषुप्तिरिति तमाप्नोति मनोनामा संसारीति व्याख्यानविरोधः । मुक्तिपरताया अनिवारणेन तदुपपत्तेः । ''स्वर्गः सुषुप्तिरित्याख्या मुक्तेरपि यतः समा'' इति वचनेन भाष्यस्थसुषुप्तिशब्दस्य मुक्तिपरताया अप्युपपत्तेश्च । तथाच स्मृतिः –

''स्वं कुलायं यथाऽपीतः पक्षी स्यादेवमीश्वरम् ।
अप्येति जीवः प्रस्वापे मुक्तौ चान्योऽपि सन् सदा ॥'' इति ॥

ततश्च ''स्वमपीतो भवति'' इत्युच्यमानो जीवस्य ब्रह्मभावः किं सुप्तस्य मुक्तस्य वा । पक्षद्वयमपि दूषयति – **उत्थितस्येति ॥** न जीवस्य सुप्तस्य मुक्तस्य वा तद्भावोऽस्ति । सुप्तिसंसारयोः सकाशादुत्थितस्य प्रबुद्धस्य मुक्तस्य वा सुप्तिसंसारयोः परामर्शदर्शनात् । नच ब्रह्मणो जीववदहमस्वाप्सं दुःख्यासमित्यादिरूपेण सुप्तिसंसारपरामर्शोऽस्ति । सर्वज्ञस्य तस्य [१]तत्कारणाज्ञानस्यैवाभावात् । नच विरुद्धधर्माधिकरण-योरैक्यं दृष्टमिति भावः ।

नन्वस्तु सुप्तेरुत्थितस्य सुप्तिपरामर्शः । अस्वाप्समिति प्रत्यक्षसिद्ध-त्वात् । संसारादुत्थितस्य मुक्तस्य संसारपरामर्शोऽस्तीति कुत इत्यत

---

१. 'तत्कारणस्याज्ञानस्यैव' इति मातृकायाम् । प.सं. २५७ ।

आह– **अहमिति** ॥ अहं सर्वं जगदभि अभिभूयाधिपतित्वेनाभवमिति मुक्तब्रह्मवाक्यम् । अस्य मुक्तपरत्वे विप्रतिपन्नं प्रति स्पष्टां स्मृतिं चाऽह– **आजन्मेति** ॥ जन्माऽरभ्य मरणपर्यन्तमनुभूतं दुःखं स्मृत्वा इदानीमेतादृशदुःखाद् विमुक्ता इति मुक्ता हर्षमवाप्नयुरित्यर्थः । अत्र मुक्तज्ञानस्य स्मरणत्वं नाम पूर्वानुभूतार्थविषयीकरणोन्मुखत्वम् । अत एवेशस्य भक्तविषयकस्मरणं निरुक्तमन्यत्र ।

''भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः ।

अनुग्रहोन्मुखत्वं तु नैवान्यात् किञ्चिदिष्यते ॥'' इति । किञ्च यदि जीवस्य सुप्तौ ब्रह्मभावः स्यात् तर्हि तदा ब्रह्मभावानुभवः स्यात् । तथाच सुप्तेरुत्थितेन सुषुप्त्यादिकमिव तद्भावः परामृश्येत ।[१] नच परामृश्यते । कस्यापि प्रबुद्धस्याहं ब्रह्मीभूतोऽस्मीति परामर्शादर्शनात् । अतो न सुप्तौ जीवस्य ब्रह्मभाव इति भावेनाऽह – **तद्भावस्येति** ॥ नच ''जीवस्य''इति पूर्वेण सम्बन्धः । किञ्च सुप्तौ मुक्तौ वा न जीवस्य ब्रह्मभावोऽस्ति । तदा प्राज्ञात्मसम्परिष्वङ्गश्रुतेः । नचाभेदे सम्परिष्वङ्गः सम्भवतीत्याह– **प्राज्ञेनेति** ॥ सम्परिष्वङ्गोऽप्येकीभावः किं न स्यादित्यतः श्रुत्यर्थनिर्णायकं सूत्रं पठति – **सुषुप्तीति** ॥ ''प्राज्ञेनाऽत्मना सम्परिष्वक्तः'' ''प्राज्ञेनाऽत्मनाऽन्वारूढः'' इति सुषुप्त्युत्क्रान्तिप्रकरणयोर्जीवस्येश्वराद् भेदेन व्यपदेशादिति सूत्रार्थः । श्रुतिसूत्रे [२]मुक्तपरे च भवतः । सुप्तिप्रकरणस्य मुक्तिपरतायाः सूत्रकृतैव निर्णीतत्वात् ।

---

१. एतदनन्तरं 'अन्यथा सुप्त्यादिकमपि न परामृश्येत ।' इत्यधिकं मुद्रितपुस्तके दृश्यते । न मातृकायाम् ।

२. 'मुक्तिपरे च' इति मुद्रितपुस्तके ।

## भाष्यम्

*नवदृष्टान्ता अपि भेदपरा एव*

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ।'

'सति सम्पद्य न विदुः सति सम्पत्स्यामह इति ।'

'सत आगम्य न विदुः सत आगच्छामह इति ।'

'स एष जीवेनाऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ।'

'अण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान् न्यग्रोधस्ति- ष्ठति ।'

'लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तं होवाच यद्दोषा लवणमेतदुदकेऽवधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति । मध्यादाचामेति कथमिति लवणमित्यन्त्यादाचामेति कथमिति लवणमिति ।'

'अत्र वाव किल सत्सोम्य[१] न निभालयसेऽत्रैव किलेति ।'

'एतां दिशं गन्धारा एतां दिशं व्रजेति ।'

'तेजः परस्यां देवतायां तावन्न जानाति[२] ।'

'अपहार्षीत् स्तेयमकार्षीत् ।'

इत्यादि नवकृत्वो[३] भिन्नस्य वस्तुनो भेदापरिज्ञानादनर्थं

---

१. 'किल सोम्य' ह. २. 'तावज्ञानाति' ह ३. 'नवकृत्वोऽपि' ह.

**सूक्ष्मत्वाद् भेदस्य दुर्ज्ञेयत्वं[१] च सदृष्टान्तं तात्पर्येणाऽह ।**

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च न "स्वमपीतः" इति वाक्यं जीवस्य ब्रह्मभावाभिधायकम् । यतोऽत्रैव नवप्रकरण्यमाद्यप्रकरणे "सन्मूलाः" इति जीवस्य सन्मूलकत्वादिकं "सम्पत्स्यामहे" इति "त इह व्याघ्रो वा"इति द्वितीयप्रकरणे, "आगच्छामहे" इति "त इह व्याघ्रो वा"इति तृतीयप्रकरणे च भिन्नस्य वस्तुनो भेदापरिज्ञानाद् व्याघ्रादित्वापत्तिरूपोऽनर्थः, "स एषः" इति चतुर्थप्रकरणे जीवस्य भगवदधीनत्वम्, "अण्व्य इवेमाः" इति पञ्चमप्रकरणे जीवस्य सुज्ञेयत्वेऽपि भगवतः परमसूक्ष्मत्वेन दुर्विज्ञेयत्वं, "लवणमेतत्"इति षष्ठप्रकरणे च भगवत्सामर्थ्यस्य दृश्यमानत्वेऽपि भगवतो दुर्विज्ञेयत्वं, "एतां दिशं गन्धाराः" इति सप्तमप्रकरणे चाऽचार्योपदेशमन्तरा भगवतो दुर्विज्ञेयत्वं, अत एव तद्भेदस्यापि दुर्विज्ञेयत्वं, "तेज" इत्यष्टमप्रकरणे ज्ञाने जीवस्य भगवदधीनत्वं, "अपहार्षीत्"इति नवमप्रकरणे चाभेदभेदज्ञानयोर्हतिमुक्तिफलकत्वं चोच्यते । नचैतदभेदे सम्भवतीति भावेनाऽह– **सन्मूला इत्यादिना** ॥ इत्यादिवाक्यमिति शेषः । चशब्दात् पूर्वोक्तसन्मूलत्वादिसमुच्चयः । नवकृत्त्वः सदृष्टान्तमिति तात्पर्यद्योतकम् । अभ्यासोपपत्त्योस्तात्पर्यलिङ्गत्वात् । नवकृत्त्व इत्युक्तोऽभ्यासो भेदमात्रे द्रष्टव्यः ।

### भाष्यम्

*नैकोऽपि दृष्टान्तोऽभेदपरः*

**न चाभेदे कश्चिद् दृष्टान्त उक्तः । न हि शकुनिसूत्रयोर्नाना-**

१. 'दुर्विज्ञेयत्वम्' ह.

**वृक्षरसानां नदीसमुद्रयोर्वृक्षपरमात्मनोर्धानापरमात्मनोर्लवणोदकयोः पुरुषगन्धारयोर्नियतज्ञानानियतज्ञानयोश्चोरापह्रियमाणयोश्चाभेदोऽस्ति ।**

## पदार्थकौमुदी

### भाष्यार्थः

नन्वत्र नवप्रकरण्यां जीवेशाभेदोऽप्युच्यते । तत्त्वमसीति नवकृत्त्वः श्रवणात् । अतस्तदनुसारेण ''स्वमपीतः'' इत्युपक्रमवाक्यमपि जीवस्य ब्रह्मभावाभिधायकमिति चेन्न । ''स आत्माऽतत्त्वमसि'' इत्यत्रोभयथाऽपि पदच्छेदसम्भवेऽपि भेदाभिधायकासन्दिग्धदृष्टान्तवाक्यबलेनातत्त्वमसीति पदच्छेदेन भेदपरमेवेदमिति निश्चयात् । यथा सधर्मघटदृष्टान्ताभिधानसामर्थ्याच्छब्दो नित्य इति प्रतिज्ञा सन्दिग्धार्थाऽप्यनित्यताविषयेति निश्चीयते तद्वत् । यदा त्वेकमपि भेदविषयत्वेनासन्दिग्धाभिधानं सन्दिग्धप्रतिज्ञावाक्यार्थनिश्चयायालं तदा किमु वक्तव्यं नवस्वपि प्रकरणेषु नवासन्दिग्धार्थानि भेदविषयाणि दृष्टान्ताभिधानानानि । नन्वैवमभेदे कश्चिद् दृष्टान्तोऽभिहितः । येन तत्त्वमसीति पदं विच्छिद्य तस्याभेदपरता निश्चीयेतेति भावेनाऽह– **नचेति** ॥ तदेव विवृणोति – **नहीति** ॥ ''अल्पाचूतरम्'' इत्यस्यानित्यत्वाच्छकुनिसूत्रयोरिति साधु ॥ **वृक्षपरमात्मनोरिति** ॥ जीववृक्षयोरित्यन्यत्रोक्तस्याप्ययमेवार्थः । ''धानापरमात्मनोः'' इत्यनेनाणिमशब्दः परमात्मपरोऽवगम्यते । अत एवान्यत्राणिमधानयोरित्युक्तम् । नियतं पराधीनं ज्ञानं यस्यासौ नियतज्ञानो जीवः । अनियतमपराधीनं ज्ञानं यस्यासावनियतज्ञानो भगवांस्तयोरित्यर्थः ।

## भाष्यम्

*विष्णुसर्वोत्तमत्वं सकलशास्त्राणां मुख्यतात्पर्यम्*

**महातात्पर्यविरोधश्चाभेदे ।**

**विष्णोः परमोत्कर्षे हि सर्वप्रमाणानां महातात्पर्यं भगवताऽभिहितम् ।**

**(१)'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।**
**यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।**
**यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ॥**
**स सर्वविद्भजति मां सर्वभावेन भारत ।**
**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
**एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥' इति ।**

## पदार्थकौमुदी

### भाष्यार्थः

''स्वमपीतः'' इत्यत्र जीवेशाभेदे प्रतिपाद्यतया विवक्षिते सति दूषणान्तरमाह – **महेति** ॥ स्यान्महातात्पर्यविरोधोऽभेदे यदि तद्विरोध्यर्थे तात्पर्यं प्रमितं स्यात् । तदेव कुत इत्यत आह– **विष्णोरिति** ॥ हिशब्दो हेतौ । अभिहितं हीति अभिधानप्रसिद्धिद्योतको वा । अत्र प्रत्यक्षानुमाने

१. 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' इति पूर्वार्धमधिकं क. पाठे ।

आगमानुकूले विवक्षिते । महातात्पर्यमतिशयेन तत्सिद्ध्यर्थं प्रवृत्तत्वम् । भगवता वासुदेवेन । तेन यो मामित्याद्यस्मच्छब्दविषयो दर्शितः । वेदव्यासेनेति वा । सर्वप्रमाणानां प्रत्यक्षादीनाम् । नचाभेदे सर्वोत्कर्षः सम्भवतीति भावः । कुत्राभिहितमित्यतस्तद्वाक्यमुदाहरति– **द्वाविमावित्यादिना** ।। ''क्षरः सर्वाणि'' इत्यारभ्यैव कुत्रचित् पाठः । तत्र तावतैव विवक्षितार्थसिद्धेः पूर्वार्धानुदाहरणम् । इदं श्लोकपञ्चकमन्यत्र व्याख्यातम् । अत्र भगवतो वासुदेवस्य क्षराक्षरोत्तमत्वे पौरुषेयापौरुषेयागमस्य महातात्पर्यमस्तीति ''यो माम्''इति वेत्तुः फलकथनादवगम्यते । इत्यभिहितमित्यन्वयः ।

## भाष्यम्

**'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।।'**
**'ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।।'**
**'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।।'**

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च यज्ज्ञानान्मोक्षो भवति तत्रैव मोक्षप्रयोजनकसर्वागमानां महातात्पर्यं युक्तम् । मोक्षश्च सर्वलोकमहेश्वरत्वादिविशिष्टस्य भगवतो वासुदेवस्य ज्ञानादेव । अतस्तत्रैव महातात्पर्यं सर्वागमानामिति भावेनाऽऽह– **भोक्तारमिति** ।। शान्तिं मोक्षम् । किञ्च ''ज्ञानं तेऽहम्''इति

प्रतिज्ञाय यज्ज्ञात्वेह वेदादिषु ज्ञातव्यं नावशिष्यते इति प्रशस्य ''मत्तः परतरं नान्यत्'' इति ''मयि सर्वम्'' इति च भगवतः सर्वोत्कर्षोक्त्या च तत्रैव सर्वागमानां महातात्पर्यमिति भावेनाऽह – **ज्ञानमिति** ॥ अत्र ज्ञान-विज्ञानशब्दौ ज्ञेयविज्ञेयभगवन्माहात्म्यपरौ । अहमेव परतरो मत्तोऽन्यत् परतरं न किञ्चिदपीत्यर्थः । तेन तरपोऽन्यशब्दस्य च न वैयर्थ्यम् ।

भाष्यम्

'राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥
अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥
मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥'
'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं[१] श्रिताः ।
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥'
'यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।

१. 'मोहनीम्' ह.

**असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥'**

## पदार्थकौमुदी

### भाष्यार्थः

भगवतः सर्वोत्कर्ष एव सर्वागमानां महातात्पर्यमित्यत्र वाक्यान्तरमप्याह– **राजेति** ॥ राजेव राजा । राजा चासौ विद्या चेति राजविद्या प्रधानविद्या । प्रत्यक्षनामकं ब्रह्मावगम्यते येन तत् प्रत्यक्षावगमम् । सर्वं जगद्धत्त इति धर्मो भगवान् तद्विषयं धर्म्यम् । प्रतिज्ञातविद्यायाः वक्ष्यमाणार्थे तात्पर्यद्योतनाय तत्र निष्ठारहितानां निन्दामाह– **अश्रद्दधाना इति** ॥ प्रतिज्ञातविद्यामाह– **मयेति** ॥ तर्हि किमिति न दृश्यत इत्यत उक्तम् – **अव्यक्तमूर्तिनेति** ॥ मत्स्थत्वेऽपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह– **नच मत्स्थानीति** ॥ अत्र ''राजविद्या'' इति प्रतिज्ञाय ''अश्रद्दधानाः'' इति तात्पर्यज्ञापनायार्थवादमुक्त्वा ''मया ततम्'' इत्यादिना भगवदुत्कर्षस्यैवोक्तत्वेन तत्रैव सर्वविद्यानां तात्पर्यमिति ज्ञायते । तर्हि केचित् कथं त्वामवजानन्तीत्यत आह– **अवजानन्तीति** ॥ मानुषीं तनुं मूढानां मनुष्यवत् प्रतीतां नतु मनुष्यरूपामित्यर्थः ।

भूतं सर्वदा विद्यमानम् । महद् देशतो व्याप्तम् । ईश्वरं गुणतोऽनन्तमिति भूतमहेश्वरम् । भावं याथार्थ्यम् । का च तेषां गतिरित्यत आह– **मोघाशा इति** ॥ मोघाशाः वृथाशाः । भगवद्वेषिभिराशासितम् आमुष्मिकं न किञ्चिदाप्यत इत्यर्थः । मोघकर्माणः । यज्ञादिकर्माणि च तेषां वृथैवेत्यर्थः । मोघं ज्ञानं तत्त्वविषयं येषां ते तथोक्ताः । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित् पुरुषार्थः आमुष्मिकस्तैराप्यत इति भावः । द्वेषकारणमाह– **राक्षसीमिति** ॥ नेतरे द्विषन्तीति दर्शयितुं

देवानाह– **महात्मान इति** ॥ अत्र ''अवजानन्ति''इत्यादिना निन्दा-रूपस्य ''महात्मानः'' इति स्तुतिरूपस्य चार्थवादस्योक्त्या च तात्पर्यं ज्ञायते । भगवदुत्कर्षज्ञानस्यैव मोक्षसाधनत्वोक्तेस्तत्रैव तत्फलकैरागमै-स्तात्पर्यवद्भिर्भवितव्यमिति भावेनाऽह – **यो मामिति** ॥ अनश्वेष्टयिता आदिश्च सर्वस्येत्यनादिः अजत्वेन सिद्धेरितरस्य ।

## भाष्यम्

'परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥'
'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥'
'ये मां ज्ञात्वा गुणैः पूर्णं न चलन्ति ततः क्वचित् ।
तैरेवाऽप्यो न चैवान्यैरहं सर्वेश्वरेश्वरः ॥
ये तु मद्गुणसम्पूर्तौ ज्ञानस्नेहस्थिरात्मकाः ।
तेषां हस्तगतो मोक्षो मामेव स्मरतां सदा ॥
ये मन्यन्ते गुणापूर्तिं तमस्तेषां परायणम् ।
न च तेभ्यो प्रियो मह्यं यश्च स्याद्गुणपूर्तिवित् ।
स मामाप्नोति नियतं न च तस्मात् प्रियो मम ॥
प्रमाणान्यखिलान्येव तर्काश्चैतत्पराः सदा ।
एतद्विरुद्धं यन्मानं तर्कश्चाऽभास एव तु [1]॥' इत्यादौ[2] ।

१. 'आभास एव सः' ह. २. 'इत्यादि' ह.

**असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥'**

## पदार्थकौमुदी

### भाष्यार्थः

भगवतः सर्वोत्कर्ष एव सर्वागमानां महातात्पर्यमित्यत्र वाक्यान्तरमप्याह– **राजेति ॥** राजेव राजा । राजा चासौ विद्या चेति राजविद्या प्रधानविद्या । प्रत्यक्षनामकं ब्रह्मावगम्यते येन तत् प्रत्यक्षावगमम् । सर्वं जगद्धत्त इति धर्मो भगवान् तद्विषयं धर्म्यम् । प्रतिज्ञातविद्यायाः वक्ष्यमाणार्थे तात्पर्यद्योतनाय तत्र निष्ठारहितानां निन्दामाह– **अश्रद्दधाना इति ॥** प्रतिज्ञातविद्यामाह– **मयेति ॥** तर्हि किमिति न दृश्यत इत्यत उक्तम् – **अव्यक्तमूर्तिनेति ॥** मत्स्थत्वेऽपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह– **नच मत्स्थानीति ॥** अत्र ''राजविद्या'' इति प्रतिज्ञाय ''अश्रद्दधानाः'' इति तात्पर्यज्ञापनायार्थवादमुक्त्वा ''मया ततम्'' इत्यादिना भगवदुत्कर्षस्यैवोक्तत्वेन तत्रैव सर्वविद्यानां तात्पर्यमिति ज्ञायते । तर्हि केचित् कथं त्वामवजानन्तीत्यत आह– **अवजानन्तीति ॥** मानुषीं तनुं मूढानां मनुष्यवत् प्रतीतां नतु मनुष्यरूपामित्यर्थः ।

भूतं सर्वदा विद्यमानम् । महद् देशतो व्याप्तम् । ईश्वरं गुणतोऽनन्तमिति भूतमहेश्वरम् । भावं याथार्थ्यम् । का च तेषां गतिरित्यत आह– **मोघाशा इति ॥** मोघाशाः वृथाशाः । भगवद्द्वेषिभिराशासितम् आमुष्मिकं न किञ्चिदाप्यत इत्यर्थः । मोघकर्माणः । यज्ञादिकर्माणि च तेषां वृथैवेत्यर्थः । मोघं ज्ञानं तत्त्वविषयं येषां ते तथोक्ताः । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित् पुरुषार्थः आमुष्मिकस्तैराप्यत इति भावः । द्वेषकारणमाह– **राक्षसीमिति ॥** नेतरे द्विषन्तीति दर्शयितुं

देवानाह– **महात्मान इति** ॥ अत्र "अवजानन्ति"इत्यादिना निन्दा-रूपस्य "महात्मानः" इति स्तुतिरूपस्य चार्थवादस्योक्त्या च तात्पर्यं ज्ञायते । भगवदुत्कर्षज्ञानस्यैव मोक्षसाधनत्वोक्तेस्तत्रैव तत्फलकैरागमै-स्तात्पर्यवद्भिर्भवितव्यमिति भावेनाऽह – **यो मामिति** ॥ अनश्वेष्टयिता आदिश्च सर्वस्येत्यनादिः अजत्वेन सिद्धेरितरस्य ।

## भाष्यम्

'परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥'
'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥'
'ये मां ज्ञात्वा गुणैः पूर्णं न चलन्ति ततः क्वचित् ।
तैरेवाऽप्यो न चैवान्यैरहं सर्वेश्वरेश्वरः ॥
ये तु मद्गुणसम्पूर्तौ ज्ञानस्नेहस्थिरात्मकाः ।
तेषां हस्तगतो मोक्षो मामेव स्मरतां सदा ॥
ये मन्यन्ते गुणापूर्तिं तमस्तेषां परायणम् ।
न च तेभ्यो प्रियो मह्यं यश्च स्याद्गुणपूर्तिवित् ।
स मामाप्नोति नियतं न च तस्मात् प्रियो मम ॥
प्रमाणान्यखिलान्येव तर्काश्चैतत्पराः सदा ।
एतद्विरुद्धं यन्मानं तर्कश्चाऽभास एव तु [1]॥' इत्यादौ[2] ।

१. 'आभास एव सः' ह. २. 'इत्यादि' ह.

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च ज्ञानानामुत्तमं ज्ञानं प्रवक्ष्यामीति प्रतिज्ञाय ''यज्ज्ञात्वा''इति वेदार्थविचारकाणामेतज्ज्ञानादेव मोक्ष इति प्रशस्य ''मम योनिः'' इति प्रकृतिपतित्वाद्युत्कर्षाभिधानात् तत्रैव तात्पर्यं सर्वागमानामिति भावेनाऽह – **परमिति** ॥ महद्ब्रह्म प्रकृतिः । एवं गीतावचनैर्भगवदुत्कर्ष एव सर्वागमानां महातात्पर्यमवगम्यत इत्युक्तम् । तत्रैव स्पष्टं वचनान्तरमप्याह– **ये मामित्यादिना** ॥ न केवलं ज्ञानस्थैर्यं मोक्षहेतुः, अपितु भक्तिस्थैर्यमपीति भावेनाऽह– **ये त्विति** ॥ तद्विपरीत-ज्ञानिनामनर्थमाह– **य इति** ॥ परायणं प्राप्यम् । निगमयति – **यश्चेति** ॥ तस्मादित्यादौ योज्यम् । चशब्दः प्रकृतत्वानुसन्धानार्थः । किं तत इत्यत आह– **प्रमाणानीति** ॥ तस्मादित्यादौ ग्राह्यम् । प्रमाणानि प्रत्यक्षानु-मानागमाः । ''तर्काः'' इति दूषणानुमानम् । यस्मादेवं भगवद्गुणपूर्ति-ज्ञानमेव तत्प्रीतिद्वारा मोक्षहेतुस्तस्मान्मोक्षप्रयोजनकान्यखिलानि प्रमाणानि तर्काश्चैतत्परा एव । गुणपूर्णत्वज्ञानजननायैव प्रवृत्ता इत्यर्थः । तथाच श्रुतिः– ''न तादृशी प्रीतिरीड्यस्य'' इत्यादिका । इत्यादौ अभिहितमित्यन्वयः ।

### भाष्यम्

**'तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुः ।'**

**'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते ।**
**तस्माद् भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः ॥'**

**'असुन्वन्तं समं जहि दूणाशं यो न ते मयः ।**
**अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते ॥'**
**'सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ।**
**एतावानस्य महिमा अतो ज्यायांश्च पूरुषः ॥'**
**'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते ।'**

## पदार्थकौमुदी

### भाष्यार्थः

भगवदुत्कर्षज्ञानादेव मोक्षं वदन्ती श्रुतिरपि विष्णोरुत्कर्ष एव सर्वप्रमाणानां महातात्पर्यं कथयतीति भावेनाऽह– तं **भूतिरिति** ॥ भूतिरिति पूर्ण इति । बभूवुर्भूतिमन्तः । सुप्तः सुप्तस्थो वायुः । देवः सर्वैर्भूमत्वेनोपास्यः । कस्मात् ? भूमा भूमगुणो गुणराशितो यतः क्रतुवद् विशिष्टः । कथम् ? यस्माद् भूमैवोपासितः फलं विधत्ते नैवाभूमा तस्मादित्यर्थः । यस्तेमयस्त्वप्रधानो न भवति । त्वद्दूषक इति यावत् । तमसुन्वन्तं सवनोपलक्षितं स्वकर्माकुर्वाणमत एव दुर्नाशमाधिक्येन दुःखाख्यनाशयोग्यम् । समं तद्योग्यतानुसारेणेति यावत् । जहि तमसि पातय । अस्मभ्यं त्वत्प्रधानकेभ्यः सुन्वद्भ्यश्चास्य पूर्वोक्तस्य त्वन्माहात्म्यस्य वेदनं दद्धि देहि । कुतः ? यतः सूरिश्चिद् ज्ञान्येव । ओहते ओहाक् त्यागे संसारं त्यजति । मोक्षं प्राप्नोतीत्यर्थः । अस्य परमेश्वरस्य स महिमा सत्य एव । शवो मोक्षसुखमुद्दिश्य विप्रप्रधानकेषु यज्ञेषु तं गृणे । अस्य पुरुषस्यैतावान् पूर्वोक्तो महिमा न केवलमेतावान् । किन्तु पुरुषोऽतः पूर्वोक्तादपि महिम्नो ज्यायानित्युक्तमेव ''तमेवम्''इति परामृश्य तज्ज्ञानस्य मोक्षसाधनत्वमुच्यते ।

भाष्यम्

'सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः ।

बन्धमोक्षौ च कथ्यन्ते यस्योत्कर्षप्रसिद्धये ॥

यस्योत्कर्षप्रसिद्ध्यर्थं सर्ववेदाश्च[१] युक्तयः ।

ज्ञात्वैव च यदुत्कर्षं मुच्यन्ते स हरिः परः ॥'

'अद्या तमस्य महिमानमायवोऽनुष्टुवन्ति पूर्वथा'

इत्यादिश्रुतिश्च विष्णोरुत्कर्षे महातात्पर्यं कथयति ।

'महातत्परता विष्णोरुत्कर्षेऽवान्तरा ततः ।

अन्यत्र सर्ववाक्यानां युक्तीनां च विशेषतः ॥' इति ब्रह्माण्डे ।

पदार्थकौमुदी

भाष्यार्थः

ननु तत्र तत्र सृष्ट्याद्युक्तेः कथं सर्वागमानां विष्णूत्कर्षे तात्पर्यमित्यत आह– **सृष्टिरिति** ॥ मोक्षौ चेत्येते कथ्यन्ते वेदादौ । तत्र हेतुमाह– **यस्येति** ॥ प्रवृत्ता इति शेषः । चो यस्मादित्यर्थे च । इदमपि कुत इत्यत आह– **ज्ञात्वेति** ॥ चो हेतौ । अद्यातमस्य अवगति-साधनत्वादायवो वेदाः । अस्येन्द्रस्य तं महिमानम् । पूर्वथा पूर्वमिव । अद्यापि स्वयोग्यतानुसारेण स्तुवन्तीत्यर्थः । विष्णूत्कर्ष एव सर्वागमतात्पर्यं चेद्धर्मादिसिद्धिर्न स्यादित्यत आह– **महेति** ॥ ततोऽ-न्यत्र । विशेषतो महातत्परतेति वा विशेषत उत्कर्ष इति वाऽन्वयः ।

भाष्यम्

'भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति '

१. 'सर्वे वेदाश्च' क.

**'ब्रह्मदृष्टिरुत्कर्षात्' इत्यादि च निर्णयात्मकं[1] भगवद्वचनम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

अत्रैव सूत्रमप्याह– **भूम्न इति** ॥ सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं मुख्यतो वेदप्रतिपाद्यत्वमिति भगवतः पूर्णत्वदृष्टिरेवाऽधिक्येन वेदादिसाध्येति च सूत्रार्थोऽत्राभिमतः । यद्वा भाष्यदिशा सूत्रद्वयेऽपि विष्णोः पूर्णत्वोपासनेनैव मोक्षोक्तेस्तदन्यथानुपपत्त्या सर्ववेदानां तत्रैव महातात्पर्यमित्यवसीयते ।

## भाष्यम्

*जीवब्रह्मैक्यस्य न शास्त्रतात्पर्यविषयता*

**न च शारीरपराभेदे तात्पर्यमित्यत्र किञ्चिन्मानम् । अतत्त्वमसीति भेदस्य नवकृत्वोऽभ्यासाच्च ।**

**'भेदव्यपदेशात्', 'भेदव्यपदेशाच्चान्यः', 'अनुपपत्तेस्तु न शारीरः', 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते', 'पृथगुपदेशात्' इत्यादिना सर्वत्र भेदस्यैव भगवता निर्णीतत्वाच्च ।**

## पदार्थकौमुदी

### भाष्यार्थः

अद्वैतवादिनस्त्वाहुः । शारीरपराभेद एव सर्वागमानां महातात्पर्यम् । "तत्त्वमसि" "पुरुष एवेदं सर्वम्" "एकमेवाद्वितीयम्" "अहं ब्रह्मास्मि" 'योऽसौ सोऽहम्" इत्यादावभेदस्यैवोक्तेः । अभ्यास-

---

१. 'इत्यादि निर्णयात्मकं' क.

फलादिना तत्परत्वावगतेश्च । एवं चैतदनुरोधेनान्यस्याप्यागमस्य तत्रैव यथायथं तात्पर्यं वर्णनीयमिति । तन्निराकरोति– **नचेति** ॥ न केवलं प्रमाणाभावः । किन्तु तद्विरोधश्चेत्याह– **अतत्त्वमसीति** ॥ ननु तत्त्व-मसीति पदच्छेदेनाभेदाभ्यास एवायं किं न स्यात् ? न स्यात् । ''नचाभेदे कश्चिद् दृष्टान्त उक्तः'' इत्युक्तत्वात् । सूत्रविरोधं चाऽह – **भेदेति** ॥

## भाष्यम्

**'पुरुष एवेदं सर्वमिति च पुरुषेणेदं सर्वं व्याप्तं यद्भूतं यच्च भव्यम्[१]।'**

[२] **'न च भगवान् गोत्वेन मनुष्यत्वेन वा भवति । आ तृणादा करीषात् सर्वं भगवानिति मिथ्यादृष्टिरेषा । दधिसक्तवो घृतौदनमित्यादौ[३] व्याप्तशब्दाभावेऽपि व्याप्तशब्दोऽवगम्यते । दधिसिक्ताः सक्तवो घृतसिक्तमोदनम् ' इति च श्रुतिः[४] ।**

**'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति पुरुषेण हीदं नेनीयते[५]' इति च ।**

**अतः सर्वप्रमाणानां भगवदुत्कर्ष एव महातात्पर्याच्छारीराभेदं वदतां महातात्पर्यविरोधः ।**

---

१. 'पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यमिति । पुरुषेणैवेदं सर्वं व्याप्तं यद् भूतं यच्च भाव्यम्' ह.पाठः । २. 'न भगवान्' ह. ३. 'घृतोदनमित्यादिषु व्याप्तिशब्दाभावेऽपि व्याप्तिशब्दोऽवगम्यते । यथा दधिसिक्ताः' ह. ४. 'इति श्रुतिः' ह. ५. 'सर्वं नेनीयते' क.

## पदार्थकौमुदी

### भाष्यार्थः

यदुक्तं "पुरुष एवेदं सर्वम्" श्रुतिरभेदे मानमिति तदसत्। श्रुत्यैव तस्यान्यथा व्याख्यातत्वादिति भावेन तां श्रुतिमुदाहरति– **पुरुष इत्यादिना**॥ "पुरुष एवेदं सर्वम्" इति वाक्यं च यद्भूतं यच्च भव्यं तदिदं सर्वं पुरुषेण व्याप्तमित्यर्थः। सर्वाभेद एवार्थः किं न स्यादित्यत उक्तम् – **नचेति**॥ प्रतीतिरेव वस्तूपगमे शरणम्। प्रतीयते च सर्वाभेदस्तत्कथं न भवतीत्यतः सा मिथ्यादृष्टिरित्याह– **आतृणादिति**॥ ननु "पुरुष एवेदं सर्वम्" इत्यस्य पुरुषेणेदं सर्वं व्याप्तम् इत्यपि व्याख्यानं न युज्यते। "सप्तसु प्रथमा" इति सूत्रेण पुरुष इति प्रथमायास्तृतीयार्थत्वेऽपि व्याप्तशब्दश्रवणादित्यतः श्रुतिः स्वयमेवाऽह– **दधीति**॥ "दधिसक्तवो घृतौदनम्" इत्यादौ वाक्ये यथा सिक्तशब्दाभावेऽपि दधिसिक्ताः सक्तवो घृतसिक्तमोदनमिति सिक्तशब्दोऽवगम्यते तथा प्रकृतेऽपि व्याप्तशब्दाभावेऽपि व्याप्तशब्दोऽवगम्यते योग्यताबलादित्यर्थः।

अन्ये तु ननु व्याप्तशब्दाभावात् "पुरुष एवेदं सर्वम्" इत्यस्य पुरुषेण व्याप्तमिति कथं व्याख्यानमित्यतस्तद्दृष्टान्तोक्त्या घटयति– **दधिसक्तव इति**॥ व्याप्तशब्दोऽवगम्यते तदर्थोऽवगम्यते। तथा प्रकृतेऽपीति भावः। उदाहृतोदाहरणे व्याप्तशब्दाभावेऽपि तदर्थोऽव-गम्यत इत्युक्तम्। तज्ज्ञापिकां श्रुतिं पठति– **दधीति**॥ इत्याहुः। प्रकारान्तरेण "पुरुष एव" इति वाक्यव्याख्यानरूपां श्रुतिं पठति– **पुरुष इति**॥ इति वाक्यं नेनीयत इत्यर्थकमित्यर्थः। नेनीयते पुनः पुनर्भृशं वा नियम्यते। यद्वा नेनीयते विशेषेण प्राप्यते व्याप्यत इत्यर्थः। "णीञ् प्रापणे" इति धातोः। एवं च पूर्वोक्तदाढर्च्याय श्रुत्यन्तरमिदम्।

''एवं महातात्पर्यविरोधश्चाभेदे'' इत्युक्तमुपपाद्योपसंहरति– **अत इति** ॥ ऐक्ये तात्पर्यमित्यत्र प्रमाणाभावात् स्वपक्षे प्रमाणसद्भावाच्चेत्यर्थः । यद्यपि वक्ष्यमाणरीत्या वक्तव्यशेषोऽस्त्येव । तथाऽपि यदैक्ये सर्वागमतात्पर्यसाधकत्वेनोदाहृतं वाक्यं तदुक्तरीत्या भगवदुत्कर्षसाधकमेव । अतस्तेनैव सर्वप्रमाणानां भगवदुत्कर्ष एव महातात्पर्यावगतेः शारीरपराभेदं वदतां तद्विरोधः । एवं च भवत्प्रयुक्ता पिशाची भवन्तमेवानुधावतीति सूचयितुमत्रायमुपसंहारः ।

## भाष्यम्

*जीवब्रह्मैक्यं सकलशास्त्रमुख्यतात्पर्यविरुद्धम्*

**'अज्ञानदुःखसम्बन्धाद् यावज्ज्ञानं शरीरिणः ।**
**सर्वदा ज्ञानकं विष्णुमहमस्मीति ये विदुः ॥**
**अज्ञानदुःखमन्तारस्ततस्ते नीचतां विदुः[१] ।**
**विष्णोरुत्कर्षहातॄणां[२] नैव तेषां सुखं क्वचित् ।**
**योऽन्यथा सन्तमीशेशं स्वरूपं प्रतिपद्यते ।**
**किं तेन न कृतं पापं चोरेणेशापहारिणा ॥'**
**'ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः ।**
**शास्त्रतत्त्वमविज्ञाय तथा वादबलाः जनाः ॥**
**कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ।**
**ब्रह्मस्तेना निरानन्दा[३] अपक्कमनसोऽशिवाः ॥**
**याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।**

१. 'नीचतां विदः' क. २. 'उत्कर्षहर्तॄणाम्' क. ३.'निरालम्बाः' ह.

**वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ।**
**तेषां तमःशरीराणां तम एव परायणम् ॥'**
**'यतः स्वरूपत[1]श्चान्यो जातितः श्रुतितोऽर्थतः ।**
**कथमस्मि स इत्येव [2]सम्बन्धः स्यादसंहितः ॥' इति ।**

## पदार्थकौमुदी

### भाष्यार्थः

स्यादेवं यदि [3]शारीरपराभेदो भगवदुत्कर्षविरोधी भवेत् । स एव कथमित्यतस्तत्प्रकारं प्रमाणेनैव दर्शयति– **अज्ञानेति** ॥ सर्वदा ज्ञानसुखरूपं विष्णुमहमस्मीति ये विदुस्ते विष्णोरज्ञानदुःखमन्तारः । कुतः शरीरिणोऽद्वैतज्ञानिनो यावज्ज्ञानं तावदज्ञानदुःखसम्बन्धात् । यत एवं ततस्ते नीचतां विदुरिति योजना । नीचता चोत्कर्षविरोधिनीति प्रसिद्धमिति भावः । तज्ज्ञानस्य मिथ्याज्ञानत्वख्यापनाय तद्भव-मनर्थमाह– **विष्णोरिति** ॥ हरणमत्रान्यथाज्ञानमेव ।

ननु दुःखाद्यनर्थस्य पापफलत्वश्रवणात् कथं विष्णूत्कर्षहरण-पापफलत्वमित्यत आह– **य इति** ॥ सर्वमपि पापं कर्म कृतमेवेत्यर्थः । तदेवाऽह– **चोरेणेति** ॥ चोरत्वस्यैव विवरणम् – **ईशापहारिणेति** ॥ अभेदे खल्वेकावशेषः स्यात् । तत्र जीवावशेषे ध्याते स्फुटं परमात्मापहारित्वम् । जीवभावप्रविलयेऽप्यैश्वर्यापलापात् परमात्माप-हारित्वमेव । ऐक्यज्ञानिनो ब्रह्मस्तेनत्वं वचनान्तरेणाप्याह – **ऐकात्म्य-मिति** ॥ यदैकात्म्यं सर्वात्मना ब्रह्मैक्यं नाम इदमनैपुणाः अविद्य-

---

१. 'स रूपतश्चान्यः' ह. २. 'सम्बद्धः' ह. ३. 'शारीरपराभेदे' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

माननैपुणाः केचिद् ब्रूयुः । तेषां तथा वचने किं मूलमित्यत उक्तम्– **शास्त्रेति** ॥ अहं ब्रह्मास्मीत्यादिशास्त्राणां तत्त्वमभिप्रेतार्थमविज्ञाय ब्रूयुः । कथमज्ञानमात्रेण तदुक्तिरित्यत उक्तम् – **तथेति** ॥ ऐक्यप्रतिपादकवादसदृशो यो वादः एकविभक्तित्वादिरूपः सः बलं येषां ते तथोक्ताः । ''अहं ब्रह्मास्मि'' इत्यादिवाक्यानां तात्पर्यमविज्ञायाऽपाततः प्रतीत एवार्थे भ्रान्ता इत्यर्थः । सर्वेषामविद्यमानं शास्त्रतत्त्वाज्ञानादिकं तेषामेव किं निमित्तमित्यत उक्तम्– **कामेति** ॥ कामक्रोधादीनां मिथ्याज्ञानहेतुत्वं ''इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन''इति स्मृतिसिद्धम् । एवम् ऐक्यं मन्यमानाः ब्रह्मस्तेनाः । कामादीनामागन्तुकत्वान्मूलकारणमाह– **निरानन्दा इत्यादिना** ॥ एतेनाधमानां स्वरूपयोग्यतां लक्षयति । ननु ''द्वा सुपर्णा'' इत्यादिशास्त्रेषु विरोधिषु सत्सु कथमैक्यं ब्रूयुरित्यत आह– **याथातथ्यमिति** ॥ भेदपराणां शास्त्राणां याथार्थ्यमविज्ञाय शास्त्रदस्यवस्तान्यतत्त्वावेदकानीति मन्यमाना इत्यर्थः । तथाऽपि सर्वज्ञत्वादल्पज्ञत्वादिविरुद्धधर्माधिकरणत्वानुमानविरुद्धमैक्यं कथं ब्रूयुरित्यत आह– **वैगुण्यमेवेति** ॥ जीवब्रह्मणोस्तत्त्वतो निर्गुणत्वमेव पश्यन्तो गुणान् सार्वज्ञादिगुणान्न विनियुञ्जते तत्स्वरूपेण न योजयन्ति । एवम्भूतानां फलमाह– **तेषामिति** ॥ तमोगुणप्रचुरशरीराणाम् । तमो नरकविशेषः । परायणं प्राप्यम् ।

ननु ''अहं ब्रह्मास्मि'' इत्यादिना स्फुटमैक्यं प्रतीयते । अतस्तद्बलाद् भेदशास्त्रादेरतत्त्वावेदकत्वकल्पनं युक्तमेवेत्यत आह– **यत इति** ॥ स्वरूपतः परिमाणभेदतो जातितो जीवत्वादिजातिभेदतः श्रुतितः ''द्वा सुपर्णा''इत्यादिश्रुतेः । अर्थतः प्रयोजनभावाभावाभ्यां यतः स

भगवानन्यः प्रतीयते । अतः सोऽस्मीति सम्बन्धोऽन्वयोऽसंहितोऽयोग्यः कथमेव स्यादित्यर्थः । ''अहं ब्रह्मास्मि'' इत्यादिवाक्यानामैक्यपरत्वे निश्चितेऽन्येषां अतत्त्वावेदकत्वादिकल्पनं युक्तं स्यात् । नचैवम् । अनुमानागमविरोधेन प्रतीतान्वययोग्यताविरहात् । अन्यथाऽन्योन्याश्रयत्वादिति भावः ।

## भाष्यम्

**'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।**
**को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ॥**
**वैशम्पायन उवाच ।**
**नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।**
**बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।**
**तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् '**

**इति मोक्षधर्मवचनाच्च ।**

## पदार्थकौमुदी

### भाष्यार्थः

ननु ''शारीरपराभेदे तात्पर्यम्''इत्यत्र ''तत्त्वमसि''इत्यस्य ''पुरुष एवेदम्''इत्यस्य चोक्तरीत्या प्रमाणत्वासम्भवेऽपि ''एकमेवाद्वितीयं'' ''अहं ब्रह्मास्मि'' ''योऽसौ सोऽहम्'' इत्यादिश्रुतिरेव मानं स्यात् । तत्राभेदस्य स्फुटमुक्तत्वात् । उपक्रमादिबलेन तत्रैव तात्पर्यावगतेश्चेति चेन्न । ''एकमेव'' इति वाक्यस्यापि भगवदुत्कर्षपरतयैव व्याख्यातत्वेन त्वत्प्रतिकूलत्वात् । मोक्षधर्मवचनेऽपि तथा व्याख्यातमिति भावेन तदुदाहरति– **बहव इति** ॥ हे ब्रह्मन् पुरुषाः किं भेदवाक्याद्

बहवोऽङ्गीकार्याः । उतैकत्वोक्तेरेक एव । बहुत्वपक्षेऽपि सर्वेषां साम्यासम्भवादेकः श्रेष्ठो वाच्यः । स कस्तं[१] वक्तुमर्हतीत्यर्थः । तत्र पुरुषैक्यपक्षं दूषयति– **नैतदिति** ॥ विद्वांसः । एतदित्यस्य विवरणम् – **एकं पुरुषमिति** ॥ किन्तु बहव एव । तर्हि ''एकमेवाद्वितीयम्'' इत्यादिश्रुतिविरोध. इत्यतो विशिष्टैक्यार्थतया तां व्याकुर्वन् को हीति द्वितीयप्रश्नोत्तरमाह– **बहूनामिति** ॥ मोक्षधर्मवचनाच्च सर्वप्रमाणानां भगवदुत्कर्ष एव महातात्पर्यमिति सम्बन्धः ।

## भाष्यम्

*अभेदपरत्वेन प्रतीयमानानि वाक्यान्यपि वस्तुतः भेदपराणि*

**'हंनाम हन्यमानत्वाज्जीवस्य समुदाहृतम् ।**
**जीवादन्यो यतो विष्णुरहंनामा ततः स्मृतः ॥**
**स्मीति जीवः समुद्दिष्टः स्मीत्यल्पं सुमितत्वतः ।**
**पूर्णत्वादस्मिनामाऽसौ पूर्णपूर्णत्वहेतुतः ॥**
**ब्रह्मास्मीत्युच्यते विष्णुर्बृहत्पूर्णो यतः सदा ।**
**असौ सूर्यगतो विष्णुर्दूरस्थत्वात् प्रकीर्तितः ।**
**अहंनामा जीवगतो नित्याहेयत्वहेतुतः ॥' इति ब्रह्माण्डे ।**

## पदार्थकौमुदी

### भाष्यार्थः

इदानीं ''अहं ब्रह्मास्मि'' ''योऽसौ सोऽहम्'' इति वाक्यमपि परप्रातिकूल्यमेवाऽचरतीति भावेन तदर्थनिश्चायकं प्रमाणमाह – हं

१. 'कस्त्वं' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

**नामेति** ॥ हं न भवतीत्यहमित्यहंशब्दं व्याख्यायास्मिशब्दं व्याख्यातुं तत्स्थं स्मीतिशब्दं व्याचष्टे– **स्मीतीति** ॥ स्मीतिशब्देन जीवः समुद्दिष्टः। कथम् ? स्मीत्यल्पमुच्यते । कुतः ? सुमितत्वतः । जीवोऽप्यल्प एवेति भावः । इदानीमस्मीत्यस्यार्थमाह– **पूर्णत्वादिति** ॥ नञो विरुद्धर्थत्वा-दिति भावः । तर्हि ब्रह्मशब्दो व्यर्थः स्यादित्यत आह– **पूर्णेति** ॥ ब्रह्मत्वोक्त्या कथमयमर्थो लब्ध इत्यतस्तमेव हेतुं विवृणोति– **बृहत्पूर्ण इति** ॥ तथा चास्मीत्युक्तं पूर्णत्वं नौपचारिकमिति भावेन ब्रह्मत्वं तद्विशेषणमुक्तमिति भावः । अनेन अहं जीवभिन्नत्वेनाहंनामा विष्णुः ब्रह्मास्मि बृहत्पूर्ण इति वाक्यं व्याख्यातं भवति । ''योऽसौ सोऽहम्'' इति वाक्यमप्यसावहमित्यनयोरर्थोक्तिमात्रेण कृतव्याख्यानमिति भावेन तयोरर्थभेदमाह– **असाविति** ॥ एवं च सूर्यजीवान्तर्यामिणोरैक्यपरं तद्वाक्यमिति भावः । ब्रह्माण्डपुराणवचनाच्च सर्वप्रमाणानां भगवदुत्कर्ष एव महातात्पर्यमवगम्यत इति सम्बन्धः ।

### भाष्यम्

*मोक्षेऽपि विद्यमानजीवब्रह्मभेदो नातात्त्विकः*

**'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तम-पुरुषः[१] स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा'**

**'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा'**

**'यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ।'**

**'एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमाँल्लोकान् कामान्नी काम-**

१. 'उत्तमः पुरुषः' क.

रूप्यनुसञ्चरन् । एतत् साम गायन्नास्ते ।'

'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्मा-द्ध्येवाऽत्मनो यद्यत् कामयते तत्तत् सृजते ।'

'ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।'

'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।'

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।'

'[(१)]नानात्वेनाभिसम्बद्धास्तदा तत्कालभाविना ।

प्रकृतौ करणातीताः स्वात्मन्येव व्यवस्थिताः ॥

संयोगः प्रकृतेर्नैषां मुक्तानां तत्त्वदर्शनात् ।

पुरुषान्यबहुत्वेन प्रतीता न प्रवर्तते ॥

प्रवर्तति पुनः सर्गे तेषां सा न प्रवर्तते ॥'

'इदं ज्ञानमुपाश्रित्य[(२)] मम साधर्म्यमागताः ।

सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥'

'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः' इत्यादिश्रुतिस्मृतिषु सतात्पर्यं मुक्तानां विष्णोर्भेदस्यैवोक्तेः ।

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च न तत्त्वमसीत्यादिवाक्यानामैक्यार्थत्वं वक्तुं युक्तम् । भेदवाक्यविरोधात् । नच वैपरीत्यं शङ्कनीयम् । भेदवाक्यानां बहुत्वा-न्निरवकाशत्वाच्च । ऐक्यवाक्यस्य चाल्पत्वादुक्तरीत्या सावकाशत्वाच्च ।

---

१. 'नानात्वेनाभिसम्बुद्धाः' ह. २. 'अपाश्रित्य' ह.

नच भेदवाक्यमपि व्यावहारिकभेदपरमिति वाच्यम् । मोक्षेऽपि भेद-श्रुतेरिति भावेन मोक्षेऽपि भेदपराणि स्पष्टानि बहूनि वाक्यानि पठति – **परमित्यादिना ॥** श्रुतिस्मृतिषु सतात्पर्यं मुक्तानां विष्णोर्भेदस्यैवोक्तेस्तद्विरोधेन न तत्त्वमसीत्यादिवाक्यानामैक्यार्थत्वम् । किन्तूक्तार्थत्वमेवेत्यर्थः । अत्र समीपप्राप्त्यादिना भेदोऽवगम्यते । ''अस्माच्छरीरात् समुत्थाय स्वेन रूपेणाभिनिष्पद्यते'' इत्युक्त्या मोक्षपरत्वं च । स एकधेति मुक्तस्य भेदेनावस्थानमुच्यते । नच परपक्षे तद् युज्यते । अस्य मोक्षपरत्वं वक्ष्यति । गुहायां हृदये । व्योमन् व्योम्नि । ''ब्रह्मणा सह'' इति भेदोक्तिः । ''ब्रह्मविदाप्नोति परम्'' इत्युक्तब्रह्मप्राप्तिस्वरूपकथनपरत्वान्मुक्तपरम् । आनन्दमयस्य परब्रह्मत्वं त्वन्यत्र निर्णीतम् । ''उपसङ्क्रम्य'' इति समीपप्राप्त्युक्त्या भेदोक्तिः । ''अस्माल्लोकात् प्रेत्य'' इत्युपक्रमान्मुक्तपरम् । आत्मानं परमात्मानम् । लोकं सर्वाश्रयम् । उपास्ते जानाति । अस्य ज्ञानिनः कर्म न क्षीयते । सः मुक्तो यद् यत् कामयते तत्तत् परमात्मप्रसादद्वारा कर्म सृजति । अत्र परमात्मप्रसादायत्तभोगोक्त्या भेदः । मुक्तपरत्वज्ञापनाय ''स यः'' इत्यादिपूर्ववाक्यमुदाहृतम् । नह्यमुक्तस्य कर्माक्षयोऽस्ति । तेन पुनर्महात्मानो देवाः स्वाधिकारावसाने । नाकं पूर्णसुखात्मकं मोक्षं[१] सचन्त आप्नुवन् । यत्र मोक्षे । पूर्वकल्पे मुक्ताः साध्यादिदेवाः सन्तीत्यर्थः । ''परमं साम्यमुपैति'' इति भेदोक्तिः । पुण्यमनिष्टम् । तादृगेव भवति । नतु तदेव । ''एवं मुनेर्विजानत आत्मा भवति गौतम'' इति वाक्यशेषः । एवं विजानतां मुनीनामात्माऽधिपतिः हिरण्यगर्भोऽपि मुक्तः परमात्मानं प्राप्य तादृगेव भवति किमुतान्य इत्यर्थः । तदा मोक्षे पुरुषाः नानात्वेन

---

१. 'मोक्षमवाप्नुवन्' इति मातृकायाम् । प.सं. २६६ ।

भेदेनाभिसम्बद्धाः । नायं भूतपूर्वगत्या व्यवहार इत्याह – **तत्काल-भाविनेति** ॥ मुक्तिकालेऽपि विद्यमानेनेत्यर्थः । मुक्तज्ञापकमाह– **प्रकृताविति** ॥ प्रकृतिनिमित्तकेन्द्रियरहिता इत्यर्थः । स्वात्मन्येव व्यवस्थिताः स्वस्वरूप एव रताः । कुतः ? प्रकृतौ करणातीताः । प्रकृति-सम्बन्धस्यैवाभावादित्याह– **संयोग इति** ॥ तत्र हेतुः – **तत्त्वदर्शना-दिति** । प्रकृतिपुरुषविवेकज्ञानादित्यर्थः । ननु दृष्टतत्त्वाऽपि प्रकृतिः पुनर्मुक्तबन्धनाय प्रवर्तते किम् ? नेत्याह – **प्रतीतेति** ॥ तर्हि निर्व्यापारा किं नेत्युक्तम् – **पुरुषेति** ॥ पुरुषेभ्यः प्रकृतमुक्तेभ्योऽन्येषां संसारिणां बहुत्वेन तत्रैव लब्धव्यापाराऽत्र न वर्तत इत्यर्थः । प्रलयकाले मुक्तानां प्रकृतिसंयोगाभावेऽपि सृष्टिकाले स्यादित्यत उक्तम्– **प्रवर्ततीति** ॥ सर्गे प्रवर्तति प्रवर्तमाने सत्यपि तेषां मुक्तानां सा न प्रवर्तत इत्यर्थः । ''व्यत्ययो बहुलम्'' इति परस्मैपदम् । साधर्म्यमिति भेदोक्तिः । वाक्यशेषान्मुक्तपरम् । यत्र विष्णुलोके । माया प्रकृतिः नेति मुक्तत्वज्ञापकम् । अपरे संसारिणो रागादयो वा नेति किमु वक्तव्यम् । सुरासुरार्चिताः हरेरनुव्रताः यत्र सन्ति इति भेदोक्तिः । असुराः साधवोऽपि सन्ति ।

## भाष्यम्

*अस्मिन्नेव प्रकरणे जीवब्रह्मभेदप्रतिपादकवाक्यानि*
*विपुलानि सन्तीति प्रदर्शनम्*

**'सन्मूलाः सोम्येमाः सर्वाः प्रजाः[१] सदायतनाः सत्प्रतिष्ठाः', 'सति सम्पद्य न विदुः[२], सत आगम्य न विदुः' इत्यादौ भेद एव**

१. 'इमाः प्रजाः' ह. २. 'सति सम्पद्य न विदुः सति सम्पत्स्यामह इति' ह.

**ह्यत्र सतात्पर्यं प्रतिपादितः । ता नद्यः समुद्रादागत्य समुद्रं प्रविशन्ति। स समुद्र एव भवति । न नदीभावं प्राप्नोति । स एव च समुद्रो भवति । समुद्र एव समुद्रो भवति, न नद्य इति भेदस्यैवावधारणं क्रियते ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं स्थानान्तरस्थवाक्यविरोधान्न तत्त्वमसीत्यादिवाक्यमैक्यपर-मित्युक्तम् । इदानीमेतत्प्रकरणगतवाक्यविरोधाच्च नैवमित्याह– **सन्मूला इति** ॥ ''सन्मूलाः'' इत्यस्य भेदपरत्वं प्रागुक्तसमाख्यावाक्यादव-गम्यते । सतीत्यादौ भेदः स्फुट एव । नहि गृहे प्रविष्टस्य गृहादागतस्य च तदैक्यमिति भावः । परस्परभिन्ननानावृक्षरसनदीसमुद्रदृष्टान्तोक्तिरेव तात्पर्यज्ञापिकाऽतो भेद एव ह्यत्र प्रतिपादितः । तथाच तद्विरुद्धमैक्यं ''तत्त्वमसि'' इत्यादौ कथमुच्येतेति भावः ।

ननु ''नानावृक्षरसानामेकताम्'' इत्यैक्यमेवोक्तमिति चेत् । न । एकतामित्यस्य मिश्रतामित्यर्थोपपत्तेः । नहि नानावृक्षरसा अन्योन्य-भेदपरित्यागेन प्राक् सिद्धेन मधुनैक्यमापद्यन्ते । किन्तु तन्तव इव पटमन्योन्यं भिन्ना एव प्रागसिद्धं मधूत्पादयन्ति । तथाऽपि नदी-समुद्रदृष्टान्ते ''स समुद्र एव भवति''इति नदीनां समुद्रेणैक्यमुच्यत इति चेत् । न । तथा सति वृद्धिदर्शनानुपपत्तेः । अस्ति चेषत् समुद्रेऽपि द्वारि । महत्त्वादन्यत्रादृष्टिरिति भावेन ''ताः समुद्रात्'' इत्यादिकं यथावद् व्याचष्टे– **ता इति** ॥ समुद्रान्नियतजलराशिरूपात् । खातरूपाद्वा देवतारूपाद्वेत्यर्थः । आगत्येति शेषोक्तिः । ''समुद्रमपि यन्ति'' इत्यस्यार्थः – **समुद्रं प्रविशन्तीति** ॥ श्रौतैवकारान्वयो भविष्यति ।

एतावता नदीनां समुद्रेणैक्यं न मन्तव्यमित्याह– **स इति** ॥ स समुद्रः समुद्र एव भवति । अवधारणव्यावृत्तिमाह– **नेति** ॥ यतोऽवधारणं ततोऽन्यत्र तत्फलमित्यतः एतल्लभ्यते । एवं ''समुद्र एव भवति'' इति वाक्यं यथाश्रुतान्वयेन समुद्रस्य नदीभावनिषेधपरत्वेन व्याख्याय नदीनां समुद्रभावनिषेधपरत्वेनापि व्याख्यातुमवधारणान्वयं तावदाह– **स एवेति** ॥ यथाश्रुतैवशब्दपरित्यागेन समुद्रमेवापियन्तीत्युक्तैवशब्दस्यान्वयकथनमिदम् । अन्यथा तद्वैयर्थ्यापत्तेः । अवधारणद्वयानुरोधेनैव हि ''स समुद्रः'' इति वाक्यं द्वेधा व्याख्यायत इति मन्तव्यम् । चशब्दो व्याख्यानान्तरत्वद्योतनार्थः । तच्छब्दपरामृश्यं दर्शयन् तद्व्याचष्टे– **समुद्र एवेति** ॥ अवधारणव्यावर्त्यमाह– **नेति** ॥ समुद्रभावं प्राप्नुवन्तीति शेषः । इति भेदस्यैवावधारणं क्रियते । तथाच तद्दृष्टान्तेन ''सत आगम्य''इत्यादिदार्ष्टान्तिकवाक्येऽपि भेद एव प्रतिपाद्यत इति भावः ।

## भाष्यम्

*नानुकूलश्चोरदृष्टान्तोऽभेदस्य*

**न च स्वकीयस्य ब्रह्मभावस्याज्ञोऽपहर्ता भवति । किं त्वविद्यमानब्रह्मभावाभिमन्तैवापहर्ता । न हि स्वकीयवित्तपरित्याग्यपहर्ता भवति । किन्तु परस्वहर्तैव । तस्मादविद्यमानब्रह्मभावाभिमन्तैव 'अपहार्षीत् स्तेयमकार्षीत्' इति दृष्टान्तपूर्वकमुच्यते ।**

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च चोरापहार्यदृष्टान्ते ह्यैक्यज्ञानिनोऽनर्थः फलत्वेन कथ्यते । तेनैक्याभावोऽवगम्यते । निन्दायाः प्रतिषेधे तात्पर्यात् । तत्कथं तद्विरुद्ध-

मैक्यं ''तत्त्वमसि'' इत्यादौ प्रतिपाद्येत। स्यादेतद् यदि ''पुरुषं सोम्य'' इत्यादिकमुक्ताभिप्रायं स्यात्। नचैवम्। किन्नाम ? यदि वागादि-लयक्रमेण मरिष्यतो मुमुक्षतश्च तुल्या सत्सम्पत्तिस्तत्र विद्वान् सत्सम्पन्नो नाऽवर्तते। आवर्तते त्वविद्वानित्यत्र किं कारणमिति जिज्ञासायां सत्यब्रह्मात्मत्वाभिसन्धितत्त्यागौ हि तत्र कारणमिति प्रदर्शनार्थं ''पुरुषं सोम्य'' इत्यादि प्रवृत्तम्। एवंच सत्यब्रह्मात्मत्वाभिसन्धित्यागवान् भेदज्ञान्येव अपहार्षीत् स्तेयमकार्षीदिति दृष्टान्तपूर्वकमुच्यत इति भेदज्ञानिन एव तद्दृष्टान्तेनानर्थः फलत्वेन कथ्यत इत्यतः परव्याख्यानं दूषयति– **नचेति** ॥ त्वन्मते जीवस्य ब्रह्मभावो हि विद्यमान एव। अन्यथा तदज्ञानेनानर्थोक्त्यनुपपत्तेः। तथाच विद्यमानस्य स्वकीयस्य ब्रह्मभावस्याज्ञस्तदभिसन्धित्यागवानिति यावत्। नापहर्त्रुपमो भवती-त्यर्थः। कस्तर्ह्यपहर्त्रुपम इति पृच्छति – **किन्त्विति** ॥ उत्तरमाह– **अविद्यमानेति** ॥ स्वस्येति पूरणीयम्। स्वस्याविद्यमानो ब्रह्मण्येव विद्यमानो यो ब्रह्मभावस्तं स्वस्मिन्नभिमन्तैवापहर्त्रुपमो भवतीत्यर्थः। स्वकीयब्रह्मभावाभिसन्धित्यागवान्नापहर्त्रुपम इति कुत इति चेत्। लोकानुसारादित्याह – **नहीति** ॥ लोके इति शेषः। किन्तु मन्दो वा विरक्तो वा भवति। तथाच भेदज्ञानिनो नापहर्त्रुपमत्वमिति भावः। कस्तर्ह्यपहर्तेति पृच्छति – **किन्त्विति** ॥ उत्तरमाह – **परस्वेति** ॥ अस्तु परस्वापहर्तैवापहर्ता, किं तत इत्यत आह – **तस्मादिति** ॥ लोकानु-सारादित्यर्थः। ततश्चाभेदज्ञानिन एव तद्दृष्टान्तेनानर्थः फलत्वेन कथ्यत इति तद्विरोधान्न तत्त्वमस्यादिवाक्यानामैक्यार्थत्वमिति भावः।

## भाष्यम्

अदुःखित्वपूर्णज्ञानानन्दस्वातन्त्र्यादिब्रह्मस्वभावाननुभवं स्वा-

**त्मनो ज्ञात्वैव[१] तद्भावाभिमतेः स्तैन्यम् । परकीयाभिमतेरपहारः ।**

**'परस्वभावाभिमतेरपहर्ता स्ववञ्चनात् ।**
**स्तेनश्चाभेदवेत्ता तु ब्रह्मणो हन्यते सदा ॥' इति तत्त्वविवेके ।**

## पदार्थकौमुदी

### भाष्यार्थः

नन्वेतदयुक्तम् । लोके इदं वित्तं परकीयमेव, मदीयं न भवत्येवेति जानतो वञ्चनया तत्स्वात्मीयं कुर्वतः स्तैन्यम् । पश्यतोऽपहारं कुर्वतो ह्यपहारः । नचैक्यज्ञानिना परकीयं ब्रह्मत्वं वञ्चनया बलाद्वा स्वकीयं कर्तुं शक्यम् । तत्कथमैक्यज्ञानी स्तेनोऽपहर्ता चेत्यत आह– **अदुःखित्वेति** ॥ अनर्थातिशयद्योतनाय महातस्करत्वोपपादनार्थमदुःखित्वेत्यादिबहुविशेषणम् । ज्ञात्वैवेत्यन्तस्य ब्रह्मत्वं परकीयमेव न स्वकीयमिति ज्ञात्वेत्यर्थः । ज्ञात्वैव तद्भावाभिमतेरित्यनेन स्ववञ्चनं लभ्यते । स्वगतदुःखित्वापूर्णत्वाद्यनुभववञ्चनात् । स्तैन्यमैक्यज्ञानिनः । परकीयाभिमतेः परकीयस्य ब्रह्मभावस्य स्वात्मन्यभिमतेरुपपादनात् पश्यतोऽपहरणादपहारः । तथाऽभिमान एवात्र विवक्षित इति भावः ।

नन्वेवं तर्हि कथमैक्यज्ञानी स्तेनोऽपहर्ता वा । नहि परकीयं वित्तं स्वात्मीयं मन्यमानः स्तेनोऽपहर्ता वेति चेन्न । ऐक्यज्ञानिनो हि स्तेनापहर्त्रुपमत्वमुच्यते । नहि दृष्टान्तदार्ष्टान्तिकयोः सर्वसाम्यम् । अत एवोक्तम् – **दृष्टान्तपूर्वकमुच्यत इति** । ब्रह्मणोऽभेदवेत्ता परकीयस्वभावाभिमतेरपहर्ता । स्वानुभववञ्चनात् स्तेनश्च । अत एव तस्या-

१. 'स्वात्मनोऽपि ज्ञात्वैव' क पाठः ।

नर्थातिशय इत्यत्र स्मृतिं चाऽह– **परेति** ॥

### भाष्यम्

**न च दार्ढ्यमात्रे दृष्टान्तोऽयम्**[1] **। 'स यदि तस्य कर्ता भवति', 'स यदि तस्य कर्ता न भवति' इति हतिमुक्त्योरपहारानपहारैकहेतुकत्वश्रुतेः**[2] **। अन्यथा यदि दृढो भवति यद्यदृढो भवतीत्युच्येत ।**

## पदार्थकौमुदी

### भाष्यार्थः

अत्र कश्चित् । यदुक्तं स्तेनापहर्तृदृष्टान्तेनैक्यज्ञानिनोऽनर्थः कथ्यत इति तदयुक्तम् । स्यादेतदेवं कथञ्चित् । यद्यत्र दृष्टान्तवाक्ये ''अथ हन्यतेऽथ मुच्यते'' इत्युक्तयोर्हतिमुक्त्योरपहारतदभावकारणकत्वं विवक्षितं स्यात् । नचैवम् । ज्ञापकाभावात् । किं नाम ? स्तेयकर्त्रकर्त्रोऽर्मध्ये यः शपथपुरस्सरं विचारितेऽपि सुदृढः समुच्यते । यस्त्वदृढः स हन्यत इति मुक्तिहननयोर्दार्ढ्यादार्ढ्यमात्रनिमित्तकत्वमेव । एवं च तद्दृष्टान्तेन ब्रह्मात्मत्वे साक्षेपं विचारितेऽपि सुदृढश्चेन्मुच्यतेऽदृढश्चेद्धन्यत इत्यर्थो लभ्यत इति । तदेतद्दूषयति– **नचेति** । दार्ढ्यमात्रे दार्ढ्यमात्रस्य मुक्तिकारणत्व इत्यर्थः । दार्ढ्यस्य मुक्तिकारणत्वं सिद्धान्तेऽप्यङ्गीकृतमेव । यथोक्तम्– ''यदा कुर्याद् दार्ढ्यं शपथपूर्वकम्''इति । अतो मात्रशब्दः । एवमदार्ढ्यमात्रस्य हतिकारणत्वे इत्यपि ग्राह्यम् । कुतो नेत्यतो हतिमुक्त्योरपहारानपहारहेतुकत्वे ज्ञापकमाह– **स इति** ॥ परोक्तार्थे बाधकमाह– **अन्यथेति** ॥ मुक्तिहननयोर्दार्ढ्यादार्ढ्यमात्रहेतुकत्वे ''स यदि

---

१.'दार्ढ्यमात्रदृष्टान्तोऽयम्' ह. २.'हेतुत्वश्रुतेः' ह.क.

दृढो भवत्यथ मुच्यते । स यद्यदृढो भवत्यथ हन्यते'' इत्येव वक्तव्यमि-
त्यर्थः ।

## भाष्यम्

**न च सत्यासत्यमात्रम् । तदा सत्यानृतवाग्दृष्टान्तेन पूर्तेरपहारदृष्टान्तो न स्यात् । तस्मादभेदज्ञानेन महान्तं विनाशं प्रदर्श्य भेदज्ञानान्मुक्तिपरमेवैतद्वाक्यम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

शङ्करस्त्वाह– अत्र दृष्टान्तवाक्ये सत्यानृताभिसन्धिमात्रं विवक्षित-म् । तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेऽपि स्तेयकर्त्रकर्त्रोरनृताभिसन्धो दह्यते । नतु सत्याभिसन्ध इति । एवं सत्यब्रह्मात्मत्वाभिसन्धो विद्वान् सत्सम्पद्य न पुनरावर्तते । अविद्वांस्तु विकारानृताभिसन्धः पुनरावर्तत इति । तदिदं दूषयति – **नचेति** ॥ सत्यानृताभिसन्धिमात्रमिह विवक्षितमिति च नेत्यर्थः । कुतो नेत्यत आह – **तदेति** ॥ यदि सत्यानृताभिसन्धिमात्रमिह विवक्षितं स्यात् तदा ''स सत्याभिसन्धः'' इत्यादिना ''मुच्यते'' इत्यन्तेन ''सोऽनृताभिसन्धः'' इत्यादिना ''हन्यते'' इत्यन्तेन सत्यानृतवाग्दृष्टान्तेनैव पूर्तेः । ''स यदि तस्य कर्ता भवति''इत्याद्यपहारदृष्टान्तो न स्यादित्यर्थः । अपव्याख्यान-दूषणस्योपयोगं दर्शयन् स्वमते खण्डतात्पर्यमुपसंहरति – **तस्मादिति** ॥ परव्याख्यानस्यायोगादित्यर्थः । ''अथ हन्यते'' इत्यन्तेन स्तेनाप-हर्तृदृष्टान्तेन जीवेश्वराभेदज्ञानेन महान्तं विनाशं प्रदर्श्य ''अथ मुच्यते'' इत्यन्तेन अनपहर्तृदृष्टान्तेन भेदज्ञानेन मुक्तिप्रदर्शकमेव ''पुरुषं सोम्य'' इत्यादिमहावाक्यमित्यर्थः । तथाचैतत्प्रकरणविरोधान्न तत्त्वमसीत्यादि-

वाक्यस्य जीवेशाभेदार्थकत्वम् । अतो न शारीरपराभेदे तात्पर्यमित्यत्र किञ्चिन्मानमिति विष्णोः परमोत्कर्ष एव सर्वप्रमाणानां महातात्पर्या[१] न्महातात्पर्यविरोधश्चाभेदे इति स्थितम् ।

## भाष्यम्

*भेदाभेदोऽपि शास्त्रमहातात्पर्यविरोधी*

**भिन्नस्यैवोत्कर्षो भवतीति[२] । अभिन्नस्य कुत उत्कर्षः स्यात् ?**

**अज्ञानदुःखयुक्तत्वाच्च ।**

**न हि तत्पक्षे परमार्थदुःखिनो भ्रान्त्या दुःखिनश्च तत्काले कश्चिद् विशेषः । अस्वातन्त्र्यं च भ्रान्तस्य निश्चितमेव । न हि भ्रमः स्वेच्छया युज्यते ।**

**'स्वात्मानं परमं विष्णुं विदित्वाऽपि[३] स राघवः ।**
**दैत्यानां मोहनार्थाय दर्शयामास मूढताम् ॥' इति पाद्मे[४] ॥**

## पदार्थकौमुदी

### भाष्यार्थः

अत्राऽहुर्भेदवादिनः । अस्तु विष्णोः परमोत्कर्षे महातात्पर्यम् । तथाऽप्यभेदाङ्गीकारे तद्विरोधः कथम् ? भेदाभेदाङ्गीकारेणानुपपत्त्यभावादिति । तान् प्रत्याह– **भिन्नस्यैवेति** ॥ एवशब्दोऽभेदव्यावर्तकः । अन्यस्यैवान्यस्मादुत्कर्षो दृष्ट इति सर्वाभिन्नस्य कुत उत्कर्षः स्यात् ? नच भेदस्यापि विद्यमानत्वेन तदुपपत्तिः । अभेदेनानुत्कर्षापरिहारादित्यर्थः । जीवाभिन्नस्योत्कर्षाभावे हेत्वन्तरमाह– **अज्ञानेति** ॥ अज्ञानादि-

१. 'महातात्पर्यविरोधश्च भेदे' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः । २. 'भवति' क. ३. 'विदित्वैव' क. ४. 'इति च पाद्मे' ह.

विशिष्टजीवाभेदे स्वस्यापि तदापत्तेरुत्कर्षः कुतः ? किन्त्वपकर्ष एव स्यादित्यर्थः । ननु ब्रह्मणो जीवाभेदेऽपि नोत्कर्षहानिः । ब्रह्मणो भ्रान्त्यैव दुःखाज्ञानयुक्तत्वात् । जीवस्य तु परमार्थत एव दुःखादियुक्तत्वात् । नच भ्रान्त्या दुःखादियुक्तस्य पारमार्थिकोत्कर्षहानिः । तथा सति रामकृष्णादावपि तदभावप्रसङ्गादिति चेन्न । पारमार्थिकदुःखिजीवाभेदे[१] परमार्थतो दुःखित्वाद्यपरिहारात् । किञ्च भ्रान्त्या दुःखादियुक्तस्यापि परमार्थदुःखिजीववदुत्कर्षाभाव एव भवेत् । भ्रान्तस्य बाधोत्तरं तदभावानुसन्धानेऽपि तत्काले दुःखानुभवस्योभयत्रापि तुल्यत्वात् । नहि वस्तुतो मृतपुत्रस्य परमार्थदुःखिनः पुत्रमरणभ्रान्त्या दुःखिनश्च तत्काले कश्चिद् विशेषोऽस्तीत्याह– **नहीति** ॥ तत्पक्षेऽपीत्यर्थः । तेनोभयसम्मतमेतदित्याह । किञ्च, यदि ब्रह्मणो भ्रान्त्या दुःखित्वमङ्गीक्रियते तदा भ्रातन्त्वेन तस्यास्वातन्त्र्यं स्यादिति भावेन व्याप्तिमाह– **अस्वातन्त्र्यमिति** ॥ स्वेच्छानुसारित्वाभावः । चशब्दः प्रसङ्गसमुच्चयार्थः । भ्रान्तस्यापि स्वेच्छानुसारित्वं किं न स्यादित्यत आह– **नहीति** ॥ ननु यथा स्वस्वरूपापरिज्ञानेन भ्रान्त्या दुःखिनोऽपि राघवस्य नोत्कर्षहानिस्तथा ब्रह्मणोऽपि किं न स्यादित्यतोऽसम्प्रतिपन्नो दृष्टान्त इति भावेनाऽऽह– **स्वात्मानमिति** ॥

### भाष्यम्

**'जगद्व्यापारवर्जम्', 'प्रकरणात्' इत्यादिनैश्वर्यमर्यादया[२] मुक्तानां ब्रह्मणश्च भेदस्यैव निर्णीतत्वाच्च भगवता ।**

**'ब्रह्मसूत्रानुसारेण वेदाद्यं सर्वमेव च ।**

---

१. 'पारमार्थिकदुःखजीवाभेदे' इति मुद्रितपुस्तके । २. 'इत्यैश्वर्यमर्यादया' क.

**योज्यं न ब्रह्मसूत्राणि दृश्यमानार्थतोऽन्यथा ॥' इति च ब्रह्मवैवर्ते ।**

**'चोरदृष्टान्ततो यस्य ह्यभेदज्ञानतस्तमः ।**

**भेदेनोत्कर्षवेत्तुस्तु मुक्तिरेव ह्यचोरवत् ॥' इति च ।**

## पदार्थकौमुदी

### भाष्यार्थः

जीवब्रह्मणोर्भेदाभेदाङ्गीकारे सूत्रविरोधं चाऽह– **जगद्व्यापारेति** ॥ एवेत्यभेदं व्यावर्तयति । ननु ''ब्रह्म वेद ब्रह्मैव भवति'' इत्यादौ वेदे मुक्तस्य ब्रह्माभेदोक्तेर्गौणमुक्तिपरमेवेदं सूत्रं किं न स्यादित्यत आह– **ब्रह्मसूत्रेति** ॥ निर्णायकनिर्णेययोर्निर्णायकस्यैव प्रबलत्वादिति भावः । अत एवोक्तम् – **निर्णीतत्वादिति** । किञ्चात्रैव श्रुतौ चोरदृष्टान्तेनाभेद-ज्ञानिनोऽनर्थश्चोरदृष्टान्तेन भेदेनैवोत्कर्षवेत्तुर्मुक्तिश्च कथ्यते । ततश्च तद्विरोधान्न जीवब्रह्मणोरभेदो वक्तुं युक्त इति भावेन श्रुत्यर्थनिश्चायकं प्रमाणमाह– **चोरेति** ॥ यस्य कस्यापि ।

### भाष्यम् ॥

**'सारत्वात् स इति प्रोक्तो ज्ञानत्वाद् य इतीरितः ।**

**सर्वस्येष्ट इति ह्येष मानानामणकोऽणिमा ॥**

**तत्तन्त्रत्वादैतदात्म्यं स सत्यः साधुरूपतः ।**

**तत्ततेः पूर्णतश्चाऽत्मा सादनात् स इतीरितः[१] ॥**

**अतत्त्वमसि पुत्रेति य उक्तो गौतमेन तु ।**

---

१.'सादनात् स इतीरितः' क.

**नवकृत्वः सदृष्टान्तं सर्वभेदेन केशवः ॥**
**तस्मै नमो भगवते चिदचित्परमाय ते ।**
**पुरुषोत्तमाय देवाय पूर्णानन्दैकरूपिणे ॥'**

**इति सामसंहितायाम् ।**

**अतः सर्वचिद्विलक्षणः सर्वोत्तमः सर्वगुणपरिपूर्णो[१] भगवान् पुरुषोत्तम इति सिद्धम् ॥ १६ ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते छान्दोग्योपनिषद्भाष्ये षष्ठोऽध्यायः ॥ ६ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

ननु ब्रह्मसूत्रानुसारेण वेदाद्यं योज्यमित्युक्तम् । तत्र भेदप्रतिपादकसूत्रानुसारेण तत्त्वमसीत्याद्यभेदवाक्यं कथं योज्यमित्यतः प्रमाणेनैव तद्योजनाप्रकारं दर्शयति – **सारत्वादिति** ॥ यद्यपि '' स य एषः'' इत्यादिकं प्रागेव व्याख्यातम् । तथाऽपि अस्मिन् खण्डे ''स य एषः'' इत्यादेरश्रवणादितरखण्डवदत्रापि तदध्याहार्यमिति सूचयितुं प्राग्व्याख्यातपदव्याख्यानार्थं च सर्वथा नेदमभेदपरमिति दार्ढ्यार्थं च सामसंहितागतमेवोपसंहारवाक्यमुदाहृतम् । मानानां ज्ञानानां मानाभिमानिदेवतानां वा अणकश्श्रेष्ठक इत्यर्थः । ततेर्व्याप्तेस्तत् । अध्यायार्थगुणविशिष्टत्वेन भगवन्नमनरूपं मङ्गलमाचरति संहिताकारः – **इति य उक्त इत्यादिना** ॥ ''नवकृत्त्वः'' इत्यनेन नवप्रकरणीगतस्यापि वाक्यस्यायमेवार्थ इति द्रढयति । तदनुसारेण स्वयमप्यध्यायार्थ-

१.'सर्वगुणपूर्णः' ह.

मुपसंहरति– **अत इति** ॥ षोडशः खण्डः ॥

**॥ ततश्चेयं खण्डस्याक्षरयोजना ॥**

हे सोम्य राजद्रव्येऽपगते सति शङ्कास्पदं वा राजाऽहमिति वदन्तम् अतदर्हं वा पुरुषं हस्तगृहीतं बद्धहस्तमानयन्ति राजभटाः । किं कृतवानयमिति पृष्टश्चायम् अपहार्षीत् स्तेयमकार्षीदिति वदन्तः आनयन्तीति सम्बन्धः । पश्यतोहरत्वमपहारः । अन्यत् स्तेयम् । ततस्तेन नेदं मया कृतमित्युक्ते भटान् प्रति राजा वक्ति । परशुमस्मै अस्य परीक्षार्थं तपतेति । सः गृहीतो यदि तस्यापहारादेः कर्ता भवति । अथ च नेति ब्रूते सः तत एवं कृत्वाऽपि नेति वचनादेवाऽत्मानमनृतमनृतभाषिणं कुरुते । सोऽनृतोऽभिसन्धोऽभिसन्धिरस्येति तथोक्तोऽनृतेनाऽत्मानम् अन्तर्धायाऽच्छाद्य परशुं तप्तं प्रतिगृह्णाति । स दह्यतेऽथ हन्यते राजभटैः । हतिश्चापराधाधिक्यक्रमेण नानाविधा । कस्यचित् महाकारागृहे पातनं यतो न विमोकः । कस्यचिद्धस्ताद्यवयवच्छेदः । कस्यचिच्च वध एवेति । अत्र स यथा तत्र दह्यते हन्यते चैवमेव ब्रह्मस्तेनमभेदज्ञानिनं हस्तगृहीतमानयन्ति वायुकिङ्कराः । अयं ब्रह्मापहार्षीद् ब्रह्मस्तेय-मकार्षीदिति वदन्तः । ततस्तेन न मया ब्रह्मापहारादिकं कृतमित्युक्ते भटान् प्रति राजा वक्ति परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति । [१]अथ च नेति ब्रूते । तत एवाऽत्मानमनृतं कुरुते । सोऽनृताभिसन्धोऽनृतेनाऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । स दह्यतेऽथ हन्यते । अपराधाधिक्यक्रमेण तमसि पात्यत इत्यपि ग्राह्यम् ॥ १ ॥

अथ स गृहीतो यदि तस्यापहारादेरकर्ता भवति नेति ब्रूते च । तत

---

१. 'तथाच' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

एवाकृत्वैव नेति वचनदार्ढ्यादेवाऽत्मानं सत्यं सत्यभाषिणं कुरुते । स सत्याभिसन्धः सत्येनाऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । स न दह्यतेऽथ मुच्यते शिक्षकेभ्यः । न केवलमेतावत् । किन्तु मिथ्याभिशंसिहननपुरःसरं राज्ञा स्वीक्रियते च । किं तत इत्यत आह– **स इति** ॥ सोऽपहाराद्यकर्ताऽति दृढो यथा तत्र तप्तपरशुपरीक्षायां नादाह्येत ईषदपि न दह्यते । एवमेवायं नाहं विष्णुरित्युक्तरीत्या दार्ढ्यं शपथवद् यदा कुर्यात् तदा तप्तपरशुपरीक्षायां न दह्यते । मुच्यते च शिक्षकेभ्यः । मिथ्याभिशंसिहननपुरःसरं विष्णुना स्वीक्रियते चेति वाक्यशेषः ॥ २ ॥

अत्रापि ''स य एषोऽणिमा''इति वाक्यं ग्राह्यम् । अर्थस्तूक्त एव । इति पित्रोपदिष्टोऽयं श्वेतकेतुर्विगलिताभेदमोहो यदुपदिष्टं भगवत्प्राधान्यादिकं तद्धाबाधितं विजज्ञौ बुबोधेति श्रुतिवाक्यम् । अस्येति [१]कर्तरि षष्ठी । इतिशब्दः समाप्त्यर्थः । द्विवचनमादरार्थम् ॥ ३ ॥ **षोडशः खण्डः ॥**

अत्र ''तदेष श्लोकः'' इत्यादि क्वाचित्कः पाठः । तस्य चायमर्थः । तत्तत्र सत्यवचनान्न दाहो भवति । किन्तु मुक्तिरेवेत्यत्रैषः वक्ष्यमाणः श्लोको भवति । श्लोकमुदाहरति–

**''सर्वेषां खलु भूतानां आत्मा सत्ये प्रतिष्ठितः ।**

**तेनाऽत्मानमन्तर्धाय न किञ्चित् पापमृच्छति ।।''** इति ।

आत्मा स्वामी । सत्ये सत्यवचने तेन सत्यवचनेन आत्मानं स्वात्मानं न केवलं सत्यवचनमात्रं पापालेपहेतुः । किन्तु भगवति प्रीतिश्चेति भावेनाऽह –

**''आत्मासत्याऽऽत्मसाक्षी सतां धर्मः प्रतापवान् ।**

१. 'कर्मणि' इति मुद्रितपुस्तकस्थः पाठः ।

**न च पापानि कुरुते यस्याऽत्मा भवति प्रियः ॥''** इति । आत्मा परमात्मैव । सत्या सत्यः । सत्यवचननियामकः । आत्मा परमात्मैव साक्षीदीक्षत इति साक्षी । धर्मो धारकः प्रतापवान् कीर्तिमान् । यस्याधिकारिणः आत्मा परमात्मा प्रियो भवति । सः न पापानि कुरुत इत्यन्वयः । भगवति प्रीतिमांश्च भेदज्ञान्येवेति हृदयम् । एवं भेदज्ञानिनः फलमुक्त्वा ब्रह्मस्तेनस्याभेदज्ञानिनः फलमाह– **'जायत्येको म्रियत्येकोऽश्नात्येकः शुभाशुभम्''** इतीति । एकः एकत्वज्ञानी । जायति जायते । म्रियति म्रियते । ''शुभाशुभम्'' इति द्वन्द्वैकवद्भावः । पापाभिवृद्धावशुभमेवाश्नातीति तात्पर्यम् । ''तानहं द्विषतः'' इत्यादिवचनात् । इतिशब्दः श्लोकसमाप्तिद्योतकः । तच्छ्लोकोक्तमप्ययं श्वेतकेतुरबाधितं बुबोधेति श्रुतिः स्वयमाह– **तद्धास्य विजिज्ञाविततीति ।** अभ्यासस्तात्पर्यार्थः । विजिज्ञावित्युक्तम् । किं तज्ज्ञानेनेत्यतो ज्ञानसामर्थ्ये श्लोकोऽप्यस्तीत्याह – **तदेष श्लोक इति ॥** तमुदाहरति–

**सर्वभूतात्मभूतेभ्यः सम्यग्भूतानि पश्यतः ।**
**देवा अपि मार्गे मुह्यन्ति पदज्ञानात् पदैषिणः ॥** इतीति ॥

छान्दसत्वादुत्तरार्धस्थदकारमादाय पश्यत इति रोरुत्वम् । एवं भवति प्रियो इति प्रागुक्तमपि ज्ञेयम् । सर्वभूतानामात्मभूतेभ्यः स्वामिभूतेभ्यो देवेभ्यस्तत्प्रसादादिति यावत् । भूतानि सर्वभूतान्तर्गतानि भगवद्रूपाणि । पूर्णानि वा । सम्यक् पश्यन्तोऽपरोक्षीकुर्वन्तो मार्गे पदज्ञानाद् भगवत्स्वरूपज्ञानात् पदैषिणः स्वपदप्राप्तीच्छवो देवा अपि मुह्यन्ति । देवैरप्याकाङ्क्ष्योऽयं ज्ञानिमार्ग इति स्तुतिरियम् । द्विर्वचनमध्यायार्थस्य सर्वस्यापि प्रामाणिकत्वसूचनार्थम् ॥

॥ इति षोडशः खण्डः ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य
श्रीमच्छान्दोग्योपनिषद्भाष्यस्य टीकायां
श्रीमद्वेदव्यासतीर्थपूज्यपादशिष्येण वेदेशभिक्षुणा विरचितायां
पदार्थकौमुद्यां षष्ठोऽध्यायः ॥ ६ ॥

*****

## अथ सप्तमाध्यायस्य प्रथमः खण्डः

### उपनिषत्

*सनत्कुमारसविधे नारदागमनम्*

ॐ अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳ होवाच यद् वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ॥ १ ॥

*नारदाधीतशास्त्रवर्णनम्*

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहास-पुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद् भगवोऽध्येमि ॥ २ ॥
सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्य-स्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तन्मा भगवान् शोकस्य पारं तारयत्विति तꣳ होवाच यद्वै किञ्चैतदध्यगीष्ठा नामैवैतत् ॥ ३ ॥

*नामाभिमानिन्यामुषोदेव्यां भगवदुपासनम्*

नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्वेति ॥ ४ ॥
स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो

भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ५ ॥ १ ॥

भाष्यम्

यद्वेत्थ तेन तदुक्त्वा मामुपसीद ।

''पितृलक्षणं तु पित्र्यं स्याद् राशिः स्यात् पूगलक्षणम् ।
देवतालक्षणं दैवं निधिश्च निधिलक्षणम् ॥
वाकोवाक्यं मूलवेदो वेदसारोपसंहृतिः ।
एकायनमिति प्रोक्तं देवविद्या त्वमानुषी[१] ॥
देवज्ञेयैव या विद्या ब्रह्मविद्या तथाऽऽरणम् ।
भूतविद्या भूतचिह्नं क्षत्रविद्या तु नीतिका ॥
नाक्षत्री ज्यौतिषाख्या[२] च सर्पलक्षणमेव च ।
सर्पविद्येति सम्प्रोक्ता या देवपरिचारगा ।
सा देवजनविद्या स्यादेता वेद स नारदः ॥''

इति सामसंहितायाम् ।

''विद्यानां निर्णयाज्ञानादविद्वानुच्यते पुमान् ।
सर्वविद्याविदप्यद्धा तस्मान्निर्णयवित्तये ।
कुमारमैच्छद् देवर्षिर्नारदो ब्रह्मवित्तमम् ॥'' इति च ।

''विष्णोर्नाम यतो विद्याः सर्वनामेत्यतः स्मृताः[३] ।
नामाभिमानिनी [४] चोषास्तस्यां ब्रह्म परं स्मरेत् ॥

---

१.'देवविद्याऽत्यमानुषी' प्राचीनपाठः । २. 'ज्योतिषाकाख्या' ह. ३. 'स्मृतः' क. ४. 'चोषा' ह.

**यदेषा न त्वमेया स्यान्मीयते ह्युषसि ध्रुवम् ।**
**रात्रिमानमजानद्भिस्ततो नामेत्युषा स्मृता[१] ॥ १ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

**नामादिप्राणपर्यन्तदेवश्रेष्ठाय विष्णवे ।**
**सत्याद्यात्मान्तरूपाय नमो भगवते सदा ॥ १ ॥**

पूर्वं जीवभिन्नत्वादिना विष्णोः सर्वोत्तमत्वं निरूपितम् । इदानीं तद्देवतातारतम्यपुरःसरमेव तारतम्यान्तगत्वेन ज्ञातं फलवन्नान्यथेति भावेन देवतातारतम्यकथनपुरःसरं विष्णोः सर्वोत्तमत्वमेव निरूपयत्यनेनाध्या-येन । तत्र ''यद्वेत्थ तेन मोपसीद'' इत्यत्र मेत्यस्य निषेधार्थत्वं प्रतीयते । अस्मच्छब्दरूपत्वेऽपि तेन [२]मामुपसीदेत्ययुक्तम् । स्वज्ञानपरित्यागे-नाऽगमनासम्भवेन स्वज्ञानेन सहैव नारदेनाऽगतत्वादित्यतस्तद्व्याचष्टे– **यद्वेत्थेति ॥**

ननु नारदोक्तविद्यामध्ये ऋग्वेदादिपुराणान्ता विद्याः प्रसिद्धाः । ''पित्र्यं राशिम्'' इत्यादिकमप्रसिद्धमतोऽप्रतिपत्तिविप्रतिपत्तिनिरासाय पित्र्यमित्यादिकं क्रमात् प्रमाणेनैव व्याचष्टे– **पितृलक्षणमित्यादिना ॥** पितॄणां लक्षणं यस्मिंस्तत्पितृलक्षणं श्राद्धकलापः । पूगलक्षणं सङ्ख्या-समूहलक्षणं गणितशास्त्रम् । देवानां यथाक्रमं द्वात्रिंशल्लक्षणादिप्रतिपादकं शास्त्रं देवतालक्षणम् । दैवमुत्पातज्ञानमित्यप्रामाणिकम् । निधिलक्षणमे-तादृशस्थले निधिरस्तीत्यादिप्रतिपादकम् । मूलवेदः प्रागेवर्ङ्निगदादि-

---

१.'नामेत्युषाः स्मृता' क. २. 'मामुपसीदेत्युक्तम्' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

रूपेण विभक्तः । ततश्च प्रागृगादिशब्दैरवान्तरो वेदो ग्राह्य इति भावः । वेदसारोपसंहृतिः मूलवेदसारस्यावान्तरवेदस्योद्धारश्चतुर्विंशत्यादिशाखा-रूपः । वाकोवाक्यं तर्कशास्त्रमेकायनं नीतिशास्त्रमित्यप्रामाणिकम् । देवविद्या दैवमित्युक्तैवेत्यसत् । तथा सति पुनरुक्त्यापातादिति भावेनोक्तम् – **देवेति** ।। तुशब्दः पूर्वोक्ताद् विशेषज्ञापनार्थः । देवैरेव ज्ञेया या विद्या सा देवविद्या । [१]अवधारणव्यावर्त्यमाह– **अमानुषीति** ।। न मानुषैर्ज्ञेयेत्यर्थः । अरण्ये अधीयत इत्यारण्यमुपनिषत् । ब्रह्मविद्या शिक्षाकल्पादिकमित्यप्रामाणिकम् । भूतचिह्नं देवेतरभूतचिह्नप्रतिपादकं सामुद्रम् । नीतिका नीतिशास्त्रम् । क्षत्रविद्या धनुर्वेद इत्यप्रामाणिकम् । सर्पलक्षणं गारुडम् । देवपरिचारगा गान्धर्वम् ।

नन्वेवं तर्हि नारदस्य सर्वविद्यावेत्तृत्वेनाऽत्मविद्यावित्त्वात् ''कथं सोऽहं मन्त्रविदेवास्मि नाऽत्मवित्'' इति स्वस्याज्ञानत्वमुच्यते । ''तन्मा भगवान् शोकस्य पारं तारयतु'' इति किमिति कुमारः प्रार्थ्यत इत्याशङ्कां प्रमाणेनैव परिहरति– **विद्यानामिति** ।। सर्वविद्याविदपि पुमानद्धा विद्यानां निर्णयाज्ञानादविद्वानित्युच्यते यस्मात् तस्मात् सर्वविद्याविदपि देवर्षिरद्धा निर्णयवित्तये कुमारमैच्छदित्यन्वयः । ''ब्रह्मवित्तमम्''इति गुरुत्व-प्रयोजकोक्तिः । तेन देवर्षिर्नारदः स्वयं श्रेष्ठोऽपि प्राकृतपुरुषवत् सनत्कुमारमाससादेति निरस्तम् । सनत्कुमारस्य स्कन्दत्वेन तदपेक्षयाऽ-प्युत्तमत्वात् ।

नारदप्रार्थितः कुमारो ''यद्वै किञ्चैतदध्यगीष्ठा नामैवैतन्नाम वा ऋग्वेदः'' इत्यादिना सर्वविद्यानां नामत्वमाह तत् कस्य नामेत्यत आह– **विष्णोरिति** ।। ''नामोपास्व'' इतीति विधिवाक्यस्थनामशब्दस्य

१. 'अवधारणव्यावृत्त्यमाह' इति मुद्रितपुस्तकस्थः पाठः ।

प्रसिद्धार्थत्वप्रतीतिं निवारयंस्तदर्थमाह– **नामाभिमानिनीति** ॥ ननु विधिवाक्ये ब्रह्मेति पूरणीयम् । अन्यथेतिशब्दानुपपत्तेः । ''नाम ब्रह्मेत्युपास्ते'' इत्यनुवादायोगाच्च । ततश्च नामब्रह्मशब्दयोः प्रथमान्तत्वेनैक्यदृष्टिरत्र कर्तव्येत्युच्यत इत्यबुधानां शङ्कावारणाय तद्व्याचष्टे– **तस्यामिति** ॥ ननूषसोऽश्विभार्यायाः नामत्वमेव कथम्? तदभिमानित्वादित्युक्तमेव । तर्हि सर्वविद्याभिमानित्वे भारत्यादिवदमेयत्वं स्यादित्याशङ्कां नामशब्दनिर्वचनेनैव परिहरति– **यदिति** ॥ एषा यस्मादमेया नैव ततो नामेति स्मृता । अमा अमेया न भवतीति नामेति निर्वचनात् । इयं कुतो नामेयेत्यत उक्तम्– **मीयत इति** ॥ रात्रिमानमजानद्भिरुषस्युषःकाले ध्रुवं मीयते । तदभिमात्वात् । यस्मात् तस्मान्न त्वमेयेत्यन्वयः ॥ प्रथमः खण्डः ॥

## ततश्चेयं खण्डस्याक्षरयोजना

नारदो देवर्षिः सनत्कुमारं स्वापेक्षया ब्रह्मवित्तममधीहि मामध्यापय । भगवो भगवन्निति होपससाद । तं नारदं प्रत्युवाच सनत्कुमारः । त्वं यद्वेत्थ तेन तदुक्त्वा मामुपसीद । तत ऊर्ध्वं तदनन्तरं ते तव वक्ष्यामि । अज्ञातस्यैवोपदेष्टव्यत्वात् ॥ १ ॥

एवमुक्तः सः नारदो होवाच ऋग्वेदमित्यादि । इतिहासश्च पुराणं चेति द्वन्द्वैकवद्भावः । इतिहासपुराणं वेदं ग्रन्थम् । वेदानामृगादीनां पञ्चमं पञ्चत्वसङ्ख्यापूरणम् । वेदमध्येमीत्यर्थः । अत्र सामान्योक्तावपि प्रमाणान्तरबलाद् वेदानुकूलयोरेवेतिहासपुराणयोर्ग्रहणम् । इतरत् पूर्वमेव स्पष्टम् ॥ २ ॥

हे भगवः सोऽहमेवं सर्वविद्यावेत्ताऽपि मन्त्रविदेव आत्मनामविदेवास्मि । तन्निर्णयाज्ञानान्नाऽत्मवित् । अलमात्मप्रतिपादकज्ञानेन । किं तत्प्रतिपाद्यज्ञानेनेत्यत आह– **श्रुतमिति** ॥

अस्त्वात्मज्ञानस्य शोकतरणलक्षणमुक्तिसाधनत्वम् । त्वं तीर्णशोकश्चेद् व्यर्थ उपदेश इत्यत आह– **सोऽहमिति** ।। हे भगवः सोऽहं शोचामि । विद्यानामद्धा निर्णयाज्ञानेनाऽत्माविक्त्वात् । तत् तस्मान्मा मां भगवाञ्छोकस्य शोकसागरस्य पारमन्तं तारयत्विति प्रार्थितः कुमारस्तं होवाच । यद्वै यदेव किमप्येतद् प्रागुक्तमृगादिकमध्यगीष्ठाः अधीतवानसि । एतदात्मनो विष्णोर्नामैव ।। ३ ।।

एकदेशस्य नामत्वात् सर्वस्य नामत्वोक्तिरुपचरितेत्याशङ्कापरिहारायोक्तं विवृणोति– **नाम वा इत्यादिना** ।। ''इतिहासपुराणः'' इत्यत्र द्वन्द्वैकवद्भावप्रयुक्तं नपुंसकत्वं नाऽश्रितम् । पुराणशब्दस्य विशेष्यलिङ्गत्वाद् ग्रन्थविशेषणत्वेन पुल्लिङ्गत्वमेवाऽश्रितम् । ''नामैवैतत्'' इति निगमनम् । प्रकृतसर्वविद्यारूपनामावान्तराभिमानिन्यामुषोनामिकायामश्विभार्यायां ब्रह्म सन्निहितमित्युपास्तिः कार्येत्याह– **नामोपास्वेतीति** ।। द्वितीया सप्तम्यर्थे । ब्रह्मपदं पूरणीयम् ।। ४ ।।

नाम्नि ब्रह्मोपासकस्य फलमाह– **स य इति** ।। सः प्रसिद्धो योऽधिकारी नाम्नि ब्रह्मेत्युपास्ते नामवतो ह स लोकानभिसिद्ध्यतीति ग्राह्यम् । उत्तरत्र तथा श्रवणात् । फलान्तरमाह– **यावदिति** ।। यो नाम ब्रह्मेत्युपास्ते । अस्योपासकस्य नाम्नो यावद्गतं गमनमस्ति तत्र लोके यथा योग्यताऽनतिक्रमेण कामचारो भवति । एवं नामाभिमानिन्यां ब्रह्मोपास्तावुक्तायां किं नाम्नो भूयोऽस्ति नवा ? आद्ये तत्रैव ब्रह्मोपास्तिर्विधेया । द्वितीये मानान्तरविरोध इत्याशङ्कायां पृच्छति– **अस्तीति** ।। किंशब्दोऽध्याहार्यः । परिहारमाह– **नाम्न इति** ।। हे भगवो नाम्नो भूयोऽधिकमस्ति किमिति पृष्टः कुमारो नाम्नो भूयोऽस्त्येवेति परिहारमाह । उपासकविशेषं प्रत्येव नामाख्यप्रतीकोक्तिरिति भावः । तन्नामाधिकं वस्तु मे भगवान् ब्रवीत्विति नारदः ।। ५ ।। **इति प्रथमः खण्डः** ।।

## उपनिषत् (खण्डः-२)

*नामाभिमान्युषोदेव्याः सकाशाद् वागभिमानिस्वाहादेव्याः उत्तमत्वकथनम्*

वाग् वाव नाम्नो भूयसी वाग् वा ऋग्वेदं विज्ञापयति यजुर्वेद९ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या९ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चाऽपश्च तेजश्च देवा९श्च मनुष्या९श्च पशू९श्च वया९सि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ् नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत् सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ २ ॥

### भाष्यम्

तस्यास्तु भूयसी स्वाहा धर्मज्ञानसुखादिभिः ।
सर्वैर्गुणैर्विमुक्तौ च तथा बन्धे च सर्वदा ।
वाचोऽभिमानिनी सैव वाङ्नाम्नी चाञ्जनाद् वसोः ॥ २ ॥

## पदार्थकौमुदी

### भाष्यार्थः

''वाग् वाव नाम्नो भूयसी'' इति द्वितीयखण्डतात्पर्यमाह– **तस्या इति** ॥ स्वाहाऽग्निर्भार्या । तथाशब्द उपमायाम् । ''सर्वदा'' इत्यस्य विवरणम् – **विमुक्तौ बन्धे चेति** । श्रुतौ ''वाग् भूयसी'' इति श्रवणात् कथं स्वाहेत्युक्तिरित्यत आह– **वाच इति** ॥ वागिन्द्रियस्य । वसोरग्नेरञ्चनात् पूजनाच्च वाङ्नाम्नी ॥ द्वितीयः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

सनत्कुमार आह– **वागिति** ॥ वाग् वागिन्द्रियाभिमानिनी स्वाहैव नाम्नो भूयसी । तत् कथमित्यत आह– **वाग्वेति** ॥ ''अयमृग्वेदः'' इत्यादिरूपेण वागेवर्ग्वेदादिकं विज्ञापयति यतोऽतो भूयसीत्यर्थः । ज्ञाप्यज्ञापकयोर्ज्ञापकस्य प्राधान्यादिति भावः । न केवलं नामात्मक-प्रपञ्चज्ञापकत्वं वाचः किन्तु रूपात्मकप्रपञ्चज्ञापकत्वमप्यस्तीत्याह– **दिवं चेत्यादिना** ॥ हृदयज्ञं भगवत्तत्वज्ञम् अहृदयज्ञं भगवत्तत्त्वाज्ञं विज्ञापयतीति पूर्वेण सम्बन्धः । ननु धर्माधर्मयोः सत्यानृतादेर्वा ऋग्वेदादिज्ञापकत्वोपपत्तेः किं वाचस्तद्ग्रहणेनेत्यत आह– **यद्वा इति** ॥ यदि वाङ् नाभविष्यन्न तर्हि धर्मादिकम् ऋग्वेदादिकं व्यज्ञापयिष्यत् । वागभावेऽध्ययनाभावेन ज्ञानस्य दूरोत्सारितत्वादिति भावः । उप-संहरति– **वागेवेति** ॥ १ ॥ अन्यत् समानम् ॥ २ ॥

**॥ इति द्वितीयः खण्डः ॥२॥**

### उपनिषत् (खण्डः - ३)

*वागभिमानिस्वाहादेव्याः सकाशान्मनोऽभिमानि-*

*पर्जन्यस्योत्तमत्वकथनम्*

**मनो वाव वाचो भूयो यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पुत्राꣳश्च पशूꣳश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति ॥ १ ॥**

**स यो मनो ब्रह्मेत्युपास्ते स यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥**

भाष्यम्

**एवं तस्या विमुक्तौ च पर्जन्यः सर्वतो वरः ।**
**मनोऽभिमानी सम्प्रोक्तो वृष्ट्या निर्माणतो मनः ॥ २-३ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

मनःशब्दस्य प्रसिद्धार्थत्वप्रतीतिमपाकुर्वन् ''मनो वाव वाचो भूयः'' इति खण्डतात्पर्यमाह– **एवमिति** ॥ चशब्दाद् बन्धे च । पर्जन्यः कश्चिदादित्यः । सर्वतः सर्वैर्गुणैः । कथं तर्हि श्रुतौ मनःशब्दप्रयोग इत्यतः पर्जन्ये श्रौतमनःशब्दप्रयोगं द्वेधा घटयति – **मनोभिमानीति** ॥ वृष्ट्याऽ-ङ्कुरादेर्निर्माणतश्च मनः । ''मा निर्माणे'' इति धातोः ॥ तृतीयः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

॥ मन इति ॥ मनो मनोनामकस्तदभिमानी पर्जन्य एव वाचो भूयः ।

तत्सामर्थ्यं सदृष्टान्तमाह– **यथेति** ॥ यथा वा द्वे वाऽऽमलके आमलकफले द्वे वा कोले पूगफले द्वौ वाऽक्षौ द्यूतसाधने फलविशेषौ वा मुष्टिरनुभवति । आमलकादिकं यथा मुष्टावन्तर्भवत्येवं वाचं च नाम च मनोऽनुभवति । तदेव विशदयति– **स इति** ॥ स पुरुषो यदा मनसा मन्त्रानधीयेयेति मनस्यति अथ तदा अधीते । कर्माणि कुर्वीयेति यदा मनस्यतीत्यन्वयः । एवमुत्तरत्रापि । मनो ह्यात्मा स्वामी मनो हि लोकः सर्वाश्रयो मनो हि ब्रह्म । प्रथमा सप्तम्यर्थे । मनसि ब्रह्म । अतो मनसि ब्रह्मेत्युपास्व ॥१॥२॥

॥ इति तृतीयः खण्डः ॥

उपनिषत् (खण्डः-४)

*मनोऽभिमानिपर्जन्यात् सङ्कल्पाभिमानिमित्रस्य श्रैष्ठ्यनिरूपणम्*

**सङ्कल्पो वाव मनसो भूयान् यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥**

**तानि ह वा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाऽऽकाशश्च समकल्पन्ताऽपश्च तेजश्च तेषां सङ्क्लृप्त्यै वर्षँ सङ्कल्पते वर्षस्य सङ्क्लृप्त्या अन्नँ सङ्कल्पतेऽन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते प्राणानाँ सङ्क्लृप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणां सङ्क्लृप्त्यै कर्माणि सङ्कल्पन्ते कर्मणाँ सङ्क्लृप्त्यै लोकाः सङ्कल्पन्ते लोकानां सङ्क्लृप्त्यै सर्वं सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति ॥ २ ॥**

**स यः सङ्कल्पं ब्रह्मेत्युपास्ते क्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति यावत्सङ्कल्पस्य गतं तत्रास्य यथाकामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः सङ्कल्पाद् भूय इति सङ्कल्पाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥ ४ ॥**

## भाष्यम्

**तथा तस्माद् वरो मित्रो मुक्तौ सङ्कल्पदेवता ।**
**अह्नि सङ्कल्पयेद्यस्मात् स्वप्स्यन्ति निशि यत् ततः ॥**

## पदार्थकौमुदी

### भाष्यार्थः

"सङ्कल्पो वाव मनसो भूयान्" इत्येतद्व्याचष्टे– **तथेति** ॥ श्रौत-सङ्कल्पशब्दोपपत्तिः – **सङ्कल्पदेवतेति** ॥ यस्मादह्नि सङ्कल्पयेत् प्रजानां सङ्कल्पमुत्पादयेत् ततः सङ्कल्पनामक इत्यर्थः । "अह्नि" इति विशेषण-कृत्यमाह– **स्वप्स्यन्तीति** ॥ निशि सङ्कल्पाभावादेवाह्नीत्युक्तमिति भावः । अह्नीति स्वापकालातिरिक्तकालपरम् ॥ चतुर्थः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

सङ्कल्पाभिमानी मित्र एव मनसो भूयान् । तन्महिमानमाह– **यदेति** ॥ यदा वै पुरुषः सङ्कल्पयते इदमहं करोमीति । अथ तदा मनस्यति मनः प्रेरयति । अथ मनो व्यापारानन्तरमेव वाचमीरयति । किंविषय इत्यत आह– **तामिति** ॥ यद्वा न केवलं लौकिकशब्दविषये वाचमीरयति । किन्तु तां नाम्नि ऋग्वेदादिरूपेऽपीरयति । नाम्नि सर्वविद्यायां मन्त्रा एकं भवन्ति अन्तर्भवन्ति । सामान्ये विशेषान्तर्भावात्

मन्त्रेषु कर्माण्यन्तर्भवन्ति । तत्प्रकाश्यत्वात् । अतस्तान्येतानि मन-आदिकर्मान्तानि । सङ्कल्पैकाश्रयाण्यमुक्तौ । सङ्कल्पस्वामिकानि मुक्तौ सङ्कल्पे प्रतिष्ठितानि । द्यावापृथिव्याद्यचेतनकल्पकत्वरूपं महिमान्तरमाह– **समक्लृपतामित्यादिना** ॥ द्यौश्च पृथिवी चेति द्यावापृथिव्यौ समक्लृपतां सङ्कल्पोत्पन्ने इत्यर्थः । तेषां द्व्यादितेजोन्तानां सङ्क्लृप्त्यै स्थित्यै वर्षं सङ्कल्पयते मित्रः । एवमन्यत् । लोकानां सङ्क्लृप्त्यै सर्वमचेतनं सङ्कल्पयते । निगमयति – **स एष इति** ॥ १-२ ॥

ध्रुवान् नित्यान् । प्रतिष्ठितान् सदैकप्रकारेण स्थितान् अव्यथमानान् दुःखरहितान् लोकान् स्वयं तादृशोऽभिसिद्ध्यति प्राप्नोति ॥ ३ ॥

**॥ इति चतुर्थः खण्डः ॥ ४ ॥**

## उपनिषत् (खण्डः - ५)

*सङ्कल्पाभिमानिमित्रात् चित्ताभिमान्यग्नेरुत्तमत्वनिरूपणम्*

**चित्तं वाव सङ्कल्पाद् भूयो यदा वै चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥**

**तानि हवा एतानि चित्तैकायनानि चित्तात्मकानि चित्ते प्रतिष्ठितानि तस्माद् यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा अयं विद्वान् नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान् भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥ २ ॥**

**स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति**

**यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद् भूय इति चित्ताद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥ ५ ॥**

## भाष्यम्

**तथा मित्राद् वरस्त्वग्निर्मुक्तौ चित्तस्य देवता ।**
**चितत्वाच्चित्तनामा च .... .... .....  .. ॥**

## पदार्थकौमुदी

### भाष्यार्थः

"चित्तं वाव सङ्कल्पाद् भूयः" इत्येतद् व्याचष्टे– **तथेति** ॥ श्रौतचित्तशब्दं द्वेधा घटयति– **चित्तस्येति** ॥ चितत्वाद् यज्ञकुण्डे चितत्वाच्च ॥ पञ्चमः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

चित्तमस्थिरस्मरणाख्यचित्ताभिमान्यग्निः सङ्कल्पाद् भूयः । यदा वै चेतयते स्मरति अथ सङ्कल्पयत इत्यादि पूर्ववत् ॥ १ ॥

अन्वयव्यतिरेकाभ्यां चित्तस्यैव प्रेक्षावत्त्वप्रयोजकत्वमाह– **तस्मादिति** ॥ तस्मात् चित्तस्योत्तमत्वादेव हि यदि बहुविदप्यचित्तो भवति नायमस्तीत्येवैनमाहुः । नायं विद्वानित्येवैनमाहुः । तदेव विशदमाह– **यदयमिति** ॥ यद् यदि अयं वेद सामान्येन जानीयात् । यद्वाऽयं विद्वान् विशेषतो जानीयात् तर्हि नेत्थमचित्तः स्यादतोऽज्ञानीत्यर्थः । यतोऽयमचित्तो जात इत्याहुः । व्यतिरेकमुक्त्वाऽन्वयमाह– **यद्यल्पविदिति** ॥ शुश्रूषन्ते सेवकाः ॥ २ ॥

चितान् चित्तक्लृप्तान् ॥ ३ ॥ **॥ इति पञ्चमः खण्डः ॥**

## उपनिषत् (खण्डः -६)

*चित्ताभिमान्यग्रेध्यानाभिमानिवरुणस्याऽधिक्यकथनम्*

ध्यानं वाव चित्ताद् भूयो ध्यायतीव पृथिवी ध्यायतीव द्यौर्ध्यायतीवान्तरिक्षं ध्यायन्तीवाऽपो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्यास्तस्माद् य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादाꣳशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादाꣳशा[१] इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥

स यो ध्यानं ब्रह्मेत्युपास्ते यावद् ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद् भूय इति ध्यानाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ६ ॥

### भाष्यम्

.... ......तस्माद् वरुण एव च ॥

ध्यानस्य देवता चासौ तन्नामा च निधानतः ।

सत्यानृतविवेकार्थं .......... .... ॥

### पदार्थकौमुदी

### भाष्यार्थः

''ध्यानं वाव चित्ताद् भूयः'' इत्येतद्व्याचष्टे– **तस्मादिति** ॥ एवेति

---

१. 'ध्यानापादंशाः' इति पाठः वेदेशीये आदृतः ।

प्रसिद्धार्थं व्यावर्तयति । तस्मादग्नेर्वरुणो मुक्तौ वर इत्यर्थः । तत्र ध्यानशब्दं द्वेधा घटयति– **ध्यानस्येति** ॥ सत्यानृतविवेकार्थं ब्रह्मणा निधानतश्च तन्नामा ध्याननामेत्यर्थः ॥ षष्ठः खण्डः ॥

## ततश्चेयं खण्डस्याक्षरयोजना

ध्यानं ध्यानाभिमानी वरुणश्चित्ताद् भूयः । तस्य सर्वगतत्वरूपं महिमानमाह– **ध्यायतीवेति** ॥ पृथिव्यादिशब्दास्तदभिमानिदेवतापराः । ध्यायतीव न बहुभाषिणीत्यर्थः । देवा एव मनुष्यत्वं प्राप्ता देवमनुष्याः । तस्माद् ध्यानस्य श्रेष्ठत्वादिह लोके ये मनुष्याणां मध्ये धनैर्विद्यया गुणैर्वा महत्तां प्राप्नुवन्ति ते ध्यानापादंशा इवैव भवन्ति । ध्यानस्याऽपादनं ध्यानापात् । ध्यानलाभ इति यावत् । तस्यांशो येषां ते तथोक्ताः । ध्यानलाभैकदेशवन्त इवैव । नतु पूर्णध्यानवन्त इव । अतो ध्यानमेव श्रेष्ठमित्यर्थः । किञ्च येऽल्पाः क्षुद्राः कलहिनः कलहशीलाः । पिशुनाः परदोषोद्भासकाः । उपवादिनः परदोषसामीप्ययुक्तवदनशीलास्तेऽथ ये प्रभवः प्राप्तमहत्त्वास्ते च ध्यानापादंशा इवैव भवन्ति ॥ १ ॥

ध्यानं ब्रह्मेत्युपास्ते । सः ध्यानवतो ह लोकानभिसिद्ध्यतीति ग्राह्यम् ॥ २ ॥

### ॥ इति षष्ठः खण्डः ॥

## उपनिषत् (खण्डः -७)

*ध्यानाभिमानिवरुणाद् विज्ञानाभिमानिचन्द्रस्य श्रेष्ठतावर्णनम्*

**विज्ञानं वाव ध्यानाद् भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां**

वेदं पित्र्य९ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या९ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽकाशं चाऽपश्च तेजश्च देवा९श्च मनुष्या९श्च पशू९श्च वयांसि च तृणवनस्पतीञ्छ्वापदान्या-कीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥ १ ॥

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो ह वै लोकान् ज्ञानवतोऽभिसिद्ध्यति यावद् विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद् भूय इति विज्ञानाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ७ ॥

## भाष्यम्

........ .........तथा तस्मान्निशाकरः ॥

विज्ञानदेवता चासौ तन्नामा च विवेचनात् ।

सत्यस्य ........ ........... ....... ॥

## पदार्थकौमुदी

### भाष्यार्थः

"विज्ञानं वाव ध्यानाद् भूयः" इत्येतद्व्याचष्टे– तथेति ॥ सत्यस्य विवेचनात् तन्नामेत्यन्वयः ॥ सप्तमः खण्डः ॥

## ततश्चेयं खण्डस्याक्षरयोजना

विज्ञानं विज्ञानाभिमानी सोम एव ध्यानाद् भूयः । तत्सामर्थ्यमाह– **विज्ञानेनेति** ॥ विज्ञानाभिमानिदेवताप्रसादेनैवग्वेदं विजानाति पुरुषः । यजुर्वेदादिकं परलोकान्तं च विज्ञानेनैव विजानाति ॥ १ ॥

विज्ञानवतो ज्ञानवतश्च सामान्यविशेषज्ञानवतो लोकान् प्राप्नोतीत्यर्थः ॥ २ ॥

॥ इति सप्तमः खण्डः ॥

## उपनिषत् (खण्डः -८)

*विज्ञानाभिमानिचन्द्राद् बलाभिमानिप्रवहस्योत्तमत्वकथनम्*

**बलं वाव विज्ञानाद् भूयोऽपीह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन् द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेनाऽपो बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकं बलेन वै लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥**

**स यो बलं ब्रह्मेत्युपास्ते यावद् बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद् भूय इति बलाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ८ ॥**

## भाष्यम्

**... तस्माच्च तथा वायुर्भूतात्मको वरः ॥**

**बलात्मकस्तथा ..........	॥**

## पदार्थकौमुदी

### भाष्यार्थः

''बलं वाव विज्ञानाद् भूयः'' इत्येतद्व्याचष्टे– **तस्माच्चेति ॥** चस्त्वर्थः । प्रधानवायुव्यावृत्त्यर्थं ''भूतात्मकः'' इत्युक्तम् । बलात्मको बलस्वरूप इति बलशब्दोपपत्तिः । तथाशब्देन बलदेवतात्वं समुच्चीयते ॥ अष्टमः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

बलं बाह्यान्तर्बलाभिमानी प्रवह एव विज्ञानाद् भूयः । तदेवोपपादयति– **अपीति ॥** इह लोके विज्ञानवतां शतमप्येक एव बलवानाकम्पयते तस्माद् विज्ञानाद् बलं भूयः युक्तिज्ञतालक्षणान्तर्बलस्य विज्ञानाद् भूयस्त्वोपपत्तिः । बलस्य सर्वव्यापारहेतुत्वमाह– **स यदेति ॥** सः प्रसिद्धः पुरुषो यदा बलीभवत्यथ तदोत्थातोत्थानस्य कर्ता भवति । उत्तिष्ठन् गुर्वादीनां परिचरिता शुश्रूषको भवति । परिचरंश्चोपसत्ता तेषां समीपगोऽन्तरङ्गः प्रियो भवति । उपसीदन्नुपदेष्टुरेकाग्रतया द्रष्टा भवति । ततस्तदुक्तस्य श्रोता भवति । श्रुतस्यैव मन्ता भवति । मतस्येव बोद्धा भवत्येवमेवेदमिति । यद्वा, बोद्धा ध्याता भवति । न केवलमेतावत् । तदुक्तार्थस्य कर्ता अनुष्ठाता भवति । विज्ञाताऽनुष्ठानफलस्यानुभविता भवतीत्यर्थः । महिमान्तरमाह– **बलेनैवेति ॥** अत्र पृथिव्यादि-शब्दाश्चेतनपराः ॥ १ ॥

बलं ब्रह्मेत्युपास्ते । बलवतो ह स लोकानभिसिद्ध्यतीति ग्राह्यम् ॥ २ ॥

॥ इति अष्टमः खण्डः ॥ ८ ॥

उपनिषत् (खण्डः -९)

*बलाभिमानिप्रवहाद् अन्नाभिमान्यनिरुद्ध उत्तमः*

**अन्नं वाव बलाद् भूयस्तस्माद् यद्यपि दशरात्रीर्नाश्नीयाद् यद्युह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्याशी द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥**

**स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान् पानवतोऽभिसिद्ध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद् भूय इत्यन्नाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ९ ॥**

भाष्यम्

.......... .. **तस्मादन्नदेवोऽनिरुद्धकः ।**

**अन्ननामाऽनुनादित्वात् ........... ... ॥**

**पदार्थकौमुदी**

**भाष्यार्थः**

''अन्नं वाव बलाद् भूयः'' इत्येतद्व्याचष्टे– **तस्मादिति ॥** अन्नदेव इत्यन्नशब्दोपपत्तेः । अनुनादित्वाद् युद्धादौ शत्रुभीषकशब्दवत्त्वादित्यर्थः ॥ नवमः खण्डः ॥

## ततश्चेयं खण्डस्याक्षरयोजना

अन्नं बाह्यान्तरान्नाभिमान्यनिरुद्ध एव बलाद् भूयः। तस्मादन्नस्य भूयस्त्वाद् यदि दशरात्रीरपि नाश्नीयात् तदा यदु ह यद्यपि जीवेत्। अथाप्यद्रष्टृत्वाश्रोतृत्वादिमान् भवति। यदाऽन्नमश्नीयात् तदा द्रष्टृत्वादिमान् भवतीत्यन्नमेव भूय इत्यर्थः ॥ १ ॥ २ ॥

॥ इति नवमः खण्डः ॥

## उपनिषत् (खण्डः -१०)

*अन्नाभिमान्यनिरुद्धाद् अबभिमान्याहङ्कारिकः प्राण उत्तमः*

**आपो वावान्नाद् भूयस्यस्तस्माद् यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद् द्यौर्यत् पर्वता यद् देवमनुष्या यत् पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकमाप एवेमा मूर्ता अप उपास्स्वेति ॥ १ ॥**

**स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान् कामाꣳस्तृप्तिमान् भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १० ॥**

### भाष्यम्

.......... तैजसाहं भवस्ततः ॥

तथा वरिष्ठः प्राणाख्यो वायुः सोऽपां च देवता।

**अन्नामा देहसंव्याप्तेः ............. ...  ॥**

## पदार्थकौमुदी

### भाष्यार्थः

"[१]आपो वावान्नाद् भूयस्यः" इत्येतद् व्याचष्टे– **तैजसेति** ॥ तथा ततोऽनिरुद्धात् तैजसाहम्भवस्तैजसाहङ्कारादुत्पन्नो वरिष्ठ इत्यन्वयः । स क [२]इत्यत उक्तम् – **प्राणाख्यो वायुरिति** ॥ परप्राणव्यावृत्त्यर्थं तैजसाहम्भव इत्युक्तम् । अप्शब्दमुपपादयति– **स इति** ॥ देहसंव्याप्तेश्चाम्नामा ॥ दशमः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

आपः उभयविधाबभिमानी तैजसः प्राणोऽन्नाद् भूयान् । तस्मादपामन्नकारणत्वादेव हि यदा सुवृष्टिः सस्यहिता वृष्टिर्न भवति तदा प्राणाः प्राणिनः व्याधीयन्ते दुःखिनो भवन्ति । किं निमित्तम् ? कनीयोऽन्नं भविष्यतीति । एवमन्यत् । आप एवेत्युक्तं विशदमाह– **येयमिति** ॥ पृथिव्यादिपिपीलिकान्तं यत् । इमाः मूर्ताः आप एवेति योजना ॥ १ ॥ २ ॥

**॥ इति दशमः खण्डः ॥ १० ॥**

### उपनिषत् (खण्डः -११)

*अबभिमान्याहङ्कारिकप्राणात् तेजोभिमानी पुरन्दर उत्तमः*

**तेजो वावाद्भ्यो भूयस्तद्वा एतद् वायुमागृह्याऽकाशमभितपति तदाऽऽहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं**

---

१. 'अपो वावान्नाद् भूयः' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः । २. 'इत्युक्तम्' इति मुद्रितपुस्तकस्थः पाठः ।

**दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥ १ ॥ स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कानभिसिद्ध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ११ ॥**

## भाष्यम्

.......... ........ तथा तस्मात् पुरन्दरः ॥

**तेजोभिमानी तन्नामा तेजो ह्योज इतीर्यते [१] ।**

## पदार्थकौमुदी

### भाष्यार्थः

"तेजो वावाद्भ्यो भूयः" इत्येतद् व्याचष्टे– **तथेति** ॥ वरिष्ठ इत्यनुवर्तते । तेजःशब्दं योजयति– **तेजोभिमानीति** ॥ तेजआत्मकश्चेति शेषः । प्रकाशरूपस्य तेजसः सूर्यादिधर्मत्वादाह– **तेज इति** ॥ ओजः पराभिभवशक्तिः ॥ एकादशः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

तेजः द्विविधतेजोऽभिमानी इन्द्र एवाद्भ्यो भूयः । तत् तस्मादेतस्मिन् काले यदा वायुमागृह्यावष्टभ्याऽऽकाशमभितपत्यादित्यस्तदाहुर्लौकिकाः आदित्यो निशोचति नितपति । नितरां प्राणिनः शोचयति । यतोऽयं

१. 'उदीर्यते' ह.

नितरां तपति । अतो वर्षयिष्यति वा इति । अतोऽप्सृष्टेः पूर्वं तेज एव दर्शयित्वाऽथाऽपः सृजते । किञ्च तस्माद् एवैतस्मिन् काले ऊर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिः सहाऽह्रादाः स्तनयित्नुशब्दाश्चरन्ति प्रवर्तन्ते । तस्मादाहुर्लौकिकाः । द्योतते स्तनयति वर्षयिष्यति वा इति । शिष्टं पूर्ववत् ॥ १ ॥ २ ॥

॥ इति एकादशः खण्डः ॥

## उपनिषत् (खण्डः -१२)

*तेजोभिमानिपुरन्दरादाकाशाभिमान्युमाया उत्तमत्वनिरूपणम्*

**आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाऽह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥ १ ॥**

**स य आकाशं ब्रह्मेत्युपास्त आकाशवतो ह वै स लोकान् प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिद्ध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद् भूय इत्याकाशाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १२ ॥**

### भाष्यम्

तथा तस्मादुमा चैव सा चाऽकाशाभिमानिनी ॥

आकाशनाम्नी दीप्तत्वात् ............. ॥

## पदार्थकौमुदी

### भाष्यार्थः

''आकाशो वाघ तेजसो भूयान्'' इत्येतद्व्याचष्टे– **तथेति** ॥ तथाशब्द उपमायाम् । एवशब्दः प्रसिद्धव्यावृत्त्यर्थः । चशब्दो वारुण्यादिसमुच्चयार्थः ॥ द्वादशः खण्डः ॥

### ततश्चेयं खण्डस्याक्षरयोजना

आकाशो बाह्यान्तराकाशाभिमानिन्युमा तेजसो भूयात् । तस्य सर्वदेवताधारत्वमाह– **आकाश इति** ॥ सूर्याद्यग्र्यन्तान्याकाशे स्थितानीति शेषः । आकाशेन तत्प्रेरणयैव देवताद्याह्वानं करोति पुरुषः । आकाश इति निमित्तसप्तमी । न रमते व्यथत इत्यर्थः । आकाशे जायत इत्यौपचारिकं नेत्याह– **आकाशमभिजायत इति** ॥ १ ॥

असम्बाधान् व्यथारहितान् । उरुगायवतो भगवद्भतः भगवतो ह्युरुगायनाम प्रसिद्धम् ॥ २ ॥

### ॥ इति द्वादशः खण्डः ॥

### उपनिषत् (खण्डः -१३)

*आकाशाभिमान्युमायाः सकाशात् स्मरणाभिमानी रुद्र उत्तमः*

**स्मरो वा आकाशाद् भूयाꣳस्तस्माद् यद्यपि बहव आसीरन्नस्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान् विजानाति स्मरेण पशूꣳ स्मरमुपास्स्वेति ॥ १ ॥**

**स यः स्मरं ब्रह्मेत्युपास्ते यावत् स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद् भूय इति स्मराद्**

**वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १३ ॥**

**भाष्यम्**

**......... ....... तस्याश्चैव सदाशिवः ।**

**स्थिरस्मृत्यभिमानी स सममेव रतेः स्मरः ॥**

**पदार्थकौमुदी**

**भाष्यार्थः**

"स्मरो वावाऽकाशाद् भूयान्" इत्येतद्व्याचष्टे– **तस्या इति** ॥ सदाशिव एव । स्मरशब्दं योजयति – **स्थिरेति** ॥ सममेकप्रकारमेव । रतेर्भगवति रमणाच्च स्मर इत्यर्थः ॥ त्रयोदशः खण्डः ॥

**ततश्चेयं खण्डस्याक्षरयोजना**

स्मरः स्थिरस्मृत्यभिमानी रुद्र एवाऽकाशाद् भूयान् । तस्मात् स्मरस्य भूयस्त्वादेव यद्यपि लोके बहवः पुरुषाः आसीरंस्ते यदि न स्मरन्तस्तदा नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् । यदा वै ते स्मरेयुरथ श्रवणादिव्यापारवन्तो भवेयुः । किञ्च स्मरेणैव पुत्रादिकं विजानाति उपास्ते । सस्मरवतो ह लोकानभिसिद्ध्यतीति ग्राह्यम् ॥ १ ॥ २ ॥

**॥ इति त्रयोदशः खण्डः ॥**

उपनिषत् (खण्डः-१४)

*स्मरणाभिमानिरुद्रादाशाभिमानिभारत्याः श्रैष्ठ्यकथनम्*

**आशा वाव स्मराद् भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राꣳश्च पशूꣳश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥ १ ॥**

**स य आशां ब्रह्मेत्युपास्ते आशयाऽस्य सर्वे कामाः समृद्ध्यन्त्यमोघा हास्याऽशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १४ ॥**

### भाष्यम्

**मुख्यवायुप्रिया तस्मात् परमैव सरस्वती ।**
**बन्धमुक्त्योः सर्वगुणैः सर्वदाऽऽशास्वरूपिणी ॥**
**शमित्यानन्द उद्दिष्ट आशा पूर्णसुखत्वतः ।**

### पदार्थकौमुदी

### भाष्यार्थः

''आशा वाव स्मराद् भूयसी'' इत्येतद्व्याचष्टे– **मुख्येति** ॥ मुख्यवायुर्ब्रह्मा[१] । तस्मात् सदाशिवात् सरस्वत्येव । सर्वगुणैर्बन्धमुक्त्योः परमेत्यन्वयः । आशाशब्दोपपादनम्– **आशास्वरूपिणीति** ॥ आशा-देवता च । आशाशब्दं तस्यां निर्वक्ति– **शमिति** ॥

### ततश्चेयं खण्डस्याक्षरयोजना

आशा तदभिमानिनी सरस्वती स्मराद् भूयसी । कुतः ? आशयेद्धोऽभिवृद्धो वै स्मरो रुद्रो मन्त्रानधीते । कर्माणि कुरुते । पुत्रादिकं चेच्छते इच्छति । अस्योपासकस्य सर्वे कामाः काम्याः आशया समृद्ध्यन्ति ॥ १ ॥ २ ॥

**॥ इति चतुर्दशः खण्डः ॥**

---

१. 'ब्रह्म' इति मुद्रितपुस्तके ।

## उपनिषत् (खण्डः-१५)

*आशाभिमानिभारत्याः सकाशात् स्वरूपानन्दाभिमानी प्राण उत्तमः*

प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वꣳ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥

*मातापित्रादिषु प्राणोपासना*

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चिद् भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥

अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषं दहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाऽचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥

प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद् ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीत्येव ब्रूयान्नापह्नुवीत ॥ ४ ॥ १५ ॥

### भाष्यम्

तस्याः श्रेष्ठो मुख्यवायुः प्रकृष्टानां च नायकः ॥

प्राणनामा ण इत्येव ह्यानन्दः समुदीरितः ।

आणा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः ॥

**प्राण इत्युच्यते वायुः .......... .......... ॥**

## पदार्थकौमुदी

### भाष्यार्थः

"प्राणो वा आशाया भूयान्" इत्येतद्व्याचष्टे– **तस्या इति** ॥ प्राणशब्दं निर्वक्ति– **प्रकृष्टानामिति** ॥ प्रकृष्टानां नामादिसरस्वत्यन्तानां नायको यतोऽतः प्राणनामा । चशब्देन प्राणदेवतात्वं समुच्चीयते । प्रकारान्तरेण प्राणशब्दं निर्वक्ति– **ण इति** ॥ हि यस्माण्ण इत्यनेनैव शब्देनाऽनन्दः समुदीरितस्तस्मादाणा सरस्वती । पूर्णानन्दत्वात् । ततश्च तदपेक्षया प्रकृष्टसुखात्मको वायुः प्राण इत्युच्यते । आणायाः प्रकृष्टः प्राणः, प्रकृष्टत्वं च सुखरूपत्वेनैवेति भावः ।

*देवतातारतम्यपरिमाणनिरूपणम्*

**........ ........ सर्वे त्वेते दशोत्तराः ।**
**पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च ॥**
**द्विगुणा एवानिरुद्धोऽनिलात् पञ्चगुणाधिकः ।**
**पादोनो वरुणादग्निरध्यर्धोनः स सोमतः ॥**
**शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरौ ।**
**सङ्ख्यान्यथात्वं यत्र स्यात् तत्राऽवेशविशेषतः ॥**
**अवराणां गुणस्यापि परमीयत्वतस्तथा ।**
**प्राणात्तु भगवान् विष्णुरनन्तगुणतोऽधिकः ।**
**नित्यमुक्तो नित्यशक्तिर्नित्योद्रिक्तगुणः प्रभुः ॥"**

इति तत्त्वविवेके ।

**''सैषाऽऽनन्दस्य मीमांसा भवति'' इत्यादेश्च ।**

## पदार्थकौमुदी

### भाष्यार्थः

नामादिप्राणान्तानाम् आधिक्यमुक्तम् । तत्र विशेषमाह– **सर्व इति** ॥ दशशब्दो यथायोग्यं बहुत्ववाची । उक्तापवादमाह– **पर्जन्येति** ॥ स्वाहायाः पर्जन्यस्तस्मान्मित्रस्तस्माच्छिखी अग्निः । सोमाद् भूतवायुर्द्विगुणः इति द्विगुणा एव । अनिलाद् भूतवायोः पादेनोनः पादोनः । सः वरुणः सोमतोऽध्यर्धोनः पादपादार्धोनः । आशा मुख्यवायुश्चेत्येतौ शिवात् । अस्याः आशायाः क्रमेण शतोत्तरावित्यर्थः । एवं च ''दशोत्तराः'' इति सामान्यवचनस्योक्तातिरिक्तविषयत्वं मन्तव्यम् ।

ततश्चायं विवेको [१] भवति । पुष्करो नाम कर्माभिमानी सर्वावरो ग्राह्यः । अन्यत्रोक्तत्वात् । ततो नाम दशोत्तरम् । नाम्नः स्वाहा दशोत्तरा । तस्याः पर्जन्यो द्विगुणोत्तरः । ततो मित्रो द्विगुणः । मित्रादग्निर्द्विगुणः । अग्नेर्वरुणः पादाधिकः । वरुणात् सोमः पादार्धतोऽधिकः । सोमात् प्रवहः द्विगुणो-त्तरः। भूतवायोरनिरुद्धः पञ्चगुणः । अनिरुद्धात् तैजसाहम्भवो दशोत्तरः । तस्मात् पुरुन्दरो दशोत्तरः । तस्मादुमा दशोत्तरा । उमायाः शिवो दशोत्तरः। शिवादाशा शतोत्तरा । तस्या मुख्यवायुः शतोत्तर इति ।

ननूक्तानां क्वचिदन्यथाऽपि सङ्ख्योक्तेः कथमयं नियम इत्यत आह– **सङ्ख्येति** ॥ यत्रोक्तानां सङ्ख्यान्यथात्वं स्यात् तत्रोत्तमावेशविशेषतस्तद्घटनीयमित्यर्थः । आवेशविशेषतोऽपि सङ्ख्यान्यथात्वे भवदुक्तनियमभङ्ग इत्यत आह– **अवराणामिति** ॥ यदाऽवराणां निजगुणस्यापि परमीयत्वं तदा किम्वावेशप्रयुक्तस्येत्यर्थः । निजगुणापेक्षया नोक्तनियमभङ्ग इति

१.मातृकासु 'भवति' इत्यत्र 'भाति' इति पदं दृश्यते । पं.सं. २८६,१११

भावः । यद्वा, एवमधमानां क्लृप्तस्वरूपापेक्षयाऽधिकसङ्ख्योक्तिरावेश विशेषप्रयुक्तेत्यभिधायेदानीम् उत्तमानां क्लृप्तस्वरूपापेक्षयाऽधिक-सङ्ख्योक्तौ निमित्तमाह– **अवराणामिति** ॥ परमीयत्वतः उत्तमाधीन-त्वात् । तथाचाधमगुणानामप्युत्तमीयत्वविवक्षयोत्तमानां क्लृप्तापेक्षयाऽऽ-धिक्योक्तिरिति भावः । प्रश्नप्रतिवचनाध्याहारेण ''सत्यं वाव प्राणाद् भूयः'' इति वाक्यं नामादिप्राणान्तानामिव परिमितत्वशङ्कां निवारयन् व्याचष्टे– **प्राणादिति** ॥ ''यो वै भूमा तदमृतम्'' इत्यस्यार्थः – **नित्य-मुक्त इति** ॥ ''यत्र नान्यत् पश्यति'' इत्यस्यार्थः– **नित्यशक्तिरिति** ॥ ''स एवाधस्तात्'' इत्यादेस्तात्पर्यम्– **नित्योद्रिक्तेति** ॥ नामादिप्रकरणं मुक्तावपि तारतम्यपरमिति प्रमाणेनैव व्याख्यातम् । तत्र तैत्तिरीय-समाख्यामप्याह– **सैषेति** ॥ इयं च मुक्ततारतम्यपरेत्यन्यत्रोक्तम् ।

## भाष्यम्

*मोक्षेऽपि देवतातारतम्यस्य प्रामाणिकत्वनिरूपणम्*

**''अथातः सम्भूतिः परमाद् विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद् बुद्धिर्बुद्धेरिन्द्र इन्द्रात् तैजसः [१]प्राणस्तैजसा-दनिरुद्धो[२]ऽनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमः सोमाद् वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते तेषां परः परोज्यायान् गुणैरुत्तर उत्तरः प्रत्यवरः परस्मात् परस्मादुत्तर उत्तरो मुच्यते । स्वं स्वं भावमापद्यते । नैषां पारावर्य-मुच्छिद्यते कदाचन । नैषां पारावर्यमुच्छिद्यते कुतश्चन । पारावर्येणैव ब्रह्मोपयन्ति पारावर्येण[३] मुक्ताः सञ्चरन्ति''** इत्यादिश्रुतेश्च ।

---

१. 'तैजसप्राणः' प्र.पाठः. २. 'तैजसप्राणादनिरुद्धः' ह. ३. 'पारावर्येणैव' क

## पदार्थकौमुदी

### भाष्यार्थः

तैत्तिरीयश्रुतावपि नामादिक्रमाभावान्नामादीनामेव मुक्तौ तारतम्यपरं श्रुत्यन्तरमाह– **अथेति** ॥ सम्भूतिरुत्पत्तिः कथ्यते। विद्या रमा जायत इति प्रत्येकं सम्बद्ध्यते। श्रद्धा तत्पत्नी। बुद्धिरुमा। तेषां पूर्वोक्तानां मध्ये परः परः पूर्वपूर्वोक्तगुणैर्ज्यायान्। उत्तर उत्तरः उत्तरोत्तरोक्तः प्रत्यवर इत्यर्थः। तत्र हेतुमाह– **परस्मादिति** ॥ मुक्तिमेव विवृणोति– **स्वमिति** ॥ ''मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिः'' इति वचनात्। उक्तपारावर्यस्य मोक्षावधिकत्वशङ्कां परिहरति– **नैषामिति** ॥ स्वाभाविकस्यापि प्रबलकारणवशादुच्छित्तिशङ्कायामाह– **नैषामिति** ॥

### भाष्यम्

*नामादिब्रह्मोपासना नाम न अभेदोपासना*

**''नामादिमारुतान्तेषु देवेष्वेभ्यश्च भेदतः।**
**उपासितो हरिर्मुक्तिं दद्यान्नास्त्यत्र संशयः॥'' इति सत्तत्त्वे॥**

## पदार्थकौमुदी

### भाष्यार्थः

''नाम ब्रह्मेत्युपास्व'' इत्यारभ्य ''प्राणो ब्रह्मेत्युपास्व'' इत्यन्तेषु बहुषु स्थलेषु सामानाधिकरण्यश्रवणात् तत्तदभेदेनैवोपास्तिः कार्येति प्रतीतिं निवारयंस्तानि वाक्यानि प्रमाणेनैव व्याचष्टे– **नामादीति** ॥ ननु प्रतिमायां विष्णूपास्तिवन्नामादिषु ब्रह्मोपास्तौ तदभेदेनोपास्तिः प्राप्तेत्यत उक्तम्– **एभ्यो भेदतश्चेति** ॥

भाष्यम्

**''उषादिमारुतान्तेषु समः समगुणोऽपि सन् ।**
**ध्यातः प्रीतिं हरिर्यायादधिकामुत्तरोत्तरे ॥**
**उत्तमेषूत्तमा प्रीतिस्तस्य तत्र स्मृतस्ततः ।**
**ध्यातुरप्युत्तमां प्रीतिं यायान्नास्त्यत्र संशयः ॥**
**तारतम्यपरिज्ञानात् तेषु ध्यातो विमुक्तिदः ।**
**प्रीतिं न चान्यथा यायादिति शास्त्रस्य निर्णयः ॥''**

**इति तत्त्वविवेके ॥**

**पदार्थकौमुदी**

**भाष्यार्थः**

नामादिप्राणान्तेषु ब्रह्मोपास्तिः कर्तव्येत्ययुक्तम् । नामादीनां तरतमभावेन तद्गतब्रह्मणोऽपि तरतमभावापत्तेरित्याशङ्कां स्मृत्यैव परिहरति– **उषादीति** ॥ उषेत्याकारान्तोऽप्यस्ति । ''सूषा च मे सुदिनं च मे'' इत्यादिप्रयोगदर्शनात् । समः स्वरूपेण । उत्तरोत्तरे ध्यात इत्यन्वयः । कुत इत्यत आह– **उत्तमेष्विति** ॥ यत उत्तमेषूत्तमा प्रीतिर्भगवतस्ततस्तत्रोत्तमेषु स्मृतो ध्यातुरप्युत्तमां प्रीतिं यायादित्यन्वयः । न केवलमुत्तमोत्तमेषु भगवदुपास्तेरेव फलहेतुत्वम् । किन्तु तत्तारतम्यज्ञानपुरःसरमेवेत्याह– **तारतम्येति** ॥ तदविहाय । ध्यातो ध्यानेन प्रीतः । अन्यथा तारतम्यपरिज्ञानं विना ।

भाष्यम्

*नामादिषु ब्रह्माभेदो न श्रुत्यभिप्रेतः*

**''नामादिप्राणपर्यन्ताः सप्तम्यर्थाः प्रकीर्तिताः ।**

**तृतीयापञ्चमीषष्ठीचतुर्थ्यर्थाश्च सर्वशः ॥**

**शब्दास्ते ब्रह्मशब्देन सम्बद्ध्येयुर्यदा तदा[१] ।**

**ब्राह्मणोऽस्य मुखं यद्वदात्मा वै पुत्रको यथा ॥**

**यथा च यूप आदित्य एवमेष प्रकीर्तितः ।**

**सप्तसु प्रथमा यस्माद् भूयोभूयस्त्वतस्तथा ॥**

**षट्सु द्वितीया यस्माच्च कारणत्वात् परस्य च ।**

## पदार्थकौमुदी

### भाष्यार्थः

''नाम ब्रह्म''इत्यादौ नामादिशब्दः सप्तम्यर्थतया व्याख्यातः । तदेव स्पष्टप्रमाणेन द्रढयन्नर्थान्तरमाह– **नामादीति** ॥ प्राणपर्यन्ताः सर्वशः शब्दाः तृतीयार्थत्वे नाम्ना ब्रह्मोपास्व इति । पञ्चम्यर्थत्वे तु नाम्नोऽभिव्यक्तं ब्रह्मेति ॥ षष्ठ्यर्थत्वे नाम्नः प्रीतिविषयो ब्रह्मेति । चतुर्थ्यर्थत्वे तु नाम्ने फलप्रदं ब्रह्मेति । उपास्वेति वाक्ययोजना द्रष्टव्या । ''यद्वै किञ्चिदध्यगीष्टा नामैवैतत्'' इत्यादौ यत्र कुत्रचिच्छ्रुतानां नामादिप्राणान्तशब्दानां सप्तम्याद्यर्थत्वप्राप्तावाह– **त इति** ॥ तदा सप्तम्यर्था इति पूर्वेण सम्बन्धः । ननु प्रथमा सप्तम्याद्यर्थेत्ययुक्तम् । प्रयोगाभावात् । नियामकाभावाच्चेत्यतः प्रयोगं तावदाह– **ब्राह्मण इति** ॥ ''ब्राह्मणोऽस्य मुखम्'' इत्यत्र मुखमिति प्रथमा यद्वद् यथा पञ्चम्यर्था, यथा ''आत्मा वै पुत्रनामाऽसि'' इत्यत्राऽत्मेति प्रथमा आत्मनः पुत्र इति षष्ठ्यर्था, यथा चाऽदित्यो यूप इत्यत्र यूप इति प्रथमा सप्तम्यर्था । सामानाधिकरण्यस्य बाधितत्वात् ।

---

१. 'सम्बद्ध्येत यदा तदा' ह.

एवमेष नामादिशब्दः पञ्चम्याद्यर्थः प्रकीर्तित इत्यर्थः । नियामकं सूत्रं पठति– **सप्तस्विति** ।। प्रतीतं नामादेर्ब्रह्मैक्यमेवार्थः किं न स्यादित्यतस्तत्र बाधकमाह– **भूयोभूयस्त्वत इति** ।।

''वाग् वाव नाम्नो भूयसी'' इत्यादिना वागादीनां नामादिभ्य उत्तरोत्तरं भूयस्त्वोक्तेर्ब्रह्मणो नामाद्यात्मकत्वे ब्रह्मण एवोत्तमाधमत्व-प्रसङ्गान्नैवमित्यर्थः । अस्त्वेवं ''मनो हि ब्रह्म'' इत्यादिवाक्यस्यार्थः । ''स यो नाम ब्रह्म इत्युपास्ते'' ''वाचं ब्रह्मेत्युपास्ते'' इत्यादिवाक्यस्य तु कथम् ? नहि प्रथमावद् द्वितीयायाः सप्तम्याद्यर्थत्वे नियामकमस्तीत्याह– **षट्स्विति** ।। ''नामरूपे व्याकरोत्'' इति श्रुतेः परस्य नामाद्युत्पत्ति-कारणत्वाच्च न तदात्मकं ब्रह्माङ्गीकार्यमित्याह– **कारणत्वादिति** ।।

## भाष्यम्

*अन्यथोपासनाया अनर्थकारित्ववर्णनम्*

**न ह्यन्यदन्यदित्येव[१] ध्यातं स्यात् पुरुषार्थदम् ।।**

**अनर्थश्च भवेत् तस्माद् भृत्ये[२] राजेति बोधवत् ।**

**राजपूजां यथा[३] भृत्ये कुर्याद् राजा हिनस्ति हि ।।**

**तद्वशत्वात् तथा भृत्य एवं नामादिकं च यः ।**

**उपास्ते ब्रह्मरूपेण तं ब्रह्माथेतराणि च ।**

**पातयन्ति तमस्यन्धे तस्मान्नेक्षेत तांस्तथा ।।''**

**इति सामसंहितायाम् ।**

---

१.'नह्यन्यदन्य इत्येव' ह. २. 'भृत्यो राजेति' ह. ३. 'यदा' ह.

## पदार्थकौमुदी

### भाष्यार्थः

ननु वयमपि न नामाद्यात्मकं ब्रह्मेति ब्रूमः। किन्तु नामाद्यात्मकतया ध्यानं कार्यमिति। अविद्यमानस्यापि ध्यानसम्भवादित्यत आह– **नहीति** ॥ न केवलं पुरुषार्थाभावः। किन्त्वित्यत आह– **अनर्थश्चेति** ॥ तस्मादधमस्योत्तमत्वध्यानात्। तत्र दृष्टान्तमाह– **भृत्य इति** ॥ बोधो ध्यानम्।

ननु न वयं नामादौ ब्रह्मत्वबोधः कार्य इत्यर्थं ब्रूमः। किन्तु ब्रह्मणीव नामादौ पूजा कार्येति। तद्भिन्नत्वेन ज्ञातेऽपि तत्पूजाकरणोपपत्तेरित्यत-स्तत्राप्यनर्थं सदृष्टान्तमाह– **राजेति** ॥ कुर्याद्यस्तमिति शेषः। भृत्यश्च हिनस्ति। स्वपूजकं कथं हिनस्तीत्यत उक्तम्– **तद्वशत्वादिति** ॥ राज-वशत्वात्। अन्यथा राजोल्लङ्घनेन स्वस्यापराधप्राप्तेः। उपास्ते पूजयति। इतराणि नामादीनि। उपसंहरति– **तस्मादिति** ॥ तान् नामादीन् तथा ब्रह्मत्वेन।

### भाष्यम्

*अचेतन-अयोग्य-असत्योपासना अनर्थकारिण्यः*

**"अचेतनमयोग्यं च तथैवातात्त्विकं क्वचित्।**
**नोपासीत परोऽनर्थः स्यात् तथोपासनाकृतः ॥**
**दर्भचर्मादयश्चातो देवता ह्यभिमानिनः।**
**न ह्यचेतनकं किञ्चित् फलदं स्यात् कदाचन ॥**
**औषधादिषु चैतस्माद् देवा एव वरप्रदाः।**

एवमेष नामादिशब्दः पञ्चम्याद्यर्थः प्रकीर्तित इत्यर्थः । नियामकं सूत्रं पठति– **सप्तस्विति** ॥ प्रतीतं नामादेर्ब्रह्मैक्यमेवार्थः किं न स्यादित्यतस्तत्र बाधकमाह– **भूयोभूयस्त्वत इति** ॥

''वाग् वाव नाम्नो भूयसी'' इत्यादिना वागादीनां नामादिभ्य उत्तरोत्तरं भूयस्त्वोक्तेर्ब्रह्मणो नामाद्यात्मकत्वे ब्रह्मण एवोत्तमाधमत्व-प्रसङ्गान्नैवमित्यर्थः। अस्त्वेवं ''मनो हि ब्रह्म'' इत्यादिवाक्यस्यार्थः। ''स यो नाम ब्रह्म इत्युपास्ते'' ''वाचं ब्रह्मेत्युपास्ते'' इत्यादिवाक्यस्य तु कथम् ? नहि प्रथमावद् द्वितीयायाः सप्तम्याद्यर्थत्वे नियामकमस्तीत्याह– **षट्स्विति** ॥ ''नामरूपे व्याकरोत्'' इति श्रुतेः परस्य नामाद्युत्पत्ति-कारणत्वाच्च न तदात्मकं ब्रह्माङ्गीकार्यमित्याह– **कारणत्वादिति** ॥

### भाष्यम्

*अन्यथोपासनाया अनर्थकारित्ववर्णनम्*

**न ह्यन्यदन्यदित्येव[१] ध्यातं स्यात् पुरुषार्थदम् ॥**

**अनर्थश्च भवेत् तस्माद् भृत्ये[२] राजेति बोधवत् ।**

**राजपूजां यथा[३] भृत्ये कुर्याद् राजा हिनस्ति हि ॥**

**तद्वशत्वात् तथा भृत्य एवं नामादिकं च यः ।**

**उपास्ते ब्रह्मरूपेण तं ब्रह्माथेतराणि च ।**

**पातयन्ति तमस्यन्धे तस्मान्नेक्षेत तांस्तथा ॥''**

**इति सामसंहितायाम् ।**

---

१.'नह्यन्यदन्य इत्येव' ह. २. 'भृत्यो राजेति' ह. ३. 'यदा' ह.

## पदार्थकौमुदी

### भाष्यार्थः

ननु वयमपि न नामाद्यात्मकं ब्रह्मेति ब्रूमः। किन्तु नामाद्यात्मकतया ध्यानं कार्यमिति। अविद्यमानस्यापि ध्यानसम्भवादित्यत आह– **नहीति** ॥ न केवलं पुरुषार्थाभावः। किन्त्वित्यत आह– **अनर्थश्चेति** ॥ तस्मादधमस्योत्तमत्वध्यानात्। तत्र दृष्टान्तमाह– **भृत्य इति** ॥ बोधो ध्यानम्।

ननु न वयं नामादौ ब्रह्मत्वबोधः कार्य इत्यर्थं ब्रूमः। किन्तु ब्रह्मणीव नामादौ पूजा कार्येति। तद्भिन्नत्वेन ज्ञातेऽपि तत्पूजाकरणोपपत्तेरित्यतस्तत्राप्यनर्थं सदृष्टान्तमाह– **राजेति** ॥ कुर्याद्यस्तमिति शेषः। भृत्यश्च हिनस्ति। स्वपूजकं कथं हिनस्तीत्यत उक्तम्– **तद्वशत्वादिति** ॥ राजवशत्वात्। अन्यथा राजोल्लङ्घनेन स्वस्यापराधप्राप्तेः। उपास्ते पूजयति। इतराणि नामादीनि। उपसंहरति– **तस्मादिति** ॥ तान् नामादीन् तथा ब्रह्मत्वेन।

### भाष्यम्

*अचेतन-अयोग्य-असत्योपासना अनर्थकारिण्यः*

**''अचेतनमयोग्यं च तथैवातात्त्विकं क्वचित्।**
**नोपासीत परोऽनर्थः स्यात् तथोपासनाकृतः ॥**
**दर्भचर्मादयश्चातो देवता ह्यभिमानिनः।**
**न ह्यचेतनकं किञ्चित् फलदं स्यात् कदाचन ॥**
**औषधादिषु चैतस्माद् देवा एव वरप्रदाः।**

**औषधादिस्थिता देवास्तेऽज्ञे दृष्टफलप्रदाः ।**
**ज्ञानिन्यदृष्टदाश्च स्युर्नादैवं किञ्चिदिष्यते ॥**

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च नामादिप्राणपर्यन्तं त्वन्मते ह्यचेतनमेव । नच तद्ब्रह्मत्वेनोपासितं फलदमिति भावेनाऽह– **अचेतनमिति** ॥ अयोग्यं यथा ब्रह्मणि "सोऽरोदीत्" इत्यादिप्रतीतं रोदनादि । अतात्विकमिति वचनेना-तात्विकमेवैक्यं तथा ध्येयमिति निरस्तम् । ननु यज्ञे दर्भचर्मादी-नामचेतनानामेव फलप्रदत्वं श्रूयते । तथाच कथमचेतनोपास्तिरनर्थ-फलेत्यत आह– **दर्भेति** ॥ अतोऽचेतनोपास्तेरनर्थफलत्वादेव । तत्र श्रुतौ दर्भादिशब्दास्तदभिमानिदेवतापरा इत्यर्थः । ननु यस्य कस्यचिदचेतनस्य फलदत्वाभावेऽपि यज्ञाद्युपयुक्तं फलप्रदं किं न स्यादित्यत आह– **न हीति** ॥ ननु रसौषधादीनामचेतनानामेव सेवितानामारोग्यादिफल-प्रदत्वदर्शनात् कथमेतदित्यत आह– **औषधेति** ॥ स्थिता इति शेषः । एतस्मादचेतनस्य फलदत्वाभावात् । एवं चेदौषधादिस्थदेवाज्ञस्यौषध-ग्रहणे फलं न स्यादित्यतो देवानां स्वभावमुत्तरमाह– **औषधादिस्थिता इति** ॥ अनेन वरप्रदा इत्युक्तं विवृतम् ।

### भाष्यम्

**यथाऽज्ञस्यापि[१] राज्ञस्तु भोजनं क्लृप्तमिष्यते ॥**
**न त्वविज्ञाय[२] राजानं ग्रामप्राप्तिस्ततो भवेत् ।**
**एवं देवा दृष्टफलं दद्युरज्ञस्य चाल्पतः ॥**

---

१. 'यथाऽज्ञस्यैव' ह. २. 'न कचाज्ञाय' ह.

किञ्चिज्ज्ञानकृतादृष्टात् तच्च नैवान्यथा भवेत् ।
अदृष्टाख्यं फलं यत्तु तज्ज्ञस्यैव न चान्यगम् ॥
तस्मादचेतनोपासां न कुर्यात् क्वापि कश्चन ।
न चासत्यां न चायोग्यां यदीच्छेदुत्तमं फलम् ॥
यदि नेच्छेत् तमो गन्तुं यदि चेच्छेद्धरेः[१] प्रियम् ।
अथ कर्तव्यकारी च मुमुक्षुरथवा भवेत् ।
सोऽपीच्छेत हरेः प्रीतिं नात्र कार्या विचारणा ॥''

इत्युपासनालक्षणे ।

## पदार्थकौमुदी

### भाष्यार्थः

उक्तमर्थं सदृष्टान्तमुपपादयति– **यथेत्यादिना** ॥ ग्रामप्राप्तिः ग्रामलाभः राजाज्ञस्याप्यन्यस्माद् ग्रामलाभदर्शनादुक्तम्– **तत इति** ॥ राज्ञः । एवमिति दार्ष्टान्तिकोक्तिः । अल्पतोदृष्टफलस्य भोजनवदल्पत्वात् । नचौषधादिस्थिता देवा अज्ञस्यापि दृष्टफलं दद्युश्चेत् कथमौषधस्वीकारेऽपि रोगानिवृत्तिरित्यतस्तद्दानेऽपि निमित्तमाह– **किञ्चिदिति** ॥ तच्च दृष्टमपि फलम् । किञ्चिज्ज्ञानपूर्वकृतादृष्टसहकारादेव भवेत् । अन्यथा नैव । ततश्च तस्यादृष्टाभावादेव रोगानिवृत्तिरिति भावः । अचेतनमयोग्यं चेत्युक्तमुपसंहरंस्तदुपासावर्जनाधिकारिणमाह– **तस्मादिति** ॥ असत्याम् अयोग्यामिति तदुपासोपलक्ष्यते । हरिप्रियानिच्छायां बाधकं सूचयति– **अथेति** ॥

---

१. 'यदि वेच्छेद्धरेः' क.

## भाष्यम्

*अचेतनोपासना वृथेति निरूपणम्*

**''अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्''** ।

**''पयोऽम्बुवच्चेत् तत्रापि'' इति भगवद्वचनम्**[1] ।

**''देवेषु चर्मादिनामानि संवादादेः'' इति च देवमीमांसायाम्**[2] ।

**''अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्'' इति सङ्कर्षणसूत्रम्** ।

## पदार्थकौमुदी

### भाष्यार्थः

''दर्भचर्मादयश्चातो देवता ह्यभिमानिनः'' इत्युक्तार्थे सूत्रं पठति– **अभिमानीति** ॥ ''मृदब्रवीत्'' 'आपोऽब्रुवन्'' इत्यादौ मृदाद्यभिमानि-देवता व्यपदिश्यत इत्यर्थः । यदुक्तं न ह्यचेतनकं किञ्चित्फलदं स्यादिति । तदयुक्तम् । पयसोऽचेतनस्यापि दध्याकारेण परिणामदर्शनात् । अचेतनस्यैवाम्बुनो गतिदर्शनात् । कूलस्य पतनदर्शनात् । तद्वदचेतनस्यापि दर्भादेः फलदानादौ प्रवृत्तिः किं न स्यादित्याक्षिप्य समादधत् सूत्रमेवोपन्यस्यति– **पयोम्बुवदिति** ॥ न पयोम्ब्वादिनिदर्शना-दचेतनस्यापि फलदानादौ प्रवृत्तिः कल्प्या । तत्रापि पयोम्ब्वादिप्रवृत्तावपि ईश्वरनिमित्तत्वाभिधायकश्रुतेरित्यर्थः । सा च ''एतस्य वाऽक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते'' इत्यादिका । ''दर्भचर्मादयः'' इत्युक्तार्थेऽभिमानीति सामान्यसूत्रं पठितम् । विशिष्य तत्परमेव देवतामीमांसासूत्रं पठति – **देवेष्विति** ॥ अचेतनम् अयोग्यं चेत्युक्तार्थे-

---

१. 'इति च भगवद्वचनम्' ह. २. 'देवतामीमांसायाम्' क.

ऽपि तत्सूत्रमेव पठति– **अचेतनेति** ॥ अचेतनमसत्यमयोग्यं च नोपास्यं फलाभावात्। विपरीतफलप्राप्तेश्चेति सूत्रार्थः।

### भाष्यम्

**'ओषधयः संवदन्ते सोमेन सह राज्ञा'** ।

**'प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा '** ।

**'न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च'** ।

## पदार्थकौमुदी

### भाष्यार्थः

''देवेषु''इति सूत्रविषयवाक्यं दर्शयति– **ओषधय इति** ॥ राज्ञा सोमेन लतारूपेण सहौषधयः संवदन्ते संवादं कुर्वन्तीत्यर्थः। हे ग्रावाणो वो युष्मान् सविता देवो धर्मेण प्रसुवत्वित्यर्थः। चर्मादेः फलदत्वश्रुति-रप्युदाहर्तव्या। तथाचौषधिचर्मदर्भग्रावादिनामानि तदभिमानिदेवेष्वेव वर्तन्ते नाचेतनेषु। ओषधीनां संवादश्रुतेः। चर्मदर्भादीनां फलदत्वश्रुतेः। ग्राव्णां सवितृसुतत्वश्रुतेः। तच्च देवेष्वेव सम्भवति। नाचेतनेष्विति सूत्रार्थः। न केवलं जडे संवादकर्तृत्वफलदातृत्वाद्यसम्भवः। किन्तु सर्वप्रवृत्तीनाम् ईश्वरनिमित्तत्वस्य श्रुतिसिद्धत्वाच्च किञ्चिदपि न स्वतन्त्रमित्याह– **न ऋत इति** ॥

### भाष्यम्

*अचेतनेषु अभिमानिचेतनोपासना युक्ता इति निरूपणम्*

**'न देवानामति व्रतं शतात्मा न जीवति'** ।

**'अनेहसो व ऊतयः सु ऊतयो व ऊतयः'** ।

## पदार्थकौमुदी

### भाष्यार्थः

ननु चेतनदेवताग्रहेण संवादोपपत्तावपि फलदातृत्वं कथमुपपन्नम् ? देवानां यजमानफलदानेच्छायामप्यन्येन विघातकरणसम्भवादिति चेत् । न । किमन्यो मनुष्य उत देवः । नाऽद्यः । तत्र तस्याऽसमर्थत्वादिति भावेन श्रुतिमाह– **नेति** ॥ देवानां व्रतं सङ्कल्पमतिक्रम्य शतायुरपि न जीवति । किम्वल्पायुरित्यर्थः । न द्वितीयः । अन्यदेवकृतविघ्नसद्भावे देवानां फलदानेच्छाया एवाभावात् । देवानाममोघेच्छत्वादिति भावेन श्रुतिमाह– **अनेहस इति** ॥ हे देवाः वः ऊतयः इच्छाः । अनेहसो निष्पापाः अमोघा इति यावत् । अत एव वो युष्माकमूतयः इच्छाः । सु ऊतयः सम्यग्रक्षका इत्यर्थः ।

### भाष्यम्

**'द्यावापृथिवी जनयन्नभिव्रताऽऽप ओषधीर्वनिनानि यज्ञिया ।**
**अन्तरिक्षं स्वारापपुरूतये वशं देवासस्तन्वी ३ नि मामृजुः' ।**

## पदार्थकौमुदी

### भाष्यार्थः

श्रूयते चाब्देवतानां फलदातृत्वादिसामर्थ्यमिति भावेन श्रुतिमाह– **द्यावापृथिवीति** ॥ आपोऽम्नामानो देवासो देवाः द्यावापृथिवी । व्रता व्रतानि यज्ञादिकर्माणि वनिनानि वन्यानि यज्ञियानि यज्ञयोग्यानि ओषधीश्चाभिजनयन्नभ्यजनयन्त । अन्तरिक्षं स्वश्चोतये रक्षायै आपप्रुरापूरयन् । तत्र वशं यथेच्छं तन्वीः तनूः योग्यं शरीराणि [१]निमामृजुः ।

१. 'निमेमृजुः' इति मुद्रितपुस्तके ।

शुद्धान्यकुर्वन्नित्यर्थः।

भाष्यम्

'अचेतनं चेतनेभ्यो दैवतेभ्यश्च चेतनाः।
देवाः प्राणाच्च स प्राणो विष्णोरेव सदैव तु॥
स्वभावं च प्रवृत्तिं च विकारं च समाप्नुयुः।
कश्चिद्भाव ऋते तेषां नैतत्स्याच्च[१] कदाचन॥
अचेतनप्रवृत्तौ तु न दृष्टान्तोऽस्ति[२] कश्चन।
चेतनानां प्रवृत्तेश्च दृष्टत्वादेव सर्वशः॥
अदृष्टं दृष्टवज्ज्ञेयं यथा दृष्टप्रणेतृकम्।
विसर्पत्तण्डुलं दृष्ट्वा कल्प्या तत्र पिपीलिका॥
न तद् दृष्ट्वैव दृष्टानामपिपीलिकसर्पणम्।
एवं दृष्टानुसारेण चिदधीनमचेतनम्॥

पदार्थकौमुदी

भाष्यार्थः

ननु ''नर्ते त्वत्क्रियते किञ्चनारे'' इति श्रुतिबलादीश्वरव्यतिरेकेणा-चेतनप्रवृत्त्यभावेऽपि देवताव्यतिरेकेण किं न स्यादित्याशङ्कां परिहर्तुं स्मृतिमाह– **अचेतनमिति**॥ अचेतनादिकं चेतनादिभ्य एव स्वभावादिकं प्राप्नोतीत्येतद् व्यतिरेकेणोपपादयति– **कश्चिदिति**॥ एतच्चेतनादिकमृते तेषामचेतनादीनां कदाचन कोऽपि भावो न स्यादिति योजना। नन्वचेतनं चेतनेभ्य इत्ययुक्तम्। चेतनं विहायाचेतनस्यैव प्रवृत्तिसम्भवादिति चेत् न।

---

१. 'नैतैः स्यात्' ह. २.'प्रवृत्तौ तु तन्न दृष्टान्तोऽस्ति' ह.

तत्र प्रमाणाभावात् । न तावत् तत्र प्रत्यक्षम् । नाप्यनुमानम् । दृष्टान्ताभावेनाचेतनप्रवृत्तेरनुमातुमशक्यत्वादित्याह– **अचेतनेति** ॥ तुशब्दः स्वत इति विशेषार्थः । एवमचेतनस्य स्वतःप्रवृत्तिरित्येतत् प्रमाणाभावेन निराकृत्य चेतनेभ्य एव प्रवृत्तिरित्यत्र प्रमाणं चाऽऽह– **चेतनानामिति** ॥ विप्रतिपन्नं कार्यं चेतनेच्छाधीनं कार्यत्वात् पटादिवदित्यनुमानसत्त्वादचेतनस्य चेतनेभ्य एव प्रवृत्तिः । नच पटादिसृष्ट्यादावपि न चेतनव्यापार इति वाच्यम् । अहं करोमीति चेतनस्य प्रवृत्तिदर्शनादिति भावः । नचेदं व्यवहारमात्रम् । बाधकाभावात् । अन्यथा विशिष्टज्ञानमात्रलोपप्रसङ्ग इति ।

नन्वचेतनप्रवृत्तौ न दृष्टान्तोऽस्तीत्ययुक्तम् । अदृष्टकर्तृककूलपतनादिदर्शनेन तस्यैव दृष्टान्तत्वोपपत्तेरित्यत आह– **अदृष्टमिति** ॥ विप्रतिपन्नं कूलपतनं सकर्तृकं पतनत्वाद् देवदत्तकृतपतनवदिति वा । कार्यत्वाद् घटवदिति वा । दृष्टकर्तृकवददृष्टकर्तृकमिति सकर्तृकमनुमेयमित्यर्थः । नन्वदृष्टकर्तृकं कूलपतनादिकमचेतनाधीनमेव किं न स्यात् । तद्वद् दृष्टकर्तृकस्याप्यचेतनाधीनत्वोपपत्तेरित्याशङ्कां परिहरति – **यथेति** ॥ अदृष्टप्रणेतृकं विसर्पत्तण्डुलं दृष्ट्वा तत्र यथा पिपीलिका कल्प्या । विप्रतिपन्नं तण्डुलं पिपीलिकाधीनविसर्पणवत् । अनुपलभ्यमानप्रणेत्रन्तरत्वे सति विसर्पत्तण्डुलत्वात् । सम्प्रतिपन्नवदित्यनुमेयम् । नतु तददृष्टप्रणेतृकं तण्डुलं दृष्ट्वैव दृष्टप्रणेतृकानामपिपीलिकसर्पणं कल्प्यम् । प्रत्यक्षबाधात् । एवं दृष्टकर्तृकाचेतनानुसारेणादृष्टकर्तृकमचेतनं चिदधीनम् । नत्वदृष्टवददृष्टमित्यर्थः ।

इदमुक्तं भवति । यद्यदृष्टकर्तृकं कूलपतनमचेतनाधीनं स्यात् । तर्हि अदृष्टकर्तृकं तण्डुलविसर्पणमप्यचेतनाधीनं स्यात् अविशेषात् । नच

तदस्ति । दूरतः पिपीलिकानुपलम्भेऽपि समीपे तदुपलम्भात् । यदि चादृष्टपतनवद् दृष्टमपि न चेतनाधीनं तर्हि दृष्टपिपीलिकाविसर्पणमपि न चेतनाधीनं स्यात्। अविशेषादिति।

### भाष्यम्

**दुर्घटा शक्तिरपि हि पिशाचानां हि[१] दृश्यते।**
**देवानां किमु किम्वेव परमस्य हरेः प्रभोः ॥' इत्यादेश्च ब्रह्मतर्के [२]।**

## पदार्थकौमुदी

### भाष्यार्थः

नन्वथापि ''दैवतेभ्यश्च चेतनाः'' इत्याद्यनुपपन्नम् । अदृष्टानामेव देवतेश्वरादीनां कल्पने कल्पनागौरवापातात्। ततो वरं चेतनानामेव स्वतः प्रवृत्तिरिति लाघवादित्यत आह– **दुर्घटेति** ॥ न देवतानामीश्वरस्य वा कर्तृत्वाङ्गीकारे कल्पनागौरवम् । श्रुत्यादिसिद्धत्वात् । नचानुपलब्धि-विरोधः । तेषां दुर्घटशक्तियोगेनानुपलब्ध्युपपत्तेः । नच साऽपि कुतः ? लोके पिशाचादीनाम् अनीश्वराणां तादृशशक्तिमत्त्वे सर्वेश्वराणां सुतरां तत्सिद्धेरिति भावः।

### भाष्यम्

*हृदयेत्यादिशब्दानां विवक्षितार्थकथनम्*

**हृदयज्ञो भगवत्तत्त्वज्ञः। हृद्ययनाद्धृदयम्।**
**'उदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयः'**
**इति श्रुतिः[३]।**

---

१.'अपि तु पिशाचानां च' हृ. २. 'इत्यादि ब्रह्मतर्के' क. ३. 'हृदयं ब्रह्मेति शार्कराक्ष्या उपासते' इति श्रुतेः' हृ.

**'कोलं पूगफलं प्रोक्तं फलं ताम्बूलपत्रकम्' इत्यभिधानम् ।**

**'भूतानां भौतिकानां च मन्त्राहुतिगणस्य च ।**

**अचेतनगणस्यास्य कल्पको मित्रनामकः ॥**

**प्राणा भूतानि मन्त्राद्याश्चिदचित्त्वविभेदिनः ।**

**अचितां कल्पको मित्रश्चितां वाय्वादयः स्मृताः ॥' इति वस्तुतत्त्वे ।**

**सर्वमचेतनं सङ्कल्प्यते ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं ''नाम ब्रह्मेत्युपास्व''इत्यादौ नामादिशब्दा देवतापरा एव नाचेतनपरा इति सङ्क्षेपविस्तराभ्यां व्याख्यायेदानीमादितः प्रकरणशुद्ध्या व्याख्यास्यन् [१]वाग्भूयस्त्वखण्डस्थहृदयज्ञशब्दं मनोज्ञत्वप्रतीतिं निवारयन् व्याचष्टे– **हृदयज्ञ इति** ॥ ननु हृदयशब्दस्य मनसि रूढत्वात् कथं भगवत्परत्वमित्यतस्तत्र योगं दर्शयति – **हृदीति** ॥ अयनाद् गमनात् प्रवर्तनादित्यर्थः । तथाऽपि मुख्यरूढिपरित्यागेनामुख्ययोगाङ्गीकारो न युक्त इति चेत् । हृदयशब्दस्य ब्रह्मण्येव विद्वद्रूढिसद्भावेन मुख्यत्वादिति भावेन श्रुतिमाह– **उदरमिति** ॥ ''हृदयं ब्रह्म'' इत्यस्यैव प्रकृतोपयोगेऽपीतिशब्दान्वयप्रतीत्यर्थं प्राचीनवाक्योदाहरणम् । ब्रह्मप्रकरणमेतदिति ज्ञापयितुं वा । मनोभूयस्त्वखण्डे ''द्वे वाव कोले बदरफले'' इत्यन्यथाप्रतीतिनिरासाय कोलशब्दार्थमभिधानेनाऽऽह– **कोलमिति** ॥

सङ्कल्पभूयस्त्वखण्डे सङ्कल्पनामकस्य मित्रस्य ''समक्लृपतां द्यावापृथिवी''इत्यादिना ''सर्वं सङ्कल्पते'' इत्यन्तेन भूतभौतिकादिसर्व-

१. 'वाग्भूयस्त्वखण्डे हृदयशब्दं' इति मुद्रितपुस्तके ।

सङ्कल्पकत्वमुच्यते । तत्र विशेषं प्रमाणेनैवाऽऽह– **भूतानामिति ॥** भूतानां द्व्यादिषण्णां भौतिकानां वर्षान्नप्राणानाम् । आहुतिगणेति कर्मशब्द-व्याख्यानम् । चशब्दाल्लोकसर्वयोर्ग्रहणम् । भूतानामित्याद्यनुवादेन चेतन-गणस्येति व्याख्यातम् । नन्वेतेषां चिदचित्त्वविभागे सत्येवं व्याख्यानं युक्तम् । स एव कुतः ? अचेतनगणकल्पको मित्रश्चेच्चेतनगणकल्पकश्च क इत्यत आह– **प्राणा इति ॥** क्रमो न विवक्षितः । उभयकार्यस्यापि दर्शनादिति भावः । ''चितां वाय्वादयः'' इत्यनेन बलभूयस्त्वखण्डे ''बलेनैव पृथिवी तिष्ठति बलेनान्तरिक्षम्'' इत्यादिकं व्याख्यातम् । ननु ''सर्वं सङ्कल्पते'' इत्युपसंहारे सर्वशब्दश्रवणात् कथं ''अचितां कल्पकः'' इति व्याख्यातमित्यतो विशेषवचनानुसारेण सामान्यसर्वशब्दः सङ्कोचनीय इति भावेनाऽऽह– **सर्वमिति ॥**

## भाष्यम्

**'अस्थिरस्मरणं चित्तं स्थिरसंस्मरणं[१] स्मरः' इति शब्दनिर्णये ।**
**'वेदनं ज्ञानमात्रं स्याद् विद्वत्त्वं तु विशेषतः' इति च ।**
**'मोक्षे यस्मिन् प्रवेशः स्यात् सा प्रतिष्ठा हि मुख्यतः ।**
**उपचारतस्त्ववस्थानमिति शब्दविदो विदुः ॥' इति च ।**
**'देवा मनुष्यतां प्राप्ता विज्ञेया देवमानुषाः ।**
**ध्यानं कुर्वन्त इव ते नैव स्युर्बहुभाषिणः ।**
**ब्रूयुरर्थवतीं वाचं नानर्थां[२] प्रायशो हि ते ॥' इति पाद्मे ।**
**'बलं ज्ञानबलं चैव बाह्यं चेति द्विधा मतम् ।**

---

१. 'स्थिरं स स्मरणं' ह. २. 'नानार्थाम्' क. पाठः ।

**युक्तिज्ञता ज्ञानबलं[१] सा ज्ञानादधिका मता[२] ॥' इति तत्त्वसारे ।**

## पदार्थकौमुदी

### भाष्यार्थः

ननु चित्तशब्दस्य स्मरणार्थत्वात् स्मरशब्देनैकार्थतेत्याशङ्कां तयोरर्थभेदकथनेन परिहरति– **अस्थिरेति** ॥ यदयं वेद । यद्वा, अयं विद्वानित्यत्र पुनरुक्तिं परिहरति– **वेदनमिति** ॥ ''चित्तं ह्येवैषामेकायनं चित्तं प्रतिष्ठा'' इत्यत्राऽयतनप्रतिष्ठाशब्दयोरेकार्थत्वप्रतीतिं निवारयति– **मोक्ष इति** ॥ उपचारतो मुख्यतोऽवस्थानम् [३]अयनमित्यर्थः । ध्यानभूयस्त्वप्रकरणे ध्यायन्तीव देवमनुष्या इत्युच्यते । तत्र मुनष्याश्च देवाश्चेति वा । मनुष्या एव देवसमा देवमनुष्या इति वाऽन्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे– **देवा इति** ॥ ततश्च कर्मधारय एवाऽश्रयणीय इति भावः । ध्यायन्तीव । न वस्तुतो ध्यायन्तीति प्रतीतिनिरासाय तद् व्याचष्टे– **ध्यानमिति** ॥ युधिष्ठिरादीनामपि बहुभाषित्वात् कथमेतद् इत्यतस्तदेव विवृणोति– **ब्रूयुरिति** ॥ तेषामपि द्यूतहेतुवचनदर्शनात् ''प्रायशः'' इत्युक्तम् । ननु विज्ञानाद् बलस्य भूयस्त्वं कथमुच्यते ? अज्ञानिनोऽपि शारीरबलदर्शनादित्यत आह– **बलमिति** ॥ बलशब्देन द्विविधमपि बलं विवक्षितम् । तत्र बाह्यबलस्य ज्ञानाद् भूयस्त्वाभावेऽपि [४]युक्तिज्ञतालक्षणज्ञानबलस्य ज्ञानमात्राद् भूयस्त्वेन विज्ञानाद् बलस्य भूयस्त्वोक्तिरिति भावः ।

---

१. 'युक्तिज्ञानाद् ज्ञानबलं' ह. २. 'तत् ज्ञानादधिकं मतम्' ह. ३.'आयतनमित्यर्थः' इति मुद्रितपुस्तके । ४. 'मुक्तिज्ञतालक्षणज्ञानबलस्य' इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

## भाष्यम्

*अन्नाद्यचेतनपदार्थेष्वपि तारतम्यनिरूपणम्*

अन्नं ज्ञानरसान्नं च बाह्यमन्नमिति द्विधा ।
ज्ञानान्नं ज्ञानबलतः श्रेष्ठं ज्ञानरतिर्हि तत् ॥
यद् बाह्यं तु बलं तस्माद् बाह्यमन्नं विशिष्यते ।
आपश्च द्विविधाः प्रोक्तास्तृप्तिर्या ज्ञानतो रतेः ॥
ता ज्ञेया आन्तरा आपो बाह्यास्तु द्रवरूपकाः ।
आन्तरान्नादान्तरापो बाह्याद् बाह्यास्तथा वराः ॥
एवं तेजः प्रातिभाख्यं बाह्यं चेति द्विधा मतम् ।
प्रातिभं ज्ञानतृप्तेश्च परमाकाश एव च ॥
स्थिरा तु प्रतिभाऽन्तस्थश्छिद्रमेव तु बाह्यगः[१] ।
स्थिरा हि प्रतिभा श्रेष्ठा चञ्चला या स्मराभिधा ॥
एकधैव स्मृतिः श्रेष्ठाऽऽशाऽपरोक्षदृगात्मकम् ।
श्रेष्ठं सुखं ततो मोक्षे प्राणाख्यं परमं सुखम् ॥

## पदार्थकौमुदी

### भाष्यार्थः

एवं तर्ह्यन्नस्य बलाद् भूयस्त्वोक्तिरनुपपन्ना । बाह्यबलं प्रत्येवान्नस्य कारणत्वेन भूयस्त्वसम्भवेऽपि ज्ञानफलं प्रत्यनुपपत्तेरित्यत आह– अन्नमिति ॥ तर्ह्यपां कथमन्नाद् भूयस्त्वमुच्यते ? द्विविधान्नादपां भूय-

---

१. 'प्रतिभाऽन्तस्थश्छिद्रमेव तु बाह्यगम्' ह.

स्त्वाभावादित्यत आह– **आपश्चेति** ॥ द्विविधाः प्रोक्ताः । आन्तरा बाह्याश्चेति शेषः । उभयं क्रमेण लक्षयति– **तृप्तिरिति** ॥ द्रवरूपकाः स्वाभाविकद्रवत्वोपेताः । तर्हि तेजसः कथमद्भ्यो भूयस्त्वोक्तिरित्युक्तशङ्कानिरासायाऽऽह– **एवमिति** ॥ परमित्यतो बाह्यादद्भ्यो बाह्यं तेजः परमिति शेषः । एवं सत्याकाशस्य तेजसो भूयस्त्वोक्तिं घटयति – **आकाश इति** ॥ आकाशश्च द्विधैव अन्तस्थो बाह्यगश्चेति शेषः । उभयं क्रमेण दर्शयति– **स्थिरेति** ॥ किं तत इत्यत आह– **स्थिरेति** ॥ चञ्चलायाः प्रतिभायाः चञ्चलप्रातिभज्ञानात् स्थिरा प्रतिभा श्रेष्ठा । एवं बाह्यतेजसो बाह्याकाशश्च पर इति ज्ञातव्यम् । ''स्मरो वावाऽऽकाशाद् भूयान्'' इति वाक्यं योजयति– **स्मराभिधेति** ॥ [१]अकारप्रश्लेषेणाचञ्चलाया इत्यत्रापि सम्बध्यते । अचञ्चलायाः स्थिरप्रतिभायाः स्मराभिधैकधैव स्मृतिर्ध्यानरूपा श्रेष्ठेत्यर्थः । ''आशा वाव स्मराद् भूयसी'' इत्यस्यार्थमाह– **आशेति** ॥ एकधैव स्मृतेराशाख्यमपरोक्षदृगात्मकं सुखं श्रेष्ठम् । दृगात्मकमित्यभेदोपचारः । ''प्राणो वा आशाया भूयान्'' इति वाक्यं योजयति– **तत इति** ॥ ततोऽपरोक्षदृगात्मकसुखान्मोक्षे प्राप्यं प्राणाख्यं परमं सुखं श्रेष्ठम् । स्मराशाप्राणानां केवलान्तःपदार्थत्वेन द्वैविध्याभावात् तदनुक्तिः ।

## भाष्यम्

**उत्तरोत्तरमेतद्धि वाय्वन्ताभिमतं सदा ।**
**बाह्याद्भ्यो बाह्यमन्नं च जायतेऽन्यत्तदन्यथा ॥**
**व्यक्तिरन्तर्गतानां तु विपरीतक्रमाद् भवेत् ।**

---

१. 'नञ्प्रश्लेषेण' इति मातृकायाम् । प.सं. २९४ ।

**तथाऽपि मोक्षगं यस्मात् स्वभावो नित्य एव तु ॥**

**अतस्तस्मादापरोक्ष्यं कादाचित्कं हि जायते ।**

**दृष्ट्यधीना स्मृतिश्चेयं प्रतिभा स्मृतिसम्भवा ॥**

**स्थैर्यमालम्ब्य तु चलमन्यथा नैव तिष्ठति ।**

**प्रतिभातश्च तृप्तिः स्यादतृप्तस्य तु का रतिः ।**

**तत एवं[१] क्रमादेव वरिष्ठः प्राणजो गुणः ॥'' इति च ॥**

**योऽसौ प्राणः स प्राणेन परब्रह्मणा याति । स एव[२] भगवान् प्राणं प्रत्यभीष्टं ददाति । 'प्राणस्य प्राणम्'इति श्रुतेः । प्राणो वायुः परमात्मानं च ज्ञानेन दर्शयन् ददाति । सर्वस्मादतीतमुत्तमं वदतीत्यतिवादी ॥ खण्डः - १५ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

नन्वेवमन्नादिशब्दैर्बाह्यान्तर्भिन्नं जडमेव गृहीतं न देवता । अतः पूर्वोत्तरव्याघात इत्यत आह– **उत्तरोत्तरमिति** ॥ एतदन्नमारभ्य प्राणपर्यन्तं बाह्यबलान्नाप्तेजोभ्यो बाह्यान्नाप्तेजआकाशाः श्रेष्ठा इत्यत्र युक्तिमाह– **बाह्याद्भ्य इति** ॥ चशब्दाद् बाह्यं बलं बाह्यान्नाज्जायत इत्यादेः सङ्ग्रहः । कार्यकारणयोः कारणं श्रेष्ठम् । पितुस्तद्दर्शनादिति भावः । अन्यद् आन्तरान्नादिकम् । ''तदन्यथा'' इत्युक्तं विशदमाह– **व्यक्तिरिति** ॥ ज्ञानबलाद् ज्ञानरतिः रतेस्तृप्तिस्तृप्तेश्चलप्रतिभा । चलप्रतिभायाः स्थिर-प्रतिभेत्यादिबाह्यबलान्नादिकार्यकारणभावक्रमापेक्षया विपरीतक्रमेण

---

१.'अत एवं' ह. २. 'स एषः' क. पाठः ।

कार्यकारणभावो भवेदित्यर्थः । वृत्तिरूपाणां जननेऽपि स्वरूपभूतानां रत्यादीनां ज्ञानबलादितो व्यक्तिरेव भवतीत्यभिप्रेत्य ''व्यक्तिः'' इत्युक्तम् । पूर्वपूर्वदेवादुत्तरोत्तरदेवाभिव्यक्तिरित्यप्याहुः ।

नन्वेवं रत्यादिमोक्षान्तानामुक्तरीत्या कार्यत्वेनोत्तमत्वं न स्यात् । कारणस्यैवोत्तमत्वेनाभिप्रेतत्वादित्यत आह– **तथाऽपीति** ॥ यद्यप्युक्तरीत्या रत्यादिव्यङ्ग्यो मोक्षस्तथाऽपि प्राणजो गुणः परमसुखरूपः सर्वस्माद् वरिष्ठ इत्युपरि सम्बन्धः । तत् कथमित्यतो मोक्षादेरपि कयाचिद् विवक्षया पूर्वपूर्वकारणत्वादित्याशयेन तदुपपादयति– **मोक्षगमित्यादिना** ॥ यस्मान्मोक्षगं सुखं स्वभावस्तस्मान्नित्य एव । यतो नित्योऽतस्तस्माद् मोक्षगसुखात् तद्योग्यतायां सत्यामिति यावत् । आपरोक्ष्यं जायते । अन्तःकरणविकारत्वेनापरोक्षज्ञानस्य कादाचित्कत्वादित्यर्थः । मोक्षयोग्यताधीनत्वमपरोक्षोत्पत्तेरत्रोच्यत इति न कश्चिद् विरोधः । इयमेकधा स्मृतिश्च दृष्ट्यधीना दृष्टियोग्यताधीनेत्यर्थः । स्थिरा प्रतिभा च स्मृतियोग्यतासम्भवेत्यर्थः । प्रतिभास्थैर्यमालम्ब्य निमित्तीकृत्य चलं प्रातिभं स्थिरप्रतिभायोग्यस्यैव चलप्रतिभा । अन्यथा तद्योग्यताभावे नैव तिष्ठतीत्यर्थः । प्रतिभातश्च प्रतिभायोग्यताया एव तृप्तिः स्यात् । अतृप्तस्य तृप्त्ययोग्यस्य का ज्ञानरतिः ? न काऽपीत्यर्थः । किं तत इत्यत आह– **तत इति** ॥ उक्तरीत्या मोक्षस्यापरोक्षज्ञानाद्युत्पत्तौ कारणत्वादित्यर्थः । एवं क्रमादेव रतेस्तृप्तिर्वरिष्ठेत्यादिक्रमादेव ॥

प्राणभूयस्त्वखण्डे प्राणः प्राणेन स्वशक्त्यैव याति प्राणः प्राणं स्वात्मानमेव ददातीति प्रतीतिनिरासाय ''प्राणः प्राणेन याति'' इत्यादि व्याचष्टे– **योऽसाविति** ॥ आद्यः प्रथमान्तः प्राणशब्दः आशोत्तमतया प्रकृतप्राणपरः । द्वितीयः परब्रह्मपरः । तृतीयोऽप्यव्यवधानेन प्रकृतपरब्रह्म-

पर इति भावः । नच प्राणशब्दस्य परब्रह्मपरत्वेऽप्रकृतस्वीकारः । ''प्राणो वा आशाया भूयान्'' इत्युक्तप्राणस्यान्तर्यामितया विष्णुत्वस्य भूमाधिकरणे समर्थितत्वात् । प्राणशब्दस्य परब्रह्मपरत्वे श्रुतिमाह– **प्राणस्येति** ॥ यद्वा, उक्तार्थे श्रुतिमाह– **प्राणस्येति** ॥ प्राणस्य प्राणत्वप्रदम् अभीष्टदं चेति श्रुत्यर्थः । ''प्राणाय ददाति'' इत्येतद्व्याचष्टे– **प्राण इति** ॥ पूर्ववाक्यात् ''प्राणः'' इत्येतद् अनुवर्तत इति भावेन ''प्राणो वायुः'' इत्युक्तम् । ''प्राणाय'' इति चतुर्थी द्वितीयार्थेति भावेनोक्तम्– **परमात्मानमिति** ॥ चशब्दोऽपिशब्दार्थः । असम्भववारणायोक्तम्– **ज्ञानेनेति** ॥ ''ददाति शिष्येभ्यः'' इति योज्यम् । अतिवादी वाचाल इत्यन्यथाप्रतीतिनिरासाय तद्व्याचष्टे – **सर्वस्मादिति** ॥ सर्वस्मान्नामादेः उत्तमं प्राणम् ।

## ततश्चायं खण्डार्थः

प्राणो मुख्यप्राण एवाऽऽशाया भूयान् । तत्सामर्थ्यं सदृष्टान्तमाह– **यथेति** ॥ यथा वा रथचक्रस्य अराः रथनाभौ समर्पिताः एवमस्मिन् प्राणे सर्वं जगत् समर्पितम् । नचैतावता तस्यैव निरुपचरितसर्वाधारत्वं मन्तव्यमित्याशयेनाऽऽह– **प्राण इति** ॥ योऽसावाशोत्तमः प्राणः स प्राणेन परब्रह्मणा याति प्रवर्तते । प्राणस्य पराधीनप्रवृत्तिकत्वेनेष्टप्राप्तिः स्यादित्यत आह– **प्राणः प्राणमिति** ॥ प्राणः परमात्मा प्राणं मुख्यप्राणं प्रत्यभीष्टं ददातीत्यर्थः । अन्यस्येष्टं नियमेनाप्रयच्छंस्तस्यैव कुतो ददातीत्यत आह– **प्राणायेति** ॥ प्राण इत्यनुवर्तते । चतुर्थी द्वितीयार्थे । यस्मात् प्राणो वायुः प्राणं परमात्मानं च ज्ञानेन दर्शयञ्छिष्येभ्यो ददाति तस्मात् प्राणं प्रत्येवाभीष्टं परमात्मा ददातीति योज्यम् । प्राणस्य पित्रादिपूज्यस्थानगतत्वरूपं माहात्म्यमाह– **प्राणो हेत्यादिना** ॥ १ ॥

तदेवान्वयव्यतिरेकाभ्यामुपपादयति– **स यदीति** ॥ सः यः कश्चिद् यदि पित्रादिकं ब्राह्मणान्तं सति मुख्यप्राणे किञ्चिद् भृशमिव । त्वङ्कारादिना प्रत्याह । तदा त्वा त्वां प्रति धिगस्त्वित्येवैनमाहुर्लौकिकाः । कुत इत्यत आह– **पितृहेति** ॥ २ ॥

अथ यद्यप्येनान् पित्रादीनेवोत्क्रान्तप्राणाञ्छूलेन समासं समस्य व्यतिषं दहेत् व्यत्यस्तं सन्दहेत् । तथाऽपि नैवैनं ब्रूयुः । पितृहाऽसीत्यादि ॥ ३ ॥

निगमयति– **प्राण इति** ॥ तस्मात् प्राण एवैतेषु स्थित इत्यर्थः । वेत्तुः फलमाह– **स वा इति** ॥ स एषोऽधिकारी एवं शृण्वन्नेवं मन्वानः एवं ध्यायन्नेवं पश्यन्नतिवादी सर्वस्मादतीतमुत्तमं प्राणाख्यं वदतीत्यतिवादी भवति वै । तं प्राणातिवादिनं प्रति यदि त्वमतिवाद्यसीत्यन्ये ब्रूयुस्तदा-ऽहमतिवाद्यस्मीति ब्रूयात् । नापह्नुवीत । प्राणवादिनो भयाभावादित्यर्थः ॥ ४ ॥

॥ इति पञ्चदशः खण्डः ॥

## उपनिषत् (खण्डः-१६)

*मुख्यप्राणादपि विष्णुरुत्तमः*

**एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १ ॥ १६ ॥**

### भाष्यम्

‘एष तु वा अतिवदति’ इति तुशब्दोऽर्थान्तरवाची ।

**अस्ति भगवः प्राणाद् भूय इति प्रश्नो व्यतिहार्यः[1]।**

**'यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् ।**

**यत्र प्रमाणं वाक्यं वा व्यतिहार्य[2] न संशयः ।'**

**'व्यतिहारो विशिंषन्ति हीतरवत्' इति च भगवद्वचनम्[3]।**

**'अतिवादी प्राणवादी विष्णुवादी विशेषतः ।**

**स सत्यो भगवान् विष्णुर्यन्निर्दोषो नियामकः ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''एष तु वा अतिवदति यः सत्येनातिवदति''इत्यत्र प्रकृतप्राणातिवाद्येव सत्यातिवादित्वेनोच्यते। ततश्च ''प्राण एव सत्यः'' इति तस्यैव भूमादित्वप्राप्तौ भूमाद्यधिकरणविरोधः स्यादित्याशङ्कानिरासाय प्रकरणभेदकं दर्शयति– **एष तु वेति** ॥ प्राणवादिनोऽतिवादित्वमुक्त्वा सत्यवादिनोऽप्यतिवादित्वमुच्यते । तत्र प्राणातिवादिनः सत्यातिवादी तुशब्देन विशेष्यते । तेन ज्ञायतेऽन्योऽसावन्योऽयमितीति भावः । अर्थान्तरवाची प्रकरणान्तरज्ञापक इत्यर्थः । ननु यदि प्राणादुत्तमः सत्योऽन्यस्तर्हि नामादिप्रकरणवद् ''अस्ति भगवः प्राणाद् भूयः'' इति ''प्राणाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीतु'' इति ''सत्यं वाव प्राणाद् भूयः'' इति प्रश्नप्रतिवचने स्यातामित्यत आह– **अस्तीति** ॥ प्रश्न इत्युपलक्षणम् । प्राणाद् वाव भूयोऽस्तीत्युत्तरमपि ग्राह्यम् । व्यतिहार्योऽध्याहार्यः । अध्याहारज्ञापकस्तु प्रकरणभेदकल्पकस्तुशब्द एवेति भावः ।

---

१. 'प्रश्नोऽप्यध्याहार्यः' ह. २. 'चाप्यतिहार्यं' ह. ३. 'इति हि भगवद्वचनम्' क.

ननु यदि प्रश्नाद्यध्याहारः तर्हि "अस्ति भगवः प्राणाद् भूयः" इति प्रश्नेन "अस्ति प्राणाद् भूयः" इति प्रतिवचनाध्याहारः किं न स्यात् ? अध्याहारस्य निरङ्कुशत्वादित्यत आह– **यत्रेति** ॥ यत्र वाक्ये यत्पदं विनाऽन्यत्रार्थान्तरेऽनवसरोऽर्थान्तरस्याघटना तत्र वाक्ये तदेव पदं प्रतिष्ठितम् । यत्र महावाक्ये यत्प्रमाणं वाक्यं वा विनाऽन्यत्रानवसरोऽर्थान्तरस्याघटना तत्र महावाक्ये तत्प्रमाणं वाक्यं वा प्रतिहार्यमिति वचनादत्रोक्तरीत्यैव प्रश्नाध्याहारः । अन्यथा तुशब्दानानुगुण्यादिति भावः । अस्मिन् प्रकरणे प्रश्नाद्यध्याहारः कार्य इत्यत्र सूत्रं च पठति– **व्यतिहार इति** ॥ प्रश्नाद्यध्याहारः कर्तव्यः । "एष तु वा अतिवदति"इति तुशब्देन विशिंषन्ति हीत्यर्थः । उक्तमर्थं प्रमाणेन द्रढयन् सत्याद्यात्मान्तप्रकरणानि तेनैव व्याचष्टे– **अतिवादीति** ॥ श्रुतौ सत्यवादिनः श्रवणात् कथं विष्णुवादीत्युक्तमित्यत आह– **स इति** ॥ कुत इत्यत आह– **यदिति** ॥ यद्यस्मान्निर्दोषो नियामकस्तस्मात् सत्यः ।

**॥ ततश्चायं खण्डाक्षरार्थः ॥**

अत्र "अस्ति भगवः प्राणाद् भूयः" इति "प्राणाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीतु"इति "सत्यं वाव प्राणाद् भूयः" इति प्रश्नप्रतिवचनेऽध्याहार्ये । सत्यवेत्तुः फलमाह– **एष तु वेति** ॥ योऽधिकारी सन्निर्दोषश्चासौ यो नियामकश्चेति सत्यो विष्णुस्तेनातिवदति । तमतिवदतीति यावत् । एष एव तु प्राणातिवाद्यपेक्षया विशेषेणातिवदति । अतीतमुत्तमं वस्तु वदतीत्यर्थः । तर्हि "सोऽहं त्वां प्रपन्नोऽहं यथा सत्येनातिवदानि तथा मां विनियोजय"इति नारदोक्तः कुमार आह– **सत्यं त्वेवेति** ॥ तदतिवादित्वसिद्ध्यर्थं तु विशेषेण

सत्यमेव विजिज्ञासितव्यमित्युक्तो नारदः ''सत्यं भगवो विजिज्ञासे'' इत्याह ॥ १ ॥

**॥ इति षोडशः खण्डः ॥**

## उपनिषत् (खण्डः-१७)

*भगवान् सत्यज्ञानादिगुणपरिपूर्णः*

**यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥ १७ ॥**

**॥ ततश्चायं खण्डस्याक्षरार्थः ॥**

एवं सत्याख्यभगवतो गुणजिज्ञासायां गुणत्वेन तदविनाभूतं विज्ञानं वक्तुं विज्ञानस्य सत्याविनाभावमाह– **यदेति** ॥ अन्वयमुक्त्वा व्यतिरेकमाह– **नाविजानन्निति** ॥ **विजानन्नेवेति निगमनम्** ॥ तस्मात् सत्यं विजिज्ञासता तदविनाभूतं विज्ञानमेव विशेषेण विजिज्ञा-सितव्यमित्युक्ते तर्हि ''विज्ञानं भगवो विजिज्ञासे'' इत्याह नारदः॥१॥

**॥ इति सप्तदशः खण्डः ॥**

एवमुत्तरखण्डपञ्चकमपि योज्यम् ॥१८॥१९॥२०॥२१॥२२॥

## उपनिषत् (खण्डः-१८)

**यदा वै मुनतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥ १ ॥ १८ ॥**

### भाष्यम्

विशिष्टज्ञानरूपश्च सामान्यज्ञानरूपकः ।

## पदार्थकौमुदी

### भाष्यार्थः

ननु सत्यो न विष्णुः तदुपर्यपि विज्ञानमतिश्रद्धानिष्ठाकृति-सुखभूमाहङ्कारात्मनामुक्तत्वादित्यतस्तान्यपि प्रकरणानि विष्णुपरतयैव योजयन् विज्ञानमतिशब्दयोरर्थभेदमाह– **विशिष्टेति** ॥

### उपनिषत् (खण्डः-१९)

**यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्धधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥१॥१९॥**

### उपनिषत् (खण्डः-२०)

**यदा वै निस्तिष्ठत्यथ श्रद्धधाति नानिस्तिष्ठन् श्रद्धधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥ २० ॥**

### भाष्यम्

**नित्यश्रद्धास्वरूपश्च तथैव स्थैर्यरूपकः ॥**

## पदार्थकौमुदी

### भाष्यार्थः

श्रद्धानिष्ठाकृतिसुखभूमशब्दार्थान् क्रमेणाऽह– **नित्यश्रद्धेत्यादिना** ॥

### उपनिषत् (खण्डः-२१)

**यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥ २१ ॥**

## उपनिषत् (खण्डः-२२)

**यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥ २२ ॥**

### भाष्यम्

**स एव सर्वकर्ता च सुपूर्णानन्दरूपकः ।**

### पदार्थकौमुदी

### भाष्यार्थः

सुखशब्देन सुखमात्रग्रहणप्रतीतिनिरासायोक्तम् – **सुपूर्णेति** ॥

## उपनिषत् (खण्डः-२३)

*पूर्णसुखात्मकत्वं भगवतो लक्षणम्*

**यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १ ॥ २३ ॥**

### भाष्यम्

**स च सर्वगुणैः पूर्णो भूमेत्युच्चार्यते ततः ॥**

### पदार्थकौमुदी

### भाष्यार्थः

सर्वगुणैः पूर्णो यतोऽतो भूमेत्युच्चार्यते ॥

**॥ ततश्चायं खण्डस्याक्षरार्थः ॥**

सत्यादिगुणा यस्या एव परदेवतायाः स्वरूपभूतास्तं भूमाख्यं नारायणं लक्षयति– **यो वा इति** ॥ यो वै भूमा पूर्णो नारायणाख्य-

स्तत्सुखमनन्याधीनसुखरूपम् । अस्यातिव्याप्तिं परिहरति– **नाल्प इति** ॥ भूमप्रसादं विना नाल्पे मुक्तजाते सुखमस्ति । एवमतिव्याप्तिं परिहृत्य निगमयति– **भूमैवेति** ॥ नैतावतोपदेशसमाप्तिरिति भावेनाऽह– **भूमा त्वेवेति** ॥ एवमुक्ते नारदः पृच्छति– **भूमानमिति** ॥ १ ॥

**॥ इति त्रयोविंशः खण्डः ॥**

## उपनिषत् (खण्डः-२४)

*स्वातन्त्र्यनित्यमुक्तत्वे अपि भगवल्लक्षणे*

**यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमाऽथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद् विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳ स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥**

**गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेव ब्रवीमीति होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित इति ॥ २ ॥ २४ ॥**

### भाष्यम्

**यदधीनं विना नान्यत् किञ्चिदस्ति कुतश्चन ।**
**स भूमोक्तोऽतिपूर्णत्वादन्यदल्पमुदीर्यते ॥**

### पदार्थकौमुदी

### भाष्यार्थः

यत्र भूमतत्त्वेऽन्यद् द्रष्टव्यं न पश्यत्यभावादिति प्रतीतिनिरासाय ''यत्र नान्यत् पश्यति'' इत्यादि ''सभूमा'' इत्यन्तवाक्यतात्पर्यमाह– **यद-धीनमिति** ॥ अतिपूर्णत्वादित्युक्तानुवादः । ''यत्रान्यत् पश्यति''इत्यादि

''तदल्पम्'' इत्यन्तवाक्यतात्पर्यमाह– **अन्यदिति** ।। भगवतोऽन्यत् ।

## ततश्चायं खण्डस्याक्षरार्थः

भूम्नोऽसदृशत्वं लक्षणमाह– **यत्रेति** ।। यत्र यस्याधीनं विनाऽन्यन्न पश्यत्यधिकारी सर्वमेव[१] तदधीनं पश्यति शृणोति विजानाति वा स भूमेत्यर्थः । अस्यातिव्याप्तिं निराह– **अथ यत्रेति** ।। अत्रापि यत्र यस्याधीनं विनाऽन्यत् पश्यति । अन्यद् [२]यदधीनं पश्यतीति यावत् । तदल्पमित्यर्थः । भूम्नो नित्यमुक्तत्वं लक्षणान्तरमाह– **यो वा इति** ।। अतिव्याप्तिमुद्धरति– **अथेति** ।। यदल्पं मुक्तजातं तदपि पूर्वं मर्त्यमेवातो न तस्यातिव्याप्तिरिति भावः । जानन्नपि नारदो विशेषार्थज्ञानाय स्थापनाय वा भूमाश्रयं पृच्छति– **स इति** ।। आश्रयप्रश्नस्य प्रकारान्तरेणाप्युत्तरमाह– **यदि वेति** ।। यद्वा, न महिम्न्ययमाश्रितः ।। १ ।।

ननु स्वमहिमाश्रयत्वे महिमाश्रयत्वं प्राप्तमेवातो विरोध इत्यतः परिच्छिन्नमहिमानाश्रयत्वमभिप्रेतमिति भावेनोक्तं विशदयति– **गोअश्वेति** ।। यश्चैत्रो महिम्नि प्रतिष्ठितस्तं गोअश्वं महिमेति गवाश्वं महिमेत्याचक्षते विद्वांसः । क्वचित्तु ''गोअश्वमिह महिमा'' इति पाठः । तदेह जगति गो अश्वं गवाश्वं तथा हस्तिहिरण्यं दासभार्यं द्वन्द्वैकवद्भावः । क्षेत्राण्यायतनानि गृहाण्यस्य महिमेत्याचक्षते । किं ततः ? अहं भूमानमेवं चैत्रवत् परिच्छिन्नमहिमाश्रयं न ब्रवीमीति होवाच कुमारः । ''स्वे महिम्नि''इत्युक्तं नातिप्रसक्तमित्याह– **अन्य इति** ।। अयं तु स्वमहिम्न्येवेति तद्विलक्षण इत्यर्थः ।। २ ।।

**।। इति चतुर्विंशः खण्डः ।।**

---

१.'सर्वमेतदधीनं' इति मुद्रितपुस्तके । २.'यदनधीनम्' इति मातृकायाम् । प.सं. ३०७.

## उपनिषत् (खण्डः-२५)

*सर्वत्र व्याप्तत्वमपि भगवल्लक्षणम्*

**स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेद॰ सर्वमिति ।**

*भगवतः सर्वेष्वपि रूपेषु तल्लक्षणानि समानानि*

**अथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेद॰ सर्वमिति ॥ १ ॥ अथात आत्मादेश एवाऽत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेद॰ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवत्यथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषा॰ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥ २५ ॥**

### भाष्यम्

स सर्वगुणसम्पूर्णः सर्वदेशेषु सर्वदा ।
स्वतन्त्रः सर्ववस्तूनि तदधीनानि सर्वशः ॥
पूर्णत्वात् सुखरूपोऽसौ सर्वकर्ता सुखत्वतः ।
कर्तृत्वात् सुस्थिरश्चासौ स्थिरत्वादास्तिकस्तथा ॥
आस्तिकत्वाच्च[१] मन्ताऽसौ विज्ञाता च ततो हरिः ।

---

१. 'आस्तीकत्वाच्च' पाठान्तरम् ।

विज्ञातृत्वाच्च निर्दोषः[1] सर्वस्यापि नियामकः ॥

भूमा नारायणाख्यः स्यात् स एवाहङ्कृतिः स्मृतः ।

आकार्योऽहमिति ह्येष ततोऽहङ्कार उच्यते ॥

जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः ।

सोऽप्यणुत्वेऽपि संव्यापी परमैश्वर्ययोगतः ॥

यथा बालतनौ विष्णौ मार्कण्डेयेन धीमता ।

प्रविश्य नान्तोऽधिगत एवं व्याप्तो हरिः परः ॥

अणुरूपोऽपि भगवान् वासुदेवः परो विभुः ।

आत्मेत्युक्तः स च व्यापी न च भेदो हरौ क्वचित् ॥'

इति परमसारे ।

भूमप्रसादं विना नाल्पे सुखमस्ति । मर्त्यं च पूर्वम् ।

'अल्पाऽपि ह्यस्मृता देवी श्रीः पूर्णाऽतिप्रियत्वतः' इति च ।

आत्मरतिर्भगवद्रतिः । स्वो भगवान् । सोऽस्य प्रत्यक्षत आज्ञापयिता[2] भवतीति स्वराट् ।

## पदार्थकौमुदी

### भाष्यार्थः

''स एवाधस्तात्'' इत्यादिवाक्यं व्याचष्टे– **स इति** ॥ स इत्यनुवादेन सर्वगुणसम्पूर्ण इति परामृश्य कथनम् । तस्यैव भूमशब्दार्थत्वात् । ''स एवेदं सर्वम्''इति वाक्यं भूम्नः सर्वाभेदपरमिति प्रतीतिनिरासाय तात्पर्यतो

---

१.'ज्ञातृत्वाच्च स निर्दोषः' क. २.'आज्ञापिता' ह.

व्याचष्टे – **स्वतन्त्र इति** ॥ ''यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति''इत्यादिना विज्ञानादीनां सत्याद्यविनाभावोक्त्या लब्ध-मुत्तरोत्तरस्य पूर्वपूर्वत्र हेतुत्वमेव वैपरीत्येनाऽऽह – **पूर्णत्वादित्यादिना** ॥ ''आस्तिकः'' इति श्रद्धाशब्दार्थकथनम् । निर्दोषः सर्वस्यापि नियामक इति सत्यशब्दार्थः । भूमप्रकरणे ''यो वै भूमा'' इति पूर्ववैलक्षण्येनोपदेशे तात्पर्यमाह – **भूमेति** ॥ प्राचीनं तु भूमगुणनिरूपणमेव । न पृथङ्मूर्ति-निरूपणमिति भावः । ''अथातोऽहङ्कारः''इत्यादिना प्रसिद्धाहङ्कार एव चिदचित्संवलनात्मकः कथ्यत इत्यसदिति भावेनाऽऽह – **स एवेति** ॥ अहङ्कारशब्दं भगवति निर्वक्ति – **आकार्य इति** ॥

नन्वहमित्याकार्यत्वं जीवस्यैव प्रसिद्धमित्यत आह – **जीवस्थ इति** ॥ अनेनाथात इति पूर्वविलक्षणोपदेशाभिप्रायोऽपि सूचितः । ननु जीवस्याणुत्वेन तदन्तर्गतस्यापि भगवतोऽणुत्वात् कथं ''अहमेवाध-स्तात्'' इत्यादिना व्याप्तत्वमुच्यत इत्यत आह – **सोऽपीति** ॥ नन्वस्तु परमैश्वर्यं घटकम् । तथाऽपि भगवत्यणुत्वमहत्त्वसमावेशे किं मानम् ? अन्यथा शशविषाणादिकल्पनापत्तेरित्यतो मार्कण्डेयप्रत्यक्षमाह – **यथेति** ॥ ''अणुरूपोऽपि'' इति पूर्वत्रान्वेति । ''अथात आत्माऽऽदेशः'' इति जीवोपदेश इत्यसदिति भावेन तत्तात्पर्यमाह – **भगवानिति** ॥ ''आत्मैवाधस्तात्''इत्यादि व्याचष्टे – **स चेति** ॥ तर्हि भूमाहङ्कारात्म-लक्षणानां परस्परातिव्याप्तिः स्यादित्यत आह– **नचेति** ॥

ननु ''यो वै भूमा तत् सुखम्'' इत्यत्र भूम्नः सुखस्वरूपं लक्षणमुक्त्वा ''नाल्पे सुखमस्ति'' इत्यतिव्याप्तिपरिहारोऽभिहितः सोऽनुपपन्नः । अन्यस्यापि मुक्तस्य सुखस्वरूपत्वादित्यतस्तद्वाक्यं व्याचष्टे– **भूम-प्रसादमिति** ॥ अल्पे मुक्तजाते । तथाचानन्याधीनसुखरूपत्वं प्राग्

लक्षणत्वेनाभिप्रेत्यातिव्याप्तिपरिहारोऽयमिति भावः । ''अथ यो वै भूमा तदमृतम्''इति भूम्नोऽमृतत्वं लक्षणमुक्त्वा ''अथ यदल्पं तन्मर्त्यम्'' इत्यतिव्याप्तिः परिह्रियते । तदनुपपन्नम् । मुक्तत्वापरपर्यायस्यामृतत्वस्य मुक्तेऽपि सत्त्वादित्यत आह – **मर्त्यं चेति** ॥ विभक्तिविपरिणामेनाल्पमित्यनुवर्तते । अल्पं मुक्तजातम् । तदानीममृतमपि पूर्वं मर्त्यं च । तथाच नित्यमुक्तत्वं प्राग् लक्षणत्वेन विवक्षित्वा तस्यायमतिव्याप्तिपरिहार इति भावः । तर्हि रमायामतिव्याप्तिरित्यत आह – **अल्पाऽपि हीति** ॥ अमृता नित्यमुक्ता देवी श्रीरल्पाऽपि पूर्णा । भगवतोऽतिप्रियत्वात् । तथाच तस्यापि भूमकोटिनिक्षेपेण लक्ष्यत्वान्नातिव्याप्तिरिति भावः । ननु भूमप्रसादं विना नाल्पे सुखमस्तीत्ययुक्तम् । ''एवं विजानन्नात्मरतिः''इति भगवदपरोक्षज्ञानिनो मुक्तौ स्वेनैव सुखोक्तेरित्यतस्तद् यथावद्व्याचष्टे – **आत्मरतिरिति** ॥ भगवता रतिर्यस्यासौ भगवद्रतिः सः स्वराट् स्वतन्त्रः इत्यन्यथाप्रतीतिवारणायाऽदौ स्वशब्दार्थमाह– **स्व इति** ॥ स्वतन्त्रत्वादिति भावः । स्वराट्शब्दं व्याचष्टे– **स इति** ॥ स्वः परमात्मा राड् आज्ञापिता आज्ञापयिता यस्य सः स्वराट् । नन्विदं संसारिसाधारणं कथं फलमित्यत उक्तम्– **प्रत्यक्षत इति** ॥

## ततश्चायं खण्डस्याक्षरार्थः

भूम्नः सर्वगतत्वाख्यं पूर्णत्वं च लक्षणमाह– **स एवेति** ॥ सर्वगतत्वं सर्वसत्ताप्रदानायेति भावेनोक्तम्– **स एवेदं सर्वमिति** ॥ स एव स्वतन्त्रः सर्वं तदधीनमित्यर्थः । यद्वेदं सर्वमित्यस्य लिङ्गव्यत्यासेनायं सर्व इत्यङ्गीकृत्य स भूमा सर्वत्र सन्निहितत्वादयं पूर्णत्वात् सर्व इत्युच्यत इत्यर्थो वर्णनीयः । भूमाख्यस्यैव नारायणस्य रूपान्तरं वक्तुमारभते–

**अथेति** ॥ अथ भूमनिरूपणानन्तरम् अतस्तत्प्रसादादहङ्कारस्याहमित्याक्रियमाणस्य जीवस्थानिरुद्धस्य आदेशः उपदेशः क्रियत इत्यर्थः । कोऽसावहङ्कार इत्यतो भूमलक्षणमेव तल्लक्षणम् । तयोरभेदादिति भावेनाऽह– **अहमेवेति** ॥ १ ॥

तस्यैव वासुदेवाख्यं रूपान्तरमाह – **अथात इत्यादिना** ॥ तस्यापि तल्लक्षणमेव लक्षणमिति भावेनाऽह – **आत्मैवेति** ॥ नामादिप्राणान्तदेवोत्तमत्वेनोक्तविशेषणविशिष्टत्वेन च भगवज्ज्ञानिनः फलमाह – **स इति** ॥ स वा एषोऽधिकारी एवं शृण्वन्नेवं मन्वान एवं ध्यायन्नेवं पश्यन्मुक्तः सन्नात्मरतिरात्मना परमात्मना रतिरलंबुद्धिर्यस्य स तथोक्तः । आत्मना क्रीडत इत्यात्मक्रीडः । आत्मना स्वयं स्त्रीरूपः सन्मिथुनीभवतीत्यात्ममिथुनः । आत्मनैवाऽनन्दः स्वरूपभूतो यस्यासावात्मानन्दः । स मुक्तः स्वो भगवान् राड् आज्ञापयिता प्रत्यक्षतो भवतीति स्वराट् । तस्य मुक्तस्य सर्वेषु लोकेषु कामचारो भवति । इदं चतुर्मुखस्यैव मुख्यमन्येषां यथायोग्यमिति विवेकः । एवं भगवज्ज्ञानिनः फलमुक्त्वा विपरीतज्ञानिनो नोक्तं फलं भवतीत्याह – **अथ य इति** ॥ अतः पूर्वोक्तादन्यथा ये विदुस्तेऽन्यराजानः स्वाधमनियामकवन्तो भवन्ति । तथा क्षय्याः क्षेतुं शक्या लोकाः येषां ते क्षय्यलोकाः भवन्ति । न केवलमेतावत् । तमःप्राप्तिश्चेति ज्ञातव्यम् ॥ २ ॥

**॥ इति पञ्चविंशः खण्डः ॥**

## उपनिषत् (खण्डः-२६)

*मुक्तो भगवत्कार्याणि साक्षात् पश्यति*

**तस्य हवा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज**

आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामाऽत्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदꣳ सर्वमिति ॥ १ ॥

तदेष श्लोकः । न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वꣳ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति ॥ स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः ॥ शतं च दश चैकश्च सहस्राणि च विꣳशतिः ॥ आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ॥ स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति देवर्षये नारदाय भगवान् सनत्कुमारस्तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ॥ २ ॥
॥ २६ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि सप्तमोऽध्यायः ॥

## भाष्यम्

'आत्मतः प्राण आत्मत आशा' इत्यादि मुक्तः सन् प्राणादीनां सृष्ट्यादिकं पश्यतीत्यर्थः । 'सर्वं हि पश्यः[१] पश्यति' इति वाक्यशेषात् । पश्य इति द्रष्टा ।

'यदा पश्यः पश्यते रुग्मवर्णम्' इति श्रुतेः ।
'भूमोपासनयोग्यस्तु साक्षाद् ब्रह्मैव मुख्यतः ।
स तद्विद्याबलेनैव विष्णुना रतिमाप्नुयात् ॥

---

१. 'सर्वं ह पश्यः' ह

**तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनीभवेत् ।**
**तदानन्दः स एवास्य राजा भवति नापरः ।**
**पश्येच्च प्राणसृष्ट्याद्यं ये तदन्य उपासकाः ।**
**ते यथायोग्यमाप्स्यन्ति फलं मुक्तौ न संशयः ॥' इति परमतत्त्वे ।**

## पदार्थकौमुदी

### भाष्यार्थः

''तस्य हवा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राणः'' इत्यादिना मुक्तस्वरूपात् प्राणादिसृष्टिरुच्यत इत्यन्यथाप्रतीतिं निवारयत् तदनूद्य व्याचष्टे– **आत्मत इति** ॥ इत्यादिवाक्यस्येति शेषः । द्वितीयादिशब्देन स्थित्यादिसप्तकस्यापि सङ्ग्रहः । तस्य मुक्तस्य पश्यतः सत आत्मतः प्राणादिर्जायते [१] स्थीयत इत्याद्युक्तौ मुक्तस्तत् पश्यतीति लभ्यते । यथा चैत्रस्य पश्यतो मैत्र इदं करोतीत्युक्ते चैत्रस्तत् पश्यतीति लभ्यत इति भावः । स्वकृतव्याख्याने नियामकमाह– **सर्वं हीति** ॥ सर्वं भगवत्कर्तृकं प्राणसृष्ट्यादिकमित्यर्थः । अप्रतीतेः पश्यत इति पदं व्याचष्टे– **पश्य इतीति** ॥ पश्यतीति व्युत्पत्तेरिति भावः । पश्य इति पदेन द्रष्टा जीव उच्यत इत्यत्र श्रुतिमाह– **यदेति** ॥ भूमोपास्तौ यः कोऽपि अधिकारी तस्य सर्वस्याप्यात्मरतिरित्याद्युक्तं फलं भवतीति प्रतीतिवारणाय फलप्रकरणं प्रमाणेनैव व्याचष्टे– **भूमेति** ॥ ''आत्मक्रीडः'' इत्यस्यार्थः– **तेनेवैति** ॥ ''आत्ममिथुनः'' इत्यस्यार्थः– **मिथुनीभवेदिति** ॥ तेनैवेत्यनुवर्तते । चतुर्मुखस्य पुरुषस्य कथं परमपुरुषेण मिथुनीभाव इत्यत उक्तम्– **स्त्रीरूप इति** । तेनाऽनन्दो यस्यासौ तदानन्द इत्यात्मानन्द इत्यर्थः । स्वराडि-

---

१. 'स्थितः' इति मातृकायाम् । प.सं. ३०३.

त्यस्यार्थः – **स एवेति**। ''आत्मतः प्राणः'' इत्यादेरर्थमाह– **पश्येच्चेति**॥

## भाष्यम्

*अहङ्कारशब्दवाच्यो भगवाननिरुद्धः, न जीवः*

**न च 'भूमानं भगवो विजिज्ञासे'' इति पृष्टः सन् भूम्नो लक्षणं स एवाधस्तात् स उपरिष्टादित्यादिना पूर्णत्वं भगवतोऽन्यस्याहङ्कारस्योपदिशतीति युज्यते । न चाहङ्कारस्य पूर्णत्वमस्ति । नच मुख्ये पूर्णत्वे युज्यमाने उपचरितं युज्यते । न चाहङ्कारस्य काचित् प्रस्तुतिः । अथशब्दस्तु रूपान्तरापेक्षया युज्यते । अतःशब्दस्तत्प्रसादादिति ।**

## पदार्थकौमुदी

### भाष्यार्थः

''अथातोऽहङ्कारादेशः'' इति प्रकरणं जीवान्तस्थानिरुद्धपरमिति व्याख्यातम् । तत्परिशुद्धये ये केचिदत्राविद्याकार्याहङ्कारग्रन्थिर्निरूप्यत इति वदन्ति तद् दूषयति– **नचेति**॥ यद्यहङ्कारो भगवतोऽन्यः स्यात् तर्हि ''स एवाधस्तात्''इत्यादिना यद्भूम्नः पूर्णत्वं लक्षणमुक्तं तस्यैव ''अहमेवाधस्तात्''इत्यादिनाऽहङ्कारोपदेशो न युज्यते । अतिव्याप्तिप्रसङ्गात् । नच ''स एवाधस्तात्''इत्यादिकमप्यन्यस्यैव लक्षणमिति वाच्यम् । ''भूमानं भगवो विजिज्ञासे''इति प्रश्नोत्तरत्वादित्यर्थः । न केवलमतिव्याप्तेरिदं न युज्यते किन्त्वहङ्कारस्य भगवदन्यत्वेऽसम्भवि चेत्याह– **नचेति**॥ पूर्णत्वं सर्वगतत्वम् । न वयं मुख्यतोऽहङ्कारं पूर्णं ब्रूमः । येनासम्भवः स्यात् । किन्तु देहादिविषयत्वेन पूर्ण इत्युपचर्यत इत्यत आह– **नचेति** ॥ अहङ्कारस्य भगवद्रूपत्वाङ्गीकारेण मुख्ये पूर्णत्वे युज्यमाने तत्परित्यागेनोपचरितं पूर्णत्वमङ्गीकर्तुं न युज्यते । मुख्यार्थबाध

एवामुख्यस्य प्राप्तत्वादित्यर्थः । अथात इत्यस्याहङ्कारविषयकत्वे दूषणान्तरमाह – **नचेति** ॥ भूमाख्यस्य भगवतो निरूपणे तस्यैव रूपान्तरज्ञापनायाथात इत्युपदेश इत्यस्मन्मतेऽस्ति प्रस्तुतिः । नचाहङ्कारस्य काचित् प्रस्तुतिरस्ति । येनात्र तन्निरूपणं स्यादित्यर्थः ।

नन्वहङ्कारस्य पूर्वमप्रस्तुतत्वेऽपीदानीमेवाऽरम्भः क्रियते । पूर्वप्रकरणविच्छेदकस्य प्रकरणान्तरारम्भार्थस्याथातःशब्दस्य सत्त्वात् । नच पूर्वोत्तरप्रकरणयोर्भगवत्परत्वे तदुपपाद्यत इत्यत आह – **अथशब्द इति** ॥ भूमप्रकरणे नारायणाख्यं भगवद्रूपं निरूप्य तस्यैवानिरुद्धाख्यरूपान्तरापेक्षया प्रकरणान्तरारम्भार्थाथशब्दोपपत्तिरित्यर्थः । नन्वेवं तर्ह्यतःशब्दो व्यर्थः स्यात् । प्रकरणभेदस्याथशब्देनैव सिद्धेरित्यतस्तस्यार्थान्तरपरतयोपपत्तिमाह – **अत इति** ॥ इत्यर्थतया युज्यत इति सम्बन्धः । अशब्दः परमात्मवाची । ''अः इति ब्रह्म'' इति श्रुतेः । तस्मादिति पदार्थमभिप्रेत्य तत्प्रसादादिति तात्पर्यकथनम् ।

## भाष्यम्

*'आत्मरतिः स्वराट्' इत्यत्र आत्मस्वशब्दौ विष्णुवाचकौ*

**आत्मरतिः स्वराडित्यादि [१] । 'यो ब्रह्माणं विदधाति पूर्वम्' इति ब्रह्मण उत्पत्तिप्रसिद्धेः [२] स्वयम्भूरात्मभूरित्यादिष्वात्मशब्दः स्वयंशब्दश्च यथा विष्णुवाची तद्वदेवात्राप्यात्मशब्दो विष्णुवाच्येव ।**

## पदार्थकौमुदी

### भाष्यार्थः

---

१.'स्वराळित्यादि' ह २. 'इति ब्रह्मणि प्रसिद्धः' ह.

''आत्मरतिर्भगवद्रतिः । स्वो भगवान्'' इत्यादिना आत्मस्वशब्दौ भगवत्परतया व्याख्यातौ । तदुपपादयितुं तावदनुवदति– **आत्मरतिरिति** ॥ उपपादयति– **यो ब्रह्माणमिति** ॥ स्वयम्भूरात्मभूरित्यादिषु[१] विरिञ्चिवाचकप्रयोगेषु यथाऽऽत्मशब्दः स्वयंशब्दश्च विष्णुवाची तद्वदेवात्राप्यात्मरतिरित्यादावप्यात्मशब्दः स्वशब्दश्च विष्णुवाच्येव । नतु स्वात्मार्थः । नच तत्राप्यात्मस्वयंशब्दौ विष्णुपरौ कुत इति वाच्यम् । स्वजन्यत्वस्याऽत्माश्रयग्रस्ततया दूषितत्वात् । तस्मादात्मा च स्वयं च भगवांस्ततो भूतत्वादात्मभूः स्वयम्भूरित्येवार्थो वर्णनीयः । चतुर्मुखे विष्णुजातत्वस्य ''यो ब्रह्माणम्'' इत्यादिश्रुतिसिद्धत्वादित्यर्थः ।

## भाष्यम्

*मुक्तेभ्यः सकाशात् प्राणादिसृष्टिनिराकरणम्*

**नच मुक्तेभ्यः प्राणादिकमुत्पद्यते । 'जगद् व्यापारवर्जम्' इति वर्णितत्वाद्[२] भगवता । 'आत्मत एव[३] प्राणो जायते' इत्यवधारणान्न भगवतोऽन्यस्मात् प्राणो जायते ।**

**'आत्मेति मुख्यतो विष्णुस्तदन्ये तूपचारतः ।**
**तथैव स्व इति प्रोक्तस्तस्माद् ब्रह्माऽऽत्मभूः स्वभूः ॥'**

**इति स्कान्दे ।**

## पदार्थकौमुदी

### भाष्यार्थः

''आत्मतः प्राणः'' इत्यादिकं मुक्तः सन् प्राणादीनां सृष्ट्यादिकं

१. 'विरिञ्चवाचकप्रयोगेषु' इति मातृकायाम् । प.सं. ३०५. २. 'निर्णीतत्वात्' ह.
३. 'आत्मत एषः' ह.)

पश्यतीति व्याख्यातम् । तदयुक्तम् । मुक्तात्मनः प्राणादिकमुत्पद्यत इत्येवार्थाङ्गीकारे बाधकाभावादित्यत आह – **नचेति** ॥ कुतो नेत्यत आह– **जगद्व्यापारेति** ॥ बाधकान्तरमाह – **आत्मत एवेति** ॥ ''आत्मत एव प्राणो जायते'' इति षट्प्रश्नोपनिषदि आत्मत एवेत्यवधारणाद् भगवत एव प्राणो जायते न ततोऽन्यस्मात् । ततश्च ''आत्मतः प्राणः'' इत्यत्र न मुक्तजन्यत्वं प्राणस्यार्थ इत्यर्थः । नन्वेवमपि जीवात्मनि स्वात्मनि चाऽत्मस्वशब्दप्रयोगदर्शनादत्र तौ विष्णुपराविति कुतो निर्णय इत्यतो ''मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययः'' इति न्यायमनुसन्दधत् स्वयम्भूरित्या-द्युक्तार्थे प्रमाणमाह– **आत्मेति** ॥ तस्मात् ततो भूतत्वात् ।

## भाष्यम्

*'स एवेदं सर्वम्' इत्येतत् नाभेदपरम्*

**'इदं नामातिसामीप्यात् सर्वं[१] पूर्णगुणत्वतः ।**
**भूमाऽहमात्मेति हरिस्त्रिविधोऽपि हि सर्वदा ॥' इति विश्वनिर्णये ।**

## पदार्थकौमुदी

### भाष्यार्थः

''स एवेदं सर्वम्'' ''अहमेवेदं सर्वम्'' ''आत्मैवेदं सर्वम्''इति भूमाहङ्कारात्मनां सर्वात्मकत्वमुच्यत इति प्रतीतिवारणाय प्रमाणेनैव प्रकरणान्तरेण व्याचष्टे– **इदमिति** ॥ भूमाहमात्मेति त्रिविधोऽपि हरिः [२]सर्वदाऽपि सामीप्यादिदंनामेत्यादियोजना । एतेनाहमात्मानौ भूम्नो भिन्नावित्यपास्तम् ।

---

१. 'सर्वः' ह. २. 'सर्वदाऽतिसामीप्यात्' इति मातृकायाम् । प.सं. ३०५.

### भाष्यम्

*लिङ्गत्रयमपि भगवति युक्तम्*

'स्त्रीगुणाः पुङ्गुणाश्चैव नपुंसकगुणा अपि ।
यदधीना व्यत्ययः स्याल्लिङ्गानां तत्र सर्वशः ।
कः किं कं तत्सर्वमात्माऽदितिर्देवादयस्ततः ॥' इति लिङ्गनिर्णये ।

### पदार्थकौमुदी

### भाष्यार्थः

नन्विदं सर्वमित्यस्य सामीप्यपूर्णार्थत्वे "स एवायं सर्वः" इत्यादिप्रयोगः स्यादिति चेन्न । लिङ्गव्यत्ययोपपत्तेः । नचातिप्रसङ्गः । नियामकविशेषसद्भावादिति भावेन प्रमाणमाह– **स्त्रीगुणा इति** ॥ तत्र सर्वशः सर्वेषां लिङ्गानां व्यत्ययः स्यादिति योजना । लिङ्गव्यत्ययमेव विशदमाह– **क इति** ॥ देवादयो देवशब्दादयः ततो भगवति वर्तन्त इति योज्यम् ।

### भाष्यम्

*शास्त्रश्रवणशुद्धिरेवाऽहारशुद्धिः*

'गुरोर्विद्याहृतिर्या तु स आहार इति स्मृतः ।
तच्छुद्धौ ज्ञानशुद्धिः स्याज्ज्ञानशुद्धौ स्थिरा स्मृतिः ।
स्मृतिस्थैर्ये त्वापरोक्ष्यं हरेर्मोक्षस्ततो भवेत् ॥'

इति साधननिर्णये ॥ २६ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमच्छान्दोग्योपनिषद्भाष्ये सप्तमोऽध्यायः ॥

## पदार्थकौमुदी

### भाष्यार्थः

"आहारशुद्धौ सत्त्वशुद्धिः"इत्यादौ यदि "रस्याः स्निग्धाः" इत्यादिना निरूपित एवाऽहारो भवेत् तदाऽऽहारशुद्ध्याऽन्तः-करणशुद्ध्युपपत्तावपि तन्मात्रेण ध्यानापरपर्यायं स्मृतिस्थैर्यमुच्यमान-मनुपपन्नं स्यादिति भावेनाऽहारशब्दार्थं वदंस्तद्वाक्यं प्रमाणेनैव व्याचष्टे– **गुरोरिति** ॥ विद्याहृतिः शास्त्रश्रवणम् । ज्ञानशुद्धिः मनःशुद्धिः । अनेन सत्त्वशब्दो ज्ञानपर इत्युक्तं भवति । स्थिरा स्मृतिर्ध्यानम् ॥ षड्विंशः खण्डः ॥

### ॥ ततश्चायं खण्डस्याक्षरार्थः ॥

मुक्तस्यैव महिमान्तरमाह – **तस्येति** ॥ तस्य हवा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानतो मुक्तस्य पश्यतः सत आत्मतः प्राणो मुख्यप्राणो जायते स्थितः संह्रियते इत्यादि योज्यम् । तथाच भगव-त्कर्तृकं प्राणादीनां सर्जनादिकं मुक्तः पश्यतीत्यर्थः । आपो बाह्याः । आविर्भावतिरोभावावित्यन्तर्जलाभिप्रायेण मन्त्राः कर्मणीति नामापेक्षया नीचकक्ष्योक्तिः । यद्यपि "स्वाहा वै मन्त्रदेवता"इत्यन्यत्रोक्तम् । तथाऽपि तारतम्यप्रकरणात् तस्याश्च वाक्शब्देन गृहीतत्वादन्यत्र ग्राह्या । कर्मेति पुष्करः प्रोक्तः । न केवलमेतावत् । किन्त्वात्मत एवेदं सर्वं जगज्जननादि प्राप्नोति ॥ १ ॥

मुक्तस्य मरणाद्यभावं च श्लोकेन वदन्नुक्तार्थे तमाह– **तदिति** ॥ तत्तत्र । मुक्तो भगवत्कर्तृकजगत्सर्जनादि पश्यतीत्यादावेषः वक्ष्यमाणः श्लोको भवति । पश्यतीति पश्यो द्रष्टा । मुक्तो मृत्युरोगदुःखानि न पश्यति । पश्यो द्रष्टा सर्वं भगवत्कर्तृकं जगत्सर्जनादि पश्यति । सः

मुक्तः सर्वशः सर्वं समाप्नोति । इति तस्यैव स्वेच्छानिबन्धनमेकानेकरूपत्वं माहात्म्यमाह – **स इति** ॥ नवधा स्थित एव पुनरेकादशो भवति । शतं च दश चैकं चेत्येकः पक्षः । तेनैकधैकादश इत्युक्त्या न पुनरुक्तिः । प्रकृतमोक्षसाधनान्येव क्रमापन्नान्याह – **आहारेति** ॥ गुरोर्विद्याहरणस्य श्रवणस्य शुद्धौ सत्त्वशुद्धिर्ज्ञानशुद्धिः मननशुद्धिः । तच्छुद्धौ ध्रुवा स्मृतिर्ध्यानम् । स्मृतिलम्भे स्थिरस्मृतिलाभे त्वापरोक्ष्यं हरेरिति ग्राह्यम् । ततोऽविद्यादिसर्वग्रन्थीनां क्षिप्रं मोक्षो भवति । श्रुतिः स्वयमाह – **तस्मा इति** ॥ तस्मै मृदितकषायायोत्सारितदुःखाय देवर्षये भगवज्ज्ञानिने नारदाय तमसोऽज्ञानस्य पारमन्तम् इत्थं दर्शयति दर्शितवान् भगवान् सनत्कुमारः । कुमारस्येत्थं सामर्थ्यं कथमित्यत आह– **तमिति** ॥ द्विरुक्तिरवधारणार्था ॥ २ ॥

**॥ इति षड्विंश खण्डः ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य
श्रीमच्छान्दोग्योपनिषद्भाष्यस्य टीकायां
श्रीमद्वेदव्यासतीर्थपूज्यपादशिष्येण
वेदेशभिक्षुणा विरचितायां पदार्थकौमुद्यां सप्तमोऽध्यायः समाप्तः ॥

*****

## अथ अष्टमाध्यायस्य प्रथमः खण्डः

### उपनिषत्

*हृदयकमले भगवदुपासना*

**ॐ अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद् वाव विजिज्ञासितव्यमिति ॥१॥**

### भाष्यम्

'यदिदमस्मिन् ब्रह्मपुरे' इति ब्रह्मपुरशब्देन ब्रह्माख्यं पुरम् पूर्णत्वात् पुरमिति परं ब्रह्म, ब्रह्मणः पुरमिति शरीरं चोभयं विवक्षितम् ।

''प्राप्तोऽस्म्यवध्यं[१] ब्रह्मपुरं राजेव निवसाम्यहम्''

'अस्मिंश्चेदिदं[२] ब्रह्मपुरे सर्वं समाहितम्',

'[३] यदैतज्जराऽवाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युः'

इत्यादिवाक्यशेषाद्[४] भगवद्वचनाच्च ब्रह्मपुरशब्देन परं ब्रह्मोच्यत इत्यवसीयते ।

'यत्पुण्डरीकं पुरमध्यसंस्थम्', 'यदिदं शरीरं तदेतदाद्यं

---

१. 'प्राप्तोऽवध्यं' क. २. 'अस्मिंश्चेद्यदिदं' क. ३. 'यदेनं जरा' ह. । 'यदैनज्जरा' प्र. पाठः । ४. 'इति वाक्यशेषात्' क.

**देवसदनम्' इत्यादेः शरीरं च ।**

*हृत्कमलस्थभगवानेव हृत्कमलस्याप्याधार इति निरूपणम्*

**'यद् वै तद् ब्रह्मेतीदं वाव तद् योऽयं बहिर्धा पुरुषादाकाशः', 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति' इत्यादिना परब्रह्मण्येव[१] हृदयं स्थितम् ।**

**पदार्थकौमुदी**

**भाष्यार्थः**

**हृत्पुण्डरीकगाकाशगतमाकाशनामकम् ।**
**नानारूपं जाग्रदादिप्रवर्तकमहं भजे ॥ १ ॥**

पूर्वाध्यायेषु बाह्या एव ब्रह्मविद्या निरूपिताः । इदानीमान्तरीं सर्वमुमुक्षुसाधारणीं हृत्पुण्डरीकविद्यां निरूपयत्यनेनाध्यायेन । येषां बहिरुपासनेन मोक्षस्तेषामपि हृद्युपासनं किञ्चित् कार्यमेव । "यदिदमस्मिन् ब्रह्मपुरे" इत्यत्र ब्रह्मपुरशब्देन षष्ठीसमासाच्छरीरमात्रं विवक्षितमिति प्रतीतिनिरासाय तदनूद्य व्याचष्टे – **यदिदमिति** ॥ "एतत् सत्यं ब्रह्मपुरम्" इति वाक्यस्थब्रह्मपुरशब्दव्यावर्तनायानुवादः । तत्र परब्रह्मण एव विवक्षितत्वात् । ब्रह्मणः कथं पुरत्वं तदधिष्ठातुरभावादित्यत आह – **पूर्णत्वादिति** ॥ इत्युभयं ब्रह्मपुरशब्देन विवक्षितमित्यन्वयः । तन्त्रन्यायेन कर्मधारयषष्ठीतत्पुरुषयोराश्रयणादिति भावः । किमुभयविवक्षाज्ञापकमित्यतो ब्रह्मपुरशब्दस्य तावद् ब्रह्मविवक्षाज्ञापकौ समाख्योपसंहारावाह– **प्राप्त इत्यादिना** ॥ तत्र निवसामि निवसाम्यह-

१. 'परब्रह्मण्येव च' ह.

मिति भगवद्वचनाच्चेति योज्यम् । भगवद्वचनात् तत्समाख्यानादित्यर्थः । समाख्यारूपभगवद्वाचनेऽपि ब्रह्मपुरशब्दस्यावध्यत्वलिङ्गबलात् परब्रह्म-परत्वमिति द्रष्टव्यम् । वाक्यशेषोक्तसर्वाश्रयत्वादिलिङ्गानामन्यत्रा-सम्भवाद् ब्रह्मपुरशब्देन ब्रह्मोच्यत इत्यवसीयत इत्यर्थः ।

शरीरं च ब्रह्मपुरशब्देन विवक्षितमित्येतत् समाख्याभ्यामुपपादयति– **यत्पुण्डरीकमिति** ॥ ''यत्पुण्डरीकम्''इति तैत्तिरीयवाक्ये पुण्डरीका-श्रयत्वेनोक्तं पुरं तावच्छरीरमिति प्रसिद्धम् । तथाच तत्समाख्यानादत्रापि ''ब्रह्मपुरे दहरं पुण्डरीकम्''इति पुण्डरीकाश्रयत्वेन श्रूयमाणं ब्रह्मपुरं शरीरमित्यवसीयते । ''यदिदम्'' इति श्रुत्यन्तरे शरीरस्य देवसदन-त्वोक्त्या ब्रह्मपुरत्वं लब्धम् । तथाच तत्समाख्यानादत्रापि ब्रह्मपुरशब्देन शरीरमुच्यत इत्यवसीयत इति भावः ।

ननु ब्रह्मपुरशब्देन भगवानपि चेद् विवक्षितस्तर्हि तस्य ''अस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म''इत्युक्तं हृत्पुण्डरीकाश्रयत्वं कथम् ? तस्य शरीरधर्मत्वात् । ब्रह्मणश्च हृत्पुण्डरीकान्तर्गतस्य तदाश्रयत्वायोगादि-त्यतो भगवतोऽपि हृत्पुण्डरीकाश्रयत्वमुपपादयति – **यद्वै तदिति** ॥ पुरुषाज्जीवाद् बहिर्धा देहव्यापी योऽयमासमन्तात् काशत इत्याकाश-स्तदिदं सर्वगं ब्रह्मेति ब्रह्मणः शरीरव्यापित्वमुच्यते । तथाच शरीर-व्यापिभगवद्रूपविशेषस्य हृत्पुण्डरीकाश्रयत्वमुपपद्यत एव । यस्त्वित्यनेन च परब्रह्मणः सर्वाश्रयत्वोक्त्या सर्वान्तःपातिहृदयं हृत्पुण्डरीकमपि तत्र स्थितं तदाश्रितमिति सिद्धमेवेति भावः ।

### उपनिषत्

**तं चेद् ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म**

दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद् वाव विजिज्ञासितव्यमिति स ब्रूयात् ॥ २ ॥

यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्र-मसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति ॥ ३ ॥

## भाष्यम्

*हृदयस्थदहराकाशस्य परब्रह्मत्वाभावनिरूपणम्*

'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्',
'दहरोऽस्मिन्नन्तर आकाशः किं तदत्र विद्यते'
इत्यत्राऽऽकाशशब्देन[१] भूताकाशो विवक्षितः ।

किं तदत्र विद्यत इत्यस्यायं परिहारः – अस्मिन् भूताकाशे परब्रह्माख्य आकाशो विद्यते । आ समन्तात् काशनादाकाशः । आ समन्तात् कमश्नातीति वा । 'अस्मिन् कामाः समाहिताः' इति वाक्यशेषात् । आ समन्तात् कामानश्नातीति वा । स च यावान् बहिः परमात्मा व्याप्तोऽस्ति तावानेव विद्यते गुणतः । पूर्णगुणत्वात् । अल्पपरिमाणस्यापि महत्परिमाणत्वं च युज्यते । अचिन्त्यशक्तित्वात् ।

'यस्मिन् विरुद्धगतयोऽप्यनिशं[२] पतन्ति
विद्यादयो विविधशक्तय आनुपूर्व्या' इति वचनात् ।

---

१. 'इत्याकाशशब्देन' ह. २. 'ह्यनिशं' ह

आनुपूर्व्येति श्रुतिप्रमाणादित्यर्थः ।

'आनुपूर्वी श्रुतिर्वेद आम्नायश्चेति कथ्यते' इत्यभिधानात् ।

अन्यथाऽनिशमित्युक्तिविरोधात् ।

'एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा' 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्याः' इति हृदयस्थस्यैवाणुत्वमहत्त्वोक्तेश्च ।

'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ।

चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीताः' इति च श्रुतिः ।

'सुविरुद्धा अश्रुताश्च गुणाः सन्त्येव सर्वशः ।

दोषाः केऽपि[१] न सन्त्येव श्रुता अपि तु सर्वशः' इति गारुडे ।

*दहराकाशस्थमहाकाशस्य परब्रह्मत्वकथनम्*

किं तदत्र विद्यत इति पृष्टत्वाद्धृद्गत आकाशो हृदयशब्देनोच्यते । हृद्ययनात् । तस्मिन् हृदयाख्य आकाशे परब्रह्माख्य अकाशो विद्यत इत्यर्थः । अन्यथा कथं भूताकाशस्य दहरस्य बहिराकाशसमत्वम् ? 'दहरोऽस्मिन्नन्तराकाशः' इति पूर्वोक्ताकाशस्य दहरत्वमुक्तम् । उत्तरस्य तु यावान् वा अयमाकाश इत्यनन्तपरिमाणत्वम् । अतो ब्रह्माकाश एवोत्तरः । [२]पूर्वोक्तस्याभूताकाशत्वे 'तस्मिन् यदन्तस्तदन्वेष्टव्यं तद् वाव विजिज्ञासितव्यं', 'तत्रापि दहरं[३] गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्', 'सहस्रशीर्षꣳदेवम्'

---

१. 'दोषा अपि' ह. २. 'पूर्वोक्ताकाशस्य' इति क्वचित् । ३. 'दहम्' ह.

इत्यादि कथं युज्यते[१] ? नहि भगवदन्तःस्थितमेवान्यत्किञ्चिद् विजिज्ञास्यम् । तद् वावेत्यवधारणाच्च । उत्तरस्यापरब्रह्मत्वे च सर्वाधारत्वं 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा' इत्यादि न युज्यते ।

*परब्रह्मस्थप्रपञ्चो न जिज्ञासार्हः*

'किं तदत्र विद्यते यदन्वेष्टव्यं यद् वाव विजिज्ञासितव्यम्' इत्यस्य 'य एषोऽन्तर्हृदय आकाशः' इत्येव परिहारः । नतु 'उभे अस्मिन् द्यावापृथिवी' इत्यादि । तत्तु विजिज्ञासितव्यत्वे हेतुत्वेन सामर्थ्यकथनमेव । नहि द्यावापृथिव्यादेरेव विजिज्ञास्यत्वम् ।

'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चत'[२] इति हि श्रुतिः ।

*मुक्तामुक्तसकलदेवानां भगवानेवाऽश्रयः*

उभे अस्मिन् द्यावापृथिवीत्याद्युभशब्दो मुक्तामुक्तराशिव्यपेक्षया । 'यच्चास्येहास्ति यच्च नास्ति' इति वाक्यशेषात् । अस्येति संसारिणः । नहि संसारिणो मुक्ता उपकारकाः । यद्यस्य नोपकारकं तत्तस्य नास्तीत्युच्यतेऽन्यस्य सत्त्वेऽपि । यथा वित्तादि ।

## पदार्थकौमुदी

### भाष्यार्थः

''दहरोऽस्मिन्नन्तराकाशः'' इति वादानुवादयोराकाशशब्देन परं

---

१. 'युज्येत' ह. २. 'मुञ्चत' ह.

ब्रह्म विवक्षितमित्यसत् । "तस्मिन् यदन्तः" "किं तदत्र विद्यते" इत्युत्तरवाक्यविरोधात् । नहि ब्रह्मस्थमन्यदन्वेष्टव्यम् । किन्तु ब्रह्मैव । नच किं तदत्र विद्यत इत्यस्य न किञ्चन विद्यत इत्यभिप्रायः । यदि नाम बदरमात्रं किमपि [१] तत्र विद्यते [२] तर्हि किं तस्यान्वेषणेन फलं स्यादतो यत् तत्रान्वेष्टव्यं विजिज्ञासितव्यं वा न तेन प्रयोजनमित्याक्षेपार्थत्वाददोष इति वाच्यम् । तथाऽपि "तस्मिन् यदन्तः"इति वाक्यविरोधापरिहारात् । आक्षेपार्थत्वे यदि नाम बदरमात्रं विद्यत इत्यध्याहारप्रसङ्गात् प्रश्नार्थत्वमेव वक्तव्यमतः कथमेतदित्यतस्तदनूद्यार्थमाह– **दहरोऽस्मिन्निति** ॥

नन्वस्त्वाकाशशब्देन भूताकाशो विवक्षित इति तथाऽपि किं भूताकाशे विद्यत इति प्रश्नस्य ब्रह्म विद्यत इति परिहारं विना "यावान् वा अयमाकाशः" इत्यस्यान्वयाभाव इत्याशङ्कां परिहरति – **किमिति** ॥ अयमित्युक्तमेव विवृण्वन् "यावान् वा [३]अयम्"इति वाक्यं यथा प्रश्नोत्तरत्वेनान्वितं स्यात् तथा तत्तात्पर्यमाह – **अस्मिन्निति** ॥ अन्तर्हृदय इत्यस्यार्थः – **अस्मिन् भूताकाश इति** । "यावान् वा अयमाकाशः" इत्युक्ताकाशशब्दव्याख्यानम् – **परब्रह्माख्य इति** ॥ परब्रह्माख्याकाशे आकाशशब्दं त्रेधा निर्वक्ति – **आ समन्तादित्यादिना** ॥ कं सुखम् । "अस्मिन् कामाः" इत्युत्तरत्र सम्बध्यते ।

ननूक्तयोगेनाप्ययमाकाश इत्युक्ताकाशशब्दस्य न परब्रह्मपरत्वं युक्तम् । तथा सति तस्य "यावान् वा अयमाकाशस्तावानेषः" इति हृद्गतमाकाशस्थेनाभेदोक्त्ययोगात् । नहि हृद्गताकाशस्थस्य परब्रह्मणोऽल्पपरिमाणस्य बाह्येन व्याप्तेनाऽकाशनाम्नाऽभेदो युज्यत इत्याशङ्कां

१.'तत्र' इति पदं मातृकायां न दृश्यते । प.सं.३११.।२.'तर्हि' इति पदं मातृकायां न दृश्यते । प.सं. ३११. ३. 'अयं' इति पदं मातृकायां न दृश्यते । प.सं. ३११ ।

''यावान् वा अयमाकाशः'' इति वाक्यार्थं विशदयन् परिहरति– **स चेत्यादिना** ॥ पूर्णगुणत्वादुभयोरिति शेषः । विरुद्धपरिणामयोरपि गुणत एवैक्यमितीदमभ्युपेत्यैवोक्तम् । वस्तुतोऽल्पपरिमाणस्यापि महत्परिमाणमस्त्येवेत्युपपादयितुमाह– **अल्पपरिमाणस्यापीति** ॥ युज्यते चेत्यन्वयः । विरुद्धं कथं युज्यत इत्यत आह – **अचिन्त्येति** ॥

ननु यत् प्रमाणप्रसिद्धं लोकदृष्ट्या विरुद्धं च तदेवाचिन्त्यशक्त्योपपाद्यत इति हि सिद्धान्तः । अन्यथाऽतिप्रसङ्गात् । नचेश्वरस्य युगपदणुत्वं महत्त्वं च प्रामाणिकम् । येनाचिन्त्यशक्त्योपपादनीयं स्यादित्यतस्तत्र प्रमाणमप्याह – **यस्मिन्निति** ॥ ननु यस्मिन् विरुद्धगतयो विरुद्धाश्रया अपि धर्माः । आनुपूर्व्या कालानुक्रमेण पतन्ति वर्तन्त इति कालभेदेनाणुत्वमहत्त्वादिविरुद्धधर्मसमावेशः कथ्यते । नचेदमलौकिकं येनाचिन्त्यशक्त्योपपाद्यं स्यादित्यत आनुपूर्व्येति पदमनूद्य व्याचष्टे – **आनुपूर्व्येति** ॥ नन्वानुपूर्वी श्रुतिरिति कुत इत्यतस्तत्राभिधानमाह – **आनुपूर्वीति** ॥ ननु भवत्वानुपूर्वी श्रुतिः । अत्र सा विवक्षितेति कुतः ? अनुक्रम एव किं न स्यादित्यतस्तत्र बाधकमाह – **अन्यथेति** ॥ आनुपूर्वीशब्दस्य कालानुक्रमार्थत्वाङ्गीकारे ''अनिशं पतन्ति'' इत्युक्तिविरोधः स्यात् । अतोऽयं न तदर्थः । किन्तूक्तार्थ एवेत्यर्थः ।

ततश्चायं श्लोकार्थः ॥ यस्मिन् विद्यादयो विविधशक्तयः पतन्ति वर्तन्ते । न केवलमेतावत् । किन्तु विरुद्धगतयोऽप्यन्यत्र विभिन्नाश्रया अप्यणुत्वमहत्त्वादयो वर्तन्ते । किं कालभेदेन ? नेत्याह– **अनिशमिति** ॥ कुतः ? आनुपूर्व्या श्रुत्येत्यर्थः । तद् ब्रह्माहं प्रपद्य [१]इत्युत्तरार्धेनान्वयः । भगवति युगपदणुत्वमहत्त्वप्रतिपादिकां स्पष्टां श्रुतिं चाऽह – **एष इति** ॥

---

१. 'इत्युत्तरेणान्वयः' इति मातृकायाम् । प.सं. ३१२ ।

ननु यदि श्रुतिबलाद् युगपदणुत्वमहत्त्वादयो विरुद्धा अपि धर्मा भगवति वर्तन्त इत्यङ्गीक्रियते तदा दोषा अपि तत्र कुतो नाङ्गीकार्यास्तेषामपि ''जनितोऽत विष्णोः'' इत्यादौ श्रुतत्वादित्याशङ्कां श्रुतिस्मृतिभ्यां परिहरति – **गुणा इति** ॥ अश्रुता अपि सन्ति । अश्रुता अपि रमादिर्चिन्त्यास्तदचिन्त्याश्च । दोषाः श्रुता अपि न सन्ति । हि यस्मादज्ञैः श्रुतितात्पर्यज्ञानशून्यैस्तथा प्रतीता इत्यर्थः । अनेन लोकदृष्ट्या विरुद्धा अपि धर्मा भगवति सन्तीत्येतदपि प्रमाणान्तरेणोपपादितमिति द्रष्टव्यम् ।

ननु तथाऽप्यन्तर्हृदय इत्यस्यास्मिन् भूताकाश इति व्याख्यानं कथम् ? तद्बोधकपदाभावादित्यत आह– **किमिति** ॥ नात्र भूताकाश-बोधकपदाभावः । हृदयपदस्यैव सत्त्वात् । नचान्तःकरणमेव हृदयं किं न स्यादिति वाच्यम् । किं तदत्र विद्यत इति हृद्गताकाशस्थपरब्रह्मलक्षणप्रश्ने ''यावान् वा'' इत्यादिना तद्गतस्यैव लक्षणं वक्तव्यम् । नत्वन्तःकरण-रूपहृदयगतस्य । वैयधिकरण्यप्रसङ्गात् । अतो हृदयपदं तत्स्थाकाशपर-मेवेति भावः । तर्हि लक्षणाप्रसङ्ग इत्यत आह – **हृद्ययनादिति** ॥ अत एवोच्यत इत्युक्तम् । एवं पदार्थमुपपाद्येदानीं वाक्यार्थं पूर्वोक्तमेव स्फुटमाह – **तस्मिन्निति** ॥ ननु हृदयाख्याकाशान्तः परब्रह्माख्याकाशो विद्यत इति कस्मादङ्गीकार्यम् । ''अन्तर्हृदय आकाशः'' इत्याकाशपदं भूताकाशपरमेव किं न स्यात् । तस्य तत्र रूढत्वादित्याशङ्कायां तत्र बाधकमाह – **अन्यथेति** ॥ यदि रूढिबलाद् ''अन्तर्हृदय आकाशः'' इत्याकाशशब्दस्य भूताकाशमेवार्थस्तर्हि ''यावान् वा अयमाकाश-स्तावानेषः''इत्युक्तं हृद्गताकाशस्य बहिराकाशेन परिमाणसाम्यमयुक्तं स्यात् । अस्य दहरत्वात् । तस्य व्याप्तत्वात् । अत उक्तरीत्यो-

भयाकाशशब्दं ब्रह्मैव । तत्र च युगपदणुत्वमहत्त्वसमावेश उपपादित एवेति भावः ।

नन्विदमयुक्तम् । "दहरोऽस्मिन्नन्तराकाशः" इत्याकाशशब्देन भूताकाशो विवक्षित इत्युक्तत्वेन [१]तस्मिन् तच्छब्दवाच्यतया बुद्धिस्थे "यावान् वा" इत्यादावप्याकाशशब्देन तस्यैव ग्राह्यत्वात् । बाधकं विना एकस्मिन् प्रकरणे श्रुतस्य शब्दस्यार्थद्वयकल्पनायोगादित्यतस्तत्र बाधकमाह– **दहर इति** ।। दहरत्वमुक्तमतो भूताकाश एव स इति शेषः । एवं तर्हि पूर्वोक्ताकाशोऽपि ब्रह्माकाश एव किं न स्यात् । दहरत्वस्य तस्मिन्नपि सम्भवात् । किं वृथैकप्रकरणगताकाशशब्दार्थभेदकथनेनेत्यत आह– **पूर्वोक्तस्येति** ।। "दहरोऽस्मिन्नन्तराकाशः"इति पूर्वोक्तस्याऽकाशशब्दस्य भूताकाशार्थत्वमनङ्गीकृत्य परब्रह्मार्थत्वाङ्गीकारे "तस्मिन्" इत्यादिवाक्यशेषः । "दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि" इति समाख्यावाक्यं कथं युज्यते ? न कथमपीत्यर्थः । तत्रापि हृत्पुण्डरीकेऽपि दहरं गगनं तस्मिन् यदन्तर्विशोकं ब्रह्म तदुपासितव्यमिति समाख्यावाक्यार्थः । समाख्यावाक्येऽपि "तस्मिन् यदन्तः" इत्युक्तं ब्रह्मेति कुत इति चेत् । विशोकत्वलिङ्गात् । अन्यत्र स्पष्टं परब्रह्मलिङ्गमाह– **सहस्रेति** ।। आदिपदेन विश्वाक्षमित्यादिलिङ्गानां नारायणश्रुतेश्च सङ्ग्रहः । तस्मिन्निति वाक्यशेषो नोपपद्यत इत्युक्तमुपपादयति– **नहीति** ।। यदि "दहरोऽस्मिन्नन्तराकाशः" इत्यत्राऽकाशं ब्रह्म विवक्षितं स्यात् तर्हि "तस्मिन् यदन्तः"इत्युक्तत्वेन भगवदन्तःस्थितमेवान्यत् किञ्चिद् [२] विजिज्ञास्यं स्यात् । नच तत्

१. 'तस्मिन् च्छब्दवाच्यतया' इति मुद्रितपुस्तके । २. 'विजिज्ञासितव्यम्' इति मातृकायाम् । प.सं. ३१४.

सम्भवति । ''तमेवैकं जानथ'' इत्यादिश्रुतिविरोधादिति भावः । बाधकान्तरमप्याह– **तद्वावेति** ॥

यद्यत्र भगवदतिरिक्तं किञ्चिद् विजिज्ञास्यं विवक्षितं स्यात् तदा ''तद्वाव विजिज्ञासितव्यम्''इत्यत्र तद्वावेत्यन्ययोगव्यवच्छेदपरावधारणमनुपपन्नं स्यात् । भगवत एव विजिज्ञास्यस्य सत्त्वादित्यर्थः । एवं पूर्वोक्ताकाशस्य भूताकाशत्वं समर्थ्योत्तराकाशस्याब्रह्मत्वे बाधकान्तरमाह– **उत्तरस्येति** ॥

ननूत्तरस्य सर्वाधारत्वादिलिङ्गबलात् परब्रह्मत्वे पूर्वाकाशस्यापि परब्रह्मत्वमेवास्तु । न भूताकाशत्वम् । नन्वेवं ''तस्मिन्यदन्तः''इति तदन्तस्थमुपास्यमित्युक्ते किं तत्रस्थमिति प्रश्ने ''तावानेषोऽन्तर्हृदय आकाशः'' इति परिहारासङ्गतिः । नहि ब्रह्मस्थं ब्रह्मैवोपास्यमिति सम्भवतीति वाच्यम् । ''अन्तर्हृदय आकाशः'' इत्यस्य परिहारत्वासम्मतेः । ''उभे अस्मिन् द्यावापृथिवी'' इत्यादेरेव परिहारत्वात् । तथाहि । किं तत्रस्थमिति प्रश्ने ''यावान् वा अयमाकाशः'' इति प्रागाधारत्वेनोक्ताकाशमेव द्यावापृथिव्याद्याश्रयत्वयोग्यत्वाय बाह्याकाशतुल्यतया विशिष्य ''उभे अस्मिन्''इत्यादि परिहारसंश्लेषात् । तथाच तदन्तर्गतं व्यादिकमेवोपास्यमिति परिहाराभिप्रायः । नहि भगवदन्तस्थितमेवान्यत् किञ्चिद् विजिज्ञासितव्यमित्युक्तमिति वाच्यम् । प्रतिज्ञामात्रत्वात् । अन्यस्यैव जिज्ञास्यत्वे बाधकाभावेनावधारणविरोधाभावाच्चेत्यत आह– **किं तदत्र विद्यत इति** ॥

तर्हि तद् व्यर्थं स्यादित्यत आह– **तत्त्विति** ॥ ननु कुत ''उभे अस्मिन्'' इत्यादेः परिहारत्वाभाव इति चेत् । तथा सति

द्यावापृथिव्यादीनामेव विजिज्ञास्यत्वमित्युक्तं स्यात् । नच तदस्तीत्याह– **नहीति** ॥ कुतो नेत्यत आह– **तमेवेति** ॥ अनेनावधारणविरोधोऽप्युपपादितः ।

ननु "उभे अस्मिन् द्यावापृथिवी", "उभावग्निश्च वायुश्च सूर्याचन्द्रमसा उभौ"इत्यत्रोभशब्दो व्यर्थः । द्वित्वस्य "द्यावापृथिवी" इत्यादिनैव ज्ञापितत्वादित्यत आह – **उभ इति** ॥ इत्यादौ विद्यमान उभशब्द इत्यर्थः । अनेन द्यावापृथिवीइत्यादिशब्दाश्चेतनपरा इत्युक्तं भवति । नन्वमुक्तसर्वाधारत्वमेवात्रोच्यते । नतु मुक्ताधारत्वम् । तज्ज्ञापकाभावात् । ततश्चोभशब्दवैयर्थ्यं तदवस्थमित्यत आह– **यच्चास्येति** ॥ ननु "यच्चास्य" इति वाक्यशेषस्यापि मुक्तामुक्तपरता कुतः ? इत्यतस्तद् दर्शयितुमस्येत्यस्य तावदर्थमाह – **अस्येतीति** ॥ नन्वेवं सत्यस्य संसारिणो यदस्तीत्यमुक्तौ यच्च नास्तीति मुक्तः कथ्यत इत्यायातम् । नच तत् सम्भवति । मुक्तानामपि संसारिणं प्रत्येव सत्त्वेन नास्तीति वचनायोगादित्यत आह – **नहीति** ॥ तथाच मुक्तराशिस्तदनुपकारित्वात् तं प्रति नास्तीत्युच्यत इति भावः । सतोऽप्यनुपकारित्वेनासत्त्वव्यपदेशः कुत्र दृष्ट इत्यत आह – **यद्यस्येति** ॥

## उपनिषत्

*अनित्यहृदयस्थोऽपि भगवान् नित्यः*

**तं चेद् ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैतज्जरा[१]ऽवाप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥**

१. 'यदेनं जरा' ह. 'यदैनज्जरा' प्र. पाठः।

**स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥**

## भाष्यम्

**यथायोग्यमेवैनं भगवन्तं प्रजा मुक्ता अन्वाविशन्ति तच्छासनानुसारेण यं यं कामं कामयते[१] तं तमस्मादेवोपजीवन्ति ।**

## पदार्थकौमुदी

### भाष्यार्थः

यथा ह्येवेह प्रजा अन्वाविशन्तीत्येतत् । यथाशब्दस्योपमार्थत्वप्रतीतिं वारयन् व्याचष्टे– **यथायोग्यमिति** ॥ अमुक्तपरतावारणाय प्रजाशब्दमनूद्य व्याचष्टे– **प्रजा इति** ॥ इहेत्यस्यार्थः– **एनं भगवन्तमिति** । अन्वाविशन्तीत्यस्य कर्मसापेक्षत्वादेवं व्याख्यातम् । ''यथानुशासनम्'' इत्यत्र यथाशब्दस्यार्थान्तरपरत्वेऽसङ्गतिमालोच्यानतिक्रमार्थत्वमभिप्रेत्य तद् व्याचष्टे– **तच्छासनेति** ॥ ''यं यमन्तमभिकामाः'' इत्यादिकं ''तं तमेवोपजीवन्ति''इति मुक्तानां तत्र स्वातन्त्र्यप्रतीतिं वारयन् व्याचष्टे– **यं यमित्यादिना** ॥ कामं काम्यत इति [२]कामोऽर्थादिस्तम् । अस्मादेवेत्यनेन यथाऽनुशासनमित्येतदत्राप्यनुवर्तनीयमित्युक्तं भवति ।

## उपनिषत्

**तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः**

---

१. 'यं यं कामयते' ह्. २. 'कामोऽन्तादिस्तं' इति मातृकायां प.सं. ३१५ ।

क्षीयते तद्य इहाऽत्मानमननुविद्य व्रजन्त्येताꣳश्च सत्यान् कामाꣳस्तेषाꣳ सर्वेषु लोकेष्वकामचारो भवत्यथ य इहाऽत्मानमनुविद्य व्रजन्त्येताꣳश्च सत्यान् कामाꣳस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥ १ ॥

भाष्यम्

तदविदुषां पुण्यानि क्षयिष्णुफलान्येव भवन्ति । एतांश्च सत्यान् कामान् भगवदीयान् ।

"बृहत्त्वात् पूर्णकामत्वाद् विष्णुर्ब्रह्मपुराभिधः ।
तस्मिंस्तस्य पुरं देहस्तस्मिन् हृदयमास्थितम् ॥
हृदयाकाशगो विष्णुस्तस्मिन् सर्वमिदं स्थितम् ।
स सत्यकामो भगवान् यदिष्टं तस्य तद् भवेत् ॥
[१]तस्मिन् समाहिताः कामाः सत्याः पुंसामपि ध्रुवम् ।
तस्यैव ह्यनुसारेण सत्यत्वं नान्यथा क्वचित् ॥ खण्डः- १ ॥

पदार्थकौमुदी

भाष्यार्थः

"तद्यथेह कर्मजितो लोकः" इत्यादि "क्षीयत" इत्यन्तं वाक्यमपि प्रकृतमुक्तपरमेवेति प्रतीतिं वारयन् व्याचष्टे– **तदविदुषामिति** ॥ "तदविदुषाम्"इत्यनेनेदं वाक्यं भगवत्परमित्युपपादितमिति ज्ञातव्यम् । "यं यमन्तमभिकामाः भवन्ति"इत्युक्ता एव सत्याः कामा एतांश्च सत्यान् कामानिति परामृश्यन्त इत्यसत् । भगवदितरसत्यकामज्ञानाज्ञानयोर्वक्ष्य-

१. 'अस्मिन्' ह.

माणफलान्वयव्यतिरेकाप्रयोजकत्वात् । अतः सत्यकामा इत्याद्युक्ता भगवद्धर्मा एवात्र परामृश्यन्त इत्याशयेनाऽह – **एतानिति** ॥ श्रुतौ भाष्ये च बहुवचनमाद्यर्थे । तेन पूर्वोक्तसकलधर्मपरामर्शसिद्धिः ।

एवं परब्रह्मपरतया शरीरपरतया च ब्रह्मपुरशब्दं सोपपत्तिकं व्याख्याय पुनस्तदेव दृढीकुर्वन्नादित आरभ्य खण्डषट्कमप्रतिपत्तिविप्रतिपत्ति-निरासाय प्रमाणेन व्याचष्टे– **बृहत्त्वादित्यादिना** ॥ तस्मिन् हृदय-मास्थितमिति सम्बन्धः । उक्तरीत्या शरीरव्यापिभगवन्मूर्तिविशेषस्य हृदयाश्रयत्वं ज्ञातव्यम् । तस्य विष्णोः पुरं देहस्तस्मिन् हृदयम-ास्थितमिति ब्रह्मपुरशब्दस्य व्याख्यानान्तरम् । ''हृदयाकाशगो विष्णुः'' इत्यनेन ''दहरोऽस्मिन्नन्तराकाशः'' इत्यारभ्य ''तावानेषोऽन्तर्हृदय आकाशः'' इत्यन्तं व्याख्यातम् । विष्णुर्व्याप्तः । ''उभे अस्मिन् द्यावापृथिवी'' इत्यादिकं व्याचष्टे– **तस्मिन्निति** ॥ ''सत्यकामः'' इत्येतदनूद्येच्छासत्यत्वस्य सर्वसाधारण्याद् व्याचष्टे– **स इत्यादिना** ॥ एतत्साध्यतयाऽस्मिन् समाहिताः कामाः इत्येतद् योज्यमित्याशयेनाऽह– **तस्मिन्निति** ॥ अत एव व्यत्यासेन व्याख्यातम् । तेन यतः सत्य-कामोऽतोऽस्मिन् सर्वे कामाः समाहिता इति योजनोक्ता भवति । ''यं यमन्तमभिकामा भवन्ति''इत्यादि व्याचष्टे– **सत्या इति** ॥ पुंसां मुक्तानां ध्रुवमव्यभिचारेण । यदि मुक्तानामपि कामाः सत्यास्तदा को विशेषो भगवत इत्यत आह– **तस्यैवेति** ॥ भगवत्कामस्यैव । अनेन ''यथानु-शासनम्'' इत्येतदत्राप्यनुवर्तनीयमित्युक्तं भवति ॥ इति प्रथमः खण्डः ॥१॥

**ततश्चायं खण्डार्थः**

अथेत्यारम्भे । अस्मिन् ब्रह्मपुरे ब्रह्मणः पुरे शरीरे यत् परं ब्रह्म

शरीरव्यापि अस्मिन् ब्रह्मपुरे परे ब्रह्मणि स्थितम् इदं बुद्धिसन्निहितम् । यद् दहरमल्पं पुण्डरीकं हृत्पुण्डरीकरूपं वेश्मास्मिन्नन्तः दहरः आकाशः भूताकाशोऽस्ति । किं तत इत्यत आह – **तस्मिन्निति** ।। न घटादिवदस्यान्वेषणम् अप्रत्यक्षत्वादित्यतस्तदेव विवृणोति– **तद्वावेति** ।। वावेत्यवधारणे । तदेव विजिज्ञासितव्यं मीमांसितव्यम् । इति गुरुणोक्त इति शेषः ।। १ ।।

तं गुरुं प्रति यदि शिष्या ब्रूयुः पृच्छेयुः । यदिदमित्याद्युक्तानुवादः । यद्वाव विजिज्ञासितव्यम् । तदत्र हृत्पद्मगताकाशे किं विद्यते ? ब्रह्म च न सम्भवति । तस्य व्याप्तस्य दहराकाशस्थत्वायोगादिति भावः । इति ब्रूयुरिति सम्बन्धः ।। २ ।।

तदा स गुरुर्ब्रूयात् । किमिति ? अन्तः शरीरान्तः हृदये हृद्ययत इति हृदयशब्दवाच्ये हृत्पद्मगते भूताकाशे आकाशः आकाशाख्यः परमात्माऽस्ति । एषः यावान् अयं बहिर्विद्यमानः आकाशः आकाशाख्यः परमात्मा तावान् वै गुणतः परिमाणतश्च तावानेव । अनेन हृत्पद्मगतं ब्रह्म तदण्वपि व्याप्तम् । लोकदृष्ट्या विरुद्धयुगपदणुत्वमहत्त्वादीनां तस्मिन् समावेशस्य प्रमितत्वादित्युक्तं भवति । ननु तथाऽप्यन्यपरित्यागेनास्यैव विजिज्ञास्यत्वे को हेतुरित्यतोऽस्य सामर्थ्यमाह – **उभे इत्यादिना** ।। अस्मिन्नन्तरेवोभे मुक्तामुक्ते द्यावापृथिव्यौ समाहिते । उभौ मुक्तामुक्तावग्निश्च वायुश्चेत्येतौ समाहितौ । उभौ मुक्तामुक्तौ सूर्याचन्द्रमसौ समाहितौ । उभयविधानि विद्युन्नक्षत्राणि अनन्ततया प्रत्येकं वक्तुमशक्यत्वात् क्रोडीकृत्याऽह – **यच्चेति** ।। अस्य संसारिणः उपकारकतया यच्चास्ति । अमुक्तजातमिति यावत् । यच्च नास्ति उपकारितया मुक्तजातमिति यावत् । तत् सर्वमस्मिन् हृत्पद्मस्थाकाशगते ब्रह्मणि समाहितमिति ब्रूयादिति पूर्वेण सम्बन्धः ।। ३ ।।

तं गुरुं प्रति यदि ब्रूयुः शिष्याः । किमिति ? अस्मिन् ब्रह्मपुरे [१]शरीरान्तर्गते ब्रह्मपि इदं प्रत्यक्षादिसिद्धं सर्वमित्यादिपूर्वोक्तानुवादः । [२]यदैनं शरीरं जराऽवाप्नोति प्रध्वंसते वा शरीरं, किं ततस्तदाऽतिशिष्यते ? न किमपि । स्वयमपि नश्यतीति यावत् । तथाचोक्तमाहात्म्यं न विजिज्ञास्यत्वसाधकम् । जरानाशाख्यदोषेण तदभावस्यापि साधयितुं शक्यत्वादित्युक्तं भवति । इति ब्रूयुरिति सम्बन्धः ॥ ४ ॥

तदा स गुरुर्ब्रूयान्नास्य शरीरस्य जरयैतद् ब्रह्म जीर्यति । अस्य वधेन न हन्यते । कुतः ? एतद् ब्रह्म पुरं पूर्णं परं ब्रह्म सत्यं नित्यं अचिन्त्यशक्ति च प्रमितं यतः । तथाच भवदीयो हेतुः स्वरूपासिद्ध इत्युक्तं भवति । जिज्ञास्यत्वोपपादकतया तस्यैव माहात्म्यान्तरमाह – **अस्मिन्निति** ॥ काम्यन्त इति कामाः अस्मिन् समाहिताः । पूर्णकाम इति यावत् । ''नास्य जरयैतज्जीर्यति'' इत्याद्युक्तमेव सहेतुकं विशदयति – **एष इति** ॥ एष हृत्पद्मस्थाकाशस्थः परमात्मा नित्यमेव स्वतोऽपहतपाप्मा । अत एव न तत्कार्यं जरादिकमस्येत्याह – **विजर इत्यादि** ॥ ''अविजिघत्सोऽपिपासः'' इत्यनेन बुभुक्षादिना पीडाभाव उच्यते । तत्रापि हेतुमाह– **सत्यकाम इति** ॥ यदिष्टं तस्य तत् स्वत एव भवेदित्यर्थः । इदं च प्रागुक्तपूर्णकामत्वे च हेतुतया योज्यम्। तथाचानादित एव मम पापादिकं मा भूदिति तदीयकामनयैवैषोऽपहतपाप्मत्वादिरिति भावः । नचापहतपाप्मत्वादिकमेष न कामयत इति युक्तम् । प्रेक्षावतस्तदकामनायोगात् । सत्यकामत्वेऽपि हेतुः – **सत्यसङ्कल्प इति** ॥ अमोघसङ्कल्प इत्यर्थः । सङ्कल्पानुसारिणी इच्छेति प्रसिद्धमिति भावः । महिमान्तरमाह– **यथेति** ॥ यथा यथायोग्यमेव । तारतम्येनेति यावत् । इह एनं भगवन्तं प्रजाः मुक्ताः

१. 'शरीरान्तर्गतब्रह्मणि' इति मातृकायाम् । प.सं. ३२० । २. 'यदैतत्'' इति मुद्रितपुस्तके ।

सायुज्यभाजः यथानुशासनं तच्छासनमनतिक्रम्य तदाज्ञानुसारेण अन्वाविशन्ति। ननु सत्यकामत्वं कथं भगवल्लक्षणम्? मुक्तानामपि सत्त्वादित्यतः पराधीनमेव सत्यकामत्वं तेषामित्याह– **यं यमिति**॥ प्रकृताः मुक्ताः यं यमन्तं देशं यं जनपदं राष्ट्रं यं क्षेत्रभागम् अभि प्रति कामा भवन्ति। अन्तादिविषयकामनावन्तो भवन्तीत्यर्थः। तं तमेवोपजीवन्ति। "यथानुशासनम्" इत्येतदत्रापि सङ्गमनीयम्। तच्छासनानुसारेणैव। न स्वातन्त्र्येणेत्यर्थः॥ ५॥

महिमान्तरमाह– **तद् यथेति**॥ तन्निदर्शनं यथा। कर्मजितो लोको देहादिः क्षीयते। एवमेवामुत्र भगवदज्ञानिनि पुण्यजितो लोकः स्वर्गादिः क्षीयते। "यं यमन्तमभिकामा भवन्ति"इति सत्यकामत्वमुक्तम्? तत् केन भवतीति जिज्ञासायामात्मज्ञानादित्याह– **तद्य इहाऽत्मानमिति**॥ तत् तस्माद् भगवदज्ञानिनां क्षयिफलकत्वाद् ये इहाधिकार्यनधिकारिवर्गे आत्मानं परमात्मानम् एतान् पूर्वोक्तान् सत्यांश्च कामान्। बहुवचनमाद्यर्थे। सत्यकामत्वादींस्तद्धर्मांश्चानुविद्य सम्यग् ज्ञात्वा व्रजन्ति। तेषां सर्वेषु लोकेषु कामचारो भवति स्वेच्छानुसारेणैव चरणं भवति। सत्यकामा भवन्तीति यावत्। एवं ज्ञानस्य सत्यकामत्वसाधनत्वमुक्त्वा तदभावे तव्द्यतिरेकमाह – **अथ य इहेति**॥ क्वचित्तु "तद्य इहाऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवति अथ य इहाऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" इति पाठो दृश्यते।

तत्रेत्थं योजना। भगवज्ज्ञानिनः फलं वक्तुं तदज्ञानिनो विपरीतं फलं सदृष्टान्तमाह – **तद्यथेति**॥ तत् तस्माद् ये इहाधिकार्यनधिकारिवर्गे आत्मानं परमात्मानम् एतांश्च सत्यान् कामान् भगवदीयान् पूर्वोक्तधर्मान् अननुविद्य व्रजन्ति। तेषां यथा कर्मजितो लोको देहः क्षीयते एवं पुण्यजितो

तं गुरुं प्रति यदि ब्रूयुः शिष्याः । किमिति ? अस्मिन् ब्रह्मपुरे [१]शरीरान्तर्गते ब्रह्मणि इदं प्रत्यक्षादिसिद्धं सर्वमित्यादिपूर्वोक्तानुवादः । [२]यदैनं शरीरं जराऽवाप्नोति प्रध्वंसते वा शरीरं, किं ततस्तदाऽतिशिष्यते ? न किमपि । स्वयमपि नश्यतीति यावत् । तथाचोक्तमाहात्म्यं न विजिज्ञास्यत्वसाधकम् । जरानाशाख्यदोषेण तदभावस्यापि साधयितुं शक्यत्वादित्युक्तं भवति । इति ब्रूयुरिति सम्बन्धः ॥ ४ ॥

तदा स गुरुर्ब्रूयान्नास्य शरीरस्य जरयैतद् ब्रह्म जीर्यति । अस्य वधेन न हन्यते । कुतः ? एतद् ब्रह्म पुरं पूर्णं परं ब्रह्म सत्यं नित्यं अचिन्त्यशक्ति च प्रमितं यतः । तथाच भवदीयो हेतुः स्वरूपासिद्ध इत्युक्तं भवति । जिज्ञास्यत्वोपपादकतया तस्यैव माहात्म्यान्तरमाह – **अस्मिन्निति** ॥ काम्यन्त इति कामाः अस्मिन् समाहिताः । पूर्णकाम इति यावत् । ''नास्य जरयैतज्जीर्यति'' इत्याद्युक्तमेव सहेतुकं विशदयति – **एष इति** ॥ एष हृत्पद्मस्थाकाशस्थः परमात्मा नित्यमेव स्वतोऽपहतपाप्मा । अत एव न तत्कार्यं जरादिकमस्येत्याह – **विजर इत्यादि** ॥ ''अविजिघत्सोऽपिपासः'' इत्यनेन बुभुक्षादिना पीडाभाव उच्यते । तत्रापि हेतुमाह– **सत्यकाम इति** ॥ यदिष्टं तस्य तत् स्वत एव भवेदित्यर्थः । इदं च प्रागुक्तपूर्णकामत्वे च हेतुतया योज्यम्। तथाचानादित एव मम पापादिकं मा भूदिति तदीयकामनयैवैषोऽपहतपाप्मत्वादिरिति भावः । नचापहतपाप्मत्वादिकमेष न कामयत इति युक्तम् । प्रेक्षावतस्तदकामनायोगात् । सत्यकामत्वेऽपि हेतुः – **सत्यसङ्कल्प इति** ॥ अमोघसङ्कल्प इत्यर्थः । सङ्कल्पानुसारिणी इच्छेति प्रसिद्धमिति भावः । महिमान्तरमाह– **यथेति** ॥ यथा यथायोग्यमेव । तारतम्येनेति यावत् । इह एनं भगवन्तं प्रजाः मुक्ताः

---

१. 'शरीरान्तर्गतब्रह्मणि' इति मातृकायाम् । प.सं. ३२० । २. 'यदैतत्'' इति मुद्रितपुस्तके ।

सायुज्यभाजः यथानुशासनं तच्छासनमनतिक्रम्य तदाज्ञानुसारेण अन्वाविशन्ति। ननु सत्यकामत्वं कथं भगवल्लक्षणम् ? मुक्तानामपि सत्त्वादित्यतः पराधीनमेव सत्यकामत्वं तेषामित्याह– **यं यमिति** ।। प्रकृताः मुक्ताः यं यमन्तं देशं यं जनपदं राष्ट्रं यं क्षेत्रभागम् अभि प्रति कामा भवन्ति। अन्तादिविषयकामनावन्तो भवन्तीत्यर्थः। तं तमेवोपजीवन्ति। ''यथानुशासनम्'' इत्येतदत्रापि सङ्गमनीयम् । तच्छासनानुसारेणैव । न स्वातन्त्र्येणेत्यर्थः ।। ५ ।।

महिमान्तरमाह– **तद् यथेति** ।। तन्निदर्शनं यथा। कर्मजितो लोको देहादिः क्षीयते। एवमेवामुत्र भगवदज्ञानिनि पुण्यजितो लोकः स्वर्गादिः क्षीयते। ''यं यमन्तमभिकामा भवन्ति''इति सत्यकामत्वमुक्तम् ? तत् केन भवतीति जिज्ञासायामात्मज्ञानादित्याह– **तद्य इहाऽत्मानमिति** ।। तत् तस्माद् भगवदज्ञानिनां क्षयिफलकत्वाद् ये इहाधिकार्यनधिकारिवर्गे आत्मानं परमात्मानम् एतान् पूर्वोक्तान् सत्यांश्च कामान्। बहुवचनमाद्यर्थे। सत्यकामत्वादींस्तद्धर्मांश्चानुविद्य सम्यग् ज्ञात्वा व्रजन्ति । तेषां सर्वेषु लोकेषु कामचारो भवति स्वेच्छानुसारेणैव चरणं भवति। सत्यकामा भवन्तीति यावत् । एवं ज्ञानस्य सत्यकामत्वसाधनत्वमुक्त्वा तदभावे तव्यतिरेकमाह – **अथ य इहेति** ।। क्वचित्तु ''तद्य इहाऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवति अथ य इहाऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति'' इति पाठो दृश्यते।

तत्रेत्थं योजना। भगवज्ज्ञानिनः फलं वक्तुं तदज्ञानिनो विपरीतं फलं सदृष्टान्तमाह – **तद्यथेति** ।। तत् तस्माद् ये इहाधिकार्यनधिकारिवर्गे आत्मानं परमात्मानम् एतांश्च सत्यान् कामान् भगवदीयान् पूर्वोक्तधर्मान् अननुविद्य व्रजन्ति। तेषां यथा कर्मजितो लोको देहः क्षीयते एवं पुण्यजितो

लोकः स्वर्गादिः क्षीयत एव । न केवलमिष्टहानिः इष्टाप्राप्तिश्चेत्याह– **तेषामिति** ।। ज्ञानिनः फलमाह – **अथेति** ।। ये आत्मानं तदीयान् सत्यान् कामांश्चानुविद्य व्रजन्ति । तेषां पुण्यान्यक्षयफलान्येव भवन्तीति ग्राह्यम् । तथा सर्वेषु कामचारो भवतीति ।। ६ ।।

**।। इति प्रथमः खण्डः ।।**

## उपनिषत् (खण्डः -२)

*मुक्ताकाङ्क्षितं सकलं सुलभ्यमिति निरूपणम्*

**स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ।। १ ।।**

**अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते ।। २ ।।**

**अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते ।। ३ ।।**

**अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते ।। ४ ।।**

**अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते ।। ५ ।।**

अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ।। ६ ।।

अथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्य अन्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन सम्पन्नो महीयते ।। ७ ।।

**अथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन सम्पन्नो महीयते ॥८ ॥**
**अथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते ॥ ९ ॥**
**यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते ॥ १० ॥ २ ॥**

## भाष्यम्

**यथा बिम्बानुसारेण प्रतिबिम्बप्रकाशनम् ॥ खण्डः -२ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

सत्यत्वमुक्तं मुक्तकामस्य । अनेनैव ''स यदि पितृलोककामो भवति''इत्यादिखण्डतात्पर्यमप्युक्तमिति ज्ञातव्यम् । तदेव दृष्टान्तेन द्रढयति – **यथेति** ॥ बिम्बानुसारेण बिम्बधर्मानुसारेण ॥ द्वितीयः खण्डः ॥ २ ॥

### ततश्चायं खण्डार्थः

''यं यमन्तमभिकामा भवन्ति''इत्युक्तं मुक्तस्य भगवत्प्रसादाधीनं सत्यकामत्वमेव विशदयति– **स यदीत्यादिना** ॥ सः मुक्तो यदि पितृणां विष्णुलोको भवेत् । तदनन्तरं तदेव लोकोऽपि मम भवेदिति पितृलोककामो भवति तदाऽस्य मुक्तस्य सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति । संसारान्मुक्ताः सन्तः पुरतः स्थिता भवन्ति । ततश्च तेन पितृलोकेन तदवलोकनेन लोकवद्भिः पितृभिरिति यावत् । सम्पन्नो युक्तः सन् महीयते स्वावरैः पूज्यते । एवमन्यत् ॥ १ ॥

अत्र पित्रादयः स्वचरमजन्मकालीना इति सम्प्रदायविदः । ते च योग्या एव विवक्षिताः । अयोग्यत्वे कामनायोगात् । गन्धमाल्यादयस्तु तत्कालीना एव कामनया लभ्यन्ते । अत्र च लोकशब्देन दर्शनपर्यायेण भोगरूप एवार्थो विवक्षितः । नतु विष्णुलोकोऽपीति ध्येयम् ।।२–९।।

एवं कुतूहलात् किञ्चिद् विशदमुक्त्वा गौरवभयात् पुनरुपसंहरति– यं **यमिति ।। १० ।।**

**।। इति द्वितीयः खण्डः ।।**

उपनिषत् (खण्डः -३)

*संसारे आकाङ्क्षितं सर्वं कुतो न लभ्यते इत्यत्र कारणवर्णनम्*

**त इमे सत्याः कामा अनृतापिधानास्तेषाꣳ सत्यानाꣳ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ।। १ ।।**

भाष्यम्

**तस्माद् ये मुक्तियोग्याः स्युस्तेषां कामाः पुराऽपि तु ।।**
**सत्याः सन्तस्तदज्ञानान्न दृश्यन्ते तथाऽखिलाः ।**
**अज्ञानमनृतं प्रोक्तमृ गताविति धातुतः ।।**
**तस्माद् द्रष्टुं यदिष्टं स्यात् तद्दृष्टिनियमो न तु [१] ।**
**अमुक्तस्य ............... ।।**

पदार्थकौमुदी

भाष्यार्थः

१. 'स्यादद्दृष्टं नियमेन तु' ह.

यदि मुक्तौ सत्यकामत्वं तर्हि तत्पूर्वमपि स्यादेव । मुक्तधर्मणां तत्स्वभावत्वात् । तथाचानुपलम्भबाध इत्याशङ्कापरिहाराय प्रवृत्तं ''त इमे सत्याः कामाः अनृतापिधानाः'' इति वाक्यं व्याचष्टे– **तस्मादिति** ॥ अनेन सर्वेषामपि कामाः सत्या इति यथाश्रुतप्रतीतिरप्यपास्ता । ''तदज्ञानात्''(१) इत्यनेनानृतशब्दो व्याख्यातः । क्वचित् सत्या दृश्यन्त एवेत्यत उक्तम्– **तथाऽखिला इति** ॥ यथा मुक्तौ तथेत्यर्थः । ननु ''अनृतापिधानाः'' इति मिथ्याभूतवस्त्वाच्छादितत्वोक्तेः कथमज्ञानान्न दृश्यन्त इत्युक्तमित्यत आह– **अज्ञानमिति** ॥ कुत इत्यत आह– **ऋ गताविति** ॥ गत्यर्थानां ज्ञानार्थत्वान्निष्ठाप्रत्ययस्य च भावार्थत्वात् । ऋतं ज्ञानं तद्विरुद्धमज्ञानमनृतमित्यर्थः । ''यो यो ह्यस्येतः प्रैति''इत्यादि व्याचष्टे– **तस्मादिति** ॥ सत्यकामत्वस्य पूर्वमज्ञानावृतत्वात् ।

## उपनिषत्

*मुक्तिर्नैजसुखानुभूतिरेव*

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन् न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥**

**स वा एष आत्मा हृदि तस्यैतदेतदेव निरुक्तꣳ हृद्यमिति**

१. 'तदज्ञानात्' इत्यनन्तरं 'भगवदज्ञानात्' इत्यधिकं मुद्रितपुस्तके दृश्यते ।

**तस्माद्धृदयमहरहर्वा एवंवित् स्वर्गं लोकमेति ॥ ३ ॥**

## भाष्यम्

**......... हरेर्लोकं मुक्तो गत्वा हि पश्यति ॥**
**अज्ञत्वादेव सुप्तौ तु नित्यं यान्तोऽपि माधवम् ।**
**नैव पश्यन्त्यसौ विष्णुर्हृदयं नाम हृद्गतेः ॥**
**एवं हृदयनामानं विष्णुं जानन् हि नित्यशः ।**
**विष्णुलोकगतेः पुण्यमाप्त्वा विष्णुं व्रजेत् तथा ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''सर्वं तदत्र''इत्यादि व्याचष्टे– **हरेर्लोकमिति** ॥ मुक्तः सन् हरेर्लोकं गत्वा द्रष्टुं यदिष्टं स्यात् तत्पश्यतीत्यन्वयः । ''इमाः सर्वाः'' इत्यारभ्य ''प्रत्यूढाः'' इत्यन्तवाक्यस्य तात्पर्यमाह– **अज्ञत्वादेवेति** ॥ ''स वा एषः'' इत्यारभ्य ''हृदयम्'' इतीत्यन्तस्यार्थमाह– **असाविति** ॥ ''अहरहर्वा एवम्''इति फलप्रतिपादकं वाक्यं प्रसिद्धस्वर्गप्राप्तिपरता-प्रतीतिवारणाय व्याचष्टे– **एवमिति** ॥ अहरहरित्यस्यार्थः – **नित्यश इति** ॥ स्वरूपभूतरमणज्ञानात्मको विष्णुः स्वर्गस्तस्य लोक इति पदार्थमभिप्रेत्योक्तम्– **विष्णुलोकेति** ॥ विष्णुलोकगतेरनन्तरमिति शेषः। स्वर्गश्चासौ लोकश्चेति पदार्थमभिप्रेत्योक्तम् – **विष्णुमिति** । विष्णुलोके स्थित्वा यावत्स्वस्वरूपाविर्भावानुगुणं पुण्यं सम्पाद्य ब्रह्मणा सह विष्णुं व्रजेदित्यर्थः ।

## उपनिषत्

*परमात्मनः पूर्णानुग्रहादेव मुक्तिरिति कथनम्*

**अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुप-सम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृत-मभयमेतद् ब्रह्मेति तस्य हवा एतस्य ब्रह्मणो नाम सत्यमिति ॥४॥**

## भाष्यम्

**यस्य सम्यक् प्रसादोऽस्ति विष्णोरेव स उच्यते ।**
**सम्प्रसादः स उत्थाय शरीरात् प्राप्य केशवम् ॥**
**यथास्वरूपस्तु भवेद् यं प्राप्यासौ स्वरूपतां ।**
**आप्नोति स परो ह्यात्मा भगवानिन्दिरापतिः ॥**
**इत्याह सा रमादेवी पश्यन्ती परमं पदम् ।**

## पदार्थकौमुदी

### भाष्यार्थः

''य एष सम्प्रसादः'' इत्यत्र सम्प्रसादशब्दस्य सुप्तिपरत्वप्रतीति-वारणाय प्रकृतोपयुक्तमर्थमाह– **यस्येति** ॥ स एवेति सम्बन्धः । वाक्यार्थमाह– **स उत्थायेति** ॥ ''एष आत्मा''इत्यत्राऽविर्भूत-स्वरूपस्य मुक्तस्य परामर्शे ''एतदमृतमभयम्'' इत्यादि विरुद्धं स्यादतस्तत्परामृश्यं दर्शयंस्तद्वाक्यं व्याचष्टे– **यं प्राप्येति** ॥ तथाच परञ्ज्योतिः शब्दोक्तः प्राप्य एव भगवानेष इत्यनेन परामृश्यत इति भावः । ''इति होवाच''इत्यत्र कर्त्रप्रतीतेराह– **इत्याहेति** ॥ उपनिषदो रमा-वाक्यत्वादिति भावः ।

### भाष्यम्

*सत्यशब्दवाच्यो मुक्तामुक्तनियामको भगवान्*

**तानि हवा एतानि त्रीण्यक्षराणि सत् ति यमिति तद् यत् सत् तदमृतमथ यत् ति तन्मर्त्यमथ यद् यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद् यमहरहर्वा एवंवित्स्वर्गं लोकमेति ।। ५ ।। ३ ।।**

### भाष्यम्

**सदित्यमृतधर्माणो मुक्ताः श्रीरपि चेरिताः ।।**

**तीत्युक्ता मर्त्यधर्माणस्तेषां नियमनाद्धरिः ।**

**सत्यमित्युच्यते सद्भिः ...........।। खण्डः -३ ।।**

## पदार्थकौमुदी

### भाष्यार्थः

''तस्य हवा एतस्य''इत्यादिवाक्यं व्याचष्टे – **सदिति ।।** अमृतत्वं धर्मो येषां ते तथोक्ताः । मुक्ता अपीति सम्बन्धः ।। तृतीयः खण्डः ।। ३ ।।

### ततश्चायं खण्डार्थः

नन्विदं मुक्तस्य सत्यकामत्वं न तावदागन्तुकम् । मुक्तेरनागन्तुकविशेषरूपत्वात् । नापि स्वाभाविकम् । पूर्वमप्युपलब्धिप्रसङ्गादित्याशङ्कायामाह – **त इम इति ।।** मुक्तियोग्यस्य इमे पूर्वोक्ताः कामाः पुराऽपि सत्या एव सन्तोऽनृतापिधानाः न दृश्यन्ते । अनृतस्यापिधानमिति प्रतीतिवारणायानृतापिधाना इत्युक्तमेव विशदयति – **तेषामिति ।।** तेषां सत्यानां सतां कामानाम् अनृतमज्ञानमपिधानमाच्छादनमित्यर्थः । अतः सत्यकामत्वादेरनृतापिधानत्वादस्यामुक्तस्य योग्यजीवस्य यो यः पित्रादिरितः प्रैति लोकान्तरं गच्छति तदा

तद्दर्शनेच्छायामपि [१] तं दर्शनाय न लभ्यते ॥१॥

न केवलमेतावत् । ये चास्या मुक्तजीवस्य जीवाः जीवन्तः ये च प्रेताः यच्चान्यद् गन्धमाल्यादिकम् । तत् सर्वमिच्छन्नपि नियमेन न लभते । अज्ञाननिवृत्तौ त्वाह– **सर्वमिति** ॥ सर्वं तत् कामितम् अत्र विष्णुलोके विन्दते लभते । कुतः ? हि यस्मादत्र लोकेऽस्य मुक्तस्य सत्याः कामाः स्वरूपभूताः आविर्भूता इति शेषः । ननु हृत्पुण्डरीकाकाशे परमात्मा चेत् तिष्ठति तर्हि प्रतिदिनं तत्र गच्छद्भिरस्माभिः कुतो नोपलभ्यतेऽतः स तत्र नास्तीत्याशङ्कां सदृष्टान्तं परिहरति– **तद्यथेति** ॥ तत् निदर्शनं यथा । हिरण्यनिधिं निहितमप्यक्षेत्रज्ञाः निधानक्षेत्रमजानन्तः उपर्युपरि सञ्चरन्तो न विन्देयुर्न जानीयुरेवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं विष्णुलोकं हृत्पद्मं तत्रत्यं ब्रह्मेति यावत् । न [२]विन्दन्ति । ब्रह्मैव सर्वाश्रयत्वाल्लोकपदोक्तमिति वा । अनुपलम्भे निमित्तमाह– **अनृतेनेति** ॥ अनृतेनाज्ञानेन हि यस्मात् प्रत्यूढाः आच्छादिताः ॥ २ ॥

एवमनुपलब्धेरज्ञाननिमित्तत्वान्न तद्बलाद्धृदि तदभावः कल्प्य इत्याह– **स वा एष इति** ॥ स एष आत्मा परमात्मा हृदि तत्रत्याकाशे वर्तते वै वर्तत एव । हृत्पुण्डरीकाकाशस्थस्याऽकाश इत्येकं नामोक्तम् । तस्य [३]नामान्तरमपि निर्वचनपूर्वकमाह– **तस्येति** ॥ तस्य हृत्पद्मगतस्य भगवतस्तस्य वक्ष्यमाणस्य हृदयमिति नाम्नः एतदेव निरुक्तं निर्वचनं– **हृद्ययमिति** ॥ अय पय गतौ हृदि गतमिति यस्मात् तस्मात् । हृदयं हृदयनामकम् । एवंवेत्तुः फलमाह– **अहरिति** ॥ अहरहर्वै नित्यशः एवमुक्तप्रकारेण हृदयनामकविष्णुवित् स्वर्गं लोकं विष्णुलोकमिति ॥३॥

हृदब्जगतस्यैव माहात्म्यान्तरमाह– **अथेति** ॥ अन्ये तु न

---

१. 'तद्दर्शनाय' इति मुद्रितपुस्तके। २. 'विदन्ति' इति मातृकायाम्। प.सं. ३२२.
३. 'नामान्तरम्' इत्येव मातृकायाम्। प.सं. ३२३.

ज्ञानसामर्थ्यान्मुक्तो भवति । किन्तु भगवत्प्रसादादेवेत्याह– अथेती-त्याहुः । योऽधिकारी सम्प्रसादः सम्यक् विष्णुप्रसादवानेषोऽस्माच्छरीरा-च्चरमशरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य प्राप्य स्वेन रूपेणाभिनिष्प-द्यते । स्वस्वरूपाविर्भावं प्राप्नोति । ननु हृत्पद्मस्थात्मनिरूपणावसरे किं ज्योतिःप्रसङ्गेनेत्यत आह – **एष इति** ॥ यं प्राप्यासौ स्वरूपतामाप्नोति स एषः प्रागुक्तः आत्मेति होवाच रमा । उक्तं मुक्तप्राप्यत्वमुपपादयितुमाह – **एतदमृतमित्यादि** ॥ एतत् परञ्ज्योतिः । अमृतं नित्यमुक्तम् । अभयं कदाऽपि भयास्पृष्टम् । एतद् ब्रह्म पूर्णमिति । पश्यन्ती रमोवाचेति सम्बन्धः । तस्यैव नामान्तरमाह – **तस्येति** ॥ ४ ॥

तन्निर्वचनाय तदक्षराण्याह – **सदिति** ॥ अत्र यद्यपि सदित्यक्षरद्वयं, तथा च त्रीणीत्यनुपपन्नम् । तथाऽपि तकारस्य व्यञ्जनमात्रत्वेनाविवक्षयैव-मुक्तमित्यवसेयम् । तन्निर्वक्ति– **तद्यदिति** ॥ तत् प्रसिद्धं यत् सत् सच्छब्दवाच्यं तदमृतं मुक्तजातम् । अथ यत् ति तन्मर्त्यं संसारिजातम् । अथ यद् यं तेनोभे मुक्तामुक्तजाते यच्छतीत्यर्थो लभ्यते । यद् यस्मादनेन यमित्यक्षरेणोभे मुक्तामुक्तजाते यच्छतीत्यर्थो लभ्यते । तस्माद् यं यन्नामकम् । एवं वेत्तुः फलमाह– **अहरिति** ॥ ५ ॥

**॥ इति तृतीयः खण्डः ॥**

## उपनिषत् (खण्डः -४)

*निर्दुःखभगवत्प्राप्तितो दुःखनाश इति कथनम्*

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतꣳसेतु-महोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतꣳ सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥**

**तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः**

**सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एतं सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यतेऽसकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥**

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥ ४ ॥**

## भाष्यम्

.......... सेतुश्चापि विधारणात् ।
सितमस्मिन् जगत्सर्वमिति सेतुरितीरितः ॥
एतं सेतुं प्रति पुमानन्यत् तीर्त्वा ह्यदोषवान् ॥
स प्राप्यो ब्रह्मचर्येण मनोवाक्कर्मभिस्तु यत् ।
चरणं ब्रह्मणि परे ब्रह्मचर्यं हि तत् स्मृतम् ॥
तेनैव ब्रह्मचर्येण भवेयुर्ब्रह्मलोकगाः ।
एतेषां(१) ब्रह्मलोकः स्यात् परं ब्रह्मैव लोकनात् ॥
ब्रह्मलोक इति प्रोक्तं तस्य लोकोऽऽपि कथ्यते ॥ खण्डः -४ ॥

## पदार्थकौमुदी

### भाष्यार्थः

''सेतुर्विधृतिः''इत्यस्यार्थमाह– **सेतुरिति** ॥ अपिशब्देन विधृतिरिति समुच्चीयते । विधारणाद् विधृतिरित्यन्वयः । विधृतिशब्दागतार्थत्वेन सेतुशब्दं व्याचष्टे– **सितमिति** ॥ सितं बद्धम् । सम्बद्धमिति यावत् । ''एतं सेतुं तीर्त्वा''इति सेतुनामकपरमात्मातिक्रमानन्तरं स्वरूपाविर्भावः

१.' ये तेषाम्' ह.

कथ्यत इत्याशङ्कानिरासायापेक्षितं पूरयन् व्याचष्टे– **एतं सेतुमिति** ।। प्रति गन्तुमिति शेषः । ''तद्य एवैतं ब्रह्मलोकम्'' इत्यादि व्याचष्टे – **स प्राप्य इति** ।। अनेन ब्रह्मलोकशब्दो ब्रह्म चासौ लोक आश्रयश्चेति व्याख्यात इत्यवगन्तव्यम् । ननु ब्रह्मचर्यं नाम गुह्येन्द्रियनियमनम् । तेन कथं ब्रह्म-प्राप्तिः ? ज्ञानमात्रसाध्यत्वात् तस्या इत्यतोऽत्र विवक्षितं ब्रह्मचर्यमाह – **मन इति** ।। चरणं ज्ञानमपि भवति । किं तत इत्यत उक्तं वाक्यार्थं विशदमाह – **तेनैवेति** ।। नन्वेवं तर्हि ''तेषामेवैषः'' इति वाक्यं व्यर्थमित्याशङ्कायां यथा तन्न व्यर्थं तथा तदनूद्य व्याचष्टे – **एतेषामिति** ।। लोकनाद् अवलोकनकर्तृत्वादित्यर्थः । तथाचैतान् स्वलोकगान् ब्रह्मावलोकत इत्युक्तं भवति । प्रकारान्तरेणापि ब्रह्मलोकशब्दार्थमाह – **तस्येति** ।। तथाचैतेषामपि ब्रह्मविषयकावलोको भवतीत्युक्तं भवतीति ज्ञातव्यम् । अथवा स प्राप्य इत्यनेन ब्रह्मलोकशब्दः कर्मधारयाभिप्रायेण व्याख्यातः । इदानीं तमेव षष्ठीतत्पुरुषत्वाभिप्रायेणापि व्याचष्टे – **तस्येति** ।। अत्र लोको वैकुण्ठादिः ।। चतुर्थः खण्डः ।। ४ ।।

## ततश्चायं खण्डार्थः

हृद्गतस्यैव महिमान्तरमाह– **अथेति** ।। य आत्मा हृत्पद्मस्थत्वेनोक्तः सः एषां लोकानामसम्भेदायामेलनाय अविदारणाय वा सेतुराश्रयः विधृतिर्विधारणसमर्थः । यदि भगवानाश्रयो न स्यात् तदा लोका निराधारा एकत्र मिलिता विदारिता वा स्युरिति भावः । पूर्वोक्तमपहतपाप्मत्वं न मुक्तवत् प्राप्तस्य पापादेर्ध्वंसरूपम् । किन्तु नित्यनिवृत्त्यभिप्रायमिति वक्तुमाह – **नैतं सेतुमित्यादिना** ।। एवं सेतुं भगवन्तमहोरात्रे न तरतः । एतमतीत्य न गच्छतः । एतस्मिन्न स्वकृतविकारापादके इति यावत् । तदेवाऽऽह– **न जरा न मृत्युरिति** ।। जरादिकं न तरति । न प्राप्नोतीत्यर्थः ।

किं बहुना ? सर्वे पाप्मानोऽतो भगवतो निवर्तन्ते नित्यनिवृत्ता भवन्ति । अत एवैष ब्रह्मलोकः । ब्रह्मरूपसर्वाश्रयः अपहतपाप्मा हि प्रसिद्धः ।। १ ।।

नैवं मुक्त इत्याह – **तस्मादिति** ।। तस्मादेतस्यापहतपाप्मत्वादेवैतं सेतुं प्रति गन्तुमन्यत् तीर्त्वा पूर्वमन्धः सन् अज्ञानावृतः सन्ननन्धो भवति तदनावृतो भवति । विद्धो दुरुक्तिबाणैः । उपतापी रोगी । उपलक्षणमेतत् । सर्वपापविनिर्मुक्तो भवतीत्यर्थः । तस्मादेवमस्य मुक्तस्यापि निष्पापत्वादेव । भगवत्प्रसादादेव वा । एतं सेतुं प्रति गन्तुमन्यत् तीर्त्वा विद्यमानस्य नक्तमप्यहरेव निष्पद्यते । तदेव विशदमाह– **असकृदिति** ।। एष ब्रह्मलोको विष्णुलोको वाऽसकृद्विभातो हि न मुक्तवदित्यर्थः ।। २ ।।

एवं भगवत्स्वरूपवेत्तुः फलं ज्ञानसाधनप्रदर्शनपूर्वकमाह – **तद्य इति** ।। तत् तत्राधिकारिषु य एवाधिकारिणः एतं ब्रह्मलोकं पूर्णं सर्वाश्रयं विष्णुं तल्लोकं वा ब्रह्मचर्येण परे ब्रह्मणि मनोवाक्कर्मभिश्चरणेनानुविन्दन्ति प्राप्नुवन्ति । तेषामेवैष ब्रह्मलोकः ब्रह्मकर्तृककृपावलोकः तत्कर्मकावलोको वा भवतीत्यर्थः । सर्वेषु लोकेषु स्वयोग्येषु ।। ३ ।।

**।। इति चतुर्थः खण्डः ।।**

**उपनिषत् (खण्डः -५)**

*ब्रह्मचर्यस्वरूपकथनम्*

**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ।। १ ।।**

**अथ यत् सत्रायणमित्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव**

तद् ब्रह्मचर्येण ह्येवाऽत्मानमनुविद्य मनुते ॥ २ ॥

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते ।

*अद्भुतं श्वेतद्वीपाख्यं विष्णुधाम*

अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत् । अरश्च हवै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयꣳ सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितꣳ हिरण्मयम् ॥ ३ ॥

तद् य एवैतावरं च वै ण्यं चार्णवौ ब्रह्मलोके [१]ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥ ५ ॥

भाष्यम्

यज्ञ इष्टं च सत्रं च मौनं चानशनं तथा ॥
परस्य ब्रह्मणो ज्ञानं सर्वमेतदुदीरितम् ।
परस्य ब्रह्मणो लोके श्वेतद्वीपाभिधे परे ॥
अरण्यौ चार्णवौ[२] दिव्यौ चिदानन्दरसात्मकौ ।
यावानुच्चः स्वर्गलोकस्तावानुच्चतया स च ॥
श्वेतद्वीपो दिविष्ठोऽतस्तत्र मद्यं सरोवरम् ।
सर्वभोज्यात्मकं दिव्यं तत्राश्वत्थाः सुधास्रवाः ॥

---

१. 'ब्रह्मचर्येणानुविन्दते' इति क्वचित् । २. 'अरो ण्यश्चार्णवौ' ह.

**तत्र विष्णोः पुरं दिव्यमपराजितनामकम् ।**
**विमिताख्यं च पर्यङ्कं विष्णोर्मानेन सम्मितम् ।।**
**चित्सुवर्णमयं दिव्यं लक्ष्मीस्तत्तत्स्वरूपिणी ।**
**स श्वेतद्वीपगो[१] विष्णुः पर्यङ्कब्रह्मनामकः ।। खण्डः -५ ।।**

## पदार्थकौमुदी

### भाष्यार्थः

''अथ यद् यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्''इत्यारभ्य ''अरश्च'' इत्यतः प्राक्तनग्रन्थं व्याचष्टे– **यज्ञ इति** ।। तथाशब्देनारण्यायनमपि ग्राह्यम् । परस्य ब्रह्मणो ज्ञानमिति ब्रह्मचर्यशब्दार्थः । यात्यपरोक्षतो जानाति ज्ञमनेनेति यज्ञः । इच्छत्यनेनेतीष्टम् । सतस्त्राणं यस्मात् तत्सत्रम्। मनुतेऽपरोक्षतोऽवगच्छत्यनेनेति मौनम् । [२]अनशं नीयते परोक्षतो ज्ञायतेऽनेनेत्यनशनम् । अरण्यावयतेऽनेनेत्यरण्यायनमिति व्युत्पत्तिभ्य इति भावः ।

''अरश्च हवै ण्यश्चार्णवौ'' इत्यादि ब्रह्मलोकपदस्य सत्यलोकपरतया प्रतीतिं वारयन् व्याचष्टे– **परस्येति** ।। ''चिदानन्दरसात्मकौ''इत्यनेन तौ समुद्रौ लक्ष्म्यात्मकाविति ज्ञायते । ननु श्वेतद्वीपो ब्रह्मलोक इत्ययुक्तम् । तस्य ''तृतीयस्यामितो दिवि''इति इन्द्रसदनाख्यतृतीयद्युस्थत्वोक्तेः । श्वेतद्वीपश्च क्षीराब्धिगतो न तथा भवितुमर्हतीत्यत आह– **यावानुच्च इति** ।। दिविष्ठः तृतीयदिविष्ठः । ''तदैरं मदीयं सरः'' इति वाक्यं व्याचष्टे – **तत्रेति** ।। ''तदश्वत्थः'' इति वाक्यमेकवचनादेकत्वप्रतीतिं वारयन् व्याचष्टे– **तत्राश्वत्था इति** ।। सोमसवन इत्यस्यार्थः – **सुधास्रवा इति** ।।

---

१.'श्वेदद्वीपगः' ह्. २. 'अनिशं' इति मुद्रितपुस्तके ।

''तदपराजिता पूः''इति वाक्यं व्याचष्टे– **तत्रेति** ॥ तदित्येतत् तन्त्रेण तत्र लोके तस्य विष्णोरिति व्याख्यातम्। ''[1] प्रभुविमितम्''इति वाक्यं व्याचष्टे– [2]**विमिताख्यमिति** ॥ ''हिरण्मयम्''इत्यस्य व्याख्या– **चित्सुवर्णमयमिति** । तत्कथमित्यत आह – **लक्ष्मीरिति** ॥ ग्रन्थान्तराविरोधाय श्वेतद्वीपस्थपर्यङ्कगतविष्णुनामाऽह – **स इति** ॥ खं० ॥ ५ ॥

## ततश्चायं खण्डार्थः

ननु ब्रह्मचर्यस्य न ब्रह्मलोकप्राप्तिसाधनत्वं युक्तम्। अन्यत्र यज्ञादेरेव तत्साधनत्वेनोक्तत्वादित्यतो यज्ञादिकमपि ब्रह्मचर्यमेवेत्याह– **अथेति** ॥ अथ ज्ञानस्यैव मोक्षसाधनत्वेन प्रमितत्वादित्यर्थः । यद् यज्ञ इत्याचक्षते विद्वांसस्तद्ब्रह्मचर्यमेव ज्ञानमेव । एवमग्रेऽपि । नन्वस्तु यज्ञादिशब्दवाच्यस्य ज्ञानस्य मानसब्रह्मचर्याभेदः कायिकवाचिकब्रह्मचर्ययोस्तु कथं यज्ञादिशब्दोदितज्ञानाभेद इत्याशङ्कायां यज्ञादिशब्दनिर्वचनलभ्यस्य मोक्षहेतुज्ञानस्य स्वकार्यजनने कायिकवाचिकब्रह्मचर्यसापेक्षत्वादुपचारेण तत्राप्यभेदव्यपदेशोपपत्तिरित्यभिप्रेत्य मानसब्रह्मचर्यरूपे ज्ञाने यज्ञादिशब्दनिर्वचनमुक्ताभेदोपपादनाय दर्शयन् तस्य स्वकार्यकरणे स्वेतरब्रह्मचर्यसापेक्षत्वं चोपपादयति– **ब्रह्मचर्येण ह्येवेत्यादिना** ॥ कायिकेन वाचिकेन वा ब्रह्मचर्येणेत्यर्थः । एवमग्रेऽपि । हिशब्देन ज्ञानमेतादृशब्रह्मचर्यसहकृतमेव मोक्षहेतुरिति प्रसिद्धमिति दर्शयति । यो ज्ञाता सः तं विन्दते इत्यनेन यात्यनेन ज्ञमिति यज्ञशब्दनिर्वचनं ज्ञाने सूचयति । तेन ''ब्रह्मचर्यमेव तत्'' इत्युक्तमुपपादितमिति ध्येयम् । एवमग्रेऽपि इष्टमित्यत्रापि इच्छत्यनेनेतीष्टमिति निरुक्तिमभिप्रेत्य अनया च निरुक्त्या

१.'प्रभुविमतम्' इति मातृकायाम् । प.सं. ३१८ । २. 'विमताख्यं' इति मातृकायाम्। प.सं. ३१८

इच्छासाधनमेव प्राप्तं न मोक्षसाधनं ज्ञानमित्यतस्तत्तात्पर्यं दर्शयति– **इष्ट्वाऽऽत्मानमनुविन्दत इति** ॥ इच्छानन्तरं भगवन्तमपि प्राप्नोतीत्यतो मोक्षहेतुज्ञानमुक्तनिरुक्तिलभ्यमेवेति भावः ॥ १ ॥

सत इत्यनूद्याऽत्मन इति व्याख्यानम् । अनेन सतो भगवतस्त्राण-मयतेऽनेनेति सत्त्रायणमिति निरुक्तिः सूचिता । आत्मानं भगवन्तम् । अनुविद्य श्रवणादिना ज्ञात्वा मनुते परोक्षतो जानाति । अनुविद्यापरोक्षतो ज्ञात्वा मनुते मोक्षे ध्यायतीति वाऽर्थः । अनेन मनुतेऽनेनेति मौनमिति निर्वचनं सूचितं भवति ॥ २ ॥

यमात्मानं ब्रह्मचर्येणानुविन्दते स एष आत्मा मोक्षे तस्य न नश्यति । हि । न तं परित्यजतीति प्रसिद्धमित्यर्थः । अनेनाप्यनाशकं नाशशून्यं ब्रह्मायतेऽनेनेत्यनाशकायनमिति निर्वचनं प्रदर्शितम् । एवमरण्यावयतेऽ-नेनेत्यरण्यायनमिति निर्वचनसूचकं वाक्यं प्रकरणादूह्यम् । एवं चात्र यन्मानसं ब्रह्मचर्यं तस्य यज्ञाद्यभेद एव विवक्षितः । यज्ञादिशब्दैरपि ज्ञानलाभात् । यच्च कायिकं वाचिकं च ब्रह्मचर्यं तद् यज्ञादिशब्द-वाच्यज्ञानसहकारित्वात् तदभिन्नमिति व्यपदिश्यत इत्युक्तं भवति । अरण्याविति कौ कुत्रत्यौ ? यत्प्राप्तिसाधनं ब्रह्मचर्यमित्यपेक्षायामाह – **अरश्चेत्यादिना** ॥ यद्वा अरण्यायनमिति प्रसिद्धारण्यप्राप्तिसाधनं ब्रह्मचर्यमित्यन्यथाप्रतीतिनिरासायारण्यशब्दार्थमाह – **अरश्चेति** ॥ इतो मेर्वपेक्षया । तृतीयस्यां दिवि विद्यमाने ब्रह्मलोके श्वेतद्वीपेऽरश्च ण्यश्चेत्ये-वंनामानौ ह वै प्रसिद्धौ । अर्णवौ समुद्रौ समुद्रोपमे वा । सरसी तिष्ठतः । एतत्प्रसङ्गात् पुनः परब्रह्मलोकमाहात्म्यमेवाऽह – **तदित्यादिना** ॥ तत् तत्रैरमीराख्यवृक्षसम्बन्धिसुरापूर्णम् । इराऽन्नं तन्मय ऐरो मण्डस्तेन पूर्णमैरमित्यपि कश्चित् । वस्तुतस्तु ऐरं लक्ष्म्यात्मकम् । 'ऐरं श्रीश्च' इति गीतातात्पर्यवचनात् । उपपादितं चैतट्टीकाकारैः । ''तदैरं मदीयं सरः''

इति श्रुतेरैरं श्रीरिति । मदीयं मदकारि । सरः सरोवरं वर्तते । तत्राश्वत्थोऽश्वत्थसमूहः सोमसवनः सुधास्रवोऽस्ति । तत् तत्र लोके तस्य ब्रह्मणोऽपराजिताऽपराजितनामकं पूः पुरमस्ति । तत्रापि प्रभुणा ब्रह्मणा विमितं सम्मितं हिरण्मयं चित्सुवर्णमयं पर्यङ्कमस्ति ॥ ३ ॥

एवमरण्यौ निरूप्येदानीं ब्रह्मचर्यस्य तत्प्राप्तिसाधनतारूपं तदयनत्वं दर्शयन् अन्यदपि फलमाह – **तद्य इति** ॥ तत् तस्माद् य एवाधिकारिणः एतावरं च ण्यं चार्णवौ ब्रह्मलोके विद्यमानौ ब्रह्मचर्येणानुविन्दन्ति प्राप्नुवन्ति तेषामेवैष ब्रह्मलोकः । व्याख्यातमेतत् ॥ ४ ॥

**॥ पञ्चमः खण्डः ॥**

## उपनिषत् (खण्डः -६)

*हृदयस्थनाडीषु भगवद्रूपोपासना*

**अथ या ता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥ १ ॥**

### भाष्यम्

स एष हृदि नाडीषु पञ्चरूपः प्रतिष्ठितः ।
विष्णोरणिम्नो रूपाणि पञ्चनाडीस्थितानि तु ॥
नारायणाख्यं सौषुम्नं मध्यस्थं रक्तवर्णकम् ।
शुक्लं तु वासुदेवाख्यं नान्दिन्यामग्रतः[१] स्थितम् ॥
पिङ्गलायां पिङ्गलं च[२] रूपं सङ्कर्षणाभिधम् ।

---

१. 'नादिन्यामग्रतः' क. २. 'पिङ्गलं तु' क.

**पश्चिमे वज्रिकायां च पीतं प्रद्युम्ननामकम् ॥**

**इडायामनिरुद्धाख्यं नीलरूपं व्यवस्थितम् ।**

**सूर्येऽप्येवं पञ्चरूपो भगवान् संव्यवस्थितः ॥**

**आदित्यनामा चाऽदित्वात् .... ...... ।**

## पदार्थकौमुदी

### भाष्यार्थः

''अथ या एता हृदयस्य नाड्यः'' इत्यारभ्य ''लोहितस्य'' इत्यन्त-वाक्यतात्पर्यमाह – **स एष इति** ॥ ननु कथमिदं तात्पर्यम् ? श्रुतावप्रतीते-रित्यतस्तां व्याचष्टे – **विष्णोरिति** ॥ अनेन या एता हृदयस्य नाड्यस्ताः पिङ्गलस्य शुक्लस्य नीलस्य पीतस्य लोहितस्याणिम्नोऽधिष्ठानभूता इति योजनोक्ता भवति । कस्यां नाड्यां किंरूपमास्थितमिति जिज्ञासायामुक्तं विविच्य दर्शयति– **नारायणाख्यामित्यादिना** ॥ सौषुम्नं सुषुम्नागतम् । मध्यस्थं नाडीचतुष्टयमध्यगसुषुम्नासंस्थमित्यर्थः । अग्रतः पूर्वभागे स्थितायां नादिन्यामिति सम्बन्धः । यद्यपि नादिनीशब्देन सुषुम्नैवान्य-त्रोक्ता तथाऽपि पञ्चनाडीत्युक्तत्वादन्यत्रान्यैव तन्नाम्नी ग्राह्या । [१]परि-शेषात् पिङ्गलेडानाड्योर्दक्षिणोत्तरभागसंस्थितत्वं ज्ञातव्यम् । ''असौ वा आदित्यः'' इति वाक्यं प्रसिद्धादित्यपरमिति प्रतीतिवारणाय व्याचष्टे– **सूर्य इति** ॥ अनेन श्रुतावादित्यशब्दस्तदन्तर्गतभगवत्पर इत्युक्तं भवति । तत् कथमित्यतस्तस्मिन्नादित्यशब्दं निरुच्य दर्शयति – **आदित्येति** ॥

## उपनिषत्

**तद् यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता**

१.'परिशेषाद् वज्रिकेडानाड्योः' इति मातृकायाम् । प.सं. ३१८

**आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मा-दादित्यात् प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥**

भाष्यम्

**........... ........तद्व्याप्तं सूर्यमण्डलम् ।**

**तद्रश्मिभिस्तथा व्याप्ताः समस्ताः सूर्यरश्मयः ॥**

**तस्मिन् नाडीषु च प्रोतास्तथा नाडीस्थरश्मयः[१] ।**

## पदार्थकौमुदी

### भाष्यार्थः

''अमुष्मादादित्यात्''इत्यारभ्य ''तद्यत्र''इत्यतः प्राक्तनं वाक्यद्वयं व्याचष्टे– **तद्व्याप्तमित्यादिना** ॥ अत्र समस्ता नाडीस्थरश्मयः तद्रश्मिभिः सूर्यान्तर्गतभगवद्रश्मिभिर्व्याप्ताः । तथा सूर्यमण्डलमपि तद् व्याप्तं सूर्यनामकभगवद्रश्मिभिर्व्याप्तमिति पूर्ववाक्यव्याख्यानम् । तथा समस्ताः सूर्यरश्मयोऽपि तद्रश्मिभिर्नाडीस्थभगवद्रश्मिभिर्व्याप्ताः । तस्मिन् नाडीस्थे भगवति नाडीषु च प्रोता व्याप्ता इति द्वितीयवाक्यव्याख्यानमिति विवेकः ।

## उपनिषत्

*हृदयस्थभगवद्रूपं प्राप्तवतो न पापलेप इति निरूपणम्*

**तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा**

१. 'नाडीषु रश्मयः' ह.

सम्पन्नो भवति ॥ ३ ॥

अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्मा-च्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥

*सुषुम्नानाडीत उत्क्रमणं मुक्तेर्द्वारम्*

अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमते स ओमितिवाहोद्वामीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥

*उक्तार्थे मन्त्रकथनम्*

तदेष श्लोकः ॥

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ् अन्या उत्क्रमणे भवन्ति उत्क्रमणे भवन्ति ॥ ६ ॥ ६ ॥

भाष्यम्

तन्नाडीसंस्थितं विष्णुं मध्ये जीवः प्रपद्यते ॥
तत्तेजसा हि सम्पन्नः सुप्त इत्यभिधीयते ।
ओमित्येव वहन्नित्यं वायुरोंवाडितीरितः[१] ॥
तेन वामत्वमायाति मुक्तिकाले ह्युपासकः ।
दिव्यचिद्रूपभावो हि वामभाव उदीरितः ॥
यदैनं नेतुमन्विच्छन् मनः क्षिपति मारुतः ।

१. 'वायुरोंव इतीरितः'

**आदित्याख्यं तदा विष्णुं याति जीवः स्वविद्यया ॥''**

**इति पर्यङ्कोपासनायाम् ॥ ६ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

''तद्यत्रैतत् सुप्तः'' इति वाक्ये नाडीषु जीवस्य सुप्तिरुच्यते । तद-युक्तम् । ''सता सोम्य तदा सम्पन्नो भवति''इत्युक्तिविरोधात् । नचो-भयत्रापि परमात्मनोऽन्यत्र सुप्त्यङ्गीकारे दुःखप्राप्तेरिति भावेन तद्वाक्यं व्याचष्टे – **तन्नाडीसंस्थितमिति** ॥ तथाचोक्तम् – **तदभावो नाडीषु तच्छ्रुतेरात्मनि हेति** ॥ ''तेजसा हि तदा सम्पन्नो भवति''इति वाक्यं व्याचष्टे – **तत्तेजसेति** ॥ अप्रतीतेः ''स ओमितिवाहोद्वामीयते''इति वाक्यं व्याख्यातुं ओमितिवाट्शब्दं व्याचष्टे – **ओमित्येवेति** ॥ इदानीं तद्वाक्यार्थमाह – **तेनेति** ॥ अनेन स उपासकः ओमितिवाहा वायुनोद्वामीयते । ऊर्ध्वगमनवेलायां वामत्वं प्राप्यत इति योजनोक्ता भवति । वामत्वमित्युक्तवामभावमेव विशदमाह – **दिव्येति** ॥ ''स यावत् क्षिप्येन्मनः'' इति वाक्यं व्याचष्टे – **यदेति** ॥ ''विदुषां प्रपदम्''इति विद्वद्गम्यत्वस्य वक्ष्यमाणत्वात् ''स्वविद्यया'' इत्युक्तम् ॥ खं० ॥ ६ ॥

### ततश्चायं खण्डार्थः

हृदयस्थोपास्तिप्रकारमेव विविच्याऽऽह– **अथेति** ॥ अथ या एता हृदयस्य नाड्यः पिङ्गलानान्दिनीडावज्रिकासुषुम्नाख्यास्ताः अणिम्नः सूक्ष्मस्य पिङ्गलस्य सङ्कर्षणस्य शुक्लस्य वासुदेवस्य नीलस्यानिरुद्धस्य पीतस्य प्रद्युम्नस्य लोहितस्य नारायणस्याधिष्ठानभूतास्तिष्ठन्ति । विष्णो रूपाणि पञ्चनाडीस्थितानीति यावत् । इति उपासीतेति शेषः । प्रसङ्गाद्

भावनार्थमेवाऽदित्येऽप्येवं पञ्चरूपो भगवानस्तीत्याह – **असाविति** ॥ असावादित्यः आदानादादित्यनामा भगवान् । पिङ्गलः सङ्कर्षणः । एषः आदित्यस्थः शुक्लो वासुदेवः । एवमन्यत् । अत्र नाडीस्थानीयं सूर्यमण्डलम् । अत्र मूर्तिविवेको मधुविद्योक्तरीत्या द्रष्टव्यः ॥ १ ॥

न केवलं हृदयस्थस्य सूर्यस्थेन रूपसादृश्यमपितु परस्परं रश्मिसंसृप्तत्वं चेत्याह – **तद् यथेत्यादिना** ॥ तत् निदर्शनं यथा । महापथो महामार्गः । आततो विस्तृतः । उभौ ग्रामौ गच्छति । कौ तौ ? इमं चामुं च । एवमेवाऽदित्यस्य रश्मयः इमं चामुं चेत्युभौ लोकौ गच्छन्ति । उभौ लोकौ गच्छन्तीत्युक्तमेव प्रकारं विशदमाह – **अमुष्मादिति** ॥ अमुष्मादादित्यात् तदन्तर्गतभगवद्रूपेभ्यो या रश्मयः प्रतीयन्ते व्याप्ता भवन्ति ताः आसु नाडीषु सृप्ताः गताः । आभ्यो नाडीभ्यस्तदन्तर्गतभगवद्रूपेभ्यः ये नाडीस्था रश्मयः प्रतीयन्ते व्याप्ता भवन्ति । तेऽमुष्मिन्नादित्ये सृप्ताः गताः । रश्मिशब्दस्योभयलिङ्गत्वात् त इत्युक्तम् ॥ २ ॥

प्रकृतनाडीस्थस्यैव सुप्तव्याप्तत्वमाह – **तदिति** ॥ तत् तत्रैवं सति यत्र यदा एतद् एषः सुप्तो जीवः समस्तः उपसंहृतेन्द्रियः सम्प्रसन्नः स्वरूपसुखानुभववान् स्वप्नं न विजानाति तदाऽऽसु नाडीषु तदन्तर्गतविष्णुमध्ये सृप्तो गतो भवति । तं सुप्तं जीवं न कश्चन पाप्मा स्पृशति । कुतः ? भगवत्तेजसा हि तदा सम्पन्नः सङ्गतो भवति ॥ ३ ॥

एवमुपासनयाऽपरोक्षीकृतभगवद्रूपस्याधिकारिणः उत्क्रान्त्यादिकं फलमाह – **अथेति** ॥ यत्र यदा एतद् एषः ज्ञानी अबलिमानं रोगादिना देहस्याबलभावं नीतः प्राप्तो भवति । वैराग्यार्थं दौर्बल्यावस्थामेव विशदमाह – **तमिति** ॥ तम् उपतापिनं ज्ञानिनमभित आसीना ज्ञातयः आहुः । किमिति ? जा ासि मां जानासि मामिति । स यावदस्माच्छरीरादनुत्क्रान्तो भवति । तावज्जानाति ॥ ४ ॥

अथ यत्र यदा एतद् एषोऽस्माच्छरीरादुत्क्रामति अथ तदा एतैरेव रश्मिभिर्नाडीस्थसौररश्मिभिः प्रकाशितनाडीद्वारः ऊर्ध्वः ऊर्ध्वलोकानुसारी आक्रमते गन्तुमभिमुखो भवति । सः ज्ञानी ओमिति वहतीति ओमितिवाङ् वायुस्तेन तत्प्रसादेनोद्वामीयते । दिव्यचिद्रूपाख्यवामभावं प्राप्नोति । सः वायुर्यावद् यदा एनं नेतुं मनः क्षिपेत् तावत् तदाऽऽदित्यं तत्स्थं विष्णुं गच्छति । ब्रह्मज्ञानिना ब्रह्मलोकस्यैव गन्तव्यत्वात् किमादित्यस्थप्राप्त्येत्यतस्तद्द्वारमेतदित्याह– **एतदिति** ॥ एतद्वै आदिस्थं ब्रह्मैव खलु ब्रह्मलोकस्य द्वारम् । अत एव विदुषां प्रपदं प्राप्यम् । अविदुषां तु कथमित्यत आह – **निरोधोऽविदुषामिति** ॥ (१)निरोधनं निरोधः स्वप्राप्तिहेतुभूतमार्गप्रतिबन्धक इत्यर्थः ॥ ५ ॥

हृदयस्थनाडीरश्मिभिः ऊर्ध्व आक्रमत इत्युक्तम् । तत्र पञ्चभिरपि नाडीभिरुत्क्रमणे मोक्षो भवति किमित्यतो मोक्षहेतुनाडीविशेषं प्रमाणेनैवाऽऽह – **तदिति** ॥ तत् तत्र मोक्षनाडीविशेषसद्भावे । एषः वक्ष्यमाणः श्लोको भवति । तं पठति – **शतमिति** ॥ हृद्यनाद्धृदयस्य भगवतोऽधिष्ठानभूता नाड्यः । तया सुषुम्नाख्यया । विष्वगुत्क्रमणे लोकान्तरगमनार्थं द्विरुक्तिर्विद्यावधारणार्थेत्युक्तम् ॥ ६ ॥

**॥ इति षष्ठः खण्डः ॥**

## उपनिषत् (खण्डः- ७)

*इन्द्रविरोचनौ प्रति चतुर्मुखब्रह्मकृत उपदेशः*

**य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः**

---

१. 'निरोधनं निरोधः । योग्यानां केषाञ्चिद् ज्ञानिनां तत्र किञ्चित् कालमवस्थानमपि भवतीत्यर्थः ।' इति मातृकायाम् । प.सं. ३२७ ।

स सर्वा॑ँश्च लोकानाप्नोति स सर्वा॑ँश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥

तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वा॑ँश्च लोकानाप्नोति सर्वा॑ँश्च कामानितीन्द्रो हवै देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥

तौ ह द्वात्रि॑ँशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वा॑ँश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह भगवतो वचो हरन्तो वेदयन्ते तमिच्छन्ताववास्तमिति ॥ ३ ॥

तौ ह प्रजापतिरुवाच य एषोऽन्तरक्षणि[१] पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥ ४ ॥ ७ ॥

भाष्यम्

'इन्द्रो विरोचनश्चैव श्रुत्वा तु[२] ब्रह्मणोऽक्षिगम् ।
विष्णुमानन्दरूपं तं सम्यग् ज्ञानविपर्ययौ ॥

१. 'अन्तरक्षिणि' ह. २. 'श्रुत्वा तं' ह.

आपतुस्तत्र देवेन्द्रो जानन्नपि विरोचनम् ।
मोहयन्ननुरूपाणि तस्य वाक्यान्युवाच ह ॥
यथा विरोचनो नैव जानीयाद् विष्णुमञ्जसा[१] ।
स्ववाक्यं चानृतं न स्यात् तथा ब्रह्माऽप्युवाच ह ॥
अयोग्या ह्यसुरा ज्ञाने वक्तव्यं नैव चानृतम्[२] ।
मच्छापादासुरो भावः प्रह्लादादेर्न तु स्वतः ॥
अयं त्वासुर[३] एवातो वक्ष्याम्यस्योभयं यथा ।
इन्द्रस्तु शुद्धभावत्वात् पुनरायास्यति ध्रुवम् ॥
इत्यभिप्रायतः प्रोक्तो ब्रह्मणाऽक्षिगतो हरिः ।
अयोग्यत्वात्तु तच्छ्रुत्वा प्रतिरूपं विरोचनः ॥
मत्वाऽप्स्वादर्शके चैव पप्रच्छ कतमस्त्विति ।
तत्रापि तु हरेर्भावं हृदि कृत्वा चतुर्मुखः ।
दृश्यते ह्येष एवेति तत्त्ववेदिविवक्षया ॥ खण्डः ७ ॥

## पदार्थकौमुदी

### भाष्यार्थः

पूर्वं ब्रह्मचर्यं मोक्षसाधनमित्युक्तम् । तत्किमनुष्ठितमनुतिष्ठतां सर्वेषां मोक्षमापादयति केषाञ्चिदेवेति जिज्ञासायां योग्यानामेवेत्येतमर्थं प्रस्ताव्याऽ[४]ख्यायिकामाह– **य आत्मेत्याद्युत्तरखण्डषट्केन** ॥ तत्रा- प्रतिपत्तिविप्रतिपत्तिनिरासाय खण्डषट्कं प्रमाणेनैव व्याचष्टे– **इन्द्र**

---

१. 'जानीयात् तत्त्वमञ्जसा' ह. २. 'वक्तव्यं चैव नानृतम्' क. ३. 'अयं चासुरः' ह. ४. 'आख्यायिकयाऽऽह' इति मातृकायाम् । प.सं. ३२७ ।

**इत्यादिना** ॥ ''आपतुः'' इत्यन्तेनाऽ[1]द्यखण्डद्वयतात्पर्यमुक्तम् । ''आनन्दरूपम्'' इत्यात्मशब्दव्याख्यानम् । आदेयं मातीति व्युत्पत्तेः ।

नन्विन्द्रः सम्यग् ज्ञानमवाप चेदक्षिगं श्रुत्वा योऽयमप्सु परिख्यायते ''कतम एषः'' इति कथं पप्रच्छ ? प्रतिबिम्बे परमात्मत्वाभावस्य निर्णीतत्वादित्यत आह – **तत्रेति** ॥ तत्त्वं जानन् तस्य मोहस्यानुरूपाणि वाक्यान्युवाच । तस्य विरोचनस्येति वा । नन्वेवं तर्हि ब्रह्मा वा कथम् ''एष उ एवैषु सर्वेष्वन्तेषु परिख्यायते'' इति होवाच । विद्यार्थिनं प्रति विशिष्यैव वक्तव्यत्वेन सम्मुग्धोक्तेः प्रयोजनाभावादित्यत आह– **यथेति** ॥ विरोचनोऽपि विष्णुं जानातु । स्ववाक्यं चानृतं भवतु । को दोष इत्यत आह – **अयोग्या इति** ॥ हिशब्दो यस्मादित्यर्थे । अत इति वक्ष्यमाणेन सम्बध्यते । ननु प्रह्लादादिरसुरो ज्ञानी दृष्टः । तत् कथं ''अयोग्या असुरा ज्ञाने'' इत्युक्तिरित्यत आह – **मच्छापादिति** ॥ आसुर एव । स्वत इति वर्तते । तेनैवशब्दसम्बन्धः । अस्य विरोचनस्य ज्ञानाप्राप्तिः स्ववाक्यानृतत्वाभावश्चेत्युभयं यथा स्यात् तथा वक्ष्यामीत्यर्थः । तर्हीन्द्रस्यापि विपरीतज्ञानमेव स्यात् । उपदेशस्य सम्मुग्धत्वादित्यत आह – **इन्द्रस्त्विति** ॥ हरिः प्रोक्तः सम्मुग्धतया । यदि ब्रह्मणाऽक्षिगतो हरिरेवोक्तस्तर्हि कथं विरोचनः ''अऽथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एषः'' इति पप्रच्छेत्यतस्तदभिप्रायमाह– **अयोग्यत्वादिति** ॥ तुशब्दोऽवधारणार्थः । तच्छुत्वा ''य एषोऽन्तरक्षणि'' इत्युक्तं श्रुत्वा प्रतिरूपं ब्रह्मेति मत्त्वा भूयोदर्शनायाप्स्वादर्शके च कतम इत्येव पप्रच्छ । ''एष उ एव सर्वेष्वन्तेषु''इति परिहाराभिप्रायमाह– **तत्रापीति** ॥ हरेरव्यक्तत्वाद् दृश्यत

---

१. 'आद्यखण्डतात्पर्यमुक्तम्' इति मातृकायां । प.सं. ३२७ ।

इति कथमुक्तमित्यत आह – **तत्त्ववेदीति** ॥ आहेति वक्ष्यमाणेनान्वयः ॥ **सप्तमः खण्डः** ॥ ७ ॥

## ततश्चायं खण्डार्थः

आख्यायिकां वक्तुं भूमिकामारचयति श्रुतिः – **य आत्मेत्यादिना** ॥ व्याख्यातमेतत् । योऽधिकारी तमुक्तगुणमात्मानम् अनुविद्य शास्त्राचार्याद्यनुसारेण परोक्षतो ज्ञात्वा विजानात्यापरोक्ष्येण स सर्वान् लोकान् विष्णुलोकादीन् सर्वान् कामान् इच्छाविषयांश्च योग्यतानुसारेणाऽप्नोतीति प्रजापतिरुवाच । कदाचिद् दैवासुरसमक्षमिति शेषः ॥ १ ॥

तदनु तदनन्तरम् । तद् आत्मज्ञानं सर्वलोकादिसाधनमित्येतत् । उभये, के ते ? देवासुराः । बुबुधिरे बोद्धुमारेभिरे ह किल । कथम् ? यमात्मानमन्विष्य परोक्षापरोक्षज्ञाने सम्पाद्य सर्वान् लोकान् कामांश्च यथायोग्यमाप्नोति तमात्मानं वयमन्विष्यामो मीमांसया तत्परोक्षज्ञानादिकं सम्पादयिष्यामः । हन्तेत्यास्वादने । एतादृशफलसाधनमात्मज्ञानं को न संपादयेदिति । इत्यूचुर्ह किल । इन्द्रविरोचनौ प्रतीति शेषः । अत एवेन्द्रो देवानामर्थे तेषामुपदेशायेति यावत् । स्वयं तमात्मानं श्रोतुं प्रजापतिमभि प्रति प्रवव्राज प्रजापतिसकाशं जगाम । हवै प्रसिद्धमेतदित्यर्थः । एवमेव विरोचनोऽप्यसुराणामर्थे प्रजापतिमभि प्रवव्राज । एकगुरुकुलवासार्थिनोस्तयोर्गमनकाले परस्परं प्रीतिरभूत् किम् ? नेत्याह – **ताविति** ॥ ताविन्द्रविरोचनौ असंविदानावेव सम्प्रीतिरहितावेव अन्योन्यं संविदमकुर्वाणाविति वा । ह आश्चर्यम् । तस्मिन्नपि समये तयोः प्रीतिर्नाभूदिति । विद्यार्थिताज्ञापनाय समित्पाणी सन्तौ आजग्मतुरागतवन्तौ ॥ २ ॥

गत्वा च तावुक्तगुणकात्मश्रवणाय द्वात्रिंशतं द्वात्रिंशत्सङ्ख्याकानि वर्षाणि ब्रह्मचर्यं गुह्येन्द्रियनियमनादिव्रतं चरन्तावूषतुर्ह किल । तत्रैवेति

शेषः । तौ एवं नियमेन स्वसमीपवासिनौ प्रजापतिरुवाच – **किमिति** ॥ किमिच्छन्तौ युवामत्रावास्तमिति । तावेवं पृष्टावूचतुर्ह । य आत्मेत्यादिः पूर्वोक्तप्रजापतिवाक्यानुवादः । इति एवंरूपं भगवतः पूज्यस्य तव वचो वाक्यं तदर्थभूतम् आत्मानं वेदयन्ते वेत्तुमिच्छन्ति । देवासुरा इति शेषः । अतस्तमात्मानं तेभ्य उपदेष्टुं त्वत्तो ज्ञातुमिच्छन्तावावामवास्तम् [१]अवात्स्व । गुरुभयात् पुरुषव्यत्यासेनोक्तिः । इति होचतुरित्यन्वयः ॥ ३ ॥

तावेवं प्रकटिताभिप्रायौ प्रजापतिरुवाच । स्वस्यानृतवक्तृतापरिहाराय विरोचनस्य सम्यग्ज्ञानाप्राप्तये चेन्द्रस्य शुद्धभावेन पुनरागमनं जानन् सम्मुग्धमेवोपदिदेश । हेत्याश्चर्ये । अयोग्यानां महान्तो न सम्यगुपदिशन्तीति । किमिति । य एषः जागृदवस्थाप्रेरकोऽक्षणि[२] अन्तः पुरुषः पूर्णषड्गुणो विश्वनामा दृश्यते दिव्यदृष्ट्या स एष आत्मा सर्वलोकादिसाधनज्ञानविषयत्वेन मयोक्तोऽपहतपाप्मत्वादिगुणक आत्मा इति होवाचेति पूर्वेणान्वयः । ननु कुतोऽस्य चक्षुरन्तःस्थस्य परमात्मत्वमित्यत आह – **होवाचेत्यादि** ॥ एतत् चक्षुरन्तस्थम् अमृतं नित्यमुक्तं अभयं कुतोऽपि भयशून्यं ब्रह्म पूर्णगुणम् । इति होवाचेति चार्थे । एवं सोपपत्तिकमक्षिस्थभगवदभिप्रायेण ब्रह्मणोक्ते विरोचनोऽयोग्यत्वाद् य एषोऽन्तरक्षणि पुरुषो देहप्रतिबिम्बो दृश्यतेऽस्माभिरेष आत्मा प्रागुक्तापहतपाप्मत्वादिगुणक आत्मेति ब्रह्मणोऽभिप्रायः इति मत्त्वेममभिप्रायं भूयोदर्शनेन निश्चेतुं इन्द्रसहित एव पुनरपि पृच्छति – **अथेति** ॥ इन्द्रोऽपि तस्य विपरीतज्ञानाय तदनुसारेणैव पप्रच्छेति ज्ञातव्यम् । अथेति प्रश्ने । भो भगवः पूज्य योऽयं पुरुषो देहप्रतिबिम्बोऽप्सु परिख्यायते । यश्चायमादर्शे

१.'अवास्वः' इति मातृकायाम् । प.सं. ३३९ । २. 'अक्षिणि' इति मातृकायाम् । प.सं. ३३९.

एष देहप्रतिबिम्बः कतमः किमुक्तरीत्याऽपहतपाप्मत्वादिगुणकात्मैवोत तदन्यः इति विरोचनाभिप्रायः । इन्द्रस्य तु योऽयमबादिषु पुरुषः प्रतिबिम्बादिप्रवर्तको दिव्यदृष्ट्या परिख्यायते एष कतमः किमक्षिस्थतया प्रकृतो हरिरेवोतान्य इत्यभिप्रायः । इत्यूचतुरिति शेषः । सम्मुग्धमेवोत्तरमाह– **एष इति** ।। एषः जाग्रदवस्थाप्रेरकतया प्रकृतोऽक्षिस्थः उ एव उत्कृष्टो हरिरेवैषु पूर्वोक्तेष्वबादिष्वन्तेषु स्थानेषु प्रतिबिम्बादिप्रेरकतया परिख्यायते समन्ताद् ज्ञायते दिव्यदृष्ट्येत्यभिप्रायेणोवाच प्रजापतिः । एवं हर्यभिप्रायेणोक्तेऽप्ययोग्यत्वाद् विरोचनः एष एव देहप्रतिबिम्ब एवैषु सर्वेष्वन्तेषु अबादिष्वपहतपाप्मत्वादिगुणकात्मतया परिख्यायत इति मत्त्वा देहप्रतिबिम्ब एव सर्वत्रापहतपाप्मत्वादिगुणक आत्मेति ब्रह्माभिप्राय इति निश्चितवान् ।।४।।

**।। इति सप्तमः खण्डः ।।**

## उपनिषत् (खण्डः -८)

*विरोचनस्य अयथार्थज्ञानमुत्पन्नमिति निरूपणम्*

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ।। १ ।।**

**तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ।। २ ।।**

तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृताविति एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥

तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्याऽत्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम तेभ्यो हैतामुपनिषदं प्रोवाचाऽत्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥ ४ ॥

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणाꣳ ह्येषोपनिषत् प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति सꣳस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥ ८ ॥

भाष्यम्

तथाऽपि योग्यतैवात्र भूयसीति निवेदितुम् ।
दर्शयन् प्रतिरूपस्य दोषानाह प्रजापतिः ॥
अलङ्कारादिभिर्युक्तः पश्यस्वेति विवेचयन् ।
यथा देहगुणे गौण्यं दोषे दोषास्तथेति तु [१] ॥
तथाऽप्यशुद्धभावत्वात् प्रतिरूपस्य तद्गुणान् ।
परस्य ब्रह्मणो जानन् ययौ तुष्टमनाः स्वयम् ॥

---

१. 'तथैव तु' क.

असुराणामविश्वासनिवृत्त्यर्थं पितामहः ॥
माध्यस्थ्यं ज्ञापयानश्च जानन् वैरोचनं मनः ।
प्राहाज्ञानां पराभाव इत्युच्चैश्च पुनःपुनः ॥
तथाऽप्यशुद्धभावत्वादजानन्नेव निर्ययौ ।
गत्वा चैव परंब्रह्म प्रतिरूपात्मकं सदा ॥
दिदेश सर्वासुराणां शरीरालङ्कृतेरपि ।
अलङ्कृतिं ब्रह्मणश्च प्रत्यक्षेणोपलम्भिताम् ॥
अतोऽसुरा न दास्यन्ति न यजन्त्यात्मनः परम् ।
स्वभोगेनैव तृप्तिः स्यादिति सर्वेऽपि मेनिरे ॥
तत्संस्कारवशेनैव स्वयं ब्रह्मेति वेदिनः[१] ।
अभवन्नपतंश्चैव तमोऽन्धे नित्यदुःखिताः ॥ खण्डः ८ ॥

## पदार्थकौमुदी

### भाष्यार्थः

''उदशराव आत्मानम्'' इत्यादि खण्डतात्पर्यमाह– **तथाऽपीति** ॥ शरीरानलङ्कृतावनलङ्कृतस्य तदलङ्कृतावलङ्कृतस्य प्रतिबिम्बस्य यद्यप्यब्रह्मत्वं शक्यं स्फुटं ज्ञातुं शक्यं तथाऽपि तेन तन्न ज्ञातमतो योग्यतैव बलीयसीति दर्शयन्नित्यर्थः । प्रतिरूपाद् ब्रह्म विवेचयन् प्रजापतिः प्रतिरूपस्य दोषान् दर्शयन् सूचयन् अलङ्कारादिभिर्युक्तः पश्यस्व पश्येत्याह । अलङ्कारादिभिर्युक्तः पश्येत्युक्त्या कथं दोषसूचनं जातमित्यतस्तस्याभिप्रायमाह– **यथेति** ॥ गौण्यं गुणयुक्तत्वम् । इति दोषान्

१. 'वादिनः' ह.

दर्शन्निति सम्बन्धः । न्यायसाम्येन दोषस्यापि प्रेक्षावता ज्ञातुं शक्यत्वा-दिति भावः । नन्वेवं ब्रह्मणा दोषे सूचितेऽपि कथं स शान्तहृदय एव प्रवव्राजेत्यत आह – **तथाऽपीति** ॥ यद्यप्येवं ब्रह्मा प्राह तथाऽपीत्यर्थः । तद्गुणान् तावद्गुणान् ।

''अनुपलभ्याऽत्मानम्'' इत्यारभ्य ''पराभविष्यन्ति''इत्यन्तस्य प्रजापतिवचनस्याभिप्रायमाह – **असुराणामिति** ॥ एवं स्फुटोक्त्या विरोचननिवृत्तौ तस्य तत्त्वं वक्तव्यं स्यादित्यत आह – **जानन्निति** ॥ वैरोचनं मनः न निवर्तत इति जानन् । ''स शान्तहृदय एव'' इति वाक्यं व्याचष्टे – **तथाऽपीति** ॥ यद्यप्येवमाह ब्रह्मा तथाऽपीत्यर्थः । ''तेभ्यो हैतामुपनिषदं प्रोवाच'' इत्यादिवाक्यं व्याचष्टे – **गत्वा चेति** ॥ प्रति-रूपात्मकमेवेति सम्बन्धः । दिदेशोपदिदेश । अलङ्कृतिं प्रतिरूपस्य । ''पुरुषो दृश्यते''इत्युपदेशानुसारेणाऽह – **ब्रह्मण इति** ॥ उपलम्भितां चेति सम्बन्धः । ''तस्मादप्यद्येहाऽददानम्'' इत्यादिवाक्यं व्याचष्टे – **अत इति** ॥ ''प्रेतस्य शरीरम्'' इत्यादि व्याचष्टे – **स्वभोगेनेति** ॥ तदभिप्रायसिद्धमर्थं दर्शयति– **तत्संस्कारेति** ॥ शरीरालङ्कृतौ प्रतिरूपा-लङ्कृतत्वस्य संस्कारवशेनेत्यर्थः । ब्रह्मणा जीवाभिमतशरीरालङ्कृतौ [१]प्रतिरूपालङ्कृत्युपदर्शनेन बिम्बप्रतिबिम्बभूतयोस्तयोरभेद एवोप-दर्शितः । स च प्रतिरूपभूतब्रह्माभेदो जीवच्छरीरे बिम्बभूते बोध्यमानो जीवाभेदमादायैव पर्यवस्यति । शरीरस्य मरणशीलत्वेन तत्रामृत-ब्रह्माभेदस्य बाधितत्वात् । अतः शरीराभिमानिनो जीवस्यैव ब्रह्माभेद उपदिष्ट इति मत्त्वा स्वयं ब्रह्मेति वादिन इत्यर्थः । तमसान्धयतीति तमोन्धम् ॥ **अष्टमः खण्डः** ॥ ८ ॥

---

१. 'प्रतिरूपालङ्कृतत्वस्य' इति मातृकायाम् । प.सं. ३२९ ।

## ततश्चायं खण्डार्थः

अनन्तरं प्रजापतिर्नेदं दृश्यमानं देहप्रतिबिम्बं ब्रह्म । तस्य देहगुणेन गुणवत्त्वमिव देहदोषेण दुष्टत्वमपि भविष्यति न्यायसाम्यादित्यभिप्रायेण प्रतिबिम्बे दोषान् सूचयितुमाह – **उदशराव इत्यादिना** ।। उदपूर्णशरावे आत्मानमात्मावच्छिन्नं देहमवेक्ष्यावलोक्य यदाऽऽत्मनो विद्यमानम् अङ्गादिकं न विजानीथः तदज्ञातमङ्गादिकं मे प्रब्रूतमित्युवाच । "तौ चोदपूर्णशरावे आत्मानमवेक्षाञ्चक्राते" इति श्रुतेः स्ववाक्यम् । भो भगवः! इमावावां सर्वमेवाऽत्मानं पश्यावः । सर्वमित्युक्तमेव विशदमाहतुः – **आलोमभ्य इत्यादि** ।। लोमपर्यन्तं नखपर्यन्तं यद् देहप्रतिबिम्बं तत् पश्याव इत्यूचतुरिति सम्बन्धः ।। १ ।।

परिष्कृतावनुलेपनादिमन्तौ । नखलोमादिरहितावित्यपि कश्चित् ।। २ ।।

यथैवेदं पूर्वोक्तं किं तदित्यतस्तदेव विशदयतः – **आवां भगव इत्यादि** ।। इत्यूचतुः । अनन्तरं एष एव बिम्बानुरूपप्रतिबिम्बस्रष्टा आत्मेत्याद्युवाच प्रजापतिः । एवं हर्यभिप्रायेण प्रतिबिम्बस्याब्रह्मतायां न्यायसाम्येन दोषसूचनायोक्तेऽप्ययोग्यत्वाद् विरोचनः प्रतिरूपमेव ब्रह्म तत्पूजायै स्वात्मपूजैव कार्येति मत्त्वा प्रजापतिसूचितमपि दोषमपश्यन्निन्द्रेण सह जगामेत्याह श्रुतिः ।। ३ ।।

**तौ हेति** ।। शान्तहृदयौ सम्यग्ब्रह्मणाऽऽत्मतत्त्वमुपदिष्टमित्यभिप्रायवन्तौ तौ गच्छन्तावन्वीक्ष्य प्रजापतिः स्वमाध्यस्थ्यज्ञापनायोवाच– **किमिति** ।। आत्मानमपहतपाप्मत्वादिगुणकम् [१]अनुपलभ्य सम्यक् श्रवणादितोऽननुविद्यापरोक्षतः यतो व्रजतोऽतः । यतरे ये केचित् ।

---

(१) 'उपलभ्य' इति मुद्रिकपुस्तकस्थः पाठः प्रामादिक इत्यवधेयम् ।

एतदेवाऽह– **देवा वा असुरा वा** ।। एतदुपनिषदः एतदुपनिषदापातप्रतीतार्थवेत्तारो भविष्यन्ति ते पराभविष्यन्ति । मदभिप्रेतार्थस्य दुरवगाहत्वात् । इत्युवाचेति सम्बन्धः । एवमुक्तोऽपि स विरोचनः शान्तहृदय एव किमत्र गहनमित्यभिप्राय एवाऽसुरान् प्रति जगाम । हेत्याश्चर्ये । एवं बलीयसी योग्यतेति ।। एतां ''य एषोऽन्तरक्षिणि'' इत्येवंरूपं देहप्रतिबिम्बमेव ब्रह्म । बिम्बप्रतिबिम्बयोश्चैक्यम् । तच्चोक्तरीत्या देहाभिमानिजीवैक्ये पर्यवस्यति । अतो जीवात्माऽपि ब्रह्मैव । अतः स एव महय्यः इति स्वाभिप्रेतमर्थं दर्शयति – **आत्मैवेति** ।। इह जगति । आत्मा जीव एव महय्यः पूज्योऽलङ्कारादिना । आत्मा जीवः परिचर्यः सेव्यः । परब्रह्मपूजाद्यर्थिभिरिति शेषः । उक्तरीत्या जीवस्य ब्रह्मत्वात् । एवं जीवपूजादिकरणे फलमाह – **आत्मानमेवेत्यादिना** ।। इमं चामुं चेत्युभावित्यन्वयः । ब्रह्मपूजादिकमेवोभयलोकसाधनत्वेन श्रुत्यादिसिद्धम् । जीवश्चोक्तरीत्या ब्रह्मेति भावः । अनेन ''स सर्वांश्च लोकानाप्नोति'' इत्यादिब्रह्मोक्तमेव फलमुक्तमिति ज्ञातव्यम् ।। ४ ।।

इदं विरोचनेनावबुद्धमसुरमतमित्युपपादयति श्रुतिः – **तस्मादपीति** ।। तस्मादसुरपक्षे जीवस्यैव ब्रह्मतया पूज्यत्वादद्यापि इदानीमप्यददानं जीवातिरिक्तेश्वरप्रीतिमुद्दिश्य दानशून्यम् अश्रद्दधानं जीवातिरिक्तेश्वरोऽस्तीति श्रद्धारहितमयजमानं जीवातिरिक्तेश्वरप्रीतिमुद्दिश्य यज्ञाकारिणं च केवलं स्वात्मपूजादिरतमिति यावत् । दृष्ट्वा सज्जनाः एते आसुरा बत आश्चर्यं हरिं सर्वोत्तमं न जानन्तीत्याहुः । कुतः ? हि यस्मादेषोपनिषद् एवमुपनिषदर्थज्ञानमसुराणां प्रसिद्धम् अत इत्यर्थः । एतदेव विशदयति– **प्रेतस्येति** ।। प्रेतस्य त्यक्तदेहस्यापि जीवस्य सम्बन्धिशरीरं शवमपि भिक्षया यथाकथञ्चिद् भिक्षादिना प्राप्तेन वसनेनालङ्कारेण च इति उक्तरीत्या प्रतिरूपभूतब्रह्मभिन्नजीवसम्बन्धिशरीरालङ्कृत्या ब्रह्मणोऽपि

तृप्तिः स्यादित्यभिप्रायेण संस्कुर्वन्ति पूजयन्त्यसुराः । किमु जीवच्छरीरमिति भावः । एतेन बिम्बभूतजीवच्छरीरपूजादिना अमुं लोकम् । उपलक्षणमेतत् । इमं चेत्यपि ग्राह्यम् ॥ ५ ॥

॥ इति अष्टमः खण्डः ॥

## उपनिषत् (खण्डः -९)

*इन्द्रकृतनिरन्तराध्ययनम्*

**अथ हेन्द्रोऽप्राप्यैव देवानेतद् भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति ॥ १ ॥**

**नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥**

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै स होवाच ॥ ३ ॥ ९ ॥**

## भाष्यम्

**इन्द्रस्तु[1] जानन्नपि तु मोहयन्नसुरं तदा ।**

**गत्वा निववृते पश्चादिव पश्यन् सदोषताम् ॥**

**पुनः पुनश्च मोहाय गत्वा गत्वा निवर्तते ।**

**कथञ्चिदेव विज्ञातं मयेत्यज्ञान् विमोहितुम् ॥ खण्डः ९॥**

## पदार्थकौमुदी

### भाष्यार्थः

''अथ हेन्द्रो प्राप्यैव देवान्''इति खण्डतात्पर्यमाह– **इन्द्रश्चेति** ॥ पश्चात् सदोषतां पश्यन्निव । सम्यगुपदेशमलब्ध्वा पुनः पुनर्गत्वा निवर्तने प्रयोजनमाह– **पुनः पुनरिति** ॥ मोहायेत्युक्तं विशदयति– **कथञ्चिदेवेति** ॥ **नवमः खण्डः ॥ ९ ॥**

### ॥ ततश्चायं खण्डार्थः ॥

एवं जाग्रदवस्थाप्रेरकम् अक्षिस्थं प्रतिबिम्बादिबाह्यपदार्थस्रष्टारम् अपहतपाप्मत्वादिगुणकात्मतयाऽवगत्य विरोचनावगतं प्रतिबिम्बं तु नापहतपाप्मत्वादिगुणकमित्युपपादयति– **अथेति** ॥ अत्रेन्द्रस्य विरोचनेन सह गमनादिकं ब्रह्मणोऽपि तदनुसारेण वचनमसुरमोहाद्यर्थमिति भाष्ये स्पष्टम् । अथ विरोचनगमनानन्तरम् इन्द्रो देवानप्राप्य मध्य एवैतद् वक्ष्यमाणं भयं भयङ्करं न्यायसाम्येन ब्रह्माभिप्रेतं दोषं ददर्श । हेत्यास्वादने । महदभिप्रायो योग्यानामेव स्फुरति नायोग्यानामिति । न्यायसाम्यं दर्शयन् भयं ददर्शेत्युक्तमेव विशदयति – **यथैवेत्यादिना** ॥ अयं प्रतिबिम्बभूतो देहः अस्मिन् बिम्बभूते देहे स्रामे चक्षुर्नासिका वा यस्य सदा स्रवति स

---

१. 'इन्द्रश्च' क.

स्रामस्तस्मिन् सतीत्यर्थः । परिवृक्णे हस्तादिच्छेदवति । अत्रैतज्ज्ञाने सति [१]भोग्यमुपादेयं यन्मोक्षादि न पश्यामि । नहीदृशवस्तुज्ञानेन मोक्षादि । तस्य [२]निरवद्यज्ञानसाध्यत्वादिति भावः । उपलक्षणमेतत् । ''एतदमृत-मभयमेतद् ब्रह्म'' इत्युक्तामृतत्वादीनां प्रतिबिम्बेऽनुपपत्तिश्च द्रष्टव्या । इति भयं ददर्शेत्यन्वयः ।। १ ।।

अतो न विरोचनावगतं प्रतिबिम्बं ब्रह्म किन्तु मदवगतमेवेति निश्चित्येममर्थं ब्रह्मणे निवेद्य तन्मुखेनापि प्रतिबिम्बस्याब्रह्मतां दृढीकर्तुं स्वप्नावस्थाप्रवर्तकत्वरूपमुक्तात्मनो माहात्म्यान्तरं श्रोतुं च पुनरा-जगामेन्द्र इत्याह – **स समित्पाणिरित्यादिना ।।** शिष्टं स्पष्टम् ।। २ ।।

हे मघवन् यशस्विन्निन्द्र ! एष प्रतिबिम्बः एवमेव त्वदुक्तप्रकारेण दोषवानेव अतो नायं मदभिप्रेतः किन्तु यस्त्वयाऽवबुद्धः स एव । एतं जाग्रदवस्थाप्रेरकत्वादिनोक्तम् आत्मानमेव तु विशेषेण स्वप्नाद्यवस्था-प्रेरकत्वादिरूपेणानु त्वद्योग्यतानुसारेण । शिष्टं समानम् ।। ३ ।। **इति नवमः खण्डः ।। ९ ।।**

## उपनिषत् (खण्डः -१०)

*तत्त्वज्ञानप्राप्तौ योग्यताऽऽवश्यकीति कथनम्*

**य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद् भयं ददर्श तद्यद्यपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ।। १ ।।**

---

१.'भोज्यम्' इति मातृकायाम् । प.सं. ३४१ । २. 'निरवयवज्ञानसाध्यत्वात्' इति मातृकायाम् । प.सं. ३४१ ।

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति वैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

स समित्पाणिः पुनरेयाय त१ँ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच तद्यदपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति वैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रि१ँशतं वर्षाणीति स हापराणि द्वात्रि१ँशतं वर्षाण्युवास तस्मै स होवाच ॥ ४ ॥ १० ॥

भाष्यम्

तद्योग्यान्येव वाक्यानि ब्रह्माऽप्याह पुनःपुनः ।
गरीयसी योग्यतेति ज्ञापयन् पूर्ववत् पुनः ॥

सन्दिग्धान्येव वाक्यानि प्रोवाचेन्द्राय चाऽत्मभूः ।
स्वप्नं प्रदर्शयन् यस्तु पूज्यते सर्वदैवतैः ॥

स एव विष्णुरित्याह तत्राप्याह पुरन्दरः ।
दर्शयन्नासुरीं बुद्धिं स्वप्नदृश्यविवक्षया ।
घ्नन्तीवैनमदन्तीव तथा न स्यात् परो हरिः ॥ खण्डः १०॥

## पदार्थकौमुदी

### भाष्यार्थः

नन्वयोग्यस्य विरोचनस्यापगतत्वादिन्द्रस्य च योग्यत्वात् तं प्रत्यपि ''य एष स्वप्ने महीयमानश्चरति''इति किमर्थं सम्मुग्धतया ब्रह्मोपदेश इत्यत आह – **तद्योग्यान्येवेति** ॥ मोहयोग्यान्येव । दोषदर्शने योग्यतैव गरीयसी । ''य एष स्वप्ने महीयमानः''इत्युपदेशाभिप्रायमाह – **स्वप्नमिति** ॥ ''सहाप्राप्यैव देवान्''इत्यादिवाक्यतात्पर्यमाह – **तत्रापीति** ॥ स्वप्नदृश्यविवक्षया स्वप्ने प्रतीयमानजीवशरीरविवक्षयेत्यर्थः ॥ **दशमः खण्डः ॥ १० ॥**

### ततश्चायं खण्डार्थः

एषः कण्ठदेशस्थः स्वप्ने जीवस्य स्वप्नावस्थायां महीयमानः इन्द्रियदेवैः प्राणादिभिः पूज्यमान एव चरति । चारयत्यवगमयति स्वसृष्टान् गजतुरगादीन् जीवेन स्वयं चावगच्छति । एषः एवंविधमाहात्म्यः आत्मा मदुक्तः ''एतदमृतम्''इत्यादि पूर्ववत् । एवं ब्रह्मोपदेशेन स्वप्नावस्थाप्रेरकं ब्रह्माभिप्रेतमात्मानं सम्यग् ज्ञात्वा आपाततः प्रतीयमानं स्वाप्नशरीरावच्छिन्नस्यापहतपाप्मत्वादिगुणकात्मत्वं न युक्तमित्युपपादयति – **स हाप्राप्येत्यादिना ॥** तदिदं शरीरं स्वाप्नपदार्थद्रष्टृजीवशरीरं बाह्यं यदपि यद्यपि सः स्वप्ने प्रतीयमानो वासनामयदेहोऽनन्धादिर्भवति । यतोऽतो ''नैवैषोऽस्य'' इत्यादीति हेतुहेतुमद्भावेन योज्यम् ॥ १ ॥

अनेन प्रतिबिम्बस्य ब्रह्मतापक्षे यो दोषोऽभिहितः सोऽत्र यद्यपि नास्तीत्युक्तं भवति । अस्य द्रष्टृजीवशरीरस्य दोषेण हस्तादिच्छेदरूपेण । तथाऽपि दोषान्तरमस्तीत्याह – **घ्नन्तीति** ॥ अस्याऽदौ तथाऽपीति ग्राह्यम् । एनं स्वप्ने प्रतीयमानदेहावच्छिन्नमेव । अन्ये चोराः । तु विशेषेण ।

एवशब्द इवार्थे । घ्नन्तीव विच्छादयन्तीव विशेषेण च्छादयन्ति गर्तादौ । ''विच्छाययन्ति'' इति पाठे विगतच्छायं कुर्वन्तीत्यर्थः । अप्रियवेत्ता दुःखजनकविषयभोक्ता । अपि दोषान्तरमपि । अत्र सर्वत्र बाह्यवैलक्ष्यण्यादिवशब्दः । इति भयं ददर्शेत्यन्वयः ॥ २ ॥

अतो न स्वप्ने प्रतीयमानवासनामयदेहावच्छिन्नस्यापहतपाप्मत्वादिगुणकात्मत्वं ब्रह्माभिप्रेतम् । किन्तु स्वाप्नानेकपदार्थनिर्मातुः प्राणादिपूज्यस्य तैजसस्यैवेति निश्चित्येममर्थं ब्रह्मणे निवेद्य तन्मुखेनाप्यापातप्रतीतोऽर्थो न मदभिप्रेत इति दृढीकर्तुं सुप्त्यवस्थाप्रेरकत्वरूपमाहात्म्यान्तरं श्रोतुं चेन्द्रः पुनरागत इत्याह – **स समित्पाणिरित्यादिना** ॥ शिष्टं समानम् । अत्र यद्यपीन्द्रेण ब्रह्मसमीप एव स्थित्वाऽऽपातप्रतीतार्थदूषणादिकं कर्तुं शक्यम् । तथाऽपि किञ्चिद् दूरं गत्वा तत्र दोषदर्शनेन पुनरागत इत्यादिकथनमिन्द्रेण कथञ्चिदेवेदं ज्ञातमित्यसुरमोहनायेति भाष्ये स्पष्टम् ॥ ३–४ ॥

**॥ इति दशमः खण्डः ॥**

## उपनिषत् (खण्डः -११)

*एकशतवर्षावधिकः इन्द्रकृतगुरुकुलवासः*

**तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद् भयं ददर्श नाहं खल्वयमेवꣳ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विना शमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥**

**स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्**

यच्छान्तहृदयः प्राव्राजीः किमेवेच्छन् पुनरागम इति स होवाच नाहं खल्वयं भगव एव৺ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विना शमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद् वसापराणि पञ्च वर्षाणीति स हापराणि पञ्च वर्षाण्युवास तान्येकशतं सम्पेदुरेतत् तद् यदाहुरेकशत৺ ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास तस्मै स होवाच ॥ ३ ॥
॥ ११ ॥

## भाष्यम्

इत्युक्त आह ब्रह्मैनं सुप्तिस्थो भगवानिति ।
यत्र सुप्तो ह्ययं जीव इत्युक्तः[१] प्राह वासवः ॥
नाहं जानामि मत्तोऽन्यं सुप्तौ[२] नान्योऽपि दर्शयेत् ।
अहमस्मीति भूतानि न च पश्यन्ति कानिचित् ॥
यदि जीवः परात्मा वाऽप्यन्योन्यस्मिन्नपीतताम्[३] ।
गतौ तदाऽप्यपीतस्तु शं विनैव भवेदिति ॥ खण्डः ११ ॥

## पदार्थकौमुदी

### भाष्यार्थः

''तद्यत्रैतत् सुप्तः समस्तः'' इति खण्डतात्पर्यमाह – **ब्रह्मैनमिति** ॥ सुप्तिस्थ इत्युक्तमेव विवृणोति – **यत्रेति** ॥ यत्र भगवति । ''नाहं

१.'इत्युक्तं' हृ. २.'सुप्तः' हृ. ३. 'चाथोऽन्योन्यास्मिन्नपीतताम्' हृ.

[१]खल्वयमेवं सम्प्रत्यात्मानं जानाति'' इति वाक्यं जानातीत्यस्य पुरुषव्यत्यासाश्रयणेन व्याचष्टे – **नाहमिति** ॥ अनेनाहमेतदाश्रितः अयं तु मदाश्रयः इति मत्तोऽन्यमात्मानं परमात्मानं सम्प्रति सुषुप्तौ न जानाति न जानामीति योजनोक्ता भवति । ननु सुषुप्तौ जीवस्य स्वाश्रयपरमात्मज्ञानाभावेऽपि परमात्मा स्वात्मानं तदाश्रयत्वेन प्रदर्शयतीति किं न स्यादित्याशङ्कानिवर्तकतया 'अयमहमस्मि' इत्येतदपेक्षितं पूरयन् व्याचष्टे – **नान्योऽपीति** ॥ अन्यः परमात्मा । सुप्ताविति वर्तते । स्वात्मानमिति शेषः । अन्योऽपि भगवानपि । तेनायं जीवाश्रयोऽहमस्मीत्ययमन्यो भगवानपि न स्वात्मानं जानाति दर्शयतीति योजनीयमिति भावः ।

नन्वेकेन जीवेन स्वाश्रयस्य भगवतः सुप्तावदृष्टत्वेऽपि न तदभावः । इतरेषां तज्ज्ञानसम्भवादित्याशङ्कायां प्राप्तस्य ''नो एवेमानि भूतानि'' इत्यस्य व्याख्यानम् – **भूतानीति** ॥ भूतानि चेति सम्बन्धः । पश्यन्तीत्यनेन जानातीत्येतद् वचनव्यत्ययेनानुवर्तत इत्युक्तं भवति । तथाच केषामप्यनुपलम्भान्न सोऽस्तीति भावः । यदुक्तमनुपलम्भान्न जीवाश्रयः परमात्मा सुप्तावस्तीति तदयुक्तम् । जीवपरमात्मनोः सुप्तावन्यतरस्यान्यतरस्मिन् प्रविष्टत्वेनाऽश्रयाश्रयिभावानुपलम्भोपपत्तेरित्यतस्तत्र बाधकतया विनाशमेव ''अपीतो भवति''इति वाक्यं नाशार्थत्वप्रतीतिं वारयन् व्याचष्टे– **यदीति** ॥ अपीततां प्रविष्टताम् ।

अयं भावः । यदि जीवः परमात्मन्यपीतस्तदा शं विनैव भवेत् सुखरहितः स्यात् । सुखानुभववान्न स्यादिति यावत् । अन्यगेहगतस्य लोके सुखादर्शनात् । तथाच ''सुखमहमस्वाप्सम्'' इत्युत्तरकालीनपरामर्शविरोधः । यदि वा परमात्मा जीवेऽपीतस्तदा सोऽप्युक्तरीत्या शं

१. 'खल्वेवं' इति मुद्रितपुस्तके ।

विनैव भवेत् । तथाच श्रुत्यादिविरोध इति । एतेन विनाशमिति वाक्यावष्टम्भेन सुप्तावहङ्कारादिसकलकार्यविलयाङ्गीकारवन्तो निरस्ताः ॥ **एकादशः खण्डः ॥ ११ ॥**

## ततश्चायं खण्डार्थः

तत् तस्यामवस्थायां यत्र यस्मिन् प्राज्ञे एतत् एषः सुप्तः समस्तः सङ्कुचितेन्द्रियव्यापारः सम्प्रसन्नः स्वरूपसुखवान् तदनुभववानिति यावत् । स्वप्नं न विजानाति । किमु जाग्रत्पदार्थमिति भावः । एषः सुप्ताधारः प्राज्ञ आत्मा । एवं सुप्तजीवाश्रये परमात्मनि निरूपिते तं जीववैलक्षण्येन सम्यग् ज्ञातुमासुरमतमवलम्ब्य सुप्त्यवस्थायां जीवाश्रयेश्वराभावं तावद् युक्त्या साधयति – **नाहं खल्वित्यादिना** ॥ सम्प्रति सुप्त्यवस्थायाम् अहं खलु तावद् आत्मानं परमात्मानम् अयं परमात्मा एवं सुप्तस्य ममाऽश्रयः अहं त्वेतदाश्रित इति मत्तोऽन्यं न जानाति न जानामि । ननु सुषुप्तौ जीवस्य स्वाश्रय परमात्मज्ञानाभावेऽपि परमात्मा स्वात्मानं तदाश्रयत्वेन प्रदर्शयतीति किं न स्यादित्यत आह – **अयमहमस्मीति** ॥ अयं जीवाश्रयोऽहमस्मीत्ययमन्यो भगवानपि आत्मानं स्वात्मानं न जानाति न ज्ञापयतीति । नन्वेकेन जीवेन स्वाश्रयस्य भगवतः सुप्तावदृष्टत्वेऽपि न तदभावः । इतरेषां तज्ज्ञानसम्भवादित्याशङ्कायामाह – **नो एवेमानीति** ॥ इमानि भूतान्यपि सुप्त्यवस्थायां स्वाश्रयं नो एव जानन्ति । अतोऽ-नुपलम्भात् स नास्तीति भावः । ननु तदा जीव ईश्वरे ईश्वरो वा जीवे प्रविष्ट इति नाऽश्रयाश्रयिभावोपलब्धिरित्यत आह – **विनाशमेवेति** ॥ यदि जीव ईश्वरेऽपीतः प्रविष्टः तर्हि शं विनैव भवति भवेत् । स्वरूपसुखानुसन्धाता न स्यात् । नहि परगृहं गतस्य सुखभोगोऽस्ति । तथाच तस्य ''सुखमहमस्वाप्सम्''इत्युत्तरकालीनपरामर्शायोगः । यदि वा ईश्वरो जीवे प्रविष्टस्तर्हि शं विनैव भवेत् । तथाच तस्य सदा सुखभोक्तृत्व-

प्रतिपादकश्रुत्यादिविरोध इत्यर्थः । तथाच [१] तदा जीवेश्वरौ नान्योन्य-स्मिन्नप्ययवन्तौ भेदेन च नोपलभ्येते । ''सुखमहमस्वाप्सम्'' इत्युत्तर-कालीनपरामर्शबलेन च जीव एवोपलभ्यतेऽतो जीवातिरिक्तेश्वरोऽनुप-लम्भान्नास्तीति भयं भयहेतुं पूर्वपक्षं ददर्श ।। १ ।।

इमं च पूर्वपक्षं ब्रह्मणे निवेद्य सम्यग् वैलक्षण्येन परमात्मानं ज्ञातुं पुनरागत इत्याह – **स समित्पाणिरित्यादिना** ।। २ ।।

हे मघवन् ! एषः परमात्मा एवमेव सुप्त्यादौ जीवविलक्षणतया प्रत्यक्षेण नोपलभ्यत एव । किन्तु जीववैलक्षण्यं जीवव्यावृत्तधर्मैरनुमेयमेवातस्ते एतं जीवव्यावृत्तधर्मवन्तं व्याख्यास्यामि । एतस्मात् पुनः किञ्चित्कालं ब्रह्म-चर्याचरणरूपाद् व्रतादन्यत्र, तस्माद् ऋत इति यावत् । नो एव नैव व्याख्यास्यामि यतोऽतो वसापराणि पञ्चवर्षाणीत्युवाच प्रजापतिः । स एवमादिष्ट इन्द्रोऽपराणि पञ्चवर्षाण्युवास ह । एवमिन्द्रस्य चतुर्वारं गुरुकुलवासे कियन्ति वर्षाणि सम्पन्नानीत्यपेक्षायां श्रुतिः स्वयमेवाऽह– **तानीति** ।। तानीन्द्रेणोषितानि वर्षाणि एकशतम् एकेनाधिकं शत-मेकाधिकशतसङ्ख्याकानि सम्पेदुः सम्पन्नानि बभूवुः । अयमर्थः प्रसिद्ध इत्याह– **एतत्तदिति** ।। यदाहुर्ज्ञानिनः एकशतं वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवासेति तदेतत् ''द्वात्रिंशतम्''इत्यादिना दर्शितमित्याख्या-यिकान्ते उपसंहृत्य श्रुतोच्यते (श्रुत्योच्यते)। तस्मै अनुष्ठितब्रह्मचर्याय सः प्रजापतिरुवाचोपदिदेश । जीवव्यावृत्तधर्मजातं जीववैलक्षण्यानु-मापकमिति शेषः ।। ३ ।।

**।। इति एकादशः खण्डः ।।**

---

१. 'तदा' इति पदं मुद्रितपुस्तके न दृश्यते ।

## उपनिषत् (खण्डः -१२)

*सति शरीराभिमाने दुःखमवर्जनीयम्*

**मघवन् मर्त्यं वाव इदꣳ शरीरमात्तं मृत्युना तदस्यामृतस्या-शरीरस्याऽत्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥**

### भाष्यम्

उक्तो ब्रह्माऽब्रवीच्छक्रं ज्ञापयंस्तत्त्वमञ्जसा ।
योऽयं शरीरसम्बन्धी जीव इत्यवधार्यताम् ॥
भूतैष्यद्वर्तमानेषु यस्य नो देहसङ्गतिः ।
सोऽशरीरः परो विष्णुरमृतो नित्यपूर्तिमान्[१] ॥
अधिष्ठाय तथाऽपीमं देहमास्ते स ईश्वरः ।
जरामृत्युपरीतोऽयं जीवात्मा देहसङ्गतेः ॥
परेणेयं सुखं प्रोक्तं प्रियमित्येव पण्डितैः ।
परेणेयमभद्रं यदप्रियं तदुदीरितम् ॥
न जीवस्य तयोर्हानिः कदाचिद् विद्यते क्वचित्[२] ।
अशरीरं परं ब्रह्म नैव ते स्पृशतः क्वचित् ॥

### पदार्थकौमुदी

#### भाष्यार्थः

''मघवन्मर्त्यं वाव''इत्याद्युपदेशस्य पूर्वोपदेशसाधारण्यं परिहरन्

१.'नित्यमूर्तिमान्' क. २. 'विद्यते द्वयोः' ह.

तात्पर्यमाह– [१] **इत्युक्तमिति** ॥ अञ्जसा सम्मुग्धोक्तिं विना स्पष्ट-वचनेन । ''मघवन्मर्त्यं वाव'' इत्यत्रेदं शरीरमित्येतद् व्याचष्टे– **योऽयमिति** ॥ योऽयं जीवः सः शरीरसम्बन्धीत्यवधार्यताम् । अनेनेदं श्रुतिजातं शरीरं शरीरसम्बन्धीति व्याख्यातं भवति । ''अशरीरस्य'' इत्युक्तमशरीरत्वं कथं परमात्मलक्षणम् ? मुक्तेऽतिव्याप्तेरित्यत आह– **भूतेति** ॥ स्वत इति शेषः । तेन रमाव्यावृत्तिः । विष्णुर्व्याप्त इत्यात्म-शब्दव्याख्यानम् । ''अमृतस्य'' इत्युक्तममृतत्वमपि मुक्ते गतमत आह– **अमृत इति** ॥ कालत्रयेऽपि स्वत एवाऽविर्भूतमूर्तिमानित्यर्थः । तदस्याऽ-त्मनोऽधिष्ठानमित्येतद् व्याचष्टे – **अधिष्ठायेति** ॥ तथाऽपि अशरीरा-दित्वेऽपीत्यर्थः । यद्यपि पूर्वं शरीरशब्दस्तत्सम्बन्धिलक्षक इत्युक्तम् । तथाऽप्यत्र शरीरमेव तदिति परामृश्यत इति भावेनोक्तम् – **देहमिति** ॥ शरीराधिष्ठातृत्वोक्त्या जीववज्जरादिपरीतत्वं स्यादित्याशङ्कां परिहरति– **स ईश्वर इति** ॥ यतोऽतो जरादिदोषरहित इति शेषः । तर्हि जरादिपरीतः क इत्याशङ्कायां मर्त्यमित्युक्तमर्त्यत्वोपपादनाय प्राप्तस्य ''आत्तं मृत्युना'' इति वाक्यस्योपलक्षणत्वाभिप्रायेण तात्पर्यमाह– **जरेति** ॥ अयं जीवात्मेत्यनेनेदमित्येतदत्राप्यन्वितमिति सूचयति । देहसङ्गतेर्देहाभि-मानादित्यनेन शरीरपदोक्तं शरीरसम्बन्धित्वमत्र हेतुतया विवक्षित-मित्युक्तं भवति ।

प्रियाप्रियात्तत्त्वानात्तत्त्वाभ्यां जीवपरमात्मवैलक्षण्यं वक्तुम् ''आत्तो

---

१.अत्र 'इत्युक्त इति' इति प्रतीकेन भाव्यमिति भाति । मातृकायां क्वचित् 'मघवन् मर्त्यं' इत्यारभ्य 'स्पष्टवचनेन' इत्यन्तभागो न दृश्यते । दृश्यते च क्वचित् । प.सं. ३३० ।

वै'' इत्यादि प्रवृत्तम् । तद्व्याख्यातुं तावत् प्रियाप्रियशब्दार्थावाह– **परेणेति** ॥ परेणान्येनेयं, प्राप्यं परमात्माधीनमिति यावत् । अत्र प्रिय-शब्देन रूढ्या सुखमात्रग्रहणे प्रियापहतिराहित्यं परमात्मन्यप्यस्तीति न जीवस्यायं विशेषः स्यात् । अतो योगाश्रयणेन परेणेयमित्युक्तमिति ज्ञातव्यम् । अकारलोपश्छान्दस इति भावः । अशब्दः प्रतिषेधार्थकोऽ-भद्रवाची प्रियमित्यस्य च परनिपातः इति भावेनोक्तम्– **परेणेयम-भद्रमिति** ॥ अप्रियापहतिशून्यत्वं स्वातन्त्र्येण जीवे न सम्भवतीति दर्शयितुमत्रापि योगाश्रयणमित्यवधेयम् । इदानीं ''न ह्वै'' इति वाक्या-र्थमाह – **नेति** ॥ मुक्तेष्वप्युक्तं प्रियमस्त्येवेति भावः । ''अशरीरं वाव'' इति वाक्यं व्याचष्टे– **अशरीरमिति** ॥ ते प्रियाप्रिये । वावेत्यस्यार्थः – **एवेति** ॥

## उपनिषत्

*प्राकृतशरीररहितभगवत्सकाशादेव मुक्तिः*

**अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि तद् यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते ॥ २ ॥**

**एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरꣳ स यथा प्रायोग्य आचरणे युक्त एवमेवायमस्मिन् शरीरे प्राणो युक्तः ॥ ३ ॥**

### भाष्यम्

अभ्रामा भगवान् विष्णुर्व्याप्तत्वात् परमेश्वरः ।
तेनैव भ्रियमाणत्वाद् ब्रह्माभ्रमिति कीर्तितः ॥
वायोः पत्नी विद्युदुक्ता विशेषद्युतिहेतुतः ।
ब्रह्माणी स्तनयित्नुः स्यात् सर्वशब्दात्मिका यतः ॥
एतेषां ज्ञानवैशेष्यान्नातिदेहेन सङ्गतिः ।
अतः प्रियाप्रिये तेषामपि न ब्रह्मणः किमु ॥
विष्ण्वीयं हि सुखं तेषां स्वभर्त्रीयमथापि च ।
न ह्यन्येयं सुखं तेषामतस्ते प्रियवर्जिताः ॥
यथा ते परमाकाशाद् विष्णोरेव समुत्थिताः ।
तमेव प्राप्य संयान्ति नैजमानन्दमूर्तिजम् ॥
एवं सम्यक् प्रसादेन विष्णोर्मुक्तोऽपि योऽपरः ।
यं प्राप्य ते निजानन्दमाप्नुवन्ति स केशवः ॥
तं प्राप्य रमते मुक्तः स्त्रीभिर्यानैश्च बन्धुभिः ।
यथैव सारभिर्याने एवं देहे च मारुतः ॥
यथा रथी तथा विष्णुर्जीवोऽन्यरथगो यथा ।

### पदार्थकौमुदी

### भाष्यार्थः

''अशरीरो वायुः''इति वाक्यं स्पष्टमित्यव्याख्याय ''अभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि''इति वाक्यं व्याख्यातुं प्रसिद्धाभ्रादिभ्रम-वारणायाभ्रादिशब्दार्थानाह– **अभ्रामेत्यादिना** ॥ यद्यपि –

**''श्रुतिभिः स्तनितत्वात्तु स्तनयित्नुर्हरिस्मृतः ।**
**अभ्रं भूताभिभरणाच्छ्रीर्वायुर्भरतः स्मृतः ।**
**विद्युत्तु भारती प्रोक्ता एत एवाशरीरिणः ॥''** इत्यन्यत्रोक्तम् । तथाऽपि **''व्यत्यासेनापि नाम स्यादेतेषां महतां सदा''**इति तत्रैवोक्तत्वान्न विरोधः । एवं पदार्थानभिधाय, ननु वायुब्रह्मणोः सपत्नीकयोः सशरीरत्वादशरीरत्वं कथमित्याशङ्कामपाकुर्वन्निदानीं वाक्यार्थमाह– **एतेषामिति ॥** अतोऽशरीरत्वोक्तिरिति शेषः । अल्पस्वे निःस्वशब्दोक्तिरिवेति भावः । ''अशरीरो वायुः'' इत्यादिवाक्यस्य सङ्गतिमाह– **अत इति ॥** अशरीरत्वात् । ब्रह्मणः परब्रह्मणः । तथाऽशरीरत्वेन यत् परब्रह्मणः प्रियाप्रियास्पृष्टत्वमुक्तं तत् कैमुत्येन साधयितुमिदं वाक्यमिति सङ्गतिरुक्ता भवतीति ज्ञातव्यम् ।

ननु देहाभिमानशून्यानां तेषामप्रियाभावेऽपि निरुक्तं प्रियमस्त्येव । वायुब्रह्मणोर्विष्ण्वधीनसुखस्य तत्पत्न्योश्च स्वभर्त्रधीनस्यापि सुखस्य सद्भावादित्यत आह – **विष्ण्वीयमिति ॥** स्वभर्त्रीयमपीति सम्बन्धः । ''तत्पत्न्योः''इति शेषः । विष्णुस्वभर्त्रतिरिक्ताधीनं सुखमत्र प्रियं विवक्षितम् । विष्णोः स्वभर्त्रोश्च स्वकोटिनिविष्टत्वेन परत्वाभावात् । तादृशसुखराहित्यात् तेऽपि प्रियवर्जिता इत्यर्थः । ''तद्यथा'' इत्यारभ्य ''निष्पद्यन्ते'' इत्यन्तवाक्यमाकाशशब्दस्य प्रसिद्धाकाशपरताप्रतीतिं वारयन् व्याचष्टे – **यथेति ॥** ते वाय्वादयः । विष्णोः प्रसादादिति शेषः । समुत्थिताः शरीरात् । ''एवमेवैष सम्प्रसादः'' इति वाक्यं व्याचष्टे– **एवमिति ॥** सम्प्रसादशब्दव्याख्यानम् – **विष्णोः सम्यक् प्रसादेनेति ॥** योऽपरो मुक्तः सोऽपि विष्णोः प्रसादेन शरीरात् समुत्थितस्तमेव प्राप्य नैजमानन्दं संयातीति योज्यम् ।

ननु "स उत्तमः पुरुषः" इत्यस्य प्रकृतमुक्तपरामर्शपरत्वे दहराधिकरणविरोध इत्यत आह – **यमिति** ॥ ते मुक्ताः । केशव इति पुरुषस्योत्तमत्वोपपादनार्थम् । ब्रह्मरुद्रप्रवर्तकत्वं हि तदर्थः । तथाच सूत्रम् "**अन्यार्थश्च परामर्शः**"(ब्र.सू. १-३-२०) इति । "स तत्र पर्येति" इत्यत्र प्रकृतभगवत्परामर्शे "**विहारोपदेशात्**"(ब्र.सू. २-३-३३)इति सूत्रविरोध इत्यत आह -- **तं प्राप्येति** ॥ "स यथा प्रायोग्यम्" इत्यादिवाक्यं व्याचष्टे – **यथैवेति** ॥ प्राणशब्देन विष्णुरपि विवक्षित इत्याशयेन तत्रापेक्षितं पूरयन् "एवमेवायम्"इत्यादि व्याचष्टे – **यथा रथीति** ॥ प्राणशब्दस्य लक्षणया तद्वज्जीवपरत्वमपीत्याशयेनापेक्षितं दर्शयन् व्याचष्टे– **जीव इति** ॥ यथाऽन्याधिष्ठितरथगः कश्चित् पुमांस्तथा जीवो भगवदधिष्ठितशरीरग इत्यर्थः । इदमुपलक्षणम् । "इन्द्रियाणि हया यथा" इत्यपि ग्राह्यम् ।

*इन्द्रियेषु भगवदुपासना*

**अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेद१५शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥**

**अथ यो वेदेदं मन्वानीति स आत्मा (मननाय) मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ॥ ५ ॥**

**य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात् तेषा१५ सर्वे च लोका आत्ताः सर्वे च कामाः सर्वा१५श्च लोकानाप्नोति**

सर्वा९ँश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥ १२ ॥

भाष्यम्

यदाश्रितानीन्द्रियाणि प्राणश्चापि यदाश्रयः ॥
यदाश्रयोऽप्ययं जीवो यो वेदैषां प्रवर्तनम् ।
दर्शनं श्रवणं घ्राणं जिह्वां स्पर्शं मनस्तथा ॥
तदीयान् विषयांश्चैव यो वेदाखिलमञ्जसा ।
स विष्णुः परमो ज्ञेयो देवताः करणानि च ॥
स एतैरिन्द्रियैर्विष्णुर्भोगाननुभवत्यजः ।
स्वरूपेणैव शक्तोऽपि जीवदेहस्थितो हरिः ॥
भुङ्क्ते तदिन्द्रियैर्भोगाञ्छुरितैरिन्द्रियैः स्वकैः ।
जीवं तदिन्द्रियाण्येवं प्राणं च व्याप्य कृत्स्नशः ॥
भुङ्क्ते तत्तद्गुणान् विष्णुर्नैव दोषान् कदाचन ।
तमेवं[१] देवताः सर्वा वाय्वाद्याः समुपासते ॥
तस्माद् देववशा लोकाः सर्वकामाः सजीवकाः ।
तमेतं यो यथा ज्ञात्वा पश्येद् विष्णुं सनातनम् ।
आप्नोति सर्वकामांश्च सर्वलोकांश्च कामतः ॥'

इति सामसंहितायाम् ।

---

१. 'तमेतं' क.

## पदार्थकौमुदी

### भाष्यार्थः

"अथ यत्रैतदाकाशम्" इत्यारभ्य "दैवं चक्षुः"इत्यन्तवाक्यस्य तात्पर्यमाह – **यदाश्रितानीत्यादिना** ॥ इन्द्रियाणि चेति सम्बन्धः । "प्राणश्चापि यदाश्रयः । यदाश्रयोऽप्ययं जीवः" इत्यनेन "चाक्षुषः यो वेदेदं जिघ्राणि" इत्यादिवाक्यं प्राणजीवपरमपि भवतीति सूचितं भवति । एषां प्राणजीवेन्द्रियाणां प्रवर्तनं प्राणजीवयोर्यथायोग्यं भोक्तृत्वादिरूप-मिन्द्रियाणां तु तत्तद्विषयकज्ञानजनकत्वरूपं यो वेदेत्यर्थः ।

नन्विन्द्रियतद्विषयाज्ञाने कथमिन्द्रियाणां तत्तद्विषयकज्ञानजनकत्वं वेत्तुं शक्यमित्याशङ्कायां तत्सर्वं वेदेत्याह – **दर्शनमित्यादिना** ॥ अनेन यच्चक्षुर्यद् घ्राणमित्यादि तद्वेद ये चाऽकाशगन्धादिपदोक्ता रूपप्रभृतयो विषयास्तांश्च वेदेति योजना सूचिता । अञ्जसैवेत्येवान्वयः । "परमो ज्ञेयः" इत्यनेनेदं वाक्यजातं "स उत्तमः पुरुषः" इत्युक्तमुत्तमत्व-मुपपादयितुं प्रवृत्तमिति सङ्गतिः सूचितेति ज्ञातव्यम् । अत्र चक्षु-र्घ्राणादिशब्दैस्तदभिमानिदेवता अपि विवक्षिता इति दर्शयन्नुक्तं विशदयति – **देवता इति** ॥ यो वेदेत्यन्वयः । दर्शनाय चक्षुर्गन्धाय घ्राणमित्यादेरर्थान्तरमाह – **स इति** ॥ अनेन गन्धादिशब्दैस्तत्साध्यो भोगो लक्ष्यत इत्युक्तं भवति ।

जीवेन्द्रियाणि विहाय विष्णुर्भोगाननुभवितुमशक्तः किं नेत्याह– **स्वरूपेणैवेति** ॥ लीलयैवेति भावः । नन्वेवं स्वयमिन्द्रियशून्य इत्या-पन्नम् । तथाच "सहस्राक्षः सहस्रपात्"इत्यादिविरोध इत्याशङ्कापरि-हाराय प्राप्तस्य "अस्य दैवं चक्षुः"इत्यादेस्तात्पर्यमाह– **छुरितैरिति** ॥

स्वकैरिन्द्रियैश्छुरितैः व्याप्तैः । तथाच ''दैवं चक्षुः''इत्येतदुपलक्षण-मित्युक्तं भवति । नन्वेवं दुष्टविषयभोगोऽपि भगवतः स्यादित्या-शङ्कायामुक्तं विशदयन् परिहरति – **जीवमिति** ॥ स्वकैरिन्द्रियैरिति वर्तते । स्वरूपेणेति च । तथाच जीवं प्राणं च स्वरूपेण तत्तदिन्द्रियाणि स्वकैरिन्द्रियैरेवमुक्तरीत्या व्याप्येति योज्यम् । गुणान् शुभविषयान् । दोषान् दुष्टानशुभविषयानिति यावत् ।

''तं वा एतं देवाः'' इति वाक्यं व्याचष्टे – **तमेतमिति** ॥ ''वाय्वाद्याः'' इत्यनेन देवपदं ''अशरीरो वायुः'' इत्यादिवाक्यं प्रकृत-देवपरमिति सूचयति । तस्मात् ''तेषां सर्वे च लोकाः'' इत्यादि फलवाक्यं व्याचष्टे – **तस्मादिति** ॥ ''सजीवकाः'' इत्यनेन लोकशब्दो जीवपरोऽ-पीति सूचयति । ''स सर्वांश्च लोकानाप्नोति'' इत्यादि व्याचष्टे– **तमेतमिति** ॥ यथेत्यस्य यथावदिति वा यथायोग्यमिति वाऽर्थः । अनुविद्य विजानातीत्यनयोरर्थभेदमाह – **ज्ञात्वा पश्येदिति** ॥ ''सर्वकामांश्च'' इत्यादावपि यथेति योज्यम् । यथायोग्यमित्यर्थः ।

## भाष्यम्

### *विरोचनमतनिरूपणम्*

**उभौ लोकाववाप्नोतीति वचनान्न लोकायतिकमतं विरोचनोक्तम्[१] । किन्तु बिम्बप्रतिबिम्बयोरभिमान्यैक्याभि-प्रायेण[२] जीवात्मैव महय्य इति मायावाद एव । न चात्र[३] जीव आत्मशब्दोक्तः ।**

**'तदस्यामृतस्याशरीरस्याऽत्मनोऽधिष्ठानमात्तो वै सशरीरः**

१.'विरोचनेनोक्तम्' क. २. 'बिम्बप्रतिबिम्बाभिमान्यैक्याभिप्रायेण' ह.
३.'नचान्यत्र' ह.

**स्वकैरिन्द्रियैश्छुरितैः व्याप्तैः । तथाच "दैवं चक्षुः" इत्येतदुपलक्षण-प्रियाप्रियाभ्यां न हवै[१] सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इतीशजीवयोः सतात्पर्यं भेदाभिधानात् ।**

**नहि जीवादन्यस्य प्रियाप्रियानुभवोऽस्ति । नच मुक्तस्यापि प्रियाप्रियापहतिरस्ति ।**

## पदार्थकौमदी

### भाष्यार्थः

एवं ब्रह्मोपदेशाद् देहप्रतिबिम्बमेव ब्रह्म बिम्बप्रतिबिम्बयोश्चैक्यं, तच्चोक्तरीत्या देहाभिमानिजीवैक्ये पर्यवस्यति । अतो जीवात्माऽपि ब्रह्मैव । अतः स एव महय्य इत्यभिप्रायो ब्रह्मण इति मायावाद एव विरोचनेनावबुद्धः । मायावादिभिरपि जीवात्मनोर्ब्रह्माभेदाङ्गीकारात् । स एव चासुरेभ्य उपदिष्टः । इन्द्रेण तु जीवस्य जाग्रदाद्यवस्थाप्रवर्तकः शरीराभिमानरहितः प्रियाप्रियास्पृष्टो मुक्तगम्यो देहरथो जीवप्राणेन्द्रिया-द्याश्रयः सकलशुभभोक्ता वाय्वाद्युपास्य आत्मा । जीवस्त्वनेवंविधः इति भेदवाद एवावबुद्धः । स एवोपदिष्टः सुरेभ्यः इति प्रमाणेन व्याख्याय तत्परिशुद्धये आत्मा देह एव महय्यः देहातिरिक्तात्मनोऽभावादिति लोकायतमतमवबुद्धमुपदिष्टं च विरोचनेनेति केचित् । तत्रानुपपत्त्युक्त्या तन्नेति वदन्नुक्तरीत्या मायावाद एवावबुद्ध उपदिष्टश्चेत्याह– **उभाविति** ॥ नात्र विरोचनेन लोकायतमतमवबुद्धमुक्तं चासुरेभ्य इति वक्तुं युक्तम् । "उभौ लोकाववाप्नोतीमं चामुं च" इति तदीयफलवाक्यविरोधात् । नहि

१. 'न वै' ह.

**किन्त्विति** ॥ उत्तरमाह– **बिम्बेति** ॥ बिम्बप्रतिबिम्बयोर्यदैक्यं तदुक्त-रीत्या बिम्बभूतदेहाभिमानिजीवैक्ये पर्यवस्यतीत्यभिप्रायेणेत्यर्थः ।

[१] किञ्च यद्यत्र विरोचनेनावबुद्ध आत्मा लोकायतरीत्या देहः स्यात् तर्हीन्द्रावबुद्धः स देहातिरिक्तो जीव एवेति वाच्यम् । ओमिति चेत् तत्राऽह – **न चात्रेति** ॥ अत्रेन्द्रं प्रति ब्रह्मोपदेशे । कुतो नेति चेत् । इन्द्रं प्रति ब्रह्मोपदिष्टस्याऽत्मनोऽमृतत्वाशरीरत्वजीवदेहाधिष्ठातृत्वप्रियाप्रिया-स्पृष्टत्वादिजीवव्यावृत्तधर्मवत्त्वेन जीवस्य चाताद्दशत्वेनोक्ततया जीव-विलक्षणत्वादित्याह– **तदस्यामृतस्येत्यादिना** ॥ लिङ्गबाहुल्यात् सता-त्पर्यमित्युक्तम् । भेदाभिधानात् जीववैलक्षण्याभिधानात् । नन्वत्रोक्तं प्रियाप्रियास्पृष्टत्वं तदनुभवरूपं जीवस्यैव किं न स्यात् ? न स्यात् । तथात्वे प्रियाप्रियानुभवितृत्वं जीवादन्यस्य शरीरस्य वाच्यं स्यात् । नच तत् सम्भवतीत्याह – **नहीति** ॥ [२] ननु न वयं जीवस्य प्रियाद्यस्पृष्टत्वे तदतिरिक्तस्य शरीरस्य तत्स्पृष्टत्वं ब्रूमो येनासम्भवः स्यात् । किन्तु जीवस्यैव संसारदशायां प्रियाद्यनुभवो मुक्तौ तु नेति । अतः कथमिदं जीवव्यावृत्तमित्यत आह – **नच मुक्तस्यापीति** ॥ एवं च मुक्तस्यापि प्रियसद्भावान्न तदस्पृष्टत्वं जीवे सावकाशमिति भावः । एवं ब्रह्मोपदेशाद् देहप्रतिबिम्बमेव ब्रह्म बिम्बप्रतिबिम्बयोश्चैक्यं तच्चोक्तरीत्या देहाभि-मानिजीवैक्ये पर्यवस्यति । अतो जीवात्माऽपि ब्रह्मैव अतः स एव महय्य इत्यभिप्रायो ब्रह्मण इति मायावाद एव विरोचनेनावबुद्धः । मायावादि-भिरपि जीवात्मनोर्ब्रह्माभेदाङ्गीकारात् । स एव चासुरेभ्य उपदिष्टः । इन्द्रेण तु जीवस्य जाग्रदाद्यवस्थाप्रवर्तकः शरीराभिमानरहितः प्रियाप्रियास्पृष्टो

१. 'किञ्चात्र यदि' इति मातृकायाम् । प.सं. ३३४. २.'ननु' इति पदं मुद्रितपुस्तके न दृश्यते ।

मुक्तगम्यो देहरथो जीवप्राणेन्द्रियाद्याश्रयः सकलशुभभोक्ता वाय्वाद्युपास्य आत्मा। जीवस्त्वनेवंविधः इति भेदवाद एवावबुद्धः। स एवोपदिष्टः सुरेभ्यः इति प्रमाणेन व्याख्याय तत्परिशुद्धये आत्मा देह एव मह्य्यः देहातिरिक्तात्मनोऽभावादिति लोकायतनमतमवबुद्धमुपदिष्टं च विरोचनेनेति केचित्। तत्रानुपपत्त्युक्त्या तन्नेति वदन्नुक्तरीत्या मायावाद एवावबुद्ध उपदिष्टश्चेत्याह – **उभाविति** ॥ नात्र विरोचनेन लोकायतमतमवबुद्धमुक्तं चासुरेभ्य इति वक्तुं युक्तम्। "उभौ लोकाववाप्नोतीमं चामुं च" इति तदीयफलवाक्यविरोधात्। नहि लोकायतपक्षे परलोकोऽस्ति। तर्हि किमवबुद्धमुक्तं च तेनेति पृच्छति – **किन्त्विति** ॥ उत्तरमाह– **बिम्बेति** ॥ बिम्बप्रतिबिम्बयोर्यदैक्यं तदुक्तरीत्या बिम्बभूतदेहाभिमानिजीवैक्ये पर्यवस्यतीत्यभिप्रायेणेत्यर्थः।

किञ्च यद्यत्र विरोचनेनावबुद्ध आत्मा लोकायतरीत्या देहः स्यात् तर्हीन्द्रावबुद्धः स देहातिरिक्तो जीव एवेति वाच्यम्। ओमिति चेत् तत्राऽह – **न चात्रेति** ॥ अत्रेन्द्रं प्रति ब्रह्मोपदेशे। कुतो नेति चेत्। इन्द्रं प्रति ब्रह्मोपदिष्टस्याऽत्मनोऽमृतत्वाशरीरत्वजीवदेहाधिष्ठातृत्वप्रियाप्रियास्पृष्टत्वादि जीवव्यावृत्तधर्मवत्त्वेन जीवस्य चाताद्दशत्वेनोक्ततया जीवविलक्षणत्वादित्याह – **तदस्यामृतस्येत्यादिना** ॥ लिङ्गबाहुल्यात् सतात्पर्यमित्युक्तम्। भेदाभिधानात् जीववैलक्षण्याभिधानात्। नन्वत्रोक्तं प्रियाप्रियास्पृष्टत्वं तदनुभवरूपं जीवस्यैव किं न स्यात्। न स्यात्। तथात्वे प्रियाप्रियानुभवितृत्वं जीवादन्यस्य शरीरस्य वाच्यं स्यात्। नच तत् सम्भवतीत्याह – **नहीति** ॥ न वयं जीवस्य प्रियाद्यस्पृष्टत्वे तदतिरिक्तस्य शरीरस्य तत्स्पृष्टत्वं ब्रूमो येनासम्भवः स्यात्। किन्तु जीवस्यैव संसारदशायां प्रियाद्यनुभवो मुक्तौ तु नेति। अतः कथमिदं जीवव्यावृत्तमित्यत

**किन्त्विति** ॥ उत्तरमाह– **बिम्बेति** ॥ बिम्बप्रतिबिम्बयोर्यदैक्यं तदुक्त-रीत्या बिम्बभूतदेहाभिमानिजीवैक्ये पर्यवस्यतीत्यभिप्रायेणेत्यर्थः ।

[१] किञ्च यद्यत्र विरोचनेनावबुद्ध आत्मा लोकायतरीत्या देहः स्यात् तर्हीन्द्रावबुद्धः स देहातिरिक्तो जीव एवेति वाच्यम् । ओमिति चेत् तत्राऽह – **न चात्रेति** ॥ अत्रेन्द्रं प्रति ब्रह्मोपदेशे । कुतो नेति चेत् । इन्द्रं प्रति ब्रह्मोपदिष्टस्याऽत्मनोऽमृतत्वाशरीरत्वजीवदेहाधिष्ठातृत्वप्रियाप्रिया-स्पृष्टत्वादिजीवव्यावृत्तधर्मवत्त्वेन जीवस्य चाताद्दशत्वेनोक्ततया जीव-विलक्षणत्वादित्याह– **तदस्यामृतस्येत्यादिना** ॥ लिङ्गबाहुल्यात् सता-त्पर्यमित्युक्तम् । भेदाभिधानात् जीववैलक्षण्याभिधानात् । नन्वत्रोक्तं प्रियाप्रियास्पृष्टत्वं तदनुभवरूपं जीवस्यैव किं न स्यात् ? न स्यात् । तथात्वे प्रियाप्रियानुभवितृत्वं जीवादन्यस्य शरीरस्य वाच्यं स्यात् । नच तत् सम्भवतीत्याह – **नहीति** ॥ [२] ननु न वयं जीवस्य प्रियाद्यस्पृष्टत्वे तदतिरिक्तस्य शरीरस्य तत्स्पृष्टत्वं ब्रूमो येनासम्भवः स्यात् । किन्तु जीवस्यैव संसारदशायां प्रियाद्यनुभवो मुक्तौ तु नेति । अतः कथमिदं जीवव्यावृत्तमित्यत आह – **नच मुक्तस्यापीति** ॥ एवं च मुक्तस्यापि प्रियसद्भावान्न तदस्पृष्टत्वं जीवे सावकाशमिति भावः । एवं ब्रह्मोपदेशाद् देहप्रतिबिम्बमेव ब्रह्म बिम्बप्रतिबिम्बयोश्चैक्यं तच्चोक्तरीत्या देहाभि-मानिजीवैक्ये पर्यवस्यति । अतो जीवात्माऽपि ब्रह्मैव अतः स एव महय्य इत्यभिप्रायो ब्रह्मण इति मायावाद एव विरोचनेनावबुद्धः । मायावादि-भिरपि जीवात्मनोर्ब्रह्माभेदाङ्गीकारात् । स एव चासुरेभ्य उपदिष्टः । इन्द्रेण तु जीवस्य जाग्रदाद्यवस्थाप्रवर्तकः शरीराभिमानरहितः प्रियाप्रियास्पृष्टो

---

१. 'किञ्चात्र यदि' इति मातृकायाम् । प.सं. ३३४. २.'ननु' इति पदं मुद्रितपुस्तके न दृश्यते ।

मुक्तगम्यो देहरथो जीवप्राणेन्द्रियाद्याश्रयः सकलशुभभोक्ता वाय्वाद्यु-पास्य आत्मा। जीवस्त्वनेवंविधः इति भेदवाद एवावबुद्धः। स एवोपदिष्टः सुरेभ्यः इति प्रमाणेन व्याख्याय तत्परिशुद्धये आत्मा देह एव मह्य्यः देहातिरिक्तात्मनोऽभावादिति लोकायतनमतमवबुद्धमुपदिष्टं च विरोचनेनेति केचित्। तत्रानुपपत्त्युक्त्या तन्नेति वदन्नुक्तरीत्या मायावाद एवावबुद्ध उपदिष्टश्चेत्याह – **उभाविति** ॥ नात्र विरोचनेन लोकायत-मतमवबुद्धमुक्तं चासुरेभ्य इति वक्तुं युक्तम्। ''उभौ लोकाववाप्नोतीमं चामुं च'' इति तदीयफलवाक्यविरोधात्। नहि लोकायतपक्षे परलोकोऽस्ति। तर्हि किमवबुद्धमुक्तं च तेनेति पृच्छति – **किन्त्विति** ॥ उत्तरमाह– **बिम्बेति** ॥ बिम्बप्रतिबिम्बयोर्यदैक्यं तदुक्तरीत्या बिम्बभूत-देहाभिमानिजीवैक्ये पर्यवस्यतीत्यभिप्रायेणेत्यर्थः।

किञ्च यद्यत्र विरोचनेनावबुद्ध आत्मा लोकायतरीत्या देहः स्यात् तर्हीन्द्रावबुद्धः स देहातिरिक्तो जीव एवेति वाच्यम्। ओमिति चेत् तत्राऽह – **न चात्रेति** ॥ अत्रेन्द्रं प्रति ब्रह्मोपदेशे। कुतो नेति चेत्। इन्द्रं प्रति ब्रह्मोपदिष्टस्याऽत्मनोऽमृतत्वाशरीरत्वजीवदेहाधिष्ठातृत्वप्रियाप्रिया-स्पृष्टत्वादि जीवव्यावृत्तधर्मवत्त्वेन जीवस्य चातादृशत्वेनोक्ततया जीवविलक्षणत्वादित्याह – **तदस्यामृतस्येत्यादिना** ॥ लिङ्गबाहुल्यात् सतात्पर्यमित्युक्तम्। भेदाभिधानात् जीववैलक्षण्याभिधानात्। नन्वत्रोक्तं प्रियाप्रियास्पृष्टत्वं तदनुभवरूपं जीवस्यैव किं न स्यात्। न स्यात्। तथात्वे प्रियाप्रियानुभवितृत्वं जीवादन्यस्य शरीरस्य वाच्यं स्यात्। नच तत् सम्भवतीत्याह – **नहीति** ॥ न वयं जीवस्य प्रियाद्यस्पृष्टत्वे तदतिरिक्तस्य शरीरस्य तत्स्पृष्टत्वं ब्रूमो येनासम्भवः स्यात्। किन्तु जीवस्यैव संसार-दशायां प्रियाद्यनुभवो मुक्तौ तु नेति। अतः कथमिदं जीवव्यावृत्तमित्यत

आह– **नच मुक्तस्यापीति** ॥ एवं च मुक्तस्यापि प्रियसद्भावान्न तदस्पृष्टत्वं जीवे सावकाशमिति भावः ।

## भाष्यम्

*प्रियाप्रियरहितो भगवानेव , न जीवः*

**नच विष्णोरत्र विवक्षितं प्रियम् । पराधीनरतिप्राप्तिर्हि[१] प्रियमत्र विवक्षितम् । न हि तद्भगवतः । मुक्तानां तु भगवदधीनरतित्वात् प्रियमस्त्येव ।**

**'जीवा मुक्ता अमुक्ताश्च पराधीनरतित्वतः ।**
**न प्रियापहतिः क्वापि स्वातन्त्र्यान्न हरेः प्रियम् ॥**
**पराधीनरतिर्यस्मात् प्रियमित्युच्यते बुधैः ।**
**हरेरधीनता तु स्याद् यद्यपि ब्रह्मवायुवोः ॥**
**तदन्यवशताभावादप्रियाविति तौ श्रुतौ ।**
**यथा राज्ञः स्वराट्शब्दो रुद्रस्येश्वरता तथा ॥**
**यथा शक्रस्य चेन्द्रत्वं तद्वदप्रियता तयोः ।**
**यथा राज्ञ्याः स्वराज्ञीत्वं यथैवोमेश्वरी स्मृता[२] ।**
**विद्युतः स्तनयित्नोश्च तथैवाप्रियता श्रुता ॥' इति च परमश्रुतौ ।**

## पदार्थकौमुदी

### भाष्यार्थः

नन्वेवं प्रियाद्यस्पृष्टत्वं विष्णावप्यनवकाशं तस्यापि

१.'प्राप्तिः' ह. २.'राज्ञ्याश्च राज्ञीत्वं यथा वोमेश्वरी' क.)

प्रियसद्भावादित्यत आह – **नचेति** ॥ तदुपपादयति – **पराधीनेति** ॥ मुक्ते तत्स्पृष्टत्वमुक्तमुपपादयति – **मुक्तानां त्विति** ॥ प्रियाद्यस्पृष्टत्वं न जीवे सावकाशं किन्तु भगवन्मात्रनिष्ठमित्यत्र प्रमाणमाह – **जीवा मुक्ता इत्यादिना** ॥ मुक्ता अमुक्ताश्च जीवाः प्रियवन्तः । कुतः ? पराधीन-रतित्वतः । एवं च तेषां न प्रियापहृतिः क्वापीत्यर्थः । स्वातन्त्र्यादप-राधीनत्वात् । नन्वथापि प्रियाद्यस्पृष्टत्वं न विष्णुमात्रनिष्ठम् । जीव-विशेषेषु वाय्वादिष्वशरीरत्वस्योक्तत्वेन तत्प्रयुक्तप्रियाद्यस्पृष्टत्वस्यापि सम्भवादित्याशङ्कायां तेष्वपि न मुख्यं प्रियाद्यस्पृष्टत्वमपि तु गौणमेवेत्येतद् दृष्टान्तैराह– **हरेरित्यादिना** ॥ ''ब्रह्मवायुवोः सुखस्य'' इति शेषः । अत्रोवङादेशः च्छान्दसः । अप्रियता प्रियास्पृष्टता । अमुख्येति शेषः । एवमग्रेऽपि ।

## भाष्यम्

**'स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति मुक्तस्य तत्प्रसादात् तत्प्राप्त्या निजानन्दानुभवश्रुतेश्च ॥**

*उत्तमपुरुष इति कथितो भगवानेव*

**स उत्तमपुरुष[१] इति तस्य जीवादुत्तमत्वश्रुतेश्च । अवरपुरुषापेक्षया ह्युत्तमपुरुषशब्दो भवति । अन्यथोत्तमशब्द एव स्यात् ।**

**'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति च ।**

**'ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते ।**

१. 'उत्तमः पुरुषः' क.

**तद् यत्स्वभावः कैवल्यं स भवान् केवलो हरे' ।**
**'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' ।**

## पदार्थकौमुदी

### भाष्यार्थः

एवं प्रियास्पृष्टत्वस्य भगवन्मात्रनिष्ठत्वात् तथात्वे नेन्द्रं प्रत्युक्तो भगवानेवेत्युक्तम् । इतश्चैवमेवेत्याह – **स एष इत्यादिना ॥** ''स एष सम्प्रसादः'' इत्यादिना स्वप्राप्त्या मुक्तजीवस्वभावानन्दानुभवप्रदत्व-मुच्यते। नचेदं जीवे सम्भावितमपीत्यर्थः।

किञ्चेन्द्रं प्रत्युक्त आत्मा ''स उत्तमः पुरुषः'' इति जीवादुत्तमतयो-च्यतेऽतो न जीव इत्याह– **स उत्तम इति ॥** ननु ''स उत्तमः पुरुषः'' इत्युक्तमुत्तमत्वं जीवेऽपि सम्भवति । नच स उत्तमत्वावधिरेव, न स्वयमुत्तम इति वाच्यम् । जडस्यैव तदवधित्वसम्भवादित्यत आह– **अपरेति ॥** तथाच पुरुषशब्दसमभिव्याहारबलेनापरपुरुषस्यैवावधित्वं न जडस्य । तथात्वे पुरुषशब्दवैयर्थ्यादिति भावः । न केवलमुत्तमत्वा-वधित्वेन पुरुष एव वक्तव्य इति न्यायप्राप्तम्, अपितु गीतायामभिहितं चेत्याह– **उत्तम इति ॥** अन्यः पूर्वोक्ताभ्यां क्षराक्षरपुरुषाभ्याम् । एवं चात्र क्षराक्षरपुरुषयोरुत्तमत्वावधित्वं स्पष्टमिति भावः । नन्विदमुत्तमत्वं यद्यप्यस्मदादिष्वसम्भवि । तथाऽपि ब्रह्मादिषु जीवविशेषेषु सम्भावितं भविष्यति। तथाचास्मदादय एवोत्तमत्वावधय इति न पुरुषशब्दवैयर्थ्यमि-त्याशङ्कायां नोत्तमपुरुषत्वमन्यत्र कुत्रापि सावकाशमित्यागमाभ्यामाह– **ब्रह्मेशानादिभिरित्यादिना ॥** यत् कैवल्यं सर्वोत्तमत्वं ब्रह्मेशानादिभिः प्राप्तुं नैव शक्यते तत् कैवल्यं यस्य स्वभावः स भवान् केवलः सर्वोत्तम इत्यर्थः। महित्वं सर्वोत्तमत्वादिकम्।

## भाष्यम्

*उत्तमपुरुषो न मुक्तात्मा*

**'इदं ज्ञानमुपाश्रित्य[१] मम साधर्म्यमागताः', 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति,**

**'एतमानन्दमयमात्मानमुपसङ्क्रम्येमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्',**

**'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः',**

**'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादेश्च ।**

**'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्' इत्यत्रापि भेदेनावस्थानश्रुतेः । उपशब्दादन्तरशब्दाच्च मुक्तस्य परञ्ज्योतिस्समीपावस्थानावगतेश्च ।**

## पदार्थकौमुदी

### भाष्यार्थः

ननु यदुक्तमपरपुरुषावधिकमेवोत्तमत्वमत्रोच्यत इति तदयुक्तम् । मुक्त्यवस्थायां हीदमुच्यते । नच मुक्तावपरपुरुषसद्भावः प्रामाणिकः । प्रत्युत ''परेऽव्यये सर्व एकीभवन्ति'' इत्यादिनैक्यस्यैव तदाऽवगमादित्याशङ्कायां मोक्षेऽप्यपरपुरुषसद्भावे प्रमाणान्युदाहरति– **इदं ज्ञानमित्यादिना** ॥ इत्यादेश्चापरपुरुषसद्भावो मोक्षेऽप्यवगम्यत इति शेषः । अत्रार्थे एतदुपनिषद्गतवाक्ये अपि उदाहरति – **स तत्रेत्यादिना** ॥

---

१. 'ज्ञानमपाश्रित्य' ह.

भेदेनावस्थानश्रुतेः । मोक्षे पुरुषाणामिति शेषः । किञ्च ''स उत्तमः पुरुषः'' इति वाक्यं, यत्र श्रूयते तत्रैव मुक्तावपरपुरुषसद्भावज्ञापकमस्तीत्याह– **उपशब्दादिति** ॥ ''अन्तरशब्दाच्च'' इति शाखान्तरपाठमनुसृत्योक्तम् । तथाच बहुप्रमाणविरोधादैक्यप्रतिपादकं वाक्यं स्थानैक्यादिविषयतया सावकाशमिति भावः ।

## भाष्यम्

*जीवोपासनां न चतुरानन उपदिशेत्– इति निरूपणम्*

**नच जीवमात्रं देवा उपासते ।**

**'ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते' इति हि श्रुतिः ।**

**'भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा ' इत्यादेश्च ।**

## पदार्थकौमुदी

### भाष्यार्थः

इतोऽपि नेन्द्रं [१]प्रत्युपदिष्टो जीवात्मेत्याह – **नचेति** ॥ अत्र हि ''तं वा एतं देवा आत्मानमुपासते'' इति देवोपास्यत्वं प्रतीयते । नच तज्जीवे सम्भवतीति भावः । ननु जीवानामपि प्रतीकत्वादिना देवोपास्यत्वमस्त्येवेत्यत उक्तम्– **मात्रमिति** । भगवन्तं विनेत्यर्थः । कुतो नेति चेत् । विष्णोरेव तदुपास्यत्वश्रुतेरित्याह– **ऊर्जमिति** ॥ पूर्वार्धगतं देवैरित्येतद् विभक्तिविपरिणामेनात्रानुवर्तते । तथाच देवाः पृथिव्या ऊर्जमन्नं भक्त्वाय भोक्तुमुरुगायमुपासत इति योजना । उरुगायश्च विष्णुरिति प्रसिद्धमेव । इति श्रुतिर्विष्णोर्देवोपास्यत्वम् [२]आहेति शेषः ।

---

(१)'प्रत्युपादिष्टः' इति मातृकायाम् । प.सं. ३३६ । २.'आहेत्यर्थः' इति मातृकायाम् । प.सं. ३३६ ।

किञ्च चतुर्मुखोपास्यत्वे तदितरसर्वदेवोपास्यत्वं कैमुत्येनैव सिद्ध-मित्याशयेन देवोत्तमचतुर्मुखोपास्यत्वं भागवतेऽभिहितमित्याह– **भेद-दृष्ट्येति** ॥ भेददृष्ट्या जीवादिभिन्नत्वेन भगवदुपासनया । अभिमानेन पूर्णज्ञानेन ।

''कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ।

स सङ्गत्या'' इत्युत्तरेणान्वयः । यद्वा ''स उत्तमः पुरुषः'' इत्युक्तमुक्तगम्यस्य सकलपुरुषोत्तमत्वं भागवतसम्मत्या द्रढयति– **भेददृष्ट्येति** ॥ अत्र ह्युत्तरार्धे ''पुरुषर्षभम्'' इत्यनेन मुक्तगम्यस्य पुरुषोत्तमत्वं स्पष्टमुच्यते ।

## भाष्यम्

*भगवतः इन्द्रियैर्भोगकथनम्*

**'भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ।**

**भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलङ्कृषीष्ट भगवान् वचांसि मे' इत्यादौ भगवत एवेन्द्रियैर्भोगोक्तेश्च ।**

**'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' इति च [१]।**

**'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति भगवद्वचनं [२] च ।**

## पदार्थकौमुदी

### भाष्यार्थः

नन्वत्र ''दर्शनाय चक्षुर्गन्धाय घ्राणम्'' इत्यादिनेन्द्रियैर्विषय भोक्तृत्व-मिन्द्रं प्रत्युपदिष्टस्याऽत्मन उच्यते । नच तज्जीवभिन्नस्य सम्भवति ।

---

१. 'इति च' इति क पाठे नास्ति । २. 'इति भगवद्वचनं' ह पाठः

भगवतः पूर्णत्वेन विषयभोगासम्भवात् । अतो जीव एवेन्द्रं प्रत्युपदिष्ट आत्मेति शङ्कायां भगवतः पूर्णत्वेऽपि लीलया मुख्यं विषय-भोक्तृत्वमप्यस्तीत्याशयेन तत्र भागवतवाक्यं पठति – **भूतैरित्यादिना** ॥ यद् यस्माद् अमूषु पूर्षु शेते अतः पुरुषः चक्षुरादिदशेन्द्रियाणां मनआदिपञ्चानां साक्षिणश्च षोडशगुणान् विषयान् षोडशात्मकः उक्तषोडशव्यापी सन् भुङ्क्ते । अत्र श्रुतिमप्याह – **ऋतं पिबन्ताविति** ॥ यौ सुकृतनिर्मितशरीरे हृदयगुहां प्रविष्टौ तत्रापि सर्वजीवोत्तमेऽतिपूर्णे वायौ प्रविष्टौ सुकृतफलं भुञ्जानौ तौ ब्रह्मविदः छायातपौ वदन्तीति सम्बन्धः । नन्वस्याः श्रुतेरयमर्थः कुत इत्यपेक्षायां सूत्रकृता तथा निर्णीतत्वादित्याशयेनैतच्छ्रुत्यर्थनिर्णायकं सूत्रं पठति – **गुहां प्रविष्टा-विति** ॥ गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव । ''घर्मा समन्ता''इति तद्दर्शनादिति सूत्रार्थः ।

### भाष्यम्

**'इदं पश्यामि जिघ्राणीत्यपि जीवा न वै विदुः ।**

**[१]द्रव्याणामपरिज्ञानाद् वेदासौ पुरुषोत्तमः' इति च ।**

*उत्तमपुरुषत्वेन भगवानेव परामृष्टः*

**'स उत्तमः पुरुषः'[२] इति भगवत एवायं परामर्शः ।**

**'ॐ अन्यार्थश्च परामर्शः' इति भगवद्वचनात् ।**

**'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति च ।**

**'ॐ जगद्व्यापारवर्जम्' इत्यल्पैश्वर्यत्वं च मुक्तस्य[३] भगवताऽभिहितम् ।**

---

१.'द्रव्याणामपि च ज्ञानात्' ह. २. 'उत्तमपुरुषः' ह. ३.'अल्पैश्वर्यत्वं मुक्तस्य' क.

**अतो यं प्राप्य जीवः स्वेन रूपेणाभिनिष्पद्यते स भगवानुत्तमः पुरुषः इति परामर्शः ।**

## पदार्थकौमुदी

### भाष्यार्थः

ननु ''यो वेदेदं जिघ्राणि'' इत्यादिना विषयभोक्तृत्वानुसन्धातृत्वं जीवलिङ्गं प्रतीयते । अतो विषयभोक्तृत्वमपि जीवस्यैव वाच्य-मित्यतस्तदनुसन्धातृत्वमपि न मुख्यतो जीवगतमपि तु भगवन्निष्ठमेवेति प्रमाणेनैवाऽह– **इदमिति** ॥ पश्यामीत्यनेन चाक्षुष इत्यस्य तात्पर्यमुक्तमित्यवगन्तव्यम् । विदुः मुख्यतः । ''स उत्तमः पुरुषः''इत्येतन्न जीवपरमित्युक्तम् । तद्युक्तम् । ''स्वरूपेणाभि-निष्पद्यते'' इति निरन्तरप्रकृतमुक्तजीवस्यैव परामर्शप्रतीतेरित्यत आह– **स उत्तमः पुरुष इति** ॥ कुत इत्यतः सूत्रकृता तथोक्तत्वादित्याह– **अन्यार्थ इति** ॥ परमात्मार्थश्च स इति परामर्श इत्यर्थः । गीता-समाख्ययाऽप्युत्तमपुरुषो भगवानेवेत्याह – **उत्तमः पुरुष इति** ॥ पूर्वमुत्तमत्वमपरपुरुषावधिकमित्यर्थे इदमुदाहृतम् । इदानीं तु भगवत एवोत्तमत्वे । अतो न पौनरुक्त्यम् । नन्वेवमपि भगवानेवोत्तम-पुरुषोऽत्राभिमत इति कथं निर्णयः ? जीवप्रापकनिरन्तरप्रकृतेरपि सद्भावेन जीवस्यापि तथात्वप्राप्तेरित्यतस्तत्र बाधकमाह– **जगद्व्यापार-वर्जमिति** ॥ अल्पैश्वर्यस्य चोत्तमपुरुषत्वं न युक्तमिति भावः । एवं परामर्शस्य जीवान्यविषयत्वं प्रसाध्येदानीं उपसंहारव्याजेन तद्वाक्यार्थ-माह– **अत इति** ॥ परामर्शः परामर्शवाक्यार्थः ॥

### भाष्यम्

**'स्वप्ने महीमानश्चरति यत्रैतत्सुप्तः' इति पुरस्तादपि भेदोक्तेः ।**

**न हि महीयमान एव जीवश्चरति ।**

**प्रायोग्यः सारथिः । प्रयोगेन यानस्य ।**

**'यन्ता सारथिरानेता प्रायोग्य इति कीर्त्यते'(१)**

**इत्यभिधानात् ।**

**'अन्येभ्यो दीप्यमानत्वाद् दैवं चक्षुर्मनः स्मृतम्' इति च ।**

**'य एते ब्रह्मलोके' तेषु 'रमते'।**

**अनुविद्य । शास्त्राचार्यानुसारेण विदित्वा विजानात्यापरोक्ष्येण ।**

**'वेदनं शास्त्रतो ज्ञानं विज्ञानं ब्रह्मदर्शनम्' इति च ।**

**॥ खण्डः १२ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

किञ्च, नेन्द्रं प्रत्युपदिष्ट आत्मा जीवः । तस्य ''स्वप्ने महीयमानः'' इति स्वप्नावस्थायां पूज्यतया चरणाभिधानात् । ''यत्रैतत् सुप्तः'' इति सुप्तजीवाश्रयत्वोक्तेश्चेत्याशयेनाऽऽह – **स्वप्ने महीयमान इत्यादिना** ॥ भेदोक्तेर्भेदकधर्मोक्तेर्न जीव आत्मेति शेषः । स्वप्ने महीयमानत्वं न जीवगमित्युपपादयति – **नहीति** ॥ दुःखानुभवस्यापि सद्भावादिति भावः । अत्र महीयमान एव चरतीत्यवधारणमभिप्रेतम् । सम्मुग्धोक्तित्वादवधारणोक्त्यभाव इति ज्ञातव्यम् । सुप्ताश्रयत्वं च भगवन्मात्रनिष्ठमिति ''सता सोम्य तदा सम्पन्नो भवति''इत्युपपादितमिति भावः ।

''स यथा प्रायोग्यः'' इत्यादिकं ''यथैव सारथिः''इति प्रमाणेन

---

१. 'कीर्तितः' क.

व्याख्यातम् । तदुपपादयितुमनुवदति– **प्रायोग्यः सारथिरिति** ॥ एतेन प्रमाणे सारथिपदव्याख्येयपदमपि दर्शितं भवति । सारथिः कया वृत्त्या प्रायोग्यपदप्रतिपाद्य इति जिज्ञासायां योगेन रूढ्या चेति क्रमेणाऽह– **प्रयोगेनेत्यादिना** ॥ अनेन प्रयुज्यत इति प्रयोग्योऽश्वो बलीवर्दो वेत्यपव्याख्यानमित्युक्तं भवति । ''अस्य दैवं चक्षुः''इत्येतद् दैव-शब्दार्थाप्रतीत्या व्याचष्टे– **अन्येभ्य इति** ॥ मनोग्रहणेन चक्षुरित्ये-तदुपलक्षणमिति सूचयति । इदमपि सर्वेन्द्रियोपलक्षणमिति ज्ञातव्यम् । ''य एते ब्रह्मलोके'' इत्यस्यान्वयाप्रतीतेस्तं दर्शयति– **य एत इति** ॥ ''अनुविद्य विजानाति''इत्येतद् ''यथा ज्ञात्वा पश्येद् विष्णुं''इति प्रमाणेन व्याख्यातमुपपादयितुं विशदयन्ननुवदति – **अनुविद्येति** ॥ अभिधानोक्त्या तदुपपादयति – **वेदनमिति** ॥ **इति द्वादशः खण्डः** ॥

## ततश्चायं खण्डार्थः

तत्र तावज्जरामृत्युपरीतत्वशरीरित्वाभावरूपं भगवतो जीवव्यावृत्तधर्मं वक्तुं जीवे जरामृत्युपरीतत्वशरीरित्वे तावदाह– **मघवन्नित्यादिना** ॥ हे मघवन् ! इदं जीवजातं मर्त्यं वाव मरणशीलमेव । उपलक्षणमेतत् । जराग्रस्तं च । शरीरं शरीरसम्बन्धि तदभिमानीति यावत् । मर्त्यत्वमुपपादयति– **आत्तमिति** ॥ इदानीं भगवतस्तदभावं वदन् शरीराधिष्ठातृत्वमप्यसाधारणं धर्मान्तरमाह – **तदस्येति** ॥ तज्जीवाभिमतं शरीरम् अमृतस्य जरामृत्युरहितनित्यशरीरस्य अशरीरस्य शरीराभि-मानशून्यस्य अस्य पूर्वोक्तगुणस्य आत्मनः परमात्मनोऽधिष्ठानम् । एवम्भूतोऽपि लीलया मर्त्यशरीरमधितिष्ठतीति यावत् । जीवस्तु न [१]तदधितिष्ठतीति वक्ष्यति । प्रियाप्रियास्पृष्टत्वरूपं जीवव्यावृत्तधर्मान्तरं

१. 'तदधिष्ठातेति' इति मातृकायाम् । प.सं. ३४४ ।

वक्तुं जीवे तावत् तदभावमाह – **आत्त इत्यादिना ॥** यः सशरीरो जीवः सः प्रियाप्रियाभ्यामात्तः ,सम्बद्धः । एतदुपपादयति – **न हवा इति ॥** अपहतिरपगमो नास्ति हवै नास्त्येव खलु । मुक्तानामपि प्रियसद्भावादिति भावः । अत्र प्रियं नाम परेणेयं प्राप्यं सुखम् अप्रियं तु परेणेयमभद्रम् अकारस्य निषेधार्थत्वेनाभद्रवाचित्वात् । प्रियशब्दस्य च परेणेयत्ववाचित्वात् । तथाच परेणेयम् अ अप्रियमिति परनिपात इति ज्ञेयम् । इदानीं भगवति तदस्पृष्टत्वमाह – **अशरीरमिति ॥** अशरीरं सदा शरीराभिमानशून्यं परमात्मानं प्रियाप्रिये न वाव नैव स्पृशतः । अभद्रं भगवति नास्त्येव । सुखमपि न परप्राप्यमस्तीति भावः ॥ १ ॥

भगवतः प्रियाद्यस्पृष्टत्वं कैमुत्येन साधयितुमाह – **अशरीर इत्यादिना ॥** वायुर्मुख्यः अशरीरः ज्ञानवैशेष्येण नात्यन्तं देहेन सङ्गतः । अभ्रं ब्रह्मा । व्याप्तत्वादभ्रनामा विष्णुस्तेनैव भ्रियमाणत्वात् । विद्युत् वायुपत्नी । विशेषेण द्योतनात् । स्तनयित्नुर्ब्रह्माणी । सर्वशब्दात्मकत्वात् तस्याः । एतानि अभ्रादीनि अशरीराणि ज्ञानवैशेष्येण शरीरेणात्यन्तं न सम्बद्धानि। अत एव न प्रियाप्रियवन्ति । एतच्च भाष्ये स्पष्टम् । एवं च यदा कदाचित् कथञ्चिदशरीराणां प्रियाद्यस्पर्शस्तदा किमु वाच्यं सर्वथा सर्वदा शरीरेणासम्बद्धस्येत्युक्तं भवति । मुक्तप्रायत्वाच्च भगवान् जीवविलक्षण इत्याशयेनाऽऽह – **तद्यथैतानीत्यादिना ॥** तद् वक्ष्यमाणं निदर्शनं यथा । एतानि वाय्वादीन्यमुष्मादाकाशादासमन्तात् काशमानात् परमात्मनस्तत्प्रसादादिति यावत् । समुत्थाय शरीरादिति शेषः । परञ्ज्योतिः परं ब्रह्म उपसम्पद्य तत्समीपं गत्वा स्वेन रूपेण स्वस्वरूपानन्दादिनाऽभिनिष्पद्यन्ते सम्यक् सम्पन्नानि भवन्ति ॥ २ ॥

एवमेवैषोऽपरोऽपि मुक्तः सम्प्रसादः सम्यक् विष्णुप्रसादवान् अस्मात् चरमात् शरीरात् समुत्थाय यत् परञ्ज्योतिरुपसम्पद्य स्वेन

रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः । अनेनोत्तमपुरुषत्वेनापि जीववैल-क्षण्यमुक्तमिति ज्ञातव्यम् । केचित्तु वैलक्षण्यसिद्धार्थप्रदर्शनायेदमित्या-हुः । मुक्तभोगप्रदत्वेनापि जीववैलक्षण्यमित्याशयेनाऽह– **स तत्रेति** ।। सः प्राप्तनिजानन्दाविर्भावस्तत्र भगवल्लोके तदनुग्रहेणैव पर्येति परितो गच्छति । जक्षन् भक्षयन् हसन् वा ज्ञातिभिः सह मुक्तैः अज्ञातिभिः पूर्वमुक्तैः । रमणातिशयप्रकारमाह – **नोपजनमिति** ।। उपजनं स्वसमीपवर्तिजनम् । स्वस्येदं शरीरं च न स्मरन् रममाणः पर्येतीत्यन्वयः । केवलं हर्यनुसन्धानेनैव परमसुखभोक्तॄणां तेषामुपजनदर्शनादिकमपि नास्तीति भावः । "तदमृतस्याशरीरस्याऽत्मनोऽधिष्ठानम्" इत्यनेनोक्तं शरीराधिष्ठातृत्वं कथं जीवव्यावर्तकमित्याशङ्कापरिहाराय शरीराधिष्ठातृत्वं विशदयन् भावनार्थमीश्वरस्य रथिकसाम्यमप्याह– **स यथेत्यादिना** ।। सः वक्ष्यमाणो दृष्टान्तो यथा । यानप्रयोक्तृत्वात् प्रायोग्यः सारथिः । आचरत्यनेनेत्याचरणे रथे आचरणे तत्प्रवृत्त्यर्थं युक्तो नियुक्तः स्वामिना, एवमेवायं प्राणोऽस्मिन् शरीराख्ये रथे तदाचरणार्थं युक्तो नियुक्त ईश्वरेण। शरीररथे प्राणः सारथिस्थानीय इत्यर्थः । उपलक्षणमेतत् । यथा रथी यथाऽन्यरथग इत्यादि ग्राह्यम् । तथाच यथा रथी एवमेवायमस्मिन् शरीरे प्राणः प्रकृष्टानन्दरूपत्वात् तन्नामा विष्णुः रथाधिष्ठाता । यथाऽन्यरथगः अन्यस्वामिकरथगः कश्चित् पुमान् एवमेवायमस्मिन् शरीरे प्राणस्तद्वान् जीवः । इति योजना ।। इन्द्रियाणि हयस्थानीयानीत्यपि ग्राह्यम् । एवं च जीवस्यान्यरथगोपमत्वान्न शरीराधिष्ठातृत्वमिति तज्जीवव्यावर्तकं भवत्येवेति भावः ।। ३ ।।

प्रकृतप्राणेन्द्रियविषयजीवाश्रयत्वं सर्वेन्द्रियैस्तत्तद्विषयभोक्तृत्वरूपं जीवव्यावृत्तधर्मान्तरं वदन्नुक्तमुत्तमपुरुषत्वमुपपादयति – **अथ यत्रेत्या-दिना** ।। अथशब्दोऽसाधारणधर्मान्तरकथनप्रारम्भार्थः । एवमुत्तर-

त्रापि। यत्र विष्णौ एतद् आकाशं प्रकाशमानं रूपमनुविषण्णं तत्सम्बद्धं चक्षुः। स्वविषयेण सह चक्षुरिन्द्रियं यत्र श्रितमित्यर्थः। यस्य च दर्शनाय भोगाय चक्षुः। यश्च चाक्षुषः चक्षुषेदं पश्यामीति स्वातन्त्र्येण वेद नान्यः। इदं च तद्दर्शनाय चक्षुः कुत इत्याशङ्कायां तस्यैव तद्भोक्तृत्वानुसन्धानवत्त्वादित्युपपादनार्थमुक्तमिति ज्ञातव्यम्। एवमग्रेऽपि घ्राणादीन्द्रियं तद्भोगाय कुत इत्याशङ्कायां तस्यैव तत्तद्विषयभोक्तृत्वानुसन्धानवत्त्वादित्युपपादनाय "यो वेदेदं जिघ्राणि" इत्यादिकमिति द्रष्टव्यम्। यश्चक्षुरिन्द्रियं तद्विषयादिकं च वेदेत्यपि ग्राह्यम्। स उत्तमः पुरुषः इति सम्बन्धः। एवं यत्र गन्धादिसहितं घ्राणादि आश्रितं यस्य च गन्धादिभोगाय घ्राणादि यश्चेदं पुष्पादिकं जिघ्राणीत्यादि वेद नान्यः यश्च घ्राणादीन्द्रियं तद्विषयादिकं च सम्यग् वेद स आत्मा [1] उत्तमपुरुषः। इति मननाय मन इत्यन्तं योज्यम्। एवं यत्र प्राणे जीवे वा स्वस्वविषयसम्बद्धं चक्षुरादीन्द्रियं यस्य च प्राणस्य जीवस्य वा भोगाय चक्षुरादिकं, यश्च प्राणो जीवो वा इदं पश्यामीत्याद्यनुसन्धानवान् स आत्मा प्राणो जीवो वा यत्र स उत्तमपुरुषः। इति प्राणजीवपरतयाऽपीदं वाक्यजातं योज्यम्। तयोरपि यथाक्रममुख्यतया विषयभोक्तृत्वात्। अत्र चक्षुरादिशब्दास्तदभिमानिदेवतापरा अपीति द्रष्टव्यम्।

नन्वेवं जीवेन्द्रियैर्भगवतो विषयभोगे स्वयमिन्द्रियशून्य इत्यापन्नम्। तथाच "सहस्राक्षः" इत्यादिश्रुतिविरोध इत्यत आह– **अस्य दैवं चक्षुरिति**॥ अस्य भगवतश्चक्षुरादिकम् इन्द्रियम् अन्येभ्यो दीप्यमानत्वाद् दैवं स्वरूपात्मकमस्तीत्यर्थः। किं तत इत्यतः तैर्विषयभोगप्रकारमाह– **स वा इति**॥ स एष परमात्मा एतेन स्वस्वरूपात्मकेन दैवेन दीप्यमानेन चक्षुषा मनसेत्याद्यन्तग्रहणेन सर्वेन्द्रियैरिति सूचितम्। जीवेन्द्रिय-

---

१. 'उत्तमः' इति मातृकायाम्। प.सं. ३४६।

निविष्टेनेति शेषः । तथाच स्वकीयेन्द्रियव्याप्तैर्जीवेन्द्रियैरेतान् पुरोऽव-स्थितान् कामान् विषयान् पश्यन्नित्युपलक्षणम् । जिघ्रन्नित्यादि द्रष्टव्यम् । रमते स्वेच्छया ।। ४–५ ।।

नन्वेवमशुभविषयभोगोऽपि भगवतः स्यादित्यत आह– **य एत इति** ।। य एते कामाः ब्रह्मलोके शुभविषयोपलक्षणमेतत् । तेषु रमत इत्यर्थः । तथाच शुभमात्रभोक्तेति भावः । अथवा स्वस्वरूपेन्द्रियैर्जीवेन्द्रियानधिष्ठितै-र्विषयभोगः कुत्रेत्यपेक्षायामाह– **य एत इति** ।। य एते ब्रह्मलोके वैकुण्ठादौ कामाः विषयाः सन्ति तेषु दैवेन चक्षुषा मनसेतरेन्द्रियैश्च स्वरूपभूतैरेव रमत इत्यर्थः । वाय्वादिदेवतोपास्यत्वरूपमपि जीवव्यावर्तकं धर्मान्तरं वदन्नुक्तोपासनाया फलं परकृतिरूपार्थवादपूर्वकमाह– **तं वा एत-मिति** ।। तमपहतपाप्मत्वादिनोक्तमेतं सर्वभोक्तृत्वेन प्रकृतमात्मानं परमात्मानं देवाः पूर्वोक्तवाय्वाद्याः उपासते । तस्मादुपासनासाध्य-भगवत्प्रसादात् तेषां सर्वेषां वाय्वादीनां देवानां सर्वे च लोकाः जनाः भुवनानि च सर्वे कामाश्च आत्ताः अधीनाः । तस्माद्यतनोऽपि यस्तम् उक्तगुणमात्मानं श्रवणादिनाऽनुविद्यापरोक्षतो विजानाति सोऽपि सर्वान् लोकान् सर्वान् कामांश्च योग्यतानुसारेणाऽप्नोति । एवं प्रजापतिनोक्त-मात्मोपदेशमुपसंहरति वेदपुरुषः – **इतीति** ।। द्विरुक्तिरवधारणार्था ।। ६ ।। **द्वादशः खण्डः** ।। १२ ।।

## उपनिषत् (खण्डः १३)

*मोक्षप्रार्थना*

**श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति ।। १ ।। १३ ।।**

## भाष्यम्

**'श्यामो हृदिस्थितो विष्णुः शबलो विश्वरूपवान् ।**
**जीववर्णो जीवगतो लोहितश्चक्षुषि स्थितः ॥' इति मानसे ।**
**'हयग्रीवमुखोत्थानि यानि वाक्यानि तानि तु ।**
**रमा ददर्श तान्येव ब्रह्मा तान्येव नारदः ॥**
**यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु ।**
**तान्युत्तरेषां वाक्यानि भविष्याण्यवदद्धरिः ।**
**एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्धि सा ॥' इति सामसंहितायाम् ॥ खण्डः १३ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

हृदयादिस्थस्य भगवतो रूपविशेषवत्त्वेनोपास्तिमाहानेन खण्डेन । तत्र श्यामादेरधिष्ठानविशेषाप्रतीतेस्तद्दर्शयन् व्याचष्टे– **श्याम इति** ॥ ''हृदि स्थितो विष्णुः'' इत्यस्य पूर्वेणोत्तरेण च सम्बन्धः । श्यामः श्यामरूपवान् । ''शबलः'' इत्यनूद्य ''विश्वरूपवान्''इति व्याख्यानम् । नानारूपसमाहारवानित्यर्थः । एवं च श्यामशबलरूपवन्तौ भगवन्मूर्तिविशेषौ हृदि स्थितौ । तयोश्चोपासनायां न क्रमः । किन्तु श्यामात् तदुपासनात् । अनन्तरं शबलं प्रपद्ये । अथवा शबलात् तदुपासनानन्तरं श्यामं प्रपद्य इत्यनियम एवेत्याह वेदपुरुष इत्युक्तं भवति । इदमुपलक्षणमित्याशयेनाऽह– **जीववर्ण इति** ॥ जीववर्णः जीवो [१]यादृशवर्णस्तादृशरूपवानित्यर्थः । अनेन गायत्रीविद्यायां यज्जीवव्यापि

[१] 'यादृशरूपः' इति मातृकायाम् । प.सं. ३४८ ।

भगवत्स्वरूपमुक्तं तज्जीववर्णमित्युपास्यमित्युक्तं भवति। ''य एषोऽन्त-रक्षिणि'' इत्युक्तश्चक्षुषि स्थितो भगवान् लोहितो लोहितरूपवानुपास्य इत्यर्थः। एवं हृदयादिगतमूर्तीनां रूपविशेषवत्त्वेन प्रतिपत्तिमभिधाय तत्प्रतिपत्तिकाले कर्तव्यमनुसन्धानप्रकारमाह वेदपुरुषः – **अश्व इत्या-दिना** ॥ अश्वो रोमाणीव पापमप्रारब्धम् अनायासेनैव विधूय चन्द्र इव राहोर्मुखात् प्रारब्धपापाच्छनैर्भोगेन क्षीयमाणत्वात् प्रमुच्य शरीरं स्थूलं सूक्ष्मं च धूत्वा विहाय कृतात्मा आविर्भूतस्वरूपोऽहमकृतं नित्यं ब्रह्मलोकमभिसम्भवामि गन्ताऽस्मीत्यनेनाभिप्रायेण प्रपद्ये इत्याह वेदपुरुषः।

नन्विदमयुक्तम्। हयग्रीवस्य रमाया वा एतदुपनिषद्द्रष्टृत्वाद्[१] उभयोश्च नित्यमुक्तत्वेनैतादृशाभिप्रायासम्भवादतः कथमेतदित्यतोऽ-त्रोपपत्तिं प्रमाणेनैवाऽह – **हयग्रीवेति** ॥ नारद इत्युपलक्षणम्। सोमोऽपि ग्राह्यः। 'सोमः साम्नाम्' इत्यन्यत्रोक्तत्वात्। उत्तरेषां नारदादीनाम्। भविष्याणीत्युपलक्षणम्। एवं च हयग्रीवादयः अश्व इव रोमाणीत्यादि-प्रार्थनाभिप्रायकाणि वाक्यान्यतीतकल्पे नारदादयः प्रावोचन्। उत्तरत्र वक्ष्यन्ति चेत्येव पश्यन्ति। नतु स्ववाक्यतयाऽतो नानुपपत्तिरित्यर्थः। या वाक्यसंहतिस्तैर्दृष्टा सेत्यर्थः॥ **खं० १३** ॥[२]

## उपनिषत् (खण्डः - १४)

*यशः प्रार्थना*

**आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म तदमृत९ं**

---

१. 'तयोश्च' इति मातृकायाम्। प.सं. ३४८। २. अत्र भाष्यार्थकथनेनैव स्पष्ट इति खण्डार्थः पृथङ् नोक्तः।

**स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवानि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कं श्वेतं लिन्दुमाऽभिगां लिन्दुमाऽभिगाम् ॥ १ ॥ ॥ १४ ॥**

## भाष्यम्

**'आकाशोऽतिप्रकाशत्वान्नामरूपे ऋते स्थितः ।**
**ब्रह्माख्यो भगवान् विष्णुस्तद्वेश्म प्राप्नुयामहम् ॥**
**यशोऽहं सर्ववर्णानां मत्तोऽन्येषां [१] यशो भवेत् ।**
**सोऽहं मम यशोदातृ यशसां यश उत्तमम् ॥**
**विष्ण्वाख्यं परमं ब्रह्म श्वेतं श्वसनगं यतः ।**
**अदत्कमद्यमानं कं स्वानन्दानुभवात्मकम् ।**
**लिन्दु तद्रतिदं यस्मात् तदहं प्राप्नुयां सदा ॥ खण्डः १४ ॥**

## पदार्थकौमुदी

### भाष्यार्थः

पूर्वोक्तपुण्डरीकगताकाशनामकब्रह्मोपास्तिमेव प्रकारान्तरेणाऽह– [२]**आकाशो हवा इत्यादिना खण्डेन** ॥ तत्राप्रतिपत्ति-विप्रतिपत्तिनिरासाय खण्डं प्रमाणेनैव व्याचष्टे– **आकाश इत्यादिना** ॥ अतिप्रेत्याङोऽर्थः । ते इत्यस्यार्थः – **नामरूप इति** ॥ अन्तरेत्यस्यार्थः – **ऋत इति** ॥ तद् ब्रह्मेत्येतन्न चतुर्मुखपरमित्याह– **ब्रह्माख्य इति** ॥ ''प्रजापतेः सभाम्'' इत्यादि व्याचष्टे– **तद्वेश्मेति** ॥ अनेन

१.'मत्तो ह्येषां' ह. २. अनेन 'आकाशो हवै' इति वेदेशीयाभिमत उपनिषत्पाठ इत्यवधेयम् ।

प्रजापतिशब्दो विष्णुपर इत्युक्तं भवति । ''यशोऽहं भवानि ब्राह्मणानाम्'' इत्यादि व्याचष्टे– **यशोऽहमिति** ॥ सर्ववर्णानां मध्येऽहं यशो यशस्वी भवानीत्यर्थः । ''सहाहं यशसां यशः'' इत्येतद् व्याचष्टे– **मत्तोऽन्येषामिति** ॥ अनेन सोऽहं यशसां यशस्विनामन्येषां यशः यशःप्रद इति व्याख्यातं भवति ।

''यशसां यशः'' इत्येतत् प्रकारान्तरेण व्याकुर्वन् ''यशोऽहमनु-प्रापत्सि''इत्येतद्व्याचष्टे– **सोऽहमिति** ॥ अनेन ''स हाहम्'' इत्यत्रत्यस्य स इत्यस्याऽवृत्तिरित्युक्तं भवति । एवं च सोऽहं यशसां यशः उत्तमयशोरूपं यद्ब्रह्म तदनुग्रहेण यशः प्रापत्सि प्राप्नुयामिति योजनोक्ता भवति । श्वेतमित्यादि व्याचष्टे – **श्वेतमित्यादिना** ॥ अतः श्वेतमित्यर्थः । ''अदत्कम्'' इत्येतदनूद्य तेनाद्यमानं कं कीदृशमित्यपेक्षायां तद् दर्शयति – **अदत्कमित्यादिना** ॥ लिन्दुमित्येतदप्रतीतेर्व्याचष्टे – **लिन्द्विति** ॥ तत्परं ब्रह्म यस्माद् रतिदं तस्माल्लिन्द्वित्युच्यते । रो ल इति भावः । आभिगामित्येतत्तात्पर्यमाह – **तदहमिति** ॥ सदेत्याङोऽर्थः ॥ **खण्डः १४** ॥

## ॥ ततश्चायं खण्डार्थः ॥

आकाशः आसमन्तात् काशनादाकाशननामा हृत्पुण्डरीकस्थो विष्णुर्नामरूपयोः नामरूपात्मकप्रपञ्चयोर्निर्वहिता कर्ता, वैनामेति निपातसमुदायोऽयमर्थः प्रसिद्ध इत्याह । ते नामरूपे ''अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनात्'' इत्युक्तदिशा अन्तरा विना यदस्ति तद्ब्रह्म तदमृतं नित्यमुक्तं स आत्मा आदानादिकर्ता । तात्पर्यद्योतनाय पृथग् योगकरणम् । उपासनाकरणकाले कर्तव्यमभिसन्धिमाह– **प्रजापते-रिति** ॥ प्रजापतेः विष्णोः सभां समितिं वेश्म गृहं प्रपद्ये प्राप्नुयाम् ।

ब्राह्मणानां मध्ये यशस्वी भवामीत्यर्थः। एवं यशो राज्ञामित्यादि योज्यम्। स इत्येतद्वक्ष्यमाणमत्रापि सम्बद्ध्यते। यशसां यशस्विनां यशः यशःप्रदः सोऽहं यद् यशसां यशः उत्तमयशोरूपं श्वेतं श्वसनगं कं स्वानन्दानुभवात्मकम् अत्तीत्यदत्कं परब्रह्म तदनुग्रहेण यशः प्रापत्सि प्राप्तवानस्मि। "स हाहम्" इत्यस्योत्तरवाक्येऽन्वयः। सोऽहं हेत्यास्वादने। यन्मम यशोदातृ तदेवादत्कं श्वेतं, लिन्दुं रतिदम् आ सदा अभिगां प्राप्नुयामिति वेदपुरुषस्य ब्रह्मणो वाक्यम्। पुनरुक्तिः पूर्ववत्॥

**चतुर्दशः खण्डः॥ १४॥**

## उपनिषत् (खण्डः १५)

*सम्प्रदायप्राप्तशास्त्रश्रवणादितः शाश्वतमोक्षलाभनिरूपणम्*

**तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे[१] शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहि॒ँसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते नच पुनरावर्तते नच पुनरावर्तते॥ १॥ खण्डः १५॥**

॥ इति श्रीमच्छान्दोग्योपनिषदि अष्टमोऽध्यायः॥

॥ इति श्रीमच्छान्दोग्योपनिषत् सम्पूर्णा॥

---

१. 'कुटुम्बी' क.

भाष्यम्

**उपदिष्टः परेणैव त्वेवमाह चतुर्मुखः ।**

**उवाच च मनोर्विद्यां प्रजाभ्यो मनुरेव च ॥**

**तस्मात् सर्वेन्द्रियाणीशे निधाय पुरुषोत्तमे ।**

**दृष्ट्वा तं परमं विष्णुं तल्लोकं प्रतिपद्यते ।**

**नाऽवर्तते पुनस्तस्मात् कदाचित् केनचित् क्वचित्[१] ॥' इति च ॥**

॥ १५ ॥

## पदार्थकौमुदी

### भाष्यार्थः

एषा मुमुक्षुभिरवश्यमादरणीयेत्याशयेन वेदपुरुष एतदुपनिषत्प्रवर्तकान् वदन्नेतदुपनिषदुक्तगुणोपासकानाम् अवश्यापेक्षितान् यमनियमान् प्रदर्शयन्नपुनरावृत्तिरूपं फलं चाऽह – **तद्धैतदित्यादिना खण्डेन** ॥ तत्राऽदिवाक्यं ब्राह्मणादीनां सर्वेषां यशः प्राप्नुयामित्यादेः सर्वोपासकविषयत्वानुपपत्तेरेवं वक्ता क इति जिज्ञासामपनुदन् व्याचष्टे– **उपदिष्ट इति** ॥ परेणैव विष्णुनैव । अनेन ब्रह्मशब्दो विष्णुपर इत्युक्तं भवति । ''आचार्यकुलाद् वेदमधीत्य'' इत्यादिना यमनियममात्रेण ब्रह्मलोकप्राप्तिरुच्यत इत्यन्यथाप्रतीतिवारणायापेक्षितं पूरयंस्तद् व्याचष्टे– **तस्मादिति** ॥ तस्मादेवमस्या उपनिषदः परम्परागतत्वेन तदुक्तार्थस्यात्यन्तं विश्वसनीयत्वात् । ''पुरुषोत्तमे ईशे'' इत्यनेनैतदुपनिषदुक्तगुणवतीति सूचयति ॥ तं परमं विष्णुं दृष्ट्वेति शेषोक्तिः । ''नच पुनरावर्तते'' इत्यत्र चशब्दोऽवधारणार्थ इत्यभिप्रेत्योक्तम्– **कदाचित् केनचित् क्वचि-**

---

१. 'केनचिद्धरेः' ह.

**दिति ॥ खं० ॥ १५ ॥**

**॥ ततश्चायं खण्डार्थः ॥**

तत् पूर्वोक्तम् एतत् ''श्यामाच्छबलम्''इत्यादिकम् उपनिषद्रूपं वाक्यजातं ब्रह्मा विष्णुः प्रजापतये चतुर्मुखायोवाच होपदिदेश किल। मनवे स्वायम्भुवाय। यत एवमियमुपनिषत् परम्परगता अत एतदुपनिषदुक्तार्थस्यावश्यमादरणीयत्वादद्यतनोऽपि यः कश्चिन्मुमुक्षुः आचार्यकुलाद् वेदमधीत्य, यथाविधानमित्येतत् पूर्वोत्तराभ्यां सम्बध्यते। गुरोः कर्म सेवारूपं गुरुदक्षिणारूपं वा अतिशेषेण अशेषेण कुटुम्बी गृहस्थाश्रमवान्। क्वचित् कुटुम्बे इति पाठः। तदा वर्तमान इति शेषः। इदमितराश्रमिणामुपलक्षणम्। धार्मिकान् व्यापारान् विदधत् कुर्वाणः। आत्मनि एतदुपनिषदुक्तगुणवति सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य नियम्य तीर्थेभ्यो यज्ञेभ्योऽन्यत्र विना सर्वाणि भूतान्यहिंसन् हिंसामकुर्वाणः यावदायुषं वर्तयन् वर्तमानस्तं परमात्मानं दृष्ट्वा ब्रह्मलोकमभिसम्पद्यते प्राप्नोति। स्वर्गलोकं प्राप्त इव पुनरावर्तते किम्? नेत्याह– **नचेति** ॥ चशब्दोऽवधारणार्थः। कदाचिदपि क्वचिदपि केनापि निमित्तेन। नैवाऽवर्तत इत्यर्थः द्विरुक्तिरुक्ताशेषार्थावधारणार्था ॥ **पञ्चदशः खण्डः ॥ १५ ॥**

*अन्तिममङ्गलाचरणम्*

**पूर्णानन्दमहोदधिः परतमो नित्यः परस्मात् सदा**
**सर्वज्ञः सकलेशिता गुणनिधिर्नित्योत्सवस्तद्विदाम्।**
**सर्वस्मादधिकं मम प्रियतमस्त्विष्टादपीष्टोत्तमः**[1]

१. 'प्रियतमः स्विष्टादपीष्टोत्तमः' ह.

**सर्वस्माच्च हितात् सदा हिततमः प्रीतो भवेन्मे हरिः ॥**

## पदार्थकौमुदी

### भाष्यार्थः

एवं समापितभाष्यो भगवानाचार्योऽन्तेऽप्येतदुपनिषदुक्तगुणविशिष्ट-भगवत्स्तुतिप्रीतिप्रार्थने कृत्वा निबध्नाति– **पूर्णानन्देति** ॥ परस्मात् परतमः । गुणानां निधिः निधानमित्युक्ता एव गुणा लेशतो दर्शिताः **पूर्णानन्देत्यादिना** ॥ पूर्णोऽपरिच्छिन्नः । सदा सकलेशितेत्यन्वयः । नित्यमुत्सवो यस्मादसौ नित्योत्सवः । सर्वस्माद् रुद्रादेरधिकं यथा स्यात् तथा मम प्रियतमः परमपुरुषार्थरूपः । कुतः ? तुशब्दो हेत्वर्थे । यस्मादिष्टादपीष्टोत्तमः । अतिशयेनेष्टमेव परमपुरुषार्थरूपं भवतीति भावः । हिततमः अतिशयेनाऽप्तः । सुहृद् वा ।

**'यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-**
**र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि ॥**

## पदार्थकौमुदी

### भाष्यार्थः

अथ स्वभाषितभाष्यस्याऽप्तिमूलत्वसमर्थनाय श्रुतिसिद्धं स्वस्य परमाप्तत्वं दर्शयन्नाह– **यस्येति** ॥ यस्य वायोर्देवस्य बळित्थेत्यादिवेद-वचने दिव्यानि क्रीडादिगुणविशिष्टानि त्रीणि रूपाण्युदितानि तस्य तृतीयं वपुस्तेनेदं भाष्यं हरौ हरिविषयतया कृतं हीत्यन्वयः । कीदृशं चास्य मूलरूपम् ? कानि च त्रीणि रूपाणि ? कीदृशानि च ? तत्राऽह–

**अलमिति ॥** तस्य वायोर्मूलरूपं बट् बलात्मकं दर्शतं ज्ञानपूर्णम् । तद् इत्थमेव । यादृशं मूलरूपं तादृशावतारायैव निहितं भगवता प्रेरितं अवतीर्णं च । भर्गो भरणगमनकर्तृ । महच्छ्रेष्ठम् । तत्र प्रथमकं हनुमदाख्यं वपुः रामवचोनयं रामस्य वचांसि सीतां प्रति नीतवत्, रामविषयवचांसि मूलरामायणरूपाणि शिष्येषु नीतवद्वा । रामवचसि यो नयो न्याय आज्ञारूपस्तद्युक्तं वा । द्वितीयं भीमनामकम् । पृक्षः कुरुपृतनाक्षयकारि । तृतीयं वपुरानन्दतीर्थापरपर्यायमध्वाभिधमिति । अतः परमाप्तप्रणीतत्वा-दिदं भाष्यं सकलसुजनैरादरणीयमिति भावः ।

*बळित्थासूक्तार्थः*

**हनशब्दो ज्ञानवाची हनूमान् मतिशब्दितः ।**
**रामस्य स्वृतरूपस्य[१] वाचोनेता गुणोदधिः ॥**
**भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।**
**ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ॥**
**प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ॥**
**मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।**
**मध्व आनन्दतीर्थः स्यात् तृतीया मारुती तनुः ॥**
**इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।**
**यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः ॥'**

**इति सद्भावे ॥**

**आनन्दतीर्थ इति तु यस्य नाम तृतीयकम्[२] ।**

---

१.'द्युतरूपस्य' ह. २.'द्वितीयकम्' ह.

**पूर्णप्रज्ञेन तेनेदं कृतं भाष्यं हरेः प्रियम् ॥**
**नित्यानन्दो हरिः पूर्णो नित्यदा प्रियतां मम ।**
**नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥ॐ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमच्छान्दोग्योपनिषद्भाष्येऽष्टमोऽध्यायः ॥**

**॥ इति श्रीमच्छान्दोग्योपनिषद्भाष्यं सम्पूर्णम् ॥**

## पदार्थकौमुदी

### भाष्यार्थः

ननु बळित्थेत्यादिवेदवचने वायोस्त्रीणि रूपाण्युदितानीत्यसत्। तस्य सूक्तस्य त्रेताग्निपरत्वादित्यतस्तत्सूक्तं वायुरूपत्रयपरतया प्रमाणेन व्याकुर्वन् ''यदीमुपह्वरते साधते मतिः'' इत्युक्तमतिशब्दं तावद् व्याचष्टे – **हनशब्द इति ॥** हनशब्दस्य गत्यर्थकधातुनिष्पन्नस्य ज्ञानवाचित्वेन मतिशब्दसमानार्थत्वाद्धनुमान् मतिशब्देनोच्यत इत्यर्थः । अत्र यद्यपि मतिमानिति वक्तव्यम् । तथाऽपि मतिमतोऽपि मतिस्वरूपताज्ञापनाय मतिरित्येवोक्तमिति ज्ञातव्यम् । ''ऋतस्य धेना अनयन्त सस्रुतः'' इत्येतद् व्याचष्टे – **रामस्येति ॥** ऋतस्येत्यस्यार्थः – **स्वृतरूपस्येति ॥** सुष्ठु सर्वदा सर्वत्र च सत्यरूपस्येत्यर्थः । यद्वा, पूर्वावगतवत् सदा स्थितस्येत्यर्थः । यथोक्तम्–

''ऋ गताविति धातोस्तु पूर्वावगतवत् सदा ।
स्थितेर्ब्रह्मर्तमित्युक्तम्'' इति । धेना इत्यस्यार्थः – **वाच इति ॥** वाचो यास्ताः नेता सीतां प्रतीति शेषः । रामस्य वचो रामप्रतिपादकमूलरामायणरूपाः शिष्येषु नेतेति वा । ''यदीमुपह्वरते''

इत्यादेस्तात्पर्यम्– **गुणोदधिरिति**। ''सप्तशिवासु मातृषु''इत्येतद् भीम-शब्दार्थप्रतिपादकमिति भावेन तावद् भीमशब्दार्थमाह– **भृतम इति** ॥ भृताः धृताः माः प्रमाः प्रमाणानि येनासौ तथोक्तः । अस्त्वेवं भीम-शब्दार्थः । किं तत इत्यतो मातृष्वित्युक्तमातृशब्दार्थं तावदाह– **वाच इति** ॥ माः प्रमाणभूताः वाचो मापकत्वान्मातरः स्मृता इत्यर्थः ।

''सप्तशिवासु''इत्युक्तसप्तशिवाशब्दार्थमाह– **ऋगाद्या इति** ॥ ऋगाद्याश्चत्वारः । अस्त्वेवं मातृसप्तशिवाशब्दार्थस्तथाऽपि किमित्यत आह – **तत्रेति** ॥ यतो भृतमो भीम इत्युक्तः । यतश्च मातृसप्तशिवाशब्दार्थ उक्तरूपस्ततस्तत्रोक्तासु सप्तशिवासु मातृषु शयो निष्णातो भीमः स्मृत इत्यर्थः । ''तृतीयमस्य''इत्यादेरानन्दतीर्थाख्यतृतीयावतारप्रतिपादकत्व-सिद्ध्यर्थं ''प्रदिवो मध्व आधवे'' इत्युक्तमध्वशब्दस्याऽनन्दतीर्थ-समानार्थत्वमाह – **मध्वित्यानन्द इति** ॥ ''मधु द्यौरस्तु नः पिता'' इति प्रयोगात् । वातेरवगत्यर्थात् करणे घञर्थे कविधानमिति कः । मधु आनन्दकरं वं तीर्थं शास्त्रं यस्येति मध्व इत्यर्थः । स्वरित्यत्रेवोकारलोपः । आनन्दकरं तीर्थं यस्यासावानन्दतीर्थः । ''तृतीयमस्य''इत्यत्र वपुरित्येतदनुवर्तत इति भावेनोक्तं – **मारुती तनुरिति** ॥ तृतीया मारुती तनुर्मध्वः आनन्दतीर्थः स्यादिति सम्बन्धः । तात्पर्यद्योतनायै-तज्ज्ञानफलमाह – **इतीति** ॥

### ॥ ततश्चायं तृचस्यार्थः ॥

सहसः सहोरूपस्य देवस्य क्रीडादिगुणसम्पन्नस्य वायोर्मूलरूपं बट् बलात्मकं दर्शतं ज्ञानरूपं भर्गो जगद्भरणगमनगुणं तद् इत्था इत्थम्भूतमेव वपुषे रूपत्रयावताराय यतो यस्माद् भगवताऽधायि निहितं भगवता प्रेरितमित्यर्थः । तस्मादजनि । यद्वा, यतो वायोर्भगवानजनि व्यक्तोऽभूत्

तस्य वायोरिति सम्बन्धः ।

प्रथमावतारस्वरूपमाह – **यदीमिति** ॥ यदीं यदेव मतिर्हनुमदाख्यं प्रथमं रूपम् उपह्वरते रामस्य समीपे तिष्ठति । साधते रामकार्याणि साधयति । तेन हनुमता ऋतस्य सत्यरूपस्य पूर्वावगतवत् सदा स्थितस्य वा, रामस्य सस्रुतोऽमृतस्रावयुक्ताः धेनाः वाचोऽनयन्त । सीतां प्रतीति शेषः । द्वितीयावतारस्वरूपमाह – **पृक्ष इति** ॥ द्वितीयं वपुः पृक्षः पृतनाक्षयकारि पितुमान् अन्नवान् । बहुभुगिति यावत् । नित्यः नित्यं सप्तशिवासु सप्तसङ्ख्याकासु परममङ्गलरूपासु ऋगादिलक्षणासु मातृषु मापयन्तीति मातरस्तासु आशये शेते । मुहुर्मुहुर्विचारयतीत्यर्थः । अनेन भीमशब्दार्थ उक्तो भवति । तृतीयावतारस्वरूपमाह – **तृतीयमिति** ॥ अस्य वृषभस्य श्रेष्ठस्य वायोस्तृतीयं वपुः दोहसे ज्ञानदोहाय दशप्रमतिं पूर्णप्रज्ञनामकं योषणो नार्यः । गुरुत्वाद् बहुवचनम् । जनयन्त अजनयन्त ॥ **निर्यदीमिति** ॥ बुध्नात् ज्ञानस्वरूपाद् यदीं यस्मादेव महिषस्य महितषड्गुणस्य हरेर्वर्पसो वरणीयत्वात् पालकत्वाद् वर्पोनामकान् गुणान् ईशानासो रुद्राद्याः देवाः । अन्ये सूरयो ज्ञानिनश्च शवसा सुखेन निराक्रन्त ज्ञातवन्तः । तृतीयं वपुरिति पूर्वेण सम्बन्धः ॥ **यदीमिति** ॥ यदीं य एव प्रदिवः प्रकृष्टप्रकाशरूपो मध्वः आनन्दतीर्थाख्यो मातरिश्वा वायुर्गुहासन्तं जीवेश्वरैक्यं वदद्भिर्गूहितं सन्तं हरिम् आधवे आसमन्तात् पतित्वे मथायति मथ्नाति शास्त्रेण विचार्य निश्चाययतीति भावः । शिष्टसूक्तव्याख्यानं ग्रन्थान्तरादवगन्तव्यम् ।

तस्य यत् तृतीयं वपुस्तेनेदं भाष्यं कृतमित्युक्तम् । तत्र भाष्यकर्तुस्तृतीयावतारस्य नाम न तावन्मध्वशब्दसमानार्थकानन्दतीर्थ इति । ''दशप्रमतिं जनयन्त योषणः'' इत्यनेन विरोधात् । नापि दशप्रमतिरिति ।

अनन्दतीर्थनामकत्वप्रसिद्धिविरोधादित्याशङ्कामपाकुर्वन् स्वभाष्यं हराव-र्पयति – **आनन्देति** ॥ दशप्रमतिशब्दव्याख्यानम् – **पूर्णप्रज्ञेति** ॥

''दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।

प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ॥'' इत्यन्यत्रोक्तत्वात् । तथाच नामद्वयमपि तृतीयावतारस्यास्तीति न विरोध इति भावः । हरेः प्रियमस्त्विति शेषः । न स्वस्वरूपनिरूपणेन ग्रन्थः समापनीय इति भावेनान्तेऽपि भक्त्युद्रेकात् प्रीतिप्रार्थननमनरूपं मङ्गलमाचरति– **नित्यानन्देति** ॥ पूर्णोऽखिलगुणैः । ''नित्यदा'' इत्यनेन न मम मङ्गलाचरणं प्रयोजनोद्देशेनेति सूचयति । तस्मै उपनिषदुक्तगुणाय विष्णवे नमश्चास्तु । त्रिरुक्तिरादरार्थेत्यशेषमतिमङ्गलम् ॥

**व्यासं पूर्णमतेर्विदोषहृदयाम्भोजे सदा वासिनं**
**श्रीशं कञ्जभवादिसर्वविबुधैर्नीचोच्चभावस्थितैः ।**
**उच्चैर्गेयमनन्तसामविभवैरोङ्कारवाच्यं परं**
**वन्दे सुन्दरविग्रहं करुणया ज्ञानाभयेतं मुहुः ॥ १ ॥**

**अगाधेऽस्मिन् भाष्ये सुरवरहरेन्द्रादिविबुधै-**
**रलं व्याख्येये मे कृतिरहह हासास्पदतमा ।**
**तथाऽपि श्रीव्यासालवमतिपदासक्तिवशतो**
**गुरूणां कारुण्यादपि भवति भूषाकृतिरियम् ॥ २ ॥**

**छान्दोग्योपनिषद्भाष्यपञ्चिकाकरणेन यत् ।**
**पुण्यं भवेदवाप्नोतु सर्वं मम गुरुः स्वयम् ॥ ३ ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य च्छान्दोग्योप-
निषद्भाष्यस्य टीकायां श्रीमद्वेदव्यासतीर्थपूज्यपादानां शिष्येण
वेदेशभिक्षुणा विरचितायां पदार्थकौमुद्याम् अष्टमोऽध्यायः ॥ ८ ॥

**॥ श्रीकृष्णार्पणमस्तु ॥**

॥इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमच्छंदोगोपनिषद्भाष्यस्यटीकायांवेदेशभिक्षुविरचितायां
पदार्थकौमुद्यांषष्ठोध्यायः॥ ॥६॥श्रीगोपालायनमः॥ ॥नामादिप्राणपर्यंतदेवश्रेष्ठायविष्णवेसत्याद्यात्मांतरूपा
यनमोभगवतेसदा॥१॥पूर्वेजीवभिन्नत्वादिनाविष्णोःसर्वोत्तमत्वंनिरूपितंइदानींतद्देवतातारतम्यपुरस्सरमेव
तारतम्यांतगतेनज्ञातुंफलवत्तान्यथेतिभावेनदेवतातारतम्यकथनपुरःसरंविष्णोःसर्वोत्तमत्वमेवनिरूपयत्व
नेनाध्यायेनातत्रयदुक्तंतेनमोपसीदेत्यत्रमेत्यस्यनिषेधार्थत्वंप्रतीयतेअस्मच्छब्दरूपत्वेपितेनमामुपसीदेत्यु
क्तंपरस्वज्ञानपरित्यागेनागमनासंभवेनस्वज्ञानेनमहैवनारदेनागतत्वादित्यतस्तद्व्याचष्टेयदुक्तमितिननुनारे
दोक्तविद्यामध्येऋग्वेदादिपुराणांताःविद्याःप्रसिद्धाः॥पित्र्यंराशिमित्यादिकमप्रसिद्धमतोऽप्रतिपत्तिविप्रतिपत्ति
निरासायपित्र्यमित्यादिकंक्रमात्प्रमाणेनेवव्याचष्टेपितृलक्षणमित्यादिनापितॄणांलक्षणंयस्मिन्स्तास्सतल

श्रीवेदेशीयशुद्धपाठनिर्णयोपयुक्ता पूर्णप्रज्ञसंशोधनमन्दिरस्था एका मातृका

छा·टी
१

॥ ॥श्रीगणेशायनमः॥ ॥श्रीमदानंदतीर्थभगवत्पादाचार्येभ्योनमः॥ ॥श्रीमान्यैनमः॥सर्वेभ्योदेवभ्य
भ्योनमः॥सर्वेभ्योगुरुभ्योनमः॥निर्विघ्नमस्तु॥ ॥पूर्णानंदमहः॥वेदौघमखिलंसंभासयंतंतुवासर्वत्रप्रभुम
ग्र्यं गुणनिधिं दिव्याकृतिं केशवं।जन्माद्यस्ययतोहिसर्वजगतोजन्मादिदोषोज्झितंनित्यंपूर्णचिदेकशर्मगुरु
णोपास्यपदं जोनित्यदा।नेदत्वेदस्तुशास्त्रेतं बोधादिफलसंप्रुतं।भजतामिष्टदंश्रीमत्सुरद्रुममहंभजे॥हत्वामोनाश
कंशास्त्रप्रभयातत्वभासकं।फलदंपूर्णबोधार्यचिंतामणिमहंभजे।प्राणाभ्यवरणौवादिपायावथामितवाच्च
हे।संनिधेर्ममवाग्यस्तुमानसेचनिरंतरं।यत्प्रसादंविनातत्वमार्गेनागमनंश्रुति।तंवंदेपद्मनाभाख्यगुरुंसज्जन
सेवितं।वेददुग्धाब्धिमाम्मथ्यसुधर्मंदर्श्यसूदना।प्राप्तान्यायसुधायेनतंजयेइमहंतंत्रे।श्रीमच्छ्रकृतवेदांतभाष्यं
येनप्रकाशितं।वंदेतंव्यासतीर्थार्यंजयराजनिषेवकं।विद्याधिराजादिमहागुरूनीड्यान्हृद्येवसंचिंतितविष्णुतत्वा

माणमुदाहरति। सर्वेति। वेदैरित्यादिना घोषाइत्यादि प्रथमान्ततीर्थपर्यायाख्यातेति ज्ञातव्यं। सर्वाणि भूतानि। त्यस्यार्थो
ब्रह्माद्या इति। उदतिष्ठन्नित्यस्यार्थः उपस्थिता इति॥ कृत्स्नं लबा न त्रिष्ठोति इत्यस्यार्थः॥ उपतिष्ठन्नीत्यादि। तस्मादित्यस्य
र्थः तद् इति। तथा च यस्मात् ब्रह्माद्या उपस्थिता अतोऽद्यतेनाप्युपतिष्ठंतीति योजना। प्रत्यन्विता न योरर्थो नियमं
त्रसतीति स य एतदेवमिति फलवाक्यमैहिकमात्रपरमिति प्रतीतिवारणाय व्याचष्टे तद्विद्वानिति मुक्तो भवेत् वेदानामा
यासाभिर्भवेदित्यर्थः। तथा च श्रुत्यन्तमुपलक्षणमिति द्रष्टव्यं॥ ॥ ततश्चायं वेदार्थः॥ ॥ आदित्य आदित्यस्य आदा
नादादित्यनामानं ब्रह्मेति। आदेशः उपदेशः। आदित्यांतर्गतमादित्यनामानं जनार्दनं परं ब्रह्म उपासीतेति पावत
नन्वादित्यांतर्गतस्यैव कृत उपास्तिः कर्तव्येति जिज्ञासायां तस्यांतर्गतस्य रश्म्यादिरूपपर्वतादपेक्षया गर्भरूपत्व
नातिशयितत्वादिति वक्तुं गायत्रं दंडान्त्रिं निरूपयितुमाह तस्येत्यादिना॥ तस्मादित्यांतर्गतस्य भगवतः उपास्यत्वोपपत्तेर्

श्रीवेदेशीयशुद्धपाठनिर्णयोपयुक्ता शम्याप्रासग्रन्थालयादानीता अपरा मातृका

याख्यानेऽस्मिन् श्रुतिशेषः ॥ सृष्टिनिरूपणं क्रियत इति यावत् ॥ कारणस्य पूर्वभावं दर्शयितुमाह असदेवेदमितिइदमस्यज
गतोऽग्रे पूर्वं प्रलये असत् सद्यते गम्यत इति सत् न सत् असत् अगम्यं ब्रह्मैवासीदित्यर्थः ॥ तत् अगम्यं ब्रह्म सत्
विद्यमानं वासुदेवाख्यमासीत् ॥ तस्माद्वासुदेवाख्यं रूपांतरमासीदित्यर्थः ॥ एवं प्रकृतिरपि मायासीदिति वक्तव्यं ॥ तत्त्वा
सुदेवाख्यं रूपं संभवत् मायया संयोगमकरोत् ॥ ततस्तस्मात् पुन्नामक ब्रह्मादिमहत्तत्त्वादीनां इदं अंडपर्यंतं निर
वर्तत ॥ जायते ॥ अंडमपि जातं तत् अंडं संवत्सरस्य कालस्य मात्रा परिमाणं प्रमाणांतरेषु दृष्टं तावत्पर्यंतमित्यर्थः ॥ अ
शयत अनिर्भिन्नस्वरूपमेवस्थितं बभूव ॥ तावता प्रमाणसिद्ध संवत्सरकालपरिमाणाद्धूर्ध्वं निरभिद्यत ऊर्ध्वाधोलोका
श्रयकपालद्वयवत् विविक्षयानिर्भिण्णमिव ॥ न तु निर्भिण्णमेव प्रमाणांतरविरोधात् अतलादिकल्पना क्षमा वक्
ऽ विशेषवज्ञातमितिभावः ॥ तलोकाश्रयत्वेन विवक्षिते ब्रह्मांडकपाले अंडसंबंधिनी ऊर्ध्वाधोभागगकपाले रजतं च

श्रीवेदेशीयशुद्धपाठनिर्णयोपयुक्ता शम्याप्रासग्रन्थालयादानीता अपरा मातृका

